THE
KASHI-SANSKRIT-SERIES
( HARIDĀS SANSKRIT GRANTHAMĀLĀ )
91.
( Vyākaraṇa Section, No. 11 )

THE

# VAIYĀKARAṆA SIDDHĀNTA-CHANDRIKĀ

*By*

RĀMĀS'RAMA

*With*

*The Subodhinī Commentary by Sadānanda*
&
*The Tattvadīpikā Commentary by Lokes'akara*

EDITED WITH
The Chakradhara Notes, Lingānus'ās'an with commentory, Uṇādikos'a etc., etc.,

By
KĀVYA-VYĀKARAṆA TĪRTHA
*Pandit S'ri Navakishora Kara*
*Kâvya Sâhitya Sâstrâchârya, Vedânta Sâstri.*

**( Part II)**

*Published by*
JAYAKRISHNA DĀS HARI DĀS GUPTA
*The Chowkhamba Sanskrit Series Office,*
Vidya Vilas Press, Benares.

1944.

॥ श्रीः ॥

ह रि दा स सं स्कृ त ग्र न्थ मा ला स मा ख्य—

काशी-संस्कृत-सीरिज़-ग्रन्थमालायाः

९१

व्याकरणविभागे (११) एकादशं पुष्पम् ।

पदवाक्यप्रमाणपण्डितश्रीरामाश्रमप्रणीता वाणीप्रणीतसूत्राणां वृत्तिर्नाम

# वैयाकरणसिद्धान्तचन्द्रिका

श्रीमत्पण्डितसदानन्दकृतसुबोधिन्या श्रीमद्रामकरपौत्र-
श्रीक्षेमकरसूनुश्रीलोकेशकरकृततत्त्वदीपिकया
व्याख्यया च सहिता

सा च

पण्डितप्रवरश्रीविम्बाधरकरव्याकरणसांख्यवेदान्ततीर्थचरणसेवकेन व्याकरण
साहित्यन्यायवेदान्तशास्त्राध्यापकेन श्रीनवकिशोरकरशास्त्रिणा
निर्मितया **चक्रधराख्यटिप्पण्या,** सव्याख्यया लिङ्गा-
नुशासनप्रक्रियया च प्रपूरिता । टिप्पणीकर्त्रा विहि-
तेनोणादिकोषेण च संवलिता ।

## ( उत्तरार्द्धम् )

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

**चौखम्बा संस्कृत सीरिज़ आफिस,**

विद्याविलासप्रेस, बनारस सिटी ।

वि. सं. २००१ ]　　द्वितीय संस्करणम् ।　　[ ई. स. १९४४

# उत्सर्गपत्रम्

निर्गुणब्रह्मविषयकध्यानधारणासमाधिकुशलानां शुद्धाद्वैतविद्यापा-
रावारसन्तरणधौतासारसंसारसमायाताशेषकल्मषाणां सुविशद-
शारदीयसोमसंकाशशरीरदीधितिधाराप्रमोदितसकलजनम-
नःकुमुदानां देवताध्यानपूजनानवरतजातलोतकव्याकु-
लितनयनकन्दराणां न्यायवैशेषिककापिलपातञ्जला-
दिदर्शनशास्त्रस्वतन्त्राणां काव्यव्याकरणपुराणेति-
हासपुरातनाख्यायिकाव्याख्यानाध्यापनेन ल-
ब्धप्रतिष्ठानां राज्याधीशसकाशात्सम्प्राप्ता-
नेकतीर्थादिपदवीविभूषितानां मम शैश-
वावधिलालनपालनसुशिक्षादीक्षादि-
प्रदानां साक्षादभिनवव्यासदेवा-
नामिव श्रीलश्रीयुक्तपितृदेवानां
सुप्रसिद्धयास्कवंशेऽवतीर्णानां
**श्री विम्बाधरकर-**
शर्मणां चरणयोर्निप-
त्य समर्पयति टि-
प्पणीपुष्पाञ्ज-
लिम् ।

॥ शम् ॥

महाष्टम्याम्,
विक्रमस्य सं० १९८८

स्नेहाधीन—
**श्री नवकिशोरः ।**

# भूमिका

यदम्बुसङ्गात्त्रिजगत्पवित्रितं विशेषजन्मार्जितकल्मषाकुलम् ।
स्वयंभुवः शीर्षनिवासिनी चिरं पुनातु मे विष्णुपदी सदा गिरम् ॥ १ ॥

नत्वा शिवं साम्बमूर्त्तिं शेषं भाष्यकृतं तथा ।
रामाश्रमस्य भारत्यां भूमिकाल्पा प्रतन्यते ॥ २ ॥

हे माननीयविबुधाः ! कृतशास्त्रचर्चाः !
यद्यत्र लेखनगता मम दोषसङ्घाः ।
जाता भवद्भिरनिशं परिमार्जनीयाः
दोषान्धरन्ति महतामपि ये हि दुष्टाः ॥ ३ ॥

शब्दानुशासनं नाम ख्यातं व्याकरणं हि तत् ।
प्रकृतिप्रत्ययादीनां साधनेनोपकारकम् ॥ ४ ॥

शब्दव्युत्पादनेनैव वेदानामङ्गमुच्यते ।
मुख्यं व्याकरणं यस्माद् वेदः शब्दमयोऽखिलः ॥ ५ ॥

शब्दज्ञानं वर्णमूलं पदज्ञानं ततः परम् ।
वाक्यज्ञानं ततः सर्व–वाग्ज्ञानान्मुक्तिरिष्यते ॥ ६ ॥

अस्माद् व्याकरणं पाठ्यं सर्वैरेव मुमुक्षुभिः ।
गुर्वन्तिके यथान्यायं नरैः शान्तिसमन्वितैः (क) ॥ ७ ॥

तथाच प्राचामुक्तिः—

"आसनं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः" ॥

---

(क) शब्दो ब्रह्म इति श्रुतिः, परमपुरुषस्य त्रिगुणात्मिका शक्तिर्यस्मिन् सम्यग्रूपेण विराजते, स प्रणवोऽपि शब्दमयः । अतः शब्दज्ञानमेव ब्रह्मज्ञानम्, व्याकरणज्ञानव्यतिरेकेण शब्दज्ञानं कदापि न सम्भवति, व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणमिति व्याकरणपदव्युत्पत्तेः । एवम्–भाषाज्ञानमपि व्याकरणमपेक्षत एव । एवं श्रूयते-इन्द्रादिषु देवगणेषु वेदार्थज्ञानेऽसमर्थेषु ब्रह्मा तान् व्याकरणं पठितुमादिदेश । ततो देवाः व्याकरणशास्त्रे व्युत्पन्नाः सन्तः वेदस्य मर्मोद्घाटितुं समर्था बभूवुः । स्वभावत एव वेदशास्त्रव्युत्पत्तिकामानामेतान्यवश्यं ज्ञातव्यानि, तद्यथा,–"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । तन्मध्ये शिक्षानिरुक्तयोर्विशेषेण वैदिकव्याकरणसम्बन्धे आलोचितमास्ते । वेदानां प्रातिशाख्यानि च व्याकरणविषयात्मकानि । वैदिकब्राह्मणेषु च तद्विषयालोचना दृश्यते, अनेनैवमनुमीयते यद्व्याकरणं वेदस्यानुलिखितमेव । प्राचीननिरुक्तकाराणां मध्येऽधुना यास्कविरचितनिरुक्तं दृश्यते, तेन प्राचीनव्याकरणनिरुक्तरचकानां गार्ग–गालव–शाकटायनौर्णवाभ-शाकपुनि कौत्सानां नामान्युल्लिखितानि । खृ० पू० अष्टमशतके महर्षियास्को विद्यमान आसीदित्यनुमन्यते । तद्व्यतिरिक्तेन पुर्वाचार्याणामनेन वाक्येनैव व्याकरणेन सह वेदस्य सम्बन्धः, उपयोगिता च विशेषेणोपलभ्यते । तथाहि–"छन्दः पादौ तु वेदस्य हस्तःकल्पोथ पठ्यते, ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते शिक्षाघ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतं, तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयत इति ।

"अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते" ॥ इति ॥

श्रुतावपि व्याकरणाध्ययने विधिमाह—

"ब्राह्मणेन निष्कारणेन धर्मः षडङ्गो वेदो ध्येयो ज्ञेयश्च" इति ॥

कश्चित्पुत्रमुपदिदेशश्च—

"यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो माभूत् सकलं शकलं सकृच्छकृत्" इति ॥
"अङ्गीकृतं कोटिमितञ्च शास्त्रं" नाङ्गीकृतं व्याकरणं च येन ।
न शोभते तस्य मुखारविन्दं सिन्दूरबिन्दुर्विधवाललाटे" ।

इत्यपि कश्चिदाह ॥

तत्र व्याकरणे—

'इन्द्रश्चन्द्रः काशकृत्स्नाऽऽपिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा इत्यष्टौ शाब्दिका मताः" ॥

इत्युक्तरीत्याष्टौ प्राचीनशाब्दिका आसुः ॥

केचिदिमं पूर्वोक्तश्लोकमेवं पठन्ति । सो यथा—

"ऐन्द्रं चान्द्रं काशकृत्स्नं जैनेन्द्रं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्" (क) इति ॥

तत्र सारस्वतव्याकरणस्येदं वृत्तं श्रूयते—

सारस्वतं व्याकरणं प्रसिद्धं जानन्ति सर्वे विबुधाः प्रसिद्धाः ।
कर्त्तास्य काश्यामनुभूतिरूप आसीदुदासी महतां वरेण्यः(ख) ॥८॥

(क) अधुना भारतवर्षे पाणिनीयात् प्राचीनतमं व्याकरणं नास्ति। तस्य सर्वाङ्गसुन्दरप्रक्रियाप्रभावेन तत्तत्प्राचीनव्याकरणानां प्रचारप्रभावौ हीनावास्ताम्। पाणिनिना तद्व्याकरणे काश्यप–गार्ग्यापिशलि–गालव–चाक्रवर्मण–भारद्वाज–शाकटायन–शाकल्य–सनक–स्फोटायनानां नामानि ससम्मानमुद्धृतानि पणिनेः समयात् शब्दशास्त्रस्य सूक्ष्मयालोचनारभत। अधुना प्रचलितानि सर्वाणि व्याकरणानि तदनुकृतान्येव, पाणिनेर्जीवितकालविषये मतभेदोऽस्ति। महामहोपाध्यायश्रीहरप्रसादशास्त्री एवमुक्तवान्—, मगधदेशे शैशुनागवंशस्याभ्युन्नतिकाले यदा दारयावुसनामा (Father of Sexes) पारस्यसम्राट् तक्षशिलामाक्रमत्, तदा तत्रस्थाः पण्डितास्तद्भयेन तक्षशिलां त्यक्त्वा उन्नतिमति मगधे आगतवन्तः। तैः सह पाणिनेर्गुरुर्वर्षः पाणिनिश्चास्ताम्। तौ च तत्र प्रसिद्धिमगाताम्। पाणिनिश्च तत्र अष्टाध्यायीं रचयामास। पाश्चात्यमनीषी गोल्डष्टुकरः (Goldstucker) तं खृ०पू० सप्तमशतके स्थापयति। प्रतीच्यपण्डितौ वेबारम्याक्समुलारौ (Weber and Max Muller) तस्य जीवितकालं खृ० पू० चतुर्थशताब्दमध्ये भागेऽकथयताम्। प्रसिद्धाङ्गलैतिहासिको भिन्सेन्ट स्मिथः (Vincent Smith) विशेषालोचनया तं खृ० पू० सप्तमशताब्दपूर्ववर्तिनं स्वीकरोति। पाणिनेर्मातुर्नाम "दाक्षी" इति कथ्यते। सीमान्तप्रदेशस्यैटकनामधेयप्रान्ते तस्य जन्मस्थानमासीत्।

(ख) अनुभूतिरूपः, अनुभूतिस्वरूपाचार्य्यः। अस्याविर्भावकालस्तु खृष्टीयपञ्चमशतकमिति जनश्रुतिः।

सरस्वती यस्य हि सूत्रकर्त्री संराधिता देव्यनुभूतिना सा ।
पुंक्षुप्रयोगं विदुषां सभायां प्रमार्ष्टुकामेन यतात्मनैव ॥ ९ ॥
तुष्टा तदा ध्यानगुणेन तस्य स्वकीयमातेव कृपावशा सा ।
आगत्य देवी त्वरयानुभूतिं वरं वृणीष्वेति जगाद वाणी ॥ १० ॥
ततोऽनुभूतिर्निजगूढवृत्तं मातुः समक्षे तनयो मुदेव ।
उक्त्वान्वयाचन्महनीयचेष्टः सरस्वतीं व्याकरणं नवीनम् ॥ ११ ॥
स्वकण्ठसंराजितहारगर्भात् सूत्राणि सा सप्तशतानि दत्त्वा ।
अन्तर्दधे व्याकरणं ततः सोऽनुभूतिरूपो रचयांचकार ॥ १२ ॥
प्राचीनवैयाकरणेन तेन विनिर्मिता साधनपद्धतिश्च ।
शङ्कासमाधानविचारचारुः सोदाहृतिर्वृत्तिरलं विभाति ॥ १३ ॥
सारस्वतस्य निर्माता नरेन्द्राचार्य्य इत्यपि ।
केचिद्वदन्ति सामर्षं विद्वद्भिस्तद्विभाव्यताम् ॥ १४ ॥
मन्येऽहं प्रकृता यात्र वृत्तिरस्ति सुविस्तरा ।
तत्कर्त्ता कुशली **श्रीमान्नरेन्द्राचार्य्यपण्डितः** ॥ १५ ॥
अस्य ग्रन्थस्य टीकास्ति **चन्द्रकीर्तेः सुबोधिका** ।
वासुदेवेन भट्टेन **प्रसादाख्या** च निर्मिता ॥ १६ ॥
उक्तटीकाद्वयं पाठ्ये परीक्षायां नियोजितं ।
कालिकाक्षेत्रगीर्वाण–वाणीसंसदि पण्डितैः ॥ १७ ॥
**माधवीति** समाख्याता व्याख्या गुर्वर्थबोधिका ।
चकास्ति सा च सर्वत्र प्रणीता **माधवेन** या ॥ १८ ॥
**जगन्नाथेन** केनापि पण्डितेन कृता तदा ।
**सारप्रदीपिका** नाम्ना सारार्थस्य प्रकाशिका ॥ १९ ॥
**काशीनाथो** बुधश्रेष्ठः फणिभाषितभाष्यवत् ।
**यत्सारस्वतभाष्यं** तच्चक्रेऽलभ्यं भवेज्जनैः ॥ २० ॥
जगन्नाथो रमाकान्तो यत्रास्ते तत्र शाश्वतः ।
**भारतीत्युपनामासा-वमृतो** विवृतिं सुखम् ॥ २१ ॥
कृतवान् योऽ**मलस्वामि-शिष्य** आसीत्सदा सुखी ।
**ढुण्ढिकां मेघरत्नो** हि गम्भीरार्थप्रदर्शिकाम् ॥ २२ ॥ युग्मकम् ॥
**शब्दार्थचन्द्रिका हंसविजयस्य** महात्मनः ।
**विद्वत्प्रबोधिनीटीका रामभट्टस्य** चास्ति सा ॥ २३ ॥
एवं बहुविधाष्टीका न मिलन्ति कथञ्चन ।
इतिहासादिवाक्येभ्यो जानीमो नाममात्रतः ॥ २४ ॥
सारस्वतीयसूत्राणामपरा वृत्तिरस्ति या
रामाश्रमकृता रम्या सा हि **सिद्धान्तचन्द्रिका** ॥ २५ ॥
भट्टोजिदीक्षितस्यैव पुत्रो **भानुजिदीक्षितः** ।
**रामाश्रमापराख्यो**ऽसौ कथ्यते सकलैर्जनैः ॥ २६ ॥

अयं पतञ्जलेर्भाष्यं स्वीकृत्य सकलं पदं ।
लौकिकं लोकभद्राय संसाध्यादर्शयद्बुधः ॥ २७ ॥

सिद्धान्तकौमुदीग्रन्थे यानि सन्ति पदानि वै ।
तानि तानि च सर्वाणि वर्तन्तेऽत्र सुविस्तरम् ॥ २८ ॥

अल्पकालेन बोधो हि पदार्थानां प्रजायते ।
सिद्धान्तचन्द्रिकाग्रन्थ-पाठेनैव यथार्थतः ॥ २९ ॥

भट्टोजिदीक्षितच्छात्रो रघुनाथो महामतिः ।
फणिभाष्यमिवात्रापि लघुभाष्यमरीरचत् ॥ ३० ॥

भाष्ये च रघुनाथेन मतं कातन्त्रसंभवम् ।
खण्डितं मौग्धबोधीयं सिद्धान्तकौमुदीस्थितम् ॥ ३१ ॥

सिद्धान्तचन्द्रिकाग्रन्थे द्वे टीके स्तो मनोहरे ।
एका सुबोधिनी नाम्ना चापरा तत्त्वदीपिका ॥ ३२ ॥

सुबोधिन्यां हि टीकायां पदार्थाः सन्ति भूरिशः ।
परिभाषादिभिःसम्यग् भाष्योदाहरणानि च ॥ ३३ ॥

सिद्धान्तकौमुदीतत्त्वबोधिनीमनुकृत्य सा ।
सदानन्दकृतामूलं साध्वी टीकार्थगह्वरा ॥ ३४ ॥

लिङ्गानुशासनं नासीद् ग्रन्थेऽस्मिन्नतिविस्तृतम् ।
पाणिनीयादिसूत्रेण टीकया पूरितं मया ॥ ३५ ॥

प्राच्यपुस्तकमतान्तरगर्भा पाठभेदसहिता सुगमात्र ।
टिप्पणी कथितचक्रधराख्या योजिता सकलबालहिताय ॥ ३६ ॥

एवमत्र निहितोऽर्थसनाथः प्रत्ययेन सह कोष उणादेः ।
मातृकाक्रमनिबन्धनचारुर्वर्त्तते बुधमुदे भवतां सः ॥ ३७ ॥

काशीसंस्कृतसीरिजादिसकलग्रन्थप्रकाशेन यः
प्राप्तो भूसुरसेवया च विमलां कीर्तिं विदेशे तथा ।
देशे श्रीहरिदासगुप्ततनयो धीमानिदं पुस्तकं ।
धीरः श्रीजयकृष्णदास इति नामासावमुद्रापयत् ॥ ३८ ॥

घोषालोपाधिकः श्रीमान् शिवनारायणः सखा ।
भूमिकालेखनेऽत्यन्तं साहाय्यं कृतवान् मम ॥ ३९ ॥

विदुषामनुचरः—

करशर्मोपाधिकः श्रीनवकिशोरशास्त्री ।

# सिद्धान्तचन्द्रिकोत्तरार्द्धगतप्रकरणानां

# सूचीपत्रिका ।




प्राप्तिस्थानम्—

**चौखम्बा-संस्कृत-पुस्तकालय,**

**बनारस सिटी ।**



# व्याकरण-
# सिद्धान्तचन्द्रिका

## सटिप्पण–सुबोधिनी–तत्त्वदीपिकाव्याख्याद्वयोपेता

## [ उत्तरार्द्धम् ]

### अथ भ्वादयः ॥ १ ॥

**(क) धातोः** ॥ इदमधिक्रीयते ॥ १ ॥

सुबोधिनी ।

**सार्वीयं सच्चिदानन्दं नामं नामं जगत्प्रभुम् ।**
**सिद्धान्तचन्द्रिकाख्यातवृत्तिश्च क्रियतेतराम् ॥ १ ॥**

**धातोः** ॥ अधिकारोऽयं प्राङ् नाम्नो य इत्यतः । किमर्थोऽयमधिकारः । उच्यते, ऊरीकरोति, शुक्लीभवति, सहार्यास्यादित्यादौ ऊर्यादिच्व्यन्तयोर्धातोः प्राक् प्रयोगस्य नियतत्वेन विशिष्टात् प्रत्ययोत्पत्तिर्यथा न स्यात् । अन्यथा अड्द्वित्वयोर्दोषो दुर्वारः स्यादित्यधिकारः ॥ १ ॥

तत्त्वदीपिका ।

**प्रणम्य श्रीपतिं वाणीं नारायणमनामयम् ।**
**सिद्धान्तचन्द्रिकाख्यातव्याकृतिरुच्यतेऽधुना ॥ १ ॥**

**धातोरिति**—अधिकारोऽयमित्याह—इदमिति ॥ सूत्रमिति विशेष्यं पदं वा । नाम्नो य इत्यतः प्रागधिकारो बोध्यः । अधिकारफलं तु ऊरीकरोति शुक्लीभवतीत्यादौ च्व्यन्तस्य धातोः प्राक् प्रयोगनियमेन तत्सहिताद्धातोः प्रत्ययोत्पत्तिर्यथा न स्यात्, अन्यथाऽड्द्वित्वयोर्दोषो दुर्वारः स्यात् । न च नामव्यावृत्तिरेव फलमिति वाच्यम्, ततः

विम्बाधरसमायुक्तामम्बां दुर्गामुपास्महे । यत्कृपालेशमात्रेणाशेषश्वश्रेयसम्भवेत् ॥ १ ॥
यस्य दयालवलाभात् शास्त्रारण्ये कृतप्रवेशोऽहम् । प्रतिभामूर्त्तिः स श्रीहरिहरशास्त्री गुरुर्जयति ॥२॥

(क) मङ्गलादीनि मङ्गलमध्यानि च तन्त्राणि प्रथन्त" इति चिरन्तनवचनप्रमाणेन निर्विघ्नपरिसमाप्तिकामैराशीर्नमस्क्रियावस्तुनिर्देशद्वारेण मङ्गलानि शिष्यशिक्षार्थमादिमध्यावसानेषु निवध्यन्ते। इति दृश्यन्ते च **तानि सिद्धान्तकौमुद्यादि**व्याकरणग्रन्थेषु । तथैव किञ्चिदत्रोत्तरार्द्धे ग्रन्थमध्ये वर्त्तते न वेति प्राप्ते ब्रूमः—नास्तीति कथने न कश्चिद्बलवत्तरो दोषः, ग्रन्थारम्भमङ्गलेनैव चारितार्थत्वात् । पक्षान्तरे तु–मनसैव मङ्गलं सम्पादितमिति ।

विधानेनैव तद्वाधनात् । सिबन्ततिवन्तव्यावृत्तिरपि न फलम् , (क) प्रकृत्यर्थस्याद्रव्यकादेशाख्यातार्थकर्तृकर्मणोरनन्वयात् , कारकाणां क्रिययैवान्वयनियमात् । पचतीत्यत्र एकेन एकाश्रयिकायां क्रियायां बोधितायामपरेणान्याश्रयायाः क्रियाया बोधनस्याशक्यत्वात् । प्रथमस्य समासप्रत्यययोरिति लोपे तु तदर्थस्यानवबोधाच्च कर्तृद्वयादिबोधाकाङ्क्षायां यः घटः इत्यादेरन्याय्यत्वात् ॥ १ ॥

**भ्वादिः** ॥ क्रियावाची भ्वादिर्धातुसंज्ञकः स्यात् ॥ २ ॥

( सु० ) **भ्वादिः** ॥ भवनं भूः क्रियासामान्यम् । आदत्ते ग्राहयत्यर्थमित्यादिः । अन्तर्भावितण्यर्थः यद्वा, आदीयते गृह्यतेऽर्थोऽनेनेति आङ्पूर्वाद्दाञः किप्रत्ययः शब्द इति यावत् । भुवः क्रियासामान्यस्य आदिर्वाचकः शब्दो धातुसंज्ञो भवति ॥ एवं सति 'हिरुक् , नाना' इत्यादावव्यये, 'बभूव' 'बभूवे' इत्यादावाख्यातान्ते चातिव्याप्तिस्तेषामपि क्रियावाचकत्वात् अतो '**भ्वादि**'रित्यावर्त्य भूरादिर्यस्येति बहुव्रीहिर्व्याख्येयः । अत्रादिशब्दो व्यवस्थायाम् , तेन भूशब्दादारभ्य ये पठितास्ते ग्राह्याः । तेन क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वम् । नामधातूनां '**सधातु**'रिति वचनाद्धातुत्वम् । सौत्रास्तु गणे एव पाठ्याः । (ख) का पुनः क्रिया, ? उच्यते, —करोत्यर्थभूता उत्पादना परपर्याया उत्पत्त्यनुकूलव्यापारसन्तानरूपा भावनैव क्रिया । नन्वस्तिभवतिद्यतिषु क्रियावाचित्वमव्याप्तम् , न हि तत्रोत्पादना प्रतीयते, उत्पत्तिर्हि आद्यक्षणसम्बन्धस्तदनुकूलव्यापारश्चोत्पादना, तदनुभवश्चास्त्यादिभ्यो नास्त्येव । उच्यते, अस्तीत्यादेः स्वरूपधारणं करोतीत्यर्थः । धारणं चोत्तरकालसंबन्धः । क्रियावाचीति किम् , याः पश्यसीत्यादौ धातुत्वं मा भूत् । सति हि तस्मिन्नातो धातोरित्यालोपः ॥ २ ॥

(त०) **भ्वादिरि**ति ॥ भवनं भूः क्रिया । आदीयतेऽर्थोऽनेनेत्यादिः शब्दः । आङ्पूर्वात् दाञः किः तथा च भूशब्दः क्रियावाचक आदिशब्दः प्रकारवाचक इत्यर्थः, एवं सति हिरुक् वर्जने इत्यव्ययेऽतिव्याप्तिः, तस्यापि वर्जनरूपक्रियावाचकत्वात् । अतो 'भ्वादि'रित्यावर्तनीयम् । अत्रादिशब्दो व्यवस्थार्थः । तथा च—भूशब्दमारभ्य ये पठितास्ते धातुसंज्ञाः । एवं च—क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमिति लक्षणम् । वादावव्ययेऽतिप्रसङ्गवारणाय सत्यन्तम् , तावन्मात्रोपादाने च हिरुगादावतिव्याप्तिः । अत्राहुः, क्रियावाचित्वलाभायावृत्तिर्न कर्तव्या । न च यादावतिव्याप्तिः, या इत्यस्य लाक्षणिकत्वेनैवाग्रहणात् , यदस्त्यदाद्यत्वम् आपि वेति सिद्धेः, वेत्यव्ययस्य च धातुत्वेऽप्य-

---

( क ) यत्तु—प्रकृतेर्नामधातुनिष्ठत्वेन द्वैविध्यान्नाम्नः स्यादयः प्रत्यया विहिता एवातः परिशेषाद्धातोराख्यातप्रत्ययसिद्धौ कथं पुनरियं '**धातोरिति**' घोषणेत्याशङ्क्य समाधानपक्षे औपगवः पचतिरूपमित्यादौ विभक्त्यन्तस्यापि प्रकृतित्वात्तथा च लुकसूत्रे प्रत्ययग्रहणमुपपद्यते तदेवं प्रकृत्यन्तरव्यवच्छेदार्थम् अवश्यं धातुप्रकृतिर्वक्तव्येति **माधवेनोक्तम्** । तन्मन्दम् । "प्रकृत्यर्थस्ये"त्यादिना तन्निराशदर्शनादित्यत्र चिन्त्यम् ।

(ख) **यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्क्रियेति व्यपदिश्यते ॥ गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताऽभेदः क्रियेतिव्यपदिश्यते ॥ इति ।**

तथा च, पदान्तरसमभिव्याहारं विनैव साध्यत्वप्रकारकप्रतीतिविषयः, एकफलोद्देशेन प्रवृत्तपूर्वापरीभूतावयवकः, सङ्कलनात्मकैकबुद्धिविषयीकृतो व्यापारसमूहः क्रियेति स्पष्टीकृतं **भाष्ये** ।

निद्यादर्शनात्। अथ धातुत्वे विकल्पादावपि गन्धनादाविव वातीति रूपमापद्येतेति चेत्? शृणु, तस्याव्ययत्वेन "अव्ययाद्विभक्तेरि"ति तिबादेर्लुकोऽनिवार्यत्वात्। एवं च सूत्रे विभक्तिग्रहणस्य सार्थक्यम्। न स्यादेरिति नोक्तम्। सर्वादिरुभशब्दस्य तु उभ उभे इत्यत्र पठितत्वेऽपि उभकावित्याद्यर्थतया सर्वादिपाठस्योक्तत्वेन धातुत्वबाधनात्, धातुत्वेहि स्याद्यनुत्पत्तेरुभकावित्यस्यासंभवात्॥ अथ द्योर्दिवावित्यत्र स्वर्गवाचकस्य धातुत्वं स्यादिति वाच्यम्, न, तत्रोदितः पाठेनानुदितस्तस्याग्रहणात्। सानुबन्धकग्रहणेनातदनुबन्धकस्येत्युक्तेरिति। का पुनः क्रिया, भावनैवेति गृहाण। तथाहि—अभवतो गमनादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्तुः करोतिकर्मत्वम्। तथा च करोत्यर्थकर्तुर्भवित्र्प्रयोजकतया भवतेरुत्पत्त्यर्थात्प्रयोजकव्यापारो णिरुत्पद्यमानः करोत्यर्थमवलम्बते॥२॥

## (क) आदनुदात्तङितः॥ अनुदात्तेतो ङितश्च धातोरात्॥ ३॥

( सु० ) **आदनुदात्तङितः**॥ आनुदात्तश्च ङ् च अनुदात्तङौ ताविती यस्य धातोः सोऽनुदात्तङित्तस्मात्। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमभिसंबध्यते। (ख) द्वन्द्वेऽल्पस्वरेऽपि ङस्य पूर्वनिपातो न, हसन्तत्वात्। "**ण्यायनणि**"त्यादिज्ञापकसिद्धं हि तत्। ज्ञापकसिद्धं न सर्वत्रेति '**देवतेदमर्थे**' इत्यादिना च तस्यानित्यत्वाच्च। अनुदात्तेतो ङितश्च धातोरात्मनेपदं भवति। एधते। शेते। अन्यपदार्थत्वेन धातोराश्रयणं किम्। अगमत् अशिश्रियत्। ङाद्योर्ङित्त्वेऽपि धातुत्वाभावादात्र॥ ३॥

( त० ) **आदनुदात्तङित** इति॥ आत्, आनुदात्तश्च ङ् च अनुदात्तङौ ताविती यस्य स तथा तस्मात्। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमभिसम्बन्ध्यते इत्यत आह—**आदनुदात्तेतो ङितश्चे**त्यादि। अत्र ङ् इत्यस्याल्पस्वरत्वादल्पस्वरस्येत्यप्रवृत्तेः परनिपातः द्वयोः स्वरान्तयोर्मध्येऽल्पस्वरस्य ग्रहणात्, "**देवतेदमर्थे**" इत्यादिना तस्यानित्यत्वाच्च। आत्परयोरेव सर्वत्र संज्ञात्वेन दर्शनात् 'नामैकदेशेन सर्वनाम लक्ष्यत' इति न व्याख्येयम्, अन्यपदार्थत्वेन धातोराश्रयणात्। अगमद् अशिश्रियदित्यत्र ङाद्योर्ङित्त्वेऽपि धातुत्वाभावादात्र। अत्र विधेयस्य पश्चाद्ग्रहणस्य युक्तत्वेऽपि विपरीतकरणात् क्वचिदन्यत्राप्यात्। तेन को जानीत इत्यादि सिद्धम्॥ ३॥

## ञित्स्वरितेत (ग) उभे॥ ञितः स्वरितेतश्च धातोरात्पे स्त॥

(क) अनुदात्तसंज्ञासूत्रं यथा—'**नीचैरनुदात्तः**' पा० १।२।३१ ताल्वादिषु सभागेषु स्थानेष्वधोभागनिष्पन्नोऽजनुदात्तसंज्ञः स्यात्'इति। '**अनुदात्तङित**'इति '**धातो**'रित्यतोऽनुवृत्तस्य धातोरित्यस्य विशेषणम्

( ख ) यत्तु—माधवेनोक्तम् अनुदात्तश्च ङ्चेति द्वन्द्वे निर्देशस्य सौत्रत्वादल्पस्वरस्यापि ङशब्दस्य परनिपात इति तदेतेन खण्डितम्। ननु—तथा सति 'स्तोश्चुभिः' 'ष्टुभिः ष्टु'रित्यादौ हसन्तसकारादीनां कथं पूर्वनिपात इति चेन्न, तत्र सौत्रत्वादितिबोध्यम्। न च तथैवात्र सौत्रत्वकल्पनाया का क्षतिरिति वाच्यम्, व्याधितौषधनयेनात्र पूर्वनिपातशङ्काया अप्रासङ्गिकत्वात्। यतो निषेधः प्राप्तिपूर्वको भवति। अत्र तु पूर्वनिपातप्राप्तिरपि नास्ति, अतोऽलं सौत्रत्वकल्पनाकल्पनया। यद्वा—"**स्तोश्चुभिश्चु**"रित्यादौ सा सहितः तुरिति स्तुः तस्य स्तोरिति समासाश्रयेण तन्निर्वाहः।

( ग ) स्वरितसंज्ञाविधायकसूत्रं यथा **समाहारः स्वरितः** पा० १।२।३१ उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच्स्वरितसंज्ञः स्यादिति। ञित्त्वेन '**डुदाञ् दाने, डुकृञ् करणे** अम्, इत्यादीनामुभयत्वम्। स्वरितेत्त्वेन '**डुपचष् पाके**' इत्यादीनामुभयत्वम्। अत्राह माधवः—

(क) आत्मगामि चेत्फलमात्मने पदं परगामि चेत्फलं परस्मैपदं प्रयोक्तव्यमन्वर्थात् ॥ ४ ॥

( सु० ) **ञित्स्वरितेत उभे** ॥ ञ् इद् यस्य स ञित्, स्वरित इद्यस्य स स्वरितेत्, ञिच्च स्वरितेच्चानयोः समाहारः ञित्स्वरितेत्तस्माद् उभयपदम् । आत्तु सन्निहितमेव, पं तु '**ञित्पे**' इत्यतः परामृश्यते ॥ ४ ॥

( त० ) **ञित्स्वरितेत उभे** इति ॥ ञ इत् यस्य स ञित्, स्वरित इत् यस्य स स्वरितेत्, ञिच्च स्वरितेच्चानयोः समाहारो ञित्स्वरितेत्. तस्मात्, उभे आत्प इत्यर्थः । यथासंख्यमत्र न शङ्कनीयम्, तस्य ज्ञापकसिद्धत्वेनासर्वत्रिकत्वात् । अथात्रानुबन्धद्वयं न कर्तव्यं ञित्स्वरितेत्सु स्वरितेतो वा ञित एव विधेयः तथा च-ञित उभे स्वरितेत उभे इति वा सूत्रणीयमिति चेत्, न डुकृञ् इत्यत्र डुकृञ् अ इति करणे गौरवात् रुधिर् इत्यत्र रुधिरञ् इति करणे च स्वरित ञित इति कर्तुं युक्तं लाघवात् ।। अत्र केचित्—अत्र आत्पशब्दाभ्यामवयवाभ्यामात्मनेपदपरस्मैपदसंज्ञे गृह्येते । ते चान्वर्थे । तथाहि—आत्मने कर्त्रे फलबोधकं पदमात्मनेपदम् । परस्मै कर्त्रे फलबोधकं पदं परस्मैपदम् । तेन कर्तृगामिनि फले आत्मनेपदं परगामिनि फले परस्मैपदमित्याहु:,तन्न, उभेग्रहणस्य वैयर्थ्यापत्तेः । तथाहि–ञित्स्वरितेत एतावदेव सूत्रमस्तु आदिति चानुवर्तनीयम् । तेन कर्तृगामिनि फले आत्, अन्यत्र परतोऽन्यदिति पम् । किं च करोति कुरुते वा घटमित्यत्र घटनिर्माणफलस्य कुलालादन्यगामित्वस्यासंभवात् सृष्टिं चकार चक्रे वा ईश्वर इत्यत्र जगन्निर्माणफलस्य ईश्वरेऽसंभवाच्च । यजधातौ तु स्वर्गकामो यजेत होतर्यजेति श्रुतिभ्यां यजमानर्त्विजोरात्पप्रयोगनियमः, अन्यत्र तु यथेष्टं प्रयोक्तव्यम् ॥ ४ ॥

**परतोऽन्यत्** ॥ उक्तनिमित्तहीनाद्धातोः पम् ॥ ५ ॥

(सु०) **परतोन्यत्** ॥ परस्मादिति परतः । तत्रादिर्विभक्त्यर्थे इति पञ्चम्यन्तात्तस् । परत्वस्य सावधित्वादवध्यपेक्षायामनुदात्तङित इत्यादयः सम्बध्यन्ते । अन्यत्वस्यापि सापेक्षत्वादादुभे चेति सम्बध्यते । अनुदात्तेतो ङितो निविशादेर्ञितः स्वरिते तश्चधातोरन्यस्माद्धातोः परतः केवलं पं भवति ॥ ५ ॥

(त०) **परतोऽन्यदिति** ॥ परस्मादिति परतः । तत्रादिर्विभक्त्यर्थे इति पञ्चम्य-

---

कर्तरि पं च स्वरितेतः परस्मैपदमिति सूत्रारम्भसामर्थ्यात्, अन्यथा हि ञितां स्थाने ङकारोपदेशेन ङित इत्येव सिद्धमात्मनेपदम्, स्वरितेतस्तु परतोन्यदित्येव परस्मैपदमपि सिद्धमिति किमस्यारम्भेण, क्रियाफलस्य च कर्तृगामित्वादिप्रयोगादनुमास्यते । ननु संज्ञा हि नामतो लघीयसी इति तत्कथमेते महासंज्ञे इत्याशङ्क्य उभयपदप्रयोगव्यवस्थाप्रतिपादनद्वारेणाविःकरोति, **आत्मगामीति** । आत्मशब्देनात्र कर्त्रेत्युच्यते, प्रत्ययवाच्यत्वात् । फलशब्देनापि प्रधानभूतं स्वर्गादिफलमुच्यते तदुद्दिश्य क्रियारम्भात्, आद्या हि प्रवृत्तिरारम्भस्तथोक्तम्—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥ इति ।

अत एव यजन्ति याजका इत्यादौ दक्षिणादेः फलस्य कर्तृगामित्वेऽपि नात्मनेपदम्, प्रधानभूतस्य हि स्वर्गादेः फलस्य प्रत्ययवाच्ययजमानगामित्वात् तदेवप्रधानभूतस्वर्गादिफलं यदि कर्तृगामि प्रत्ययवाच्यगामि तदोभयपदिनो धातोरात्मनेपदं प्रयोक्तव्यम्, मैवं, परगामि चेत्फलं तदा परस्मैपदं प्रयोक्तव्यमित्यर्थः, कुतएतावल्लभ्यमित्याशङ्क्याहान्वर्थादिति ।

( क ) तालपत्राङ्कितप्राचीनपुस्तकगतपाठोऽयम् ।

न्तात्तस् परत्वस्य सावधित्वात् । अवध्यपेक्षायामनुदात्तङित इत्यादयः सम्बध्यन्ते । अन्यत्वस्यापि सापेक्षत्वादादुभे वेति सम्बध्यते इत्याशयेनाह **उक्तनिमित्तेत्यादि** ॥ उक्तानि निमित्तानि तैर्हीनात् रहितादित्यर्थः । तथा च—अनुदात्तेतो ङितो निविशादेः ञितः स्वरितेतश्च धातोरन्यस्मात्पं भवतीत्यर्थः अनुदात्तेत इत्यादि किम् । एधते । प्रवर्तते ॥ ५ ॥

**नव पम्** ।॰ तिबादीनामाद्यानि नव वचनानि पसंज्ञानि स्युः ॥ ६ ॥

**पराण्यात्** ॥ पराणि नव वचनानि आत्मनेपदानि स्युः ॥ ७ ॥

(सु०) **नवपम्** ॥ **पराण्यात्** ॥ प्रत्येकमष्टादशवचनात्मका दशविधा आख्याता उक्तास्तेषां नवनववचनानां संज्ञा विधियते । ॰ तिबादीनामाद्यानि नव वचनानि पसंज्ञानि, पराणि नवात्संज्ञानि । पराणीति परशब्देन नवपमित्यत्राद्यानीति लभ्यते ॥ ६ ॥ ७ ॥

(त०) **नव पमिति** ॥ अत्र "पराण्यादि"त्यत्र परशब्देनाद्यानीति लभ्यते । अत्र पाच्छब्दयोरेव संज्ञात्वं, न तु ताभ्यामवयवभूताभ्यामाक्षिप्तयोः परस्मैपदात्मनेपदशब्दयोरवयविनोः 'दादेः पे' णित्पे' 'आद्भुवि' इत्यादौ पाच्छब्दयोरेवावृत्तिदर्शनाल्लाघवाच्च । न च परगामिक्रियाफलात्मगामिक्रियाफलरूपान्वर्थलाभो न पाच्छब्दाभ्यामिति वाच्यम्, विवक्षयैतल्लाभात् । (क) कमलवनोद्घाटनं कुर्वते ये" इत्यत्रात्मगामिफलाभावेऽप्यादर्शनात् । याजको यजति यजमानो यजेतेत्यत्र परगामित्वात्मगामित्वलाभस्तु शिष्टाचारात्, तस्मादत्र न समुदायाक्षेपः ॥ ६ ॥ ७ ॥

**नाम्नि च युष्मदि चास्मदि च भागैः** ॥ तिबाद्येकार्थेषु नामादिषूपपदेष्वेते प्रत्ययास्त्रिभिर्भागैः स्युरात्पयोः । नाम्नि प्रयुज्यमाने (ख) चाद् प्रयुज्यमाने प्रथमः । युष्मदि मध्यमः । अस्मद्युत्तमः ॥ ८ ॥

(सु०) **नाम्नि च युष्मदि चास्मदि च भागैः** ॥ अत्र पाच्छब्दावनुवृत्तौ सप्तम्या विपरिणमयितव्यौ । आद्भुवीत्यादेः कर्मणि कर्तरीति चानुवर्तते । नामादिशब्देन विभक्त्यन्तं गृह्यते, प्रकरणात्तिबादयो दशविधा आख्याता गृह्यन्ते । नामाद्यर्थे कर्तरि कर्मणि च विहितानां तिबादीनां धातोर्यानि नव वचनानि तानि त्रिभिर्भागैर्विभज्य प्रयोक्तव्यानि । यथासंख्येन नामार्थे कर्तरि प्रयुक्तेऽप्रयुक्ते च प्रथमो भागः प्रयोक्तव्यः । प्रयुक्ते,-स पचति । तौ पचतः । ते पचन्ति । स पचते । तौ पचेते । ते पचन्ते । अप्रयुक्ते,-पचति, पचतः, पचन्ति । पचते, पचेते, पचन्ते । नामर्थे कर्मणि प्रयुक्ते,—ओदनः पच्यते । ओदनौ पच्येते । ओदनाः पच्यन्ते । अप्रयुक्ते,—पच्यते, पच्येते, पच्यन्ते । पं तु कर्मणि नास्ति । युष्मदर्थे कर्तरि प्रयुक्ते,—त्वं पचसि, युवां पचथः, यूय पचथ । त्वं पचसे, युवां पचेथे, यूयं पचध्वे । अप्रयुक्ते, पचसि, पचथः, पचथ । पचसे, पचेथे, पचध्वे । युष्मदर्थे कर्मणि प्रयुक्ते । त्वं दुःखी क्रियसे रागैः । युवां दुःखिनौ क्रियेथे ।

---

(क) प्रस्फुटनात्मकं धात्वर्थतावच्छेदकं फलं कमलवननिष्ठमेव विकसितेषु सत्सु कमलेषु कमनीयादिगुणास्तदुत्कर्षं वर्द्धयन्ति, अपि च पश्यतां नेत्रानन्दं पुष्णन्ति, न तद्वन्मयूखानामिति मनोरथेनाह फलाभाव इति ।

( ख ) क्वचिच्चादित्यत्र चशब्दादिति, ता० प्रा० पाठः । प्रथममध्यमोत्तमा इति भागत्रयं पुरुषशब्देन व्यवह्रियते ।

यूयं दुखिनः क्रियध्वे । अप्रयुक्ते–क्रियसे, क्रियेथे, क्रियध्वे । अस्मदर्थे कर्तरि प्रयुक्ते,– अहं पचामि, आवां पचावः, वयं पचामः । अहं पचे, आवां पचावहे, वयं पचामहे । अप्रयुक्ते—पचामि, पचावः, पचामः, पचे, पचावहे, पचामहे । अस्मदर्थे कर्मणि प्रयुक्ते,–विरागैः सुख्यहं क्रिये । आवां क्रियावहे । वयं क्रियामहे । अप्रयुक्ते,–क्रिये, क्रियावहे, क्रियामहे । त्वया पच्यते मया पच्यते इत्यत्र युष्मदाद्यर्थे आख्यातस्य विधानाभावान्न मध्यमोत्तमौ, प्रथमातिक्रमणे कारणाभावात्प्रथम एव ॥ (क) नन्विह भवान्पचत्वित्यत्र मध्यमः प्राप्नोति, भवद्युष्मच्छब्दयोरेकार्थत्वादिति चेत्, न, तयोरर्थभेदात् । अलिङ्गः संबोधनाविषयश्च युष्मदर्थः, भवदर्थस्तु लिङ्गवान्, न च संबोधनैकविषय इति । त्वद्रूपः त्वत्कल्पः त्वत्तरः पचसि । मद्रूपः मत्कल्पः मत्तरः पचामीत्यत्र तदा[र]देर्विशेषणत्वेनाकर्तृत्वात्, युष्मदस्मदर्थस्यैव कर्तृत्वात्, मध्यमोत्तमौ भवतः । अतित्वं प्रियत्वं पचति अत्यहं प्रियाहं पचतीत्यत्र पूर्वपदान्यपदार्थयोः प्राधान्येन कर्तृत्वात् युष्मदस्मदर्थयोर्गौणत्वेन कर्तृत्वाभावान्न मध्यमोत्तमौ । एवमत्वं त्वं संपद्यते त्वद्भवतीत्यादावपि च्व्यन्ते हि सङ्घीभवन्ति ब्राह्मणा इत्यनुरोधेन प्रकृतेः कर्तृत्वम् । विकृतेः कर्तृत्वे तु सङ्घीभवन्ति ब्राह्मणा इति स्यात् । अत्रापि युष्मदस्मदर्थयोः विकृतित्वेनाकर्तृत्वेनाकर्तृत्वम् । तदुक्तम्—

> **"यदा च्व्यर्थे विनिर्दिश्ये भवतो युष्मदस्मदी ।**
> **द्वयोरपि तयोर्योगे न धातोर्मध्यमोत्तमौ ॥ १ ॥**
> **प्रकृतेर्विकृतेर्वाऽपि ह्येकदा प्रतिपादने ।**
> **वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु ॥ २ ॥**

अत एव मृद् घटा भवन्ति, ओदनस्तण्डुला भवन्ति इति प्रयुज्यते । तिबादिभिः सह एकोऽर्थो येषां तेषु तिबाद्येकार्थेषु तिबादीनां यः कत्रादिरित्यर्थः । स एव कत्रादिरर्थो नामादीनामित्यर्थः । तिबाद्यकार्थेष्विति किम् ?, त्वां पश्यति । त्वया क्रियते । तुभ्यं ददाति ॥ ८ ॥

(त०) **नाम्नि चेति** ॥ '**अत्र आद्भुवि**' इत्यादेः कर्मणीति कर्तरीति चानुवर्तते । पाच्छब्दावनुवृत्तौ च सप्तम्या विपरिणम्येते ॥ **तिबाद्येकार्थेष्विति** । तिबादिभिरेकार्थास्तेषु यथासंख्यं दर्शयति नाम्नि प्रयुज्यमाने चादित्यादिना ॥ ननु भागैरित्युक्ते कथं त्रय एव भागा लभ्यन्ते, न चत्वारः पञ्च वेति चेत्, सत्यम् कपिञ्जलालम्भनन्यायेनेति गृहाण । तथाहि—'कपिञ्जलानालभेत' इति वाक्ये कपिञ्जलानिति बहुवचनेऽपि एकस्मिन् द्वयोश्च बहुत्वाभावात् प्रथमबहुत्वस्य त्रिषु लाभात् त्रय एव गृह्यन्ते, न तु चतुः पञ्चादय इति । एवमिहापि बोध्यम् । भवान् पचतीत्यत्र तु युष्मद्भवदर्थयोः समार्थत्वाभावान्न मध्यमः । तथा हि अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः । भवदर्थस्तु लिङ्गवान्न च संबोधनैकविषयः । त्वत्तरः पचसि मत्तरः पचामीत्यादौ तरादेर्विशेषणत्वादप्रधानत्वादकर्तृता । युष्मदर्थयोरेव प्रधानत्वात्कर्तृत्वेन मध्यमोत्तमावेव । अतित्वं पचतीत्यादौ तु तथात्वाभा-

(क) द्वयोः साम्यार्थात् 'युष्मदिमध्यम'इत्युक्त्या भवच्छब्दनिष्ठकर्तरि मध्यमपुरुषमाशङ्कयति—**नन्वित्यादिना** । अर्थभेदं दर्शयति—**अलिङ्गमित्यादिना** ।

वान्न तथा । अत्वं त्वं संपद्यते त्वद्भवतीत्यादौ च्व्यन्ते तु संघीभवन्ति ब्राह्मणा इत्याद्यनुरोधेन प्रकृतेरेव कर्तृत्वं न विकृतेर्युष्मदर्थस्य । उक्तं च—

"यदा च्व्यर्थो विनिर्दिष्टो भवतो युष्मदस्मदी ।
द्वयोरपि तयोर्योगे न धातोर्मध्यमोत्तमौ ॥
प्रकृतेर्विकृतेर्वाऽपि ह्येकदा प्रतिपादने ।
वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु ॥"

मृद् घटा भवन्ति ओदनस्तण्डुला भवन्तीत्येव ॥ ८ ॥

**कर्तरि पं च** ॥ चादात् । (क)भू सत्तायाम् ॥ ९ ॥

( सु० ) **कर्तरि पं च** ॥ कर्तरि वाच्ये धातोः पं भवति (ख) चकारादादपि ॥ पचति, आख्यातप्रत्ययेनोक्तत्वात् कर्तरि प्रथमा ॥ ननु भावकर्मकर्तृष्वाद्विधानात् कथं निर्णयः स्यात् , मैवं, प्रयोगान्निर्णयसंभवात् । आस्ते शेते नर इत्यत्र कर्तरि प्रथमादर्शनात् कर्तर्यात् ॥ शय्यते आस्यते नरेणेत्यत्र कर्तरि तृतीयादर्शनात् भावे आत् ॥ चक्रे करिष्यते वा घटं कुलाल इत्यत्र कर्तर्यात् ॥ चक्रे करिष्यते वा घटः कुलालेनेत्यत्र कर्मण्यात् ॥ कर्मणि प्रथमायाः कर्तरि तृतीयायाश्च दर्शनात् कृषीष्ट कर्तेत्यत्र त्वनिर्णय एव । यथा रामाभ्यामित्यत्रानिर्णयः ॥ ९ ॥

**वर्तमाने-तिप्, तस्, अन्ति । सिप्, थस्, थ । मिप् वस्, मस् । ते, आते, अन्ते । से, आथे, ध्वे । ए, वहे, महे,॥**

वर्तमानार्थक्रियावृत्तेर्धातोस्तिबादयः प्रत्यया भवन्ति ॥ एषां संज्ञा लट् ॥ १० ॥

( सु० ) **वर्तमाने तिप् तस् अन्ति, सिप् थस् थ, मिप् वस् मस्, ते आते अन्ते, से आथे ध्वे, ए वहे महे** ॥ वर्तमाने इति व्यापारे इति शेषः । व्यापारः क्रिया । सा च धातोर्वाच्या । सा त्रिविधा । अतीतानागतवर्तमानभेदात् । तत्र वर्तमानक्रियावृत्तेर्धातोस्तिबादयो भवन्ति । ते च द्योतकाः । वर्तमानक्रियाया धातुनैवोक्तत्वात् । यदि तु सद्य आदिरित्यतः 'काले' इत्यनुवर्तते वर्तमाने काले वाच्ये तिबादय

---

( क ) भूसत्तायामिति भ्वित्यंशे धातुः, सत्तायामित्यंशेऽर्थः । धातुलक्षणं यथाह-**शब्दशक्तिप्रकाशिकायाम्—**

**"यो यत्स्वार्थस्योत्तरस्थतृजर्थं बोधनक्षमः । स तादृशार्थकः शब्दो धातुस्त्रिविध ईरितः" ॥**

तथा च, यादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चयत्वं स्वाश्रयोत्तरतृजर्थधर्मिक स्वाश्रयज्ञानजन्योपस्थितिसहकारेण स्वाश्रयप्रतिपाद्यार्थप्रकारकशाब्दत्वव्यापकजन्यतानिरूपितजनकतावच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे धातुत्वमिति । एवञ्च—

**यः सुवथ निजार्थस्य स्वान्ते कृच्चिन्तनं विना । यादृशस्यान्वयाहेतुः स वा धातुस्तदर्थकः ॥**

तथा च, स्वाश्रयोत्तरकृच्चिन्तनाभावविशिष्टयादृशानुपूर्वीप्रकारकनिश्चयत्वं सुवर्थधर्मिकस्वाश्रयोपस्थाप्ययादृशार्थान्वयबोधजनकतानवच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं धातुत्वमिति । **सत्तायामिति—** अस्तीति सत् तस्य भावः सत्ताऽऽत्मधारणानुकूलव्यापार इत्यर्थः । नन्वनेकधातुस्थितौ तान् विहाय भूधातोः कथं प्रथमप्रयोग इति शङ्कायां केचिदाहुः-अशोकवनिकान्यायेन तथोपात्तमिति । यद्वा भूशब्दस्य स्वरूपतो व्याहृतिरूपतया माङ्गल्यात्प्रथमविधानमित्यपि केचित् । भूधातुदात्तेत्वात् परस्मैपदी वर्त्तत इति माधवः । ( ख ) "आद्भुवि कर्म्मणि"—इत्यतश्चकारेणात्राद्ग्रहणमनुकृष्यते ।

इति व्याख्यायते तदा तिबादयो वाचका अपि भवन्ति । (क) कालस्य धातुनाऽभिहितत्वात् ॥ अथ को वर्तमानः ? प्रारब्धापरिसमाप्तो वर्तमानः । भूरस्तीत्यादौ कथं वर्तमानादिः प्रारब्धापरिसमाप्तत्वाद्यभावात् । उच्यते, सृष्टिसंहारश्रुतिप्रामाण्यस्वीकर्तृणां मतेऽत्राप्यस्ति वर्तमानत्वम् । कल्पादौ प्रारब्धायाः स्थितेरपरिसमाप्तत्वात् । "तस्थुः पर्वता" "भविष्यति भुरि"त्यादौ त्वतीतानागतकल्पावादाय-भूतभविष्यते बोध्ये । क्रियाफलयोर्वाचको धातुः । कालः सङ्ख्या । कारकं चाख्यातार्थः । तत्र तिबादित्वेन कालोऽर्थः तिप्तस्त्वादित्वेन एकत्वद्वित्वबहुत्वरूपाः संख्यार्थाः । आत्त्वेन भावकर्मणोरर्थः । आत्त्वेन पत्वेन च कर्त्रर्थः तत्र फलस्य कर्मण्यन्वयः, फलाश्रयस्य कर्मत्वात् । व्यापारस्य कर्त्तर्यन्वयो धातूपात्तव्यापाराश्रयस्य कर्तृत्वात् । संख्यायास्तु कर्तरि प्रत्यये कर्तर्यन्वयः । कर्मणि प्रत्यये कर्मण्यन्वयः । कालस्य क्रियायामन्वयः । कर्तृकर्मणी क्रियाविशेषणे। क्रिया तु विशेष्येति (ख)शाब्दिकमतम् । वर्तमानोऽर्थो यस्याः सा वर्तमानार्था सा चासौ क्रिया चेति शाकपार्थिवादित्वात् मध्यमपदलोपः । वर्तमानक्रिया सा वृत्तिर्यस्य स तथा।तस्मात् तिबित्यादेः समाहारे एकपद्य , अन्यथाऽसमासे त्वष्टादशपदत्वम् ॥ १० ॥

( त० ) **वर्तमाने** इति व्यापारे इति शेषः । व्यापारश्च क्रिया, सा च त्रिविधा अतीतानागतवर्तमानभेदात् । सा च धातुवाच्या इत्याशयेनाह—**वर्तमानार्थे**त्यादि । वर्तमानः अर्थो यस्याः सा वर्त्तमानार्थाः सा चासौ क्रिया चेति सा तत्र वृत्तिर्यस्य स तथा तस्मादित्यर्थः । तिबित्यादेः समाहारे ऐकपद्यम् । अन्यथा त्वष्टादशपदत्वम् । तिबादयश्च वर्तमानक्रियाया द्योतका एव, न तु वाचकास्तस्य धातुनैव लाभात् । वर्तमानत्वं तु प्रारब्धापरिसमाप्तत्वम् । विंशत्यादिवर्षपर्यन्तं वेदाध्ययनेऽपि अधीते इति प्रयोगदर्शनात् । भूतभविष्यद्भिन्नत्वमिति लक्षणं तु न, भविष्यद्वर्तमानभिन्नत्वं, भूतत्वं, वर्तमानभूतभिन्नत्वं भविष्यत्त्वमित्यपि स्यात्, तथा च—अन्योन्याश्रयदोषः स्यात् । पर्वतास्तिष्ठन्तीत्यत्र तु स्वतो भूताद्यभावेऽपि कालत्रयवर्तिनां राज्ञां भूतादिभेदभिन्नपालनादिक्रियाभेदाद्भूतादिव्यवहारः । तथाहि—नलादिकाले तस्थुः । कल्क्यादिकाले स्थास्यन्ति । इदानीन्तनराजकाले तिष्ठन्ति । आत्माऽस्तीत्यत्रापि शरीराद्युपाध्यतीतत्वादिनाऽतीतत्वादिव्यवहारोऽस्तीति दिक् ॥ १० ॥

**(ग)अप् कर्त्तरि** ॥ कर्त्रर्थेषु तिबादिषु चतुर्षु दिप्पर्यन्तेषु परतो धातोरप् स्यात् ॥ ११ ॥

( सु० ) **अप् कर्तरि** ॥ कर्तरीति नापोऽभिधेयमाख्यातोक्तत्वात् , किन्त्वनुवृत्तस्य

---

( क ) अतीतादिव्यवहारहेतुः कालोऽष्टद्रव्यातिरिक्तं नवमं द्रव्यं इति **वैशेषिकाणां** मतम् , ईश्वरस्यैव मूर्तिभेदः इति वेदान्तिमतम् , प्रधानस्यैवावस्थाभेद इति सांख्यमतम् । ( ख ) वैयाकरणमतम् ॥

(ग) **यक् चतुर्षु'** इति सूत्राच्चतुर्षु इत्यनुवर्त्तते । नन्विह कर्त्तृग्रहणं किमर्थं भावकर्मणोर्यक् विधानात्, पारिशेष्यात्कर्त्तुर्लाभादिति चेत् , न, इह कर्त्रग्रहणे यको भावकर्म्मणोर्विधानासम्भवात् । सन्निधानात्कर्त्तर्य्येव विधानसम्भवाच्च । **अवित्पत्र**—अविकरणाऽविकरणयोर्भेदबोधनाय पकार इति केचित् । यद्वा अपः पित्त्वम् " **अपित्सार्वधातुकं ङिदिति** ङित्त्वाभावार्थम्। अन्यथा भवत नयतः, इत्यादौ ङित्त्वाद्गुणो न स्यात् । अत्र च योगविभागार्थमाद्योच्चारणं विधेयस्येति बोध्यम् ।

चतुर्ष्वित्यस्य विशेषणम् । धातोरप्स्यात् चतुर्षु कर्त्रर्थेषु परतः ॥ अपः पित्त्वम् अपित्तादिर्ङिदिति ङित्त्वाभावार्थम् । अन्यथा भवत इत्यादौ ङित्त्वाद्गुणो न स्यात् ॥ ११ ॥

( त० ) अप कर्तरीति ॥ कर्त्तरि विहितेषु चतुर्षु तिबादिषु ॥ ११ ॥

**गुणः** ॥ नाम्यन्तस्य (क) धातोर्गुणो भवति ॥ १२ ॥

( सु० ) **गुणः** ॥ अरेदो नामिन इति नियमान्नामिग्रहणम् । तस्य धातोर्विशेषणत्वात् तदन्तविधिः ॥ १२ ॥

( त० ) **गुण** इति अरेदो नामिन इति नियमान्नामिग्रहणम् । तस्य च विशेषणत्वात्तदन्तलाभ इत्याशङ्क्येनाह—**नाम्यन्तस्येति** ॥ १२ ॥

**अपित्तादिर्ङित्** ॥ पकारेतं तादिकं च (ख)विहाय अन्यप्रत्ययो ङिद्वत्स्यात् ॥ १३ ॥

( सु० ) **अपित्तादिर्ङित्** ॥ प् इत् यस्य स पित्, त आदिर्यस्य स तादिः, पिच्च तादिश्च पित्तादी, ताभ्यामन्योऽपित्तादिः । नञिति समासः । ङित् ङिद्वदित्यर्थः ॥ अत्र (ग) पर्युदासबलात् पित्तादिभिन्नः प्रत्यय एव गृह्यते, न धातुः ॥ ननु–सादेः कृतां चानेन ङित्त्वं कुतो नेति चेत्, मैवं, यङ्नङोर्ङित्करणात् ज्ञापकात्। 'नानिटि से' इति सूत्रारम्भाच्च अतः परिशेषात्तिबादीनां चतुर्विधानामाख्यातानां तद्विकरणानां चानेन ङित्त्वं नान्येषाम् । तेन विभरांचकारेत्यादावामो न ङित्त्वम् ॥ १३ ॥

(त०) **अपित्तादिः** । प् इद्यस्य स पित् त आदिर्यस्य स तादिः पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः । नञिति समासः । ङित्—ङिद्वदित्यर्थः पर्युदासात्प्रत्यय एव गृह्यते न तु धातुः न तु दैपद्दापभिन्नस्य धातोर्ङित्त्वं सति ङित्त्वे आत्स्यात् ङिदित्यपहाय किदिति तु नोक्तम्, वक्त इत्यादौ यजादित्वात्किति संप्रसारणप्रसङ्गात् कुरुत इत्यत्र "ङित्यदु"रित्यस्याप्रसङ्गात् । तादीत्यत्रादिग्रहणं तूत्तरार्थं सिसतासीत्यत्रैव नवानां ग्रहणसंभवात् । सिस्योरिति लिङ्गान्तयोर्ग्रहणार्थमपि न। तशब्देन विग्रहस्तु व्याख्यानानुसारान्न सादेः कृतां च ङित्त्वं तु न 'नानिटि से' इति सूत्रारम्भात् । यङ्नङ्ङित्करणात् ज्ञापकात् अतस्तिबादीनां तद्विकरणानामनेन ङित्त्वम्, नान्येषाम्, तेन विभरांचकारेत्यादौ न ङित्त्वम् । यत्तु आदिशब्दादाद्योऽपि गृह्यते, तेन—गोपायतीत्यादिसिद्धिरिति वासुदेवेनोक्तम्, तद्भ्रमसात् ॥ १३ ॥

**क्ङित्यद्व्युसि** ॥ किति ङिति च परे वृद्धिगुणौ न, द्विर्वचनहेतुके उसि गुणः स्यात् ॥ इति तसि गुणाप्राप्तौ अबृनिमित्तो गुणः । भवतः॥१४॥

(सु०) **क्ङित्यद्व्युसि** ॥ क् च ङ् च क्ङौ तावितौ यस्य स तथा तस्मिन् । अद्व्युसीति विशेषणम् । द्वित्वनिमित्ते उसि न, अजुहवुः ॥ १४ ॥

---

( क ) **धातोः प्रेरणे** इत्यतो धातुरित्यनुकृष्यते । धातोरिति किम् अग्निकाम्य इति । अस्य तु रहस्यं विवरणे **चिन्त्यम्** "**गुण**" इति सूत्रस्य वृत्तौ ( क्वचित् ) पिति परे गुणो भवतीति दृश्यते, तन्मन्दम्, पितं विनापि विभरांचकुरित्यादौ गुणदर्शनात् । ( ख ) विनेति, प्रा० ता० पु० पाठः ।

( ग ) **प्राधान्यं तु विधेर्यत्र प्रतिषेधे प्रधानता ।**
**पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्** ॥ इति पर्युदासलक्षणम् ।

(त०) संज्ञाफलमाह—**क्ङित्यद्व्युसि** ॥ क् च ङ् च क्ङौ तावितौ यस्य स तथा तस्मिन् ; अद्व्युसीति विशेषणम् । द्विरुक्तधातोर्निमित्तभूतादुस् द्व्युस् तस्माद् अन्यस्मिन्नित्यर्थः । अतो जुहुवुरित्यादौ तादृशस्य उसोऽभवान्न गुणः । यत्तु नोक्तमनित्यमित्यनेन अजुहवुरित्यादौ न गुण इति वासुदेवेनोक्तम्, तन्न, '**आदेः स्वरेऽपि नोपधाया गुण**" इति सूत्रेणैवात्र गुणनिषेधे सिद्धे तदर्थं नोक्तमनित्यमित्याश्रयणस्य व्यर्थत्वात् ॥ १४ ॥

**(क) अदे ॥** (ख) अतो लोपो भवत्यकारे एकारे च परे । भवन्ति । भवसि, भवथः भवथ ॥१५॥

(सु०) **अदे** । अच्च ए चेति पृथक्पदे (ग) अविभक्तिके । अत इत्यनुवृत्तम् । अतो लोपो भवति अति एति च परे भवन्ति । पचे ॥ अतः किम्, ब्रुवन्ति । ब्रुवे ॥ तपरः किम्, यान्ति । गै । (घ) आख्यातप्रकरणे एवायं विधिस्तेन न स्यादावतिव्याप्तिः॥१५॥

(त०) **अदे** इति ॥ अच्च ए च अदे । लुप्तसप्तमीकम् । अत इति त्वनुवर्तते । स्यादावतिव्याप्तिस्त्वाख्यातप्रकरणत्वान्न ॥ १५ ॥

**व्मोरा ॥** वमयोः परयोरत आत्वं स्यात् भवामि, भवावः, भवामः । स भवति । त्वं भवसि । अहं भवामि । युगपत्प्राप्तौ परः । स च त्वं च भवथः । अहं च त्वं च भवावः । अहं च त्वं च स च भवामः ॥ १६ ॥

(सु०) **व्मोरा** ॥ व् च म् च व्मौ तयोः व्मोः अत आत्वं भवति । भवामि, भवावः, भवामः ॥ अतः किम्, चिनुवः, चिनुमः । (ङ) आख्यातप्रकरणे एव युगपत्प्राप्तौ परः । स च त्वं च पण्डितौ भवथः । अहं च स च त्वं च पण्डिता भवाम इत्यत्र त्रयाणां नामार्थानां कर्तृत्वेनैकदा प्राप्तौ परत्वात् मध्यमोत्तमौ भवतः ॥ उक्तं च—

**"एकदा चेत् क्रियाकालसम्बन्धप्रतिपादनम् ।**
**धातोर्नामादिषूक्तेषु यः परः स पुमान् भवेत् ॥ १ ॥**

परत्वं चाभिधायकसूत्रापेक्षया न प्रयोगापेक्षया ग्राह्यम् । अस्मदर्थस्यैकत्वेऽपि समुदायाश्रिता संख्या ग्राह्या ॥ तदुक्तम्—

**"द्वयोर्नाम्नोर्बहूनां वा यदि वाक्ये समुच्चयः ।**
**नामत्रयाश्रिता संख्या कृतिर्वाद्योर्विशेषणम् ॥ १ ॥**

स च त्वं च अहं चाहेति विवक्षायां त्वेकशेषो भवति । संख्या तु समुदायाश्रिता ॥१६॥

(त०) **व्मोरा** इति ॥ अत्रापि स्यादावपि नातिप्रसङ्ग उक्तयुक्तेः । तेन धनवानित्यादौ नात्वम् । समानाधिकरणनामादिसन्निपाते व्यवस्थाऽर्थमाह-**युगपदिति** ॥ एकद-

( क ) सूत्रमिदं '**सवर्णे दीर्घः सह**' त्यस्यापवादकम् ।

( ख ) "**लोपो ह्रस्वादि**"ति सूत्रादनुवर्तमानलोपापेक्षया अत इति पञ्चम्यन्तमप्यर्थात् षष्ठ्यन्तं स्यादिति सम्भाव्याह—**अत इति** अकारस्येत्यर्थः ।

( ग ) अनुकार्यानुकरणयोरभेदविवक्षया विभक्त्यनुत्पत्तिरत्र ।

( घ ) देवाश्र हे, देवैषा, इत्यादिसुबन्तस्थलेऽप्यस्य प्रवृत्तिमाशङ्क्याह—**आख्यातप्रकरण इति**

(ङ) व्मोः किम्, भवथः, भवथ ।

प्राप्तौ परः पुरुषः, प्रथमापेक्षया मध्यमः, मध्यमापेक्षया उत्तमः पुरुषो भवतीति यावत् ॥ १६ ॥

**विधिसम्भावनयोः—यात् , याताम् , युस् । यास् , यातम् , यात । याम् , याव, याम । ईत, ईयाताम् ईरन् । ईथास्, ईयाथाम् , ईध्वम् । ईय, ईवहि, ईमहि,** ॥ विधिः कर्तव्यार्थोपदेशः संभावनं कल्पनम् । तत्र यादादयः ॥ एषां संज्ञा लिङ् ॥ १७ ॥

(सु०) **विधिसम्भावनयोः** ॥ यात् याताम् युस् , यास् यातं यात, याम् याव याम, ईत ईयाताम् ईरन् , ईथास् ईयाथाम् ईध्वम् , ईय, ईवहि ईमहि ॥ धातोर्यादादयः प्रत्ययाः स्युः ॥ विधिसंभावनयोर्वाच्ययोरित्यर्थ वाचकतापक्षः । न चात्र पक्षे विध्यादिनाऽर्थेन कर्त्राद्यर्थबाधो, विरोधाभावात् । यद्वा—विधिसंभावनयोर्वर्तमानाद्धातोर्यादादयः प्रत्ययाः स्युः । विध्याद्यर्थस्य विशेष्यस्य प्रकृत्यर्थविशेषणत्वे द्योतकतापक्षोऽयम् । विपूर्वाद्धाधातोरन्तर्भावितण्यर्थात् "नङ्कि"रिति भावे किः, 'विध विधाने, इत्यस्मादन्तर्भावितण्यर्थाद्वा किः । विधानं वेधनं वा विधिः, अनुष्ठापनं, कारणा, प्रवर्तनेति यावत् । सा-प्रवर्तना श्रुतिवाक्यनिष्ठा । लौकिकवाक्ये पित्रादिवक्तृनिष्ठा । संपूर्वकाद्भवते श्चौरादिकाद्वा प्रेरणे स्वार्थं वा णिः । भावे युट् । ततः स्त्रियामाप् । संभावना कल्पना ऊहः । कर्तव्योऽर्थस्तस्योपदेशो विधिः ॥ १७ ॥

(त०) **विधिसम्भावनयोरिति** ॥ विधानं विधिः । विपूर्वाद्धाञो **"नङ्कि"** रिति । किप्रत्ययः । संभाव्यते संभावना । भावे युट् । संपूर्वाद्भवतेश्चौरादिकाद्वा । तयोरर्थमाह—विधिरित्यादिना कर्तव्यः करणीयो योऽर्थस्तस्योपदेशः कल्पनमूहः ॥ **तत्रेति** ॥ तयोरर्थयोर्वाच्ययोर्द्योत्ययोर्वा यादादयो भवन्तीत्यर्थः, पक्षद्वयस्यापि भाष्ये स्वीकृतत्वात् । तत्राद्यपक्षे त्वित्थमुपपत्तिः । विध्यादिनाऽर्थेन कर्त्राद्यर्थबाधो न जायते विरोधाभावात् । वर्तमानत्वादेरिव तिबादिवाच्यत्वाशेषेण कर्त्रादेरपि निरवकाशत्वाच्च । क्रियां प्रति प्रत्ययार्थतया विशेष्यत्वं तु तुल्यमेव । द्वितीयपक्षे त्वेवोपपत्तिः । विधिसम्भावनयोर्वर्तमानाद्धातोर्यादादयः प्रत्ययाः स्युः । विध्याद्यर्थस्य विशेष्यस्य प्रकृत्यर्थविशेषणत्वे द्योतकतापक्ष आयाति । एवं च विध्यादेः प्रत्ययार्थत्वं नोचितम् । प्रत्ययार्थत्वे कर्त्रादेरन्यत्र सावकाशत्वेन विध्यादिना बाधः स्यात् । ततश्च यादादिभिरभिधानं कर्त्रादेर्भज्येत । ततस्तु तत्प्रयुक्तैकत्वादिव्यवस्थाप्रथमपुरुषादिव्यवस्थाश्च न स्युरिति महदनिष्टं स्यात् । यद्यपि निमन्त्रणादयोऽप्यर्थाः पाणिनीये प्रदर्शितास्तथाऽपि तेषु प्रवर्तना त्वस्यैकत्वान्नात्र भेदविवक्षा । उक्तं च वाक्यपदीये—

> **"न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।**
> **विध्यादीनामपादानं चतुर्णामादितः कृतम् ॥**
> **अस्तिप्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि ।**
> **तत्रैव लिङ् विधातव्यः किंभेदस्य विवक्षया ॥" इति ॥**

प्रवर्तना तु श्रुत्यादिवाक्यकर्त्रीश्वरादिनिष्ठा लौकिकवाक्ये तु पित्रादिवक्तरि निष्ठा । वेदाध्ययनादौ बालानां पित्रादिप्रयुक्तप्रवृत्तिदर्शनादिष्टसाधनत्वं विध्यर्थम् , इति मतं नाद-

तव्यम् , स्वप्रवृत्तेरिष्टसाधनत्वस्यानुमीयमानत्वात् । उदाहरणमाह—शिष्यो गुरुशुश्रूषक भवेदिति । एकशिष्याश्रया गुरुनिष्ठप्रीतिजननानुकूला या क्रिया तद्विषया प्रेरणेति विशेष्यपक्षः । प्रेरणाविषया एकशिष्याश्रया गुर्वाश्रयप्रीतिजननानुकूला क्रियेति विशेषणपक्षः ॥ **भवेदसाविति** । अत्रैककोटिकसंशयः स्थाणुर्वा पुरुषो वेत्यादौ तु सर्वाः कोटयः समत्वेन भासन्ते । अत्र तु वेदवित्त्वावेदवित्त्वयोर्वेदवित्त्वकोटिरेवाधिका । संशयादयमेव विशेषः सम्भावनायाम् । ब्राह्मणत्वादिहेतोर्व्यभिचारित्वान्न निश्चयः । अवेदविदोऽपि ब्राह्मणा दृश्यन्ते । वेदविदः क्षत्रियाश्च । वेदावाप्त्यनुकूलभावनाश्रय एकोऽपरोक्षार्थस्तदाश्रयात्मधारणानुकूला या भावना तद्विषया ब्राह्मणत्वहेतुका या सम्भावना तद्विषया वेदावाप्त्यनुकूलभावनाश्रयपरोऽक्षैकार्थनिष्ठात्मधारणाऽनुकूला भावनेति वा बोधः । एवं भवेदयं बलवान् क्षत्रियत्वादित्यादि बोध्यम् ॥ १७ ॥

**या** ॥ अतः परो या इः स्यात् ॥ भवेत् , भवेताम् ॥१८॥

(सु०) **या** इति ॥ अविभक्तिको निर्देशः । अतः परो या इः स्यात् ॥ अतः किम् । युयात् । तपरः किम् ? यायात् ॥ १८ ॥

(त०) **या** इति ॥ अनुकार्यानुकरणयोरभेदविवक्षयाऽविभक्तिको निर्देशः । "**आद्रा त्थइरि**"त्यत इरित्यनुवर्तते । अन्त्यादेशः षष्ठ्यभावान्न ॥ १८ ॥

**युस इट्** ॥ अतः परस्य युस इडागमः स्यात् ॥ भवेयुः । भवेः, भवेतम् , भवेत ॥१९॥

(सु०) **युस इट्** ॥ अतः परस्य युस इट् स्यात् ॥ टित्वादादौ ॥ १९ ॥

(त०) **युस इट्** ॥ इति टित्वादागमः । अन्यथा इरित्यस्यानुवृत्तौ इड्ग्रहणं न कुर्यात् ॥ १९ ॥

**यामियम्** ॥ अतः परो यामयं स्यात् ॥ भवेयम् , भवेव, भवेम । शिस्यो गुरुशुश्रूषको भवेत् । विधिः । भवेदसौ वेदवित् ब्राह्मणत्वात् ॥२०॥

(सु०) **यामियम्** ॥ अतः किम् ? युयाम् । तपरः किम् ? युयाम् ॥ २० ॥

**आशीःप्रेरणयोः-तुप् , ताम् , अन्तु।हि, तम् , त । आनिप् , आवप् , आमप् । ताम् , आताम् , अन्ताम् । स्व, आथाम् , ध्वम् । ऐप् , आवहैप् , आमहैप** ॥ अप्राप्तप्रार्थनमाशीः । परस्येष्टार्थशंसनं । प्रेरणं प्रवर्तनम् । तत्र तुबादयः ॥ एषां संज्ञा लोट् ॥ २१ ॥

( सु० ) **आशीःप्रेरणयोः तुप् ताम् अन्तु, हि तम् त, आनिप् आवप् अमप् । ताम् आताम् अन्ताम , स्वं अथाम् ध्वम , ऐप् आवहैप् आमहैप्** ॥ धातोस्तुवादयः स्यु आशीःप्रेरणयोर्वाच्ययोः । आशीःप्रेरणयोर्वर्तमानाद्धातोरिति द्योतकतापक्षः आशासनमाशीः । 'आङः शासु इच्छायाम्' ततः क्विप् । आत इत्त्वं निपातितं षत्वम् । प्रपूर्वादीर्गतावित्यस्मात्प्रेरणार्थण्यन्ताद्भावे युट् । प्रेरणा प्रवर्तना विधिशब्दार्थ एव । आशीश्च प्रेरणा च आशीःप्रेरणे तयोः । आशासनं चाप्राप्तस्यैव भवतीत्यप्राप्तप्रार्थनमाशीः । सा च स्वस्य परस्य च संभवतीति परस्येष्टार्थशंसनं वा

आशीरिदमप्यप्राप्तविषयमेव । यद्यपि यादादितुबादयो न कालविशेषे विहिताः तथापि भविष्यत्कालोऽत्र गम्यते, अतीतवर्तमानयोर्विध्याद्यसंभवात् ॥ २१ ॥

(त०) **आशीःप्रेरणयोरिति** ॥ आशासनमाशीः । "आङः शासु इच्छायाम्" अस्मात् "**संज्ञायामकर्त्तरी**"त्यनुवर्तमाने "**स्त्रियां क्तिरि**"त्यधिकारे "**संपदादेः क्विब्वे**"ति क्विप् । अस्मादेव निपातनात्क्विपि आत इः। शासेरित्यनेनेत्वं तु परस्मैपदिनो ग्रहणान्न, आशिषीति निर्देशात् । किशात्परस्य धातोः सस्य पः । प्रेर्यत इति प्रेरणा । प्रपूर्वादीर्गतावित्यस्मादन्तर्भावितण्यर्थाद्भावे युट् । प्रेरणा विधिरेव । आशीश्च प्रेरणा च आशीःप्रेरणे, तयोः । तयोरर्थमाह—अप्राप्तेत्यादिना ॥ २१ ॥

**(तुह्योस्तातङ्ङाशिषि वा)** भवतु-भवतात्, भवताम्, भवन्तु ॥

(सु०) **तुह्योस्तातङ्ङाशिषि वा** ॥ **तुश्च हिश्च तुहौ तयोः । अनन्यार्थं हि ङित्त्वमन्त्यादेशं प्रयोजयति । अत्र तु गुणवृद्धिप्रतिषेधे** संप्रसारणे चरितार्थत्वात् ङित्त्वस्य नान्त्यादेशता । ब्रूतात् । मृष्टात् । उष्टादित्यादि ॥ २२ ॥

(त०) **तुह्योरित्यादि** ॥ तुश्च हिश्च तुही तयोः । अत्र तातङो ङित्त्वं गुणप्रतिषेधसंप्रसारणाद्यर्थतयासंभवत्प्रयोजनमतो नान्त्यादेशं प्रयोजयति । अनन्यप्रयोजनमेव ङित्त्वमन्त्यादेशं प्रयोजयति ॥ २२ ॥

**अतः** ॥ अतः परस्य (क) हेर्लुक् स्यात् ॥ भव-भवतात्, भवतम्, भवत । भवानि, भवाव, भवाम । अध्ययनायोद्यतो भव सौम्य । आयुष्मान् भवतु भवान् ॥ २३ ॥

(सु०) **अतः** स्थानिवद्भावेन तातङो हित्वेऽपि लोपो न । (ख) '"ओर्वाहेरि"'त्यतो वेत्यनुवृत्तस्य व्यवस्थितत्वेन स्वीकारात् ॥ २३ ॥

(त०) **अतः** इति ॥ अत्र ओर्वाहेरित्यतो वेत्यस्यानुवृत्तेस्तस्य व्यवस्थितत्वाश्रयणात्स्थानिवद्भावेन तातङो हित्वेऽपि न लोपः ॥ **आयुष्मानिति** ॥ अतिशयितायुःप्राप्त्यनुकूलैकभवदर्थाश्रया याऽऽत्मधारणाऽनुकूला क्रिया तद्विषया शुभाशंसाविषयीभूता । दीर्घायुः प्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणानुकूला क्रियेति वाऽर्थः । यायादितुबादीनां कालविशेषाकथनेऽपि भविष्यत्कालो बोध्यः, शब्दं कुर्वाणे नरे विरामाशङ्कायां शब्दं कुर्वित्युक्तावपि भाविशब्दविषयत्वात् । विधेर्न वर्तमानशब्दविषयता ॥ २३ ॥

---

(क) '**ओर्वा हेरि**' ति सूत्राद्धेरित्यनुकृष्य '**लोपो ह्रस्वा**'दित्यतो लोप इत्यनुकृष्य चाह—**हेर्लोप** इति हेर्लुगित्यर्थः । **अतः** किम्, युहि । तपरः किम्, याहि । **हेः** किम्, भवतः ।

(ख) ननु '**अत**' इति सूत्रे वेति ग्रहणं कर्त्तव्यम्, '**ओर्वा हेः**' इति सूत्रे इतस्तदनुवृत्तिकरणेनासंयोगपूर्वादिति लाभः, वैपरीत्यकल्पनायां विधानगौरवप्रसङ्ग इति चेन्न, '**ओर्वाहे**'रिति सूत्रे वापदोपादानेन कार्यद्वयप्राप्तिसत्त्वात्तद्ग्रहणम् अत्र तु कार्य्यैकत्वात्तदध्याहारः ।

अत्र च लघुभाष्यम्—**तातङो**पि स्थानिवद्भावेन हित्वात् प्राप्तोवेत्यनुवृत्त्या व्यवस्थितविकल्पाश्रयणान्न लोपः । यद्वा—

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न तातङो लोपः । यद्वा । तदभावो न्यायसिद्धो ज्ञापकसिद्धो वा उभयथा तातङि हित्वं नायातीति ।

**अनद्यतनेऽतीते-दिप् ताम् अन् । सिप् तम् त । अमिप् व म । तन् आताम् अन्त । थास् आथाम् ध्वम् । ई वहि महि॥** अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमं यामद्वयं दिवसः सकलः सोऽद्यतनः नास्त्यद्यतनो यस्मिन्नतीते काले तत्र दिबादयः ॥ एषां संज्ञा लङ् ॥ दिसिमीनामिकार उच्चारणार्थः ॥ २४ ॥

(सु०) **अनद्यतनेऽतीते-दिप् ताम् अन्, सिप् तम् त, अमिप् व म, तन् आताम् अन्त, थास् आथाम् ध्वम्, ई वहि महि** ॥ अनद्यतनेऽतीते काले द्योत्ये वाच्ये वा धातोर्दिबादयो भवन्ति ॥ अस्मिन्नहनीत्यद्यशब्दवाच्यः कियान् कालः । अतीतरात्रेरन्तिमं यामद्वयमागामिन्याः प्रथमं यामद्वयं मध्यवर्ती दिवसः स कालोऽद्यशब्दवाच्यः । अद्य भवोऽद्यतनः । **त्यतनाविति** तनः । अद्यतनकालस्त्रिविधः, अतीतोऽनागतो वर्त्तमानश्च । तत्राद्यतने अतीते भूते सिः । अद्यतने वर्तमाने तिबादिः । अद्यतनेऽनागते लट् । नास्त्यद्यतनो यस्मिन्निति बहुव्रीहिः । यद्वा । अद्यतनादन्योऽनद्यतन इति नञीति नञ्तत्पुरुषः । 'अन्स्वरे' इत्यन् । **नाम्नो नो लोपशिति** नलोपस्तु न विधानसामर्थ्यात् । तस्मिन् ह्यस्तने काले दिबादिरर्थादपरोक्षे, परोक्षे णादिविधानात् ॥ २४ ॥

( त० ) **अनद्यतने** इति ॥ अस्मिन्नहनित्यद्य । सद्य आदित्वादिदमद्यप्रत्ययश्चाहनीत्यर्थे निपात्यते । तद्धितोक्तत्वात्प्रथमा । अद्यशब्दवाच्यः कियान् काल इत्याह—**अतीताया** इत्यादि ॥ अतीता गता या रात्रिश्चातुर्यामात्मिका तस्या यद्यामद्वयं ततोऽर्वाक् आगामिन्या रात्रेः प्रथमयामद्वयं यावद्भवति तावानष्टयामात्मकः कालोऽद्यशब्दवाच्यः । केचित्तु—अरुणोदयादारभ्य अरुणोदयपर्यन्तः काल इत्याहुः । अन्ये तु—सूर्योदयादारभ्य सूर्योदयपर्यन्तमित्याहुः । लौकिकानां ह्योऽद्य एव इति तत्रैव व्यवहारदर्शनात् । अद्यभवोऽद्यतनः । "त्यतनावि"ति तनः । अद्यतनश्च कालस्त्रिविधः, अतीतवर्तमानानागतभेदात् । अतीते सिः । वर्तमाने तिबादिः । अनागते स्यप् । नास्त्यद्यतनो यस्मिन्निति बहुव्रीहिः तस्मिन् ह्यस्तने काले दिबादिरर्थादपरोक्षे । नन्वेवं ह्यस्तन इत्येवास्तु अनागतकालशङ्काऽपि नेति चेत्, ? सत्यम् नञोक्तमनित्यमित्यद्यतनेऽपि परोक्षेऽपरोक्षे णादिविध्यर्थमिदम् । (क) तेन 'बहु जगदपुरस्तात्तस्य मत्ता किलाहम्, इत्यादिप्रयोगाः सिद्धाः ॥ बहुव्रीहिपक्षेऽद्यतनेऽद्यतनाभावादद्यतने दिबादिप्रसङ्गाशङ्का तु न, अद्यतनेऽव्यापकेऽद्यतनस्य व्याप्यस्य सत्त्वात् ॥ २४ ॥

**दिबादावट्** ॥ धातोः ॥ अभवत्, अभवताम्, अभवन् । अभवः, अभवतम्, अभवत । अभवम्, अभवाव, अभवाम । ह्योऽभवत्त्वत्पुत्रः ॥२५॥

(सु०) **दिबादावट्** ॥ दिबादाविति सप्तमीनिर्देशादबादिव्यवधानेऽप्राप्तावादावडेव-पश्चादबादिः ॥ २५ ॥

---

(क) बहु जगद पुरस्तात्तस्य मत्ता किलाहं, चकर च किल चाटु प्रौढयोषिद्वदस्य । विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य, व्यपगतमदयाह्नि व्रीडितं मुग्धवध्वा ॥

इति माघे० ११-३६ श्लोकः ।

( त० ) दिवादावडिति ॥ यद्यपि प्रत्ययाधिकारस्तथापि टित्त्वादागमत्वमस्य । प्रत्ययत्वे धातोः परत्वं स्यात् । परत्वे च प्रयोजनाभावाट्टित्त्वं व्यर्थं स्यात् । धातोरिति षष्ठ्यन्तानुवृत्तेरागमत्वं तस्यैव ॥ दिबादाविति सप्तमीनिर्देशादबादिव्यवधानेऽप्राप्तेरादाव-डेव, पश्चादबादिरिति बोध्यम् । न च बचनसामर्थ्याद्व्यवहितेऽपि भविष्यतीति वाच्यम् , लुप्तविकरणे चरितार्थत्वात् । न च नित्यत्वादबादिनैवादौ भाव्यमिति वाच्यम् , अन्तरङ्ग-त्वादट् । अन्तरङ्गत्वं चास्य शब्दमात्रापेक्षत्वात् । अबादेस्तु कर्त्राद्यपेक्षत्वाद्बहिरङ्गत्वम् ॥ ह्योऽभवदिति॥ गतदिवसाधिकरणिका युष्मज्जन्यपुत्राश्रयात्मधारणानुकूलातीता क्रियेत्यर्थः।२५

**परोक्षे-णप् , अतुस् , उस् । थप् , अथुस् , अ । णप् , व, म । ए, आते, इरे । से, आथे, ध्वे । ए, वहे, महे** ॥ धातोः परोक्षेऽतीते काले णबादयः ॥ एषां संज्ञा लिट् ॥२६॥

(सु०) **परोक्षे** ॥ णप् अतुस् उस् , थप् अथुस् अ, णप् व म, ए आते इरे, से आथे ध्वे, ए वहे महे ॥ अनद्यतनातीतपरोक्षार्थक्रियावृत्तेर्धातोर्णबादिरिति द्योतकतापक्षः । अनद्यतनातीतपरोक्षार्थे णबादिरिति वाचकतापक्षः । (क) अक्ष्णः परः परोक्षः । **टाडका** इत्यः । यस्य लोपः । अक्षादिन्द्रियात्पर इति वा क्वचिदमाद्यन्तस्य परत्वमिति पञ्चम्यन्त-स्य परत्वं, परशब्दस्याकारस्यौकारो निपातनात् ॥ २६ ॥

(त०) **परोक्ष** इति ॥ अक्ष्णः परः परोऽक्षः **टाडका** इत्यः। अक्षादिन्द्रियात्पर इति वा । क्वचिदमाद्यन्तस्य परत्वमिति पञ्चम्यन्तस्य परत्वम् । अस्मादेव निपातनात्परशब्द-स्यौकारः । अनद्यतनातीतपरोक्षार्थवृत्तेर्धातोर्णबादयः ॥ (ख) ननु पच्यर्थो विक्लित्यनुकूलो व्यापारसन्तानोऽधःश्रयणान्तक्रियाशब्दवाच्यः, तस्य समुदायस्य युगपदुत्पत्त्यभावादाशु-विनाशित्वाच्च परोऽक्षत्वमस्त्येवातो णबादिरस्त्विति वाच्यम् , एकैकव्यापारस्य प्रत्यक्ष-त्वेन समुदायस्यापि लौकिकानां प्रत्यक्षत्वाभिमानात् । यत्रत्वेकोऽवयवोऽप्रत्यक्षस्तत्र क्रिया परोक्षा ॥ अनद्यतने किम् । ग्रामान्तरं घटोऽभूत् । अत्र घटभवनपरोक्षमतीनमपि न चिरातीतम् । अतीते किम् । अयं कटं कर्ता । अत्र करणस्य भविष्यदनद्यतनत्वेऽप्यतीत-त्वाभावः ॥ परोक्षे किम् । 'रामो राज्यमचीकरत्' इति **हनुमदुक्तिः** ॥ २६ ॥

**द्विश्च** ॥ उक्तार्थणबादियोगे धातोर्द्विर्वचनम् ॥२७॥

(सु०) **द्विश्च** ॥ णबादीत्यनुवृत्तं सप्तम्या विपरिणम्यते । धातोर्द्विर्वचनं भवति णादौ परे ॥ द्वौ वाराविति द्विः **"द्वित्रिचतुर्भ्यः"** इति क्रियावृत्तौ सुः । अत्र क्रियावाचकं विना क्रियावृत्तेरसंभवाद्वचनमित्यध्याह्रियते । तच्च कृदन्तम् । तदपेक्षया धातोरिति कर्मणि षष्ठी । धातोर्द्वे उच्चारणे कर्तव्ये इत्यर्थः ॥ **"अनन्तरस्ये"**ति न्यायेनोक्तणादियोगेनैव द्वित्वम् । न **"विदो नवाना"**मिति विहितणादियोगे । अत्र द्विर्वचनं द्विःप्रयोगएव, न त्वादेशः । तेन **तुतोसे**त्यादौ कृतस्य सस्याभावात् षत्वं न ॥ २७ ॥

---

( क ) अत्रेदमवधेयम्—प्रयोगकर्तुः प्रत्यक्षाविषयत्वमिति । तथा सति बलिर्बलवान् बभूवेति वाक्ये बलेर्बलवत्त्वस्य युगान्तरजातत्वात् वर्त्तमानयुगवर्त्तिनः कथयितृपुरुषस्य प्रत्यक्षाविषयतेत्यतः परोक्षत्वमिति।

( ख ) अत्र पचतीत्यत्र पचनानुकूलव्यापाराणां प्रतिक्षणमुत्पत्तिध्वंसरूपत्वाच्चद्वत्वं ग्रर्द्धपरोक्षत्वमा-शङ्कयति—नन्वित्यादिना ।

सामान्ये विहितत्वेनास्यानपि विशेषे ञ्णिति विहितत्वादपवादत्वात्। इन्द्रामासेति॥ कसृभूपर इत्यत्र पृथग्ग्रहणादस्तेर्भूभावो न, अन्यथा हि कृभूपर इत्येवोच्येत। आमो मस्येत्वमास्कासोर्विधानान्न, अन्यथा मित्त्वादन्त्यस्वरात्परत्र विधानादास्कासोः सकारात्पूर्वविधाने सवर्णदीर्घत्वे वैलक्षण्याभावात्॥ ८८॥

(**असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ**) उवोख(क)। ऊखतुः। ऊखुः। उवोखिथ। औखीत्॥ **लुञ्च अपनयने**॥ (ख) **अञ्चु गतिपूजनयोः**। अञ्चति। अञ्चेत्। अञ्चतु। आञ्चत्। आनञ्च। अच्यात्। पूजायां अञ्च्यात्। अञ्चिता। अञ्चिष्यति। आञ्चिष्यत्। आञ्चीत्॥ **आछि आयामे**। आञ्छति। आञ्छेत्। आञ्छत्॥ ८९॥

(सू०) **असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ**॥ धातोः पूर्वस्येवर्णोवर्णयोरियुवौ भवतः, असवर्णे स्वरे। पूर्वं द्वित्वं पश्चादुकारस्योपधाया **लघोरिति** गुणे कृते पूर्वस्योव्। उवोख। कित्वाद्गुणाभावे ऊखतुः। अत्र उ उख् अतुस् इति स्थिते '**पर्जन्यवल्लक्षणप्रवृत्तिरिति** न्यायात् पूर्वस्य ह्रस्वस्यापि ह्रस्वे कृते सवर्णदीर्घः (ग)। ततो "**ह्रस्वः**" इति पुनर्ह्रस्वो न, **लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते** इत्युक्तत्वात्। **नुगशामिति** नुक्। आनञ्च। गतौ "**नो लोप**" इति नोलोपः। अच्यात्। **आछि आयामे**। **आयामो** दैर्घ्यम्॥ ८९॥

(**आञ्छेर्नुग्वा णादौ**) आञ्छ। आनाञ्छ। **हूर्छा कौटिल्ये** (घ)॥ ९०॥

(सू०) **आञ्छेर्नुग्वा णादौ**॥ आञ्छेः पूर्वस्य नुग् वा णादौ परे। '**नुगशामि**'ति नित्ये प्राप्ते विकल्पः॥ ९०॥

**य्वोर्विहसे**॥ हूर्छति। हूर्छतु। जुहूर्छ। हूर्छ्यात्। हूर्छिता। हूर्छिष्यति। अहूर्छिष्यत्। अहूर्छीत्। **युच्छ प्रमादे**(ङ)। युच्छति॥

---

(क) **उवोखेति**। पूर्वं द्वित्वे कृते '**वर्णादाङ्गं बलीय**' इति न्यायात्सवर्णदीर्घं बाधित्वोपधाया गुणः।

(ख) केचिदत्राशङ्कन्ते।—"**अञ्चु गतिपूजनयो**" रित्यत्र "**अञ्चु गतौ**" अचि पूजायामित्येव सिद्धे '**पूजार्थाञ्चतेर्ने**' ति व्यर्थमापतितमिति। तदशोभनम्, अव्याकुलं गच्छतीत्यर्थके 'अञ्चितं गच्छती' त्यादौ तस्यावश्यकत्वात्। अव्याकुलगमनेन तत्र पूजा गम्यते न त्वञ्चतेरेव सोऽर्थ इति '**अञ्चः कितस्तस्य नत्वं नत्वपादाने,** सि० च० सूत्रम्' ('अञ्चोऽनपादाने' पा० ८।२।४८) इत्यत्र भाष्यकैयटयोः स्पष्टत्वात्। सि० सा० टि० द्रष्टव्यम्।

(ग) ननु '**अकृतकारिखल्वपि शास्त्रमग्निवत्**' इति न्यायेन ह्रस्वस्य ह्रस्वो न भवितुमर्हति, इत्यत आह—पर्जन्येति। तदुक्तं भाष्ये—"कृतकारिखल्वपि शास्त्रं पर्जन्यवत्" इति। यथा शब्दायमानो मेघः स्थले जले कानने च सर्वत्र वर्षति, तद्वल्लक्षणानां प्रवृत्तिरित्यर्थः। पर्ज्जन्यौ रसदब्देन्द्रावि'त्यमरः।

(घ) कौटिल्यमपसरणमिति मैत्रेयः।

(ङ) 'प्रमादोऽनवधानते'त्यमरः। बाहुलकाद्भावे घञ्। यद्वा माद्यतेऽनेनेति मदः, "मदाम" इत्यप्रत्ययस्ततो मद एव माद इति स्वार्थिकणान्तस्य प्रशब्देन समास इति।

**वज गतौ ॥ ९१ ॥**

**( शसददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ )** ववाज । ववजतुः । अवाजीत् ॥ **व्रज गतौ** । व्रजति । व्रजेत् । अव्रजत् । वव्राज व्रज्यात् । व्राजिता । व्रजिष्यति । अव्रजिष्यत् ॥ ९२ ॥

(सु०) **शसददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ** ॥ एषामेत्वपूर्वलोपौ न । **शसु** हिंसायाम् । दन्त्यान्तः । **दद** दाने । वकारो दन्त्यौष्ठ्यः आदौ यस्य स वादिः । गुणशब्देन भूतः उत्पादितः गुणभूतश्चासौ अकारश्च गुणभूताकारः शशरतुरित्यादौ गुणशब्देन क्रियमाणोऽर् तदवयवोऽकारः । लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकारस्तस्यैत्वपूर्वलोपौ न ॥ ९२ ॥

(त०) **शसददेति** ॥ '**शशप्लुतगतावि**' ति तालव्यान्तस्य ग्रहणमिति कश्चिद्-बभ्राम, तद्भाष्यविरोधादुपेक्ष्यम् ॥ **गुणभूतेति** ॥ गुणो भवतीति गुणशब्देन भावितो योऽकारस्तस्येत्यर्थः । तथा च शशरतुरत्रापि गुणे कृतेऽवयवस्यास्य न । लुलविथेत्यत्र ओकारे गुणे तस्यापि तदवयवस्यास्य न । गुणभूतत्वं साक्षात्परम्परासाधारणम् । तेनो-क्तप्रयोगद्वयनिर्वाहः । एतच्च लोपः पचामिति सूत्रे चकाराधिकाराल्लभ्यते ॥ ९२ ॥

**( वदिव्रजयोः सौ नित्यं वृद्धिः )** अव्राजीत् । **अज गतौ क्षेपणे च** ॥ अजति । अजेत् । अजतु । आजत् ॥ ९३ ॥

(सु०) **वदिव्रज्योः सौ नित्यं वृद्धिः** ॥ एतयोर्नित्यं वृद्धिः सौ परे ॥ अतो हसादेरिति विकल्पप्राप्तौ नित्यविधानम् ॥ ९३ ॥

(त०) **वदिव्रज्योरिति** ॥ अतो हसादेरिति विकल्पप्राप्तौ नित्यम् ॥ ९३ ॥

**( अजेरचतुर्षु वीवसादौ वा )** विवाय ॥ ९४ ॥

(सु०) **अजेरचतुर्ष्वीति** ॥ अजर्वीत्यादेशोऽनपि वसादावपि तु वा ॥ गुरुत्वात् सर्वादेशः ॥ ९४ ॥

**नुधातोः** ॥ विकरणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ स्वरे । अनेक स्वरस्यासंयोगपूर्वस्य तु य्वौ ॥ ९५ ॥

(सु०) **नुधातोः** ॥ य्वोर्धातोरिति सूत्रं य्वौ वेति चानुवृत्तम् । क्नुप्रत्ययसम्ब-न्धिनो नु इत्यस्य न ग्रहणं निरनुबन्धकग्रहणे न सानुबन्धकस्येत्युक्तत्वात् । णुस्तुताविति धातोरपि न "**कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमिति**" परिभाषितत्वात् । परिशेषात् नु इत्यस्य विकरणस्य ग्रहणम् । नुप्रत्ययान्तस्य धातोश्चेवर्णोवर्णयोरियुवौ । अनेकस्वरस्यासंयोगपूर्वस्य तु नोर्धातोश्चेवर्णोवर्णयोर्य्वौ धातोर्विहिते स्वरादौ परे । श-क्नुवन्ति । शिश्रियतुः । ब्रुवन्ति । असंयोगपूर्वस्यानेकस्वरस्य तु सुन्वन्ति । निन्यतुः । जुह्वति ॥ अनेकस्वरस्येति किम् । रियति । पियति । **रि पि गतौ** । स्वन्ति । नुप्रत्ययान्तस्यानेकस्वरत्वाव्यभिचारात् प्रत्युदाहरणं न ॥ धातोर्विहिते इति किम् । सुधीशौ ॥ ९५ ॥

( त० ) नुधातोरिति ॥ य्वोश्चैतोरिति य्वौ वेति च पूर्वसूत्रद्वयमनुवर्त्तते । अत्र च धातोर्विहिते स्वरादौ परे इति बोध्यम् । तेन सुश्रीशावत्र पदादिस्वरे न । सूत्रे ह्यत्र क्नोरपि न ग्रहणं नुग्रहणेन 'निरनुबन्धकग्रहणे न सानुबन्धकस्येति' परिभाषया विकरणस्यैव नोर्ग्रहणात् । णुस्तुताविति धातोरपि न ग्रहणं कृत्रिमत्वात् ॥ ९५ ॥

( उवर्णान्तेषु हुन्वोरेवापि ) विव्यतुः ॥ ९६ ॥

( छ० ) उवर्णान्तेषु हुन्वोरेवापि ॥ अपि अविषये चतुर्षु अनेकस्वरस्यासंयोगपूर्वस्य धातोरुवर्णस्य वत्वं न । हुन्वोरेव वत्वं चतुर्षु । अतपि तु जुहुवतुः । विव्यतुरित्यत्र 'य्वोर्विहसे' इति दीर्घो न यत्वस्यासिद्धत्वात् ॥ ९६ ॥

( त० ) उवर्णान्तेषु हुन्वोरेवापीति ॥ हु दानादनयोः । नोर्विकरणस्य अपि अविषये इत्यर्थः । तेन जुह्वति चिन्वतीत्यत्रैव नतु बोभुवतीत्यत्रापि । एतच्चानुवृत्त्या लभ्यते ॥ ९६ ॥

( स्वरान्तादत्वतश्च तादौ नित्यानिटस्थपो वेट् ) विव्यिथ-विव्येथ-आजिथ । विव्यथुः । विव्य । आजिव । आजिम । वीयात् ॥ ९७ ॥

( छ० ) स्वरान्तादत्वतश्च तादौ नित्यानिटस्थपो वेट् ॥ स्वरान्तात्तादौ नित्यानिट आद्योच्चारणेऽत्वतस्तादौ नित्यानिटश्च धातोः परस्य थपः इड् वा भवति ॥ अत् विद्यते यस्य स अत्वान् तस्मात् ॥ स्वरान्तात् किम् । बिभेदिथ ॥ थपः किम् । पपिव ॥ तादौ नित्यानिटः किम् । सस्वरिथ । स्वरतिसूतीत्यनेन वेट्कोऽयम् ॥ आद्योच्चारण इति किम् । चकर्षिथ ॥ अत्वतः किम् । बिभेदिथ ॥ तपरः किम् । रराधिथ ॥ तादाविति किम् । जग्रहिथ । 'वुः से' इत्यनेन सप्रत्ययेऽयं नित्यमनिट् । नित्यानिटः किम् । आनञ्जिथ । ऊदित्त्वाद्वेट्कोऽयम् ॥ ९७ ॥

( त० ) अत्वत इति ॥ अद्विद्यते यस्य सोऽत्वान् । तस्मादित्यर्थः । नित्यानिटः किम् । अङ्क्ता । अञ्जिता ॥ ९७ ॥

नैकस्वरादनुदात्तात् ॥ आद्योच्चारणेऽनुदात्तादेकस्वराद्धातोः परस्य वसादेरिण्न स्यात् ॥ ९८ ॥

( सु० ) नैकस्वरादनुदात्तात् ॥ आद्योच्चारणे इत्युभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराच्चेत्यर्थः । तेन बिभित्सतीत्यत्र सान्तो अनेकस्वरत्वेऽपीण्निषेधो भवत्येव ॥ ९८ ॥

( त० ) नैकस्वरादिति ॥ आद्योच्चारणे इति उभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराच्चेत्यर्थः । तेन बिभित्सतीत्यत्र सान्तात् द्वित्वदशायामनेकस्वरत्वेऽपि इण्निषेधो भवत्येव ॥ ९८ ॥

"अनिट् स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥ १ ॥
गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः ।
इति स्वरान्ता निपुणैः समुच्चितास्ततो हसान्तानपि सन्निबोधत ॥ २ ॥

शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी ।
रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥
यमिर्यमान्तेष्वनिडेक इष्यते रमिर्दिवादावपि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥
दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥
दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥
रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ।
इमे तु धान्ता दश चाऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥ ७ ॥
शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥ ८ ॥
तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् गणितांस्त्रयोदश ॥ ९ ॥
अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीञ्शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
नुदिं तुदिं विद्यविनत्तिकावपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥ १० ॥
पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजि-विजिविद्ध्यनिट्स्वरान् ॥ ११ ॥

इत्यनिट्कारिकाः ॥

( सु० ) **अथानुदात्ताः** ॥ स्वरान्तो धातुरनिट् भवति । न इट् यस्मात्सोऽनिट् इति भवद्भिर्दृश्यतां ज्ञायताम् । तु पुनः स्वरान्तेष्विमान् धातून् सेटः प्रवदन्ति । तान् विदन्तीति तद्विदः । तानाह—अदन्तं धातुं **कथ वाक्यप्रबन्धे** इत्यादिकम् ॥ ऋदन्तं **कॄ विक्षेपे** इत्यादिकम् ॥ ऋतां मध्ये वृङ्वृञौ सेटौ । **वृङ् सम्भक्तौ** । **वृञ् वरणे** ॥ अथेवर्णेषु इवर्णान्तेषु श्विडीङ् सेट् कथ्यते । श्विश्च डीङ् चानयोः समाहारः श्विडीङ् । **टु ओश्वि इर् गतिवृद्ध्योः** । **डीङ् विहायसा गतौ** । पुनस्तेषु शीङ्श्रिञावपि सेटौ कथ्येते । **शीङ् स्वप्ने** । **श्रिञ् सेवायामिति** ॥ १ ॥

गणे तिष्ठतीति गणस्थस्तं गणस्थम् । ऊदन्तं धातुं भूलूप्रभृतिम् । किं च पुनः उ-ताम् उकारान्तानां मध्ये रुस्नुवौ सेटौ । **रु शब्दे** । **रुञ् गतिरेषणयोरित्युभयम्** । **स्नु प्रस्रवणे** । तथा क्षुवं **टुक्षु शब्दे** । ऊर्णोति । **ऊर्णुञ् आच्छादने** । अथो युणुक्ष्णुवः धातून् सेटः । **यु मिश्रणादौ** । अयं सेट् । **युञ् बन्धने** । क्रैयादिकस्त्वनिट् । **णु स्तुतौ** । **क्ष्णु तेजने** । प्रवदन्तीत्यनेनान्वय इति । अमुना प्रकारेण निपुणैः विच-

क्षणैः स्वरान्ता धातवः समुच्चिताः एकीकृताः। ततोऽनन्तरं हसान्तान् धातून् अनिटः सकाशात् यूयं निबोधत जानीत। लोटो मध्यमपुरुषस्य बहुवचनम् ॥ २ ॥

अथ हसान्तान् धातूनाह। कान्तेषु शकिः एकः अनिट्। **शक्लृ शक्तौ**। **शक मर्षणे** दैवादिकस्तु सेट् ॥ सान्तेषु घसिः। **घस्लृ अदने**। अदादेशो घसिश्च॥ तु पुनः वसिः प्रसारणी। **वस निवासे**। प्रसारणं सम्प्रसारणमस्यास्तीति प्रसारणी एतेन। **वस् आच्छादने**। आदादिकः सेट्। तस्य सम्प्रसारणाभावात् ॥ भान्तेषु रभिः। **रभ राभस्ये** ॥ अथ मैथुने यभिः। **यभ मैथुने** ॥ ततस्तृतीयो लभिः। अनिट्। **डुलभष प्राप्तौ**। अनिट् इष्यते इत्यन्वयः। इतरे धातवोऽनिटो न ॥ ३ ॥

ञमान्तेषु ञमप्रत्याहारान्तेषु धातुषु प्रतिषेधवाचिनामिण्निषेधकानां मध्ये एकः अनिट् यमिः। **यम उपरमे**। रमिश्च **रमु क्रीडायामपि**। दिवादौ दिवादिगणे यः मनिः विचक्षणैः पठ्यते। स मनिः। **मन ज्ञाने** दैवादिकः। **मनु अवबोधने**। तानादिकः सेट् ॥ चतुर्थो नमिः। **णम् प्रह्वत्वे शब्दे च** ॥ पञ्चमो हनिः। **हन् हिंसागत्योः**। ततस्तु षष्ठो गमिः। **गम्लृ गतौ**। मयेष्यते इत्यन्वयः ॥ ४ ॥

**इहानिट्**कारिकायामिमेऽनिटोऽष्टौ धातवो हान्ता मया कीर्तिताः कथिताः। कीदृशाः।-मुक्तः संशयो येषु ते मुक्तसंशयाः। किं कृत्वा। गणेषु हान्तान् प्रविभज्य भिन्नीकृत्य। ते के। **दिहिः दिह उपचये**। **दुहिः दुह प्रपूरणे**। दुहिरिति **दुहिर् अर्दने** भौवादिको न गृह्यते सानुबन्धकत्वात्। आदादिक एवानिडिति प्राञ्चः। मेहतिरोहती। **मिह सेचने**। **रुह बीजजन्मनि प्रादुर्भावे च**। वहिः **वह प्रापणे**। तु पुनः षष्ठो नहिः। **णह बन्धने**। दहतिः **दह भस्मीकरणे**। तथा **लिहिः लिह आस्वादने** ॥ ५ ॥

**पुराणगाः** प्राचीना विद्वांसः गणपाठेषु शान्तान् अनिकट्कान् दशैव पठन्ति। इतरान् न। तान् कान्। दिशि **दिश अतिसर्जने**। दृशि **दृशिर् प्रेक्षणे** ॥ **दंशि दंश दशने**। अथो मृशि **मृश आमर्शने** ॥ स्पृशि **स्पृश संस्पर्शने** ॥ रिशि रुशि **रिश रुश हिंसायाम्** ॥ अदमं क्रोशति। **क्रुश आह्वाने रोदने च** ॥ विशि **विश प्रवेशने** ॥ लिशि **लिश अल्पीभावे**। दिवादिस्थौ **लिश गतौ** तुदादिस्थ इत्युभयम् ॥ ६ ॥

तथा धान्ता धातव इमे दशानिपो मताःकथिता। ते के। रुधिः **रुधिर् आवरणे, अनो रुध कामे** इति दैवादिक इत्युभयम् ॥ सराधिः **राध संसिद्धौ** ॥ युध्रिबन्धिसाधयः। **युध सम्प्रहारे**। **बन्ध बन्धने**। **साध संसिद्धौ**। क्रुधिक्षुधी **क्रुध कोपे**। **क्षुध बुभुक्षायाम्** ॥ शुध्यतिबुध्यती। **शुध शौचे**। **बुध अवगमने** दैवादिकौ। **बुधिर् बोधने** इति **बुध अवगमने** इत्येतौ भौवादिकौ तु सेटौ ॥ व्यधिः **व्यध ताडने** ॥ ततः परं सिध्यतिरेव। **षिधु संराद्धौ**। अनिट्। **षिधु गत्याम्**। **षिधू शास्त्रे माङ्गल्ये** चैतौ भौवादिकौ सेटौ ॥ ७ ॥

**गणेषु** गणपाठेषु अनिड्विधौ अनिट्प्रकरणे पान्तान् इमान् दशैवाचार्या उपदिशन्ति। तान् कान्? **शिषिं शिषृल विशेषणे**। **पिषिं पिषृल सञ्चूर्णने** ॥ शुष्यति। पुष्यति। **शुष शोषणे**। **पुष पुष्टौ** दैवादिकावनिटौ। भौवादिकःसेट् ॥ **त्विषिं त्विष दीप्तौ** ॥

त्रिषि त्रिषूल् व्याप्तौ। जौहोत्यादिकः॥ श्लिषि श्लिष आलिङ्गने श्लिष दाहे भौवादिकः सेट्॥ तुष्यति। दुष्यति। तुष तुष्टौ। दुष वैकृत्ये। दैवादिकौ। द्विषि द्विष अप्रीतौ तथा कृषिकर्षती। कृष विलेखने भौवादिकतौदादिकौ॥ ८॥

स्वरेण नीचेन अनुदात्तस्वरेण गणितान् पान्तान् अनिटस्त्रयोदश त्वं प्रतीहि जानीहि। तानाह—तपिं तप सन्तापे। तप ऐश्वर्ये। दैवादिकः। तप दाहे इति चौरादिकोऽपि। ञिप्रत्ययाभावपक्षेऽनिट्॥ तिपिं तिपृ क्षरणे॥ च पुनः आपि आप्लृ व्याप्तौ॥ अथो वपि टुवप् बीजतन्तुसन्ताने॥ स्वपिं ञिष्वप् शये॥ लिपिं लिप उपदेहे॥ लुपि लुप्लृ छेदने॥ तृप्यतिदृप्यती। तृप् प्रीणने। दृप् हर्षमोहनयोः। एतौ दैवादिकावनिटौ। तृप् तृप्तौ। दृप उत्क्लेशे। एतौ तौदादिकौ सेटौ। तृप तृप्तौ दृप सन्दीपने। एतौ चौरादिकौ च सेटौ। सृपि सृप्लृ गतौ॥ शपिं शप आक्रोशे। शप उपालम्भे च॥ छुपिं छुप स्पर्शे॥ क्षिपिं क्षिप प्रेरणे। दैवादिकस्तौदादिकश्चानिट्॥ ९॥

दान्तान् धातून् अनिटः पञ्चदश त्वं प्रतीहि अवेहि। तानाह—अदिं अद भक्षणे। हदिं हद पुरीषोत्सर्गे॥ स्कन्दिंभिदिंच्छिदिंक्षुदीन्। स्कन्दिर् गतिशोषणयोः। भिदिर् विदारणे। छिदिर् द्वैधीकरणे। क्षुदिर् सम्पेषणे॥ शदिं शद्लृ शातने सदि षद्लृ विशरणादौ। स्विद्यति। पद्यति। ञिष्विदा गात्रप्रक्षरणे, पद गतौ। दैवादिकौ। ञिष्विदा स्नेहनमोचनयोः। भौवादिकः सेट्। पद गतौ। चौरादिकः सेट्। खिदिं खिद दैन्ये। खिद परिघाते रौधादिकौ दैवादिकस्तौदादिकश्चानिट्॥ नुदिं नुद प्रेरणे। तुदिं तुद व्यथने। विद्यविनत्तिकावपि। विद सत्तायाम्। दैवादिः। विद विचारणे रौधादिकः। विद ज्ञाने। विद्लृ लाभे। एतौ सेटौ॥ विद्यविनत्तौ नुव विद्यविनत्तिकौ स्वार्थे कप्रत्ययः॥ १०॥

न विद्यते इट् स्वरो येभ्यस्तेऽनिट्स्वराः तान् धातून् त्वं विद्धि जानीहि। तानाह—पचिं डुपचष् पाके॥पचि व्यक्तिकरणे च सेट्॥ वचिं वच परिभाषणे। ब्रुवो वचिरपि। विचिरिचिरञ्जिपृच्छतीन्। विचिर् पृथग्भावे। रिचिर् विरेचने। रिच वियोजनसम्पर्चनयोरिति च। रञ्ज रागे। पृच्छ ज्ञीप्सायाम्॥ निजिं णिजिर् शौचपोषणयोः। णिजि शुद्धौ आदादिकः सेट्। सिचिं षिच् क्षरणे॥ मुचि-भजि-भञ्जि-भृज्जतीन्। मुचल् मोक्षणे। भज सेवायाम्। भञ्जो आमर्दने भ्रस्ज पाके॥ त्यजिं त्यज हानौ॥ यजिं यज देवपूजादौ॥ युजिरुजिसञ्जिमज्जतीन्। युजिर् योगे। युज समाधौ इति च। भाष्यमते युज समाधौ सेट्। रुज रोगे। षञ्ज सङ्गे टुमस्जो शुद्धौ। भुजिं भुज पालनाभ्यवहारयोः। भुजो कौटिल्ये इति च॥ स्वजिं ष्वञ्ज परिष्वङ्गे। सृजिविजि। समाहारे एकवचनम्। सृज विसर्गे। दैवादिकस्तौदादिकश्चानिट्। विजिर् पृथग्भावे। ओविजी भयचलनयोः। तौदादिकः सेट्॥ चान्ताः षट्। छान्त एकः। जान्ताः पञ्चदश॥ ११॥

(त०) अनुदात्तस्वरान् सङ्गृह्णाति॥ अनिट्स्वरान्त इत्यादिना॥ न इट् यस्मात् सोऽनिट् स्वरोऽन्तो यस्य स स्वरान्तः स्वरान्तो धातुरनिट् भवति इति दृश्यतामित्य-

न्वयः ॥ **इमानिति** ॥ स्वरान्तेषु इमान् वक्ष्यमाणान् सेटः प्रवदन्ति । तानाह—**अदन्त-**
**मिति** ॥ अदन्ताः कथ इत्यादयः । ऋदन्ताः स्तप्रभृतयः **ऋताम्**मिति ॥ ऋदन्तानां मध्ये वृङ् सम्भक्तौ वृञ् वरणे । **टुओश्वि** इर् गतिवृद्धयोः । **डीङ्** विहायसा गतौ । **शीङ्** स्वप्ने । **श्रिञ्** सेवायाम् । ऊन्दता भूप्रभृतयः । रु शब्दे । **रुङ्** गतौ रेषणे च । **ष्णु** प्रस्रवणे । **टुक्षु** शब्दे । **ऊर्णुञ्** आच्छादने । न चोर्णोतेर्द्विस्वरत्वात्प्राप्तिरेव न सम्भवति कारिकायां ग्रहणं किमर्थमिति वाच्यम्, ऊर्णोतेर्नेडिति निषेधादत्र ग्रहणम् । एतद्बीजं तु वाच्यम् । ऊर्णोतेर्णुवद्भाव इत्यादिशेषोक्तिरेवेति दिक् । यु मिश्रणामिश्रणयोः । **णु** स्तुतौ । क्ष्णु तेजने ॥ स्वरान्तानुक्त्वेदानीं हसान्तान् कान्तादिक्रमेणाह-**शक्लृ** शक्तौ । एक एव कान्तेषु नान्य इत्यर्थः । खगघङान्तानां न सन्त्येव । **घस्लृ** अदने । **वस** निवासे । द्वावेव सान्तेषु नान्य इत्यर्थः । अदादेशस्य घसेस्तु स्थान्यनिट्त्वेनैव सिद्धम् । **रभ** राभस्ये । **यभ** मैथुने । **डुलभष्** प्राप्तौ । भान्तेषु त्रय एव नापरे इत्यर्थः । **यमु** उप-रमे । **रमु** क्रीडायाम् । **मन** ज्ञाने । **णम** प्रह्वत्वे शब्दे च । **गम्लृ** गतौ । मान्ते चत्वार एव । **मन** ज्ञाने । दिवादिः । **हन** हिंसागत्योः । तान्तेषु द्वावेव । प्रतिषेधवाचिनाम् । अनिटामित्यर्थः । **दिह** उपचये । **दुह** प्रपूरणे । **मिह** सेचने । **रुह** बीजजन्मनि प्रादु-र्भावे । **वह** प्रापणे । **णह** बन्धने । **दह** भस्मीकरणे । **लिह** आस्वादने । हान्तेषु अष्टा-वनिटः **प्रकीर्तिताः** कथिता इत्यर्थः ॥ मुक्तः संशयो येषु ते तथा । गणेषु प्रविभज्य गण-विभागेनेत्यर्थः । **दिश** अतिसर्जने । **दृशिर्** प्रेक्षणे । **दंश** दशने । **मृश** आमर्शने । **स्पृश** संस्पर्शे । **रिश रुश** हिंसायाम् । **क्रुश** आह्वाने । **विश** प्रवेशने । **लिश** गतौ । **लिश** अल्पीभावे । शान्तेषु दश ॥ **रुधिर्** आवरणे । **अनो रुध** कामे इति दिवादिश्च । सराधिः **राधः** संसिद्धावेतत्सहितः । **युध** सम्प्रहारे । **बन्ध** बन्धने । **साध** संसिद्धौ । **क्रुध** क्रोधे । **क्षुध** बुभुक्षायाम् । **शुध** शौचे । **बुध** अवगमने । दिवादयः ॥ **व्यध** ताडने । **षिध** संराद्धौ । धान्तेष्वेकादश इतरे नेत्यर्थः । **शिष्लृ** विशेषणे । **पिष्लृ** सञ्चूर्णने । **शुष** शोषणे । **पुष** पुष्टौ । दिवादौ । **त्विष** दीप्तौ । **विष्लृ** व्याप्तौ । **श्लिष** आलिङ्गने । **तुष** तुष्टौ । **दुष** वैकृत्ये । दिवादौ [दी] । **द्विष** अप्रीतौ । **कृषि** विलेखने । भौवादिकतौदादिकौ । षान्तेष्वेकादश ॥ **तप** सन्तापे । **तप्** ऐश्वर्ये । दिवादिः । **तप** दाहे इत्यपि ण्यभावपक्षे । **तिपृ** क्षरणे । **आप्लृ** व्याप्तौ । **टुवप्** बीजतन्तुसन्ताने । **ञिष्वप्** शये । **लिप्** उपदेहे । **लुप्लृ** छेदने । **तृप** प्रीणने । **दृप** हर्षविमोहनयोः । दिवा-दौ । **सृप्लृ** गतौ । स्वरेण नीचेन अनुदात्तेनेत्यर्थः । **शप** उपालम्भे । **छुप** स्पर्शे । **क्षिप** प्रेरणे । दिवादिस्तुदादिश्च । पान्तान् त्रयोदश प्रतीहि जनीहि ॥ **अद** भक्षणे । **हद** पुरी-षोत्सर्गे । **स्कन्दिर्** गतिशोषणयोः । **भिदिर्** विदारणे । **छिदिर्** द्वैधीकरणे । **क्षुदिर्** सम्पेषणे । **शद्लृ** शातने । **षद्लृ** विशरणादिषु । **ञिष्विदा** गात्रप्रक्षरणे । **पद** गतौ । दिवादौ । **खिद** दैन्ये । खिद्यति । खिन्दति । खिनत्तिश्च । **नुद** प्रेरणे । **तुद** व्यथने । **विद** सत्तायाम् । **विद** विचारणे । दान्तेषु पञ्चदश ॥ **डुपचष्** पाके । **पचि** व्यक्तीक-रणे द्वावपि । **वच** परिभाषणे । ब्रुवो वचिरपि । **विचिर्** पृथग्भावे । **रिचिर्** विरेके । **विच** वियोजनसम्पर्चनयोरिति । **षिच** क्षरणे । **मुच्लृ** मोचने । चान्तेषु षट् ॥ **प्रच्छ**

जीप्सायाम् । छान्तेष्वेकः ॥ त्यज हानौ । णिजिर् शौचपोषणयोः । भज सेवायाम् । भञ्जो आमर्दने । भुज पालनाभ्यवहारयोः । भुजो कौटिल्ये इति च । भ्रस्ज पाके । टुमस्जो शुद्धौ । यज पूजादौ । युजिर् योगे । रुजो भङ्गे । रञ्ज रागे । विजिर् पृथग्भावे । स्वञ्ज परिष्वङ्गे षञ्ज सङ्गे । सृज विसर्गे । जान्तेषु पञ्चदश । अनिट्स्वरान् अनुदात्तानित्यर्थः ॥ ११ ॥

वेता । अवैषीत् ॥ **क्षि क्षये** । चिक्षयिथ–चिक्षेथ ॥

( सु० ) स्वरान्तादुत्वतश्चेति वेट् । विवयिथ—विवेथ । आजिथ । विव्यिव । विव्यिम । वीयात् । लुटि वेता-अजिता । वेष्यति-अजिष्यति । अवेष्यत्-आजिष्यत् । **धातोर्नामिन** इति वृद्धिः । अवैषीत्-आजीत् ॥ **क्षि क्षये** अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः(क) । "नुधातोरि"तीय् चिक्षियतुः ।

**ये** ॥ अनपि यकारे परे पूर्वस्वरस्य दीर्घः स्यात् ॥ क्षीयात् । अक्षैषीत् (ख) ॥ **तुम्प हिंसायाम्** ॥ ( तुम्पति । तुतुम्प । तुतुम्पतुः (ग) । तुप्यात् (घ) ) ॥ ९९ ॥

( सु० ) ये—अनपि यकारे परे पे ॥ से दीर्घ इत्यतो दीर्घ इति अनपीति चानुवर्तते । अनपि ये किम् । चिनुयात् । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वात्र न दीर्घः ॥ क्षि निवासगत्योरिति तौदादिकः ॥ ९९ ॥

( त० ) ये इति ॥ दीर्घस्तु से दीर्घ इत्यतोऽनुवर्तते । सप्तमीनिर्देशात्पूर्वस्येति लभ्यते । यकारस्तु प्रत्ययस्यैव प्रकरणत्वात् तेनेयाजेत्यादौ नातिप्रसङ्गः । वानुवृत्तेर्व्यवस्थया वा ॥ ९९ ॥

**( प्रात्तुम्पतेः सुट् गवि कर्तरि )** प्रस्तुम्पति गौः । अड्द्वित्वव्यवधानेऽपि सुट् । प्रास्तुम्पत् । प्रतुस्तुम्प ॥ **ओणृ अपनयने** । ओणाञ्चकार । **वन षन सम्भक्तौ** । ववनतुः । अवानीत्–अवनीत् । सेनतुः ॥

( सु० ) **प्रात्तुम्पतेः सुट् गवि कर्तरि** ॥ प्रादुपसर्गात् परस्य तुम्पतेः सुट् स्यात् गौः कर्ता चेत् । ऋत्संयोगान्नेति लिटः कित्त्वाभावात् नस्य लोपो न । तुतुम्पतुः । आशिषि **नो लोप** इति नलोपः । तुप्यात् । श्तिपा निर्देशात् यङ्लुकि सुट् न । प्रतोतुम्पीति ॥ **ओणृ अपनयने** । अपनयनं दूरीकरणम् ॥ **वन षन सम्भक्तौ** । **वन शब्दे च** । संभक्तिर्भजनम् ॥ १०० ॥

**( जनसनखनामात्वमानिटि से क्ङिति झसे यादौ क्ङिति वा )** सायात्–सन्यात् । असनीत्–असानीत् ॥ (ङ) **चमु अदने**॥

---

( क ) **सकर्मक** इति । न क्षीयते इत्यक्षरमिति भाष्ये श्रवणात् । ( ख ) "**धातोर्नामिन**" इति वृद्धिः । ( ग ) संयोगात्परस्य लिटः कित्त्वाभावान्न लोपो न । ( घ ) "**आशीर्वादादेः** पमि"ति कित्त्वान्न लोपः । ( ङ ) अदनं भक्षणम् ।

जिमिं केचित्पठन्ति (क) ॥ १०१ ॥

( सु० ) **जनसनखनामात्वमनिटि से क्ङिति झसे यादौ क्ङिति वा ॥** जन जनने जुहोत्यादिः, जनी प्रादुर्भावे दिवादिः । उभयोर्ग्रहणम् । एषामात्वं स्यात् अनिटि सप्रत्यये किति ङिति झसे च यकारादौ क्ङिति वा से परे । सिषासति ॥१०१॥

**( ष्ठिवुक्लम्वाचमां दीर्घोऽपि )** आचामति । आङ् किम् । चमति । विचमति । चेमतुः । अचमीत् । **ष्ठिवु निरसने ॥ १०२ ॥**

( सु० ) **ष्ठिवुक्लम्वाचमां दीर्घोऽपि ॥** एषां दीर्घः स्यात् अप्रत्यये ॥ **ष्ठिवु निरसने । निरसनं** थूत्करणम् ॥ १०२ ॥

**( नामधातुष्वष्कष्ठिवां सत्वं न )** ष्ठीवति ॥ १०३ ॥

( सु० ) **नामधातुष्वष्कष्ठिवां सत्वं न ॥** ष्वष्क गतौ । नामधातोरुदाहरणानि । षट् दन्ता अस्येति षोडन् तमाचष्टे नाम्नो ञिर्डित्करणे इति ञिप्रत्यये टिलोपे च षोडयति षण्डमाचष्टे करोति वा षण्डयति । नाम्नो य इति यप्रत्यये षण्डमिच्छतीति षण्डीयति ॥ १०३ ॥

( त० ) **नामधातुष्वि**ति ॥ एतच्च त्रिंशो नवानामिति सूत्रस्थैवानुवृत्तेऽर्थव्यवस्थया बोध्यम् । षण्डमाचष्टे षण्डयतीत्यादौ ॥ १०३ ॥

**( ष्ठिवेः पूर्वस्य थस्य ठो वा )** तिष्ठेव—टिष्ठेव । य्वोर्विहसे । ष्ठीव्यात् । अष्ठेवीत् ॥ **कटे वर्षावरणयोः(ख)** ॥ [चटे(ग)इत्येके]॥१०४॥

**((घ) ह्मयन्तक्षणश्वसृजागृश्व्येदितां सेटि सौ न वृद्धिः)** अकटीत् ॥ अचटीत् ॥ हय गतौ । अहयीत् ॥ **नटनृत्तौ** (ङ) । **चिट परप्रेष्ये । इट किट कटी गतौ** । केटति । ईकार आदीदित इतीण्निषेधार्थः॥ (च)केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति । अन्ते च इ ई इति प्रश्लिष्य । अयति । इयाय । इयतुः । इयुः । इययिथ इयेथ । दीर्घस्य अयाञ्चकारेत्युदाहरन्ति ] ॥ **जु रंहसि ॥ १०५ ॥**

( सु० ) **ह्मयन्तक्षणश्वसृजागृश्व्येदितां सेटि सौ न वृद्धिः ॥** ह च म् च य् च ह्मः ते अन्ते येषां ते ह्मन्ताः । एत् इत् यस्य स एदित् । ह्मन्तस्य क्षणादेरेदितश्च वृद्धिर्न सेटि सौ ॥ **ग्रह उपादाने ।** अग्रहीत् । **टुवमु उद्गिरणे ।** अवमीत् ॥ **हय गतौ ।**

( क ) अत एव जेमनं ब्राह्मणानामित्यादिसिद्धम् । क्वचिद् भाषायामप्यस्य प्रयोगोऽस्ति ॥

( ख ) वर्षो वृष्टिः, आवरणमाच्छादनमित्यर्थः ।

( ग ) **चटुः चाटुः चटुलः "चटकादेरण्"** इत्यादिसिद्धये आह—**चटे इत्येके इति ।** एतन्मयोत्कलदेशस्थितप्राचीनपुस्तकगतपाठमवलोक्याऽत्र संयोजितम् ।

( घ ) **अतो हसादेर्लघोर्वेति—**वृद्धौ प्राप्तायां विधिरयमारभ्यते—**ह्मयन्तक्षणेत्यादिः ।**

(ङ) नोपदेशोयम् । णोपदेशपर्युदासवाक्ये दीर्घोपधपाठादस्यैव घटादिभिन्नत्वेन दीर्घोपधत्वादिति बोध्यम्॥

( च ) 'उदयति दिननाथे याति शीतांशुरस्तम्' इत्यादिप्रयोगसिद्धये—**आह—**केचिदिति।

अहयीत् ॥ **क्षणु हिंसायाम्** । अक्षणीत् ॥ **श्वस् प्राणने** । अश्वसीत् ॥ **जागृ निद्राक्षये** । अजागरीत् ॥ **टुओश्विइर् गतिवृद्ध्योः** । अश्वयीत् ॥ सेटि सौ किम् । **दह भस्मीकरणे** । अधाक्षीत् ॥ **जु रंहसि** । रंहो वेगः ॥ १०५ ॥

( त० ) **ह्मयन्तेति** ॥ ह् च म् च य् च ह्मयः, ते अन्ते येषां ते ह्मयन्ताः हकारमकारयकारान्ता इत्यर्थः । **क्षण् हिंसादौ** । **श्वस् प्राणने** । **जागृ निद्राक्षये** । **टुओश्वि इर् गतिवृद्ध्योः** । एत् इद्येषां ते तथा तेषामित्यर्थः ॥ १०५ ॥

जुजुवतुः । जुजुविथ–जुजोथ । अजौषीत् ॥ **गुपू रक्षणे** ॥

( सु० ) **गुपू रक्षणे** । रक्षणं पालनम् ॥

(क) **आयः** ॥ गुपू धूप विच्छि पणि पनिभ्यः स्वार्थे आयः प्रत्ययः । अनपि तु वा ॥ १०६ ॥

( सु० ) **आयः** ॥ गुभ्भ्यः इत्यनुवृत्तं पणिपन्योरनुदात्ते च आयाभावे चरितार्थमात्मनेपदमित्यायान्तान्नाद्भवति ॥ **गुपू रक्षणे** । **धूप सन्तापे** । **विच्छ गतौ** । **पण व्यवहारे** स्तुतौ च । **पन** च ॥ १०६ ॥

( त० ) **आय इति** ॥ इह गुभ्भ्य इत्यनुवर्तत इत्याह—**गुपूधूपेत्यादि** ॥ **स्वार्थे** इति अपरस्यानिर्दिष्टत्वात् स्वार्थे एव लभ्यते ॥ १०६ ॥

**स धातुः** (ख) ॥ यङादिप्रत्ययान्तः शब्दो धातुसंज्ञका भवति ॥ गोपायति-गोपायाञ्चकार । जुगोप ॥ १०७ ॥

( सु० ) **स धातुः** ॥ तच्छब्देन यङादिः परामृश्यते । यङादिना च प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते । तेषां केवलानां संज्ञाप्रयोजनाभावाद्वा ।

( क ) अत्र केचन गुरवः–आय इहाकारान्तः, तत्र फलं तु **"गोपयतम्"** इत्यस्य धातुस्वरेणान्तोदात्तत्वे शबकारेणैकादेशस्यापि **'एकदेश उदात्तेनोदात्त"** इत्यन्तोदात्तत्वे **"तम्** इत्यस्यादुपदेशात् परलसार्वधातुकत्वेन **"तास्यनुदात्तेन्ङिददुपदेशा"**—इत्यनुदात्तत्वे **"उदात्तादनुदात्तस्यस्वरित"** इति स्वरितत्वम्—इत्याहुः ॥

( ख ) **स धातुः** । यद्वि पाणिनीये **"सनाद्यन्ता धातव"** इति सूत्रितम्, तत्र **"स धातुः"** इत्युचितं लाघवात् । तच्छब्देन सनादयः परामृश्यन्ते, पूर्वं विहितत्वेन प्राधान्यात्, सर्वादिरुत्सर्गतः प्रधानपरामर्शित्वात् ॥ ननु–सनादिपरामर्शेऽपि तदन्तस्य संज्ञा न स्यात्, **"संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावादि"** ति चेत्, न, **"सुप्तिङन्तमि"** ति ज्ञापकसिद्धस्य तस्यासार्वत्रिकत्वेनात्रानाश्रयणात्, केवलानां धातुसंज्ञाप्रयोजनाभावाच्च । न च **"सन्यङोरि"**ति द्वित्वं प्रयोजनमस्ति, क्यजादेस्तदभावात्, स्तौतिण्योरेव षण्यभ्यासात्, **"सः स्विदि स्वदि सहीनां च गुणो यङ् लुको"** रित्यादिसूत्रवैयर्थ्यप्रसङ्गाच्च । यद्वा **"भूवादयो धातवः"** इत्यस्यानन्तरं "सङि"ति सूत्रणीयम्, सनेः सकारादारभ्य णिङो ङकारेण प्रत्याहारः ।

यत्तु—चङङोर्ङकारेणापि प्रत्याहारः सम्भाव्यत इत्युक्तम्, तन्न, व्याख्यानतोविशेषप्रतिपत्तिसम्भवात् । अन्यथा **"रोः सुपी"**त्यादौ डापक्षापो वा पकारेण सुप्प्रत्याहारः स्यात् ।

यद्वा **"सणिङि"**ति सूत्रमस्तु अद्यन्ताभ्यामवयवाभ्यां संदंशन्यायेनाक्षिप्तस्तदन्तः समुदायो धातुसंज्ञ इति तस्यार्थः, इति लघुभाष्यम् ॥

"यङ् सकाम्या इयङ् चेति यगायञिञिङस्तथा ।
आचारे क्विबथो यश्च ज्ञेया दश यङादयः ॥ १ ॥"

प्रत्ययविशिष्टस्य धातुत्वात्तिबादिः ॥ १०७ ॥

( त० ) स धातुरिति ॥ तच्छब्दस्य तदादित्वेन तेषां च प्रधानपरामर्शित्वेन यङादिर्गृहीतः । केवलयङादेश्च संज्ञाप्रयोजनाभावात्तदन्तलाभः । अनन्तरोक्तस्य हेरपि ग्रहणं सग्रहणेन निवार्यते । अन्यथानुवृत्त्यैव तद्ग्रहणे सिद्धे सग्रहणं व्यर्थं स्यात् । आदेशादिविधायकप्रकरणेन विच्छेदाद्व्यवहिततिबादेरपि न ग्रहणमतः परिशेषाद्यङादिरेव गृह्येत इत्याशयेनाह- यङादिप्रत्ययान्त इति ॥ १०७ ॥

**यतः** ॥ यस्यातश्चानपि लोपः ॥ गोपाय्यात् गुप्यात् । गोपायिता—गोपिता—गोप्ता । अगोपायीत्—अगौप्सीत् ॥ १०८ ॥

( सु० ) **यतः** ॥ य च अश्चानयोः समाहारो यत् तस्य ॥ धातोर्विशेषणत्वात्तदन्तविधिः । यान्तस्य अदन्तस्य च लोपः अनपि । अदन्तस्य किम्, **अय पय गतौ**, आभ्यां क्विपि यवयोर्दसे हकारे चेति यलोपे कृते य इत्यलोपो माभूत् । अतपत् । ऊदित्वादिट् । गोपिता । गोप्ता । इडभावपक्षे अनिटो नामिन्त इति वृद्धिः । अगौप्सीत्॥१०८॥

( त० ) **यत** इति ॥ य च अश्च अनयोः समाहारः यत तस्य ॥ १०८ ॥

**झसात्** ॥ अगौप्ताम् ॥ **एवं धूप सन्तापे । तप सन्तापे** तेपिथ—ततप्थ । (क)अताप्सीत् ॥ **जप जल्प रप लप व्यक्तायां वाचि**(ख)। जेपिथ । जपिता । अजापीत् ॥ [ चुप मन्दायां गतौ ॥ चोपति । चुचोप । चोपिता । षप समवाये । समवायः सम्बन्धः (ग) सम्यगवबोधो वा ॥ ]

**क्रमु पादविक्षेपे ॥ १०९ ॥**

( सु० ) **क्रमु—पादविक्षेपे** । पादविक्षेपः । पादविहरणम् ॥ १०९ ॥

**(भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषां यो वा कर्त्रर्थेषु चतुर्षु ) ॥ ११० ॥**

( सु० ) **भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषां यो वा कर्तर्थेषु चतुर्षु** ॥ प्राप्ताप्राप्तविभाषेयम् । अनवस्थानार्थो भ्रमिः क्रमिः त्रसिश्च दिवादयस्तेभ्यो नित्ये प्राप्ते इतरेषामप्राप्तेश्चारम्भः । **भ्राशृ भ्लाशृ दीप्तौ** फणादावेतौ । **भ्रमु चलने** । भ्वादिर्ज्वलादिश्च । **भ्रमु अनवस्थाने** । दिवादिः पुषादिः शमादिः । तत्र भ्वादेः—भ्रमति, भ्रम्यति । शमादेस्तु शमादीनामिति दीर्घ भ्राम्यति । इति त्रैरूप्यम् । **क्लमु ग्लानौ । त्रसी उद्वेगे । त्रुट छेदने । लष कान्तौ** ॥ ११० ॥

---

( क ) **"स्वरान्तादत्वतश्चे"** त्यादिना वेट् । लुङि **"अत उपधायाः"** अनेन वृद्धिः ।

( ख ) जप-जपमानसेच । मानसं स्वान्तस्वरसोः इति कोषः । चेन व्यक्तवचनार्थोऽपि इति केचिदत्राहुः ।

( ग ) नित्यत्वे सति द्रव्ययाप्रतियोगिसम्बन्धत्वं समवायत्वमिति अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः सः समवायश्चेति ।

**( क्रमः पे दीर्घोऽबविषये )** क्राम्यति—क्रामति । अक्रमीत् (क) ॥

**यम उपरमे ॥ १११ ॥**

( सु० ) **क्रमः पे दीर्घोऽबविषये** ॥ क्रमो दीर्घः स्यात् पे चतुर्षु ॥ पे किम् । उपक्रमते । प्रोपाभ्यामित्यात् । स्नुक्रमेरिति नेट् । स्नुक्रमोरुदात्तत्वादिटि सिद्धनियमार्थोऽयम् । आभ्यां परस्म परस्मैपदस्यैवेट् स्यान्नात । **स्नु प्रस्रवणे** । उपस्नोष्यते जलेन । उपक्रंस्यते । **यमु उपरमे** । उपरमो निवृत्तिः ॥ १११ ॥

**गमां छः ॥** गमयमइषूणां छः स्यादबिषये ॥ यच्छति । येमिथ—ययंथ ॥ ११२ ॥

( सु० ) **गमां छः** ॥ **गम्लृ गतौ** । **यम उपरमे** । **इषु इच्छायाम्** । एते गमादयः । बहुवचनमाद्यर्थम् (ख) ॥ ११२ ॥

( त० ) **गमामिति** ॥ बहुवचननिर्देशस्य फलमाह—**गमादय** इत्यादि ॥११२॥

**( यमिरमिनमातां सक्सेरिट् पे )** (ग) अयंसीत् , अयंसिष्टाम् ॥ **णम प्रह्वत्वे शब्दे च** । नेमिथ—ननन्थ । अनंसीत् ॥ **ईक्ष्र्य ईर्ष्य ईर्ष्यायाम्** । ईक्ष्र्यति । ऐक्ष्र्यीत् । ऐर्ष्यीत् ॥ **गम्लृ गतौ** । गच्छति ॥११३॥

( सु० ) **यमिरमिनमातां सक् सेरिट् पे** ॥ एषां सक् स्यात् एभ्यः सेरिट् पे परे ॥ अयंसीत् , अयंसिष्टाम् । व्यरंसीत् , व्यरंसिष्टाम् । अनंसीत् , अनंसिष्टाम् । पे किम् । उदायत । अरंसाताम् ॥ ११३ ॥

**गमां स्वरे ॥** गम्हन्जन्खन्घसामुपधाया लोपः स्यात्स्वरे क्ङिति न तु ङे ॥ जग्मतुः । जगमिथ -जगन्थ ॥११४॥

( सु० ) **गम्लृ गतौ** । **हन् हिंसागत्योः** । **खनु अवदारणे** । **घस्लृ अदने** । (घ) एषामुपधाया लोपः स्यात् स्वरादौ क्ङिति प्रत्यये, न तु ङे, "नो वे" त्यतो व्यवस्थितार्थकस्य वेत्यनुवर्त्तनात् । जग्मतुः । जघ्नतुः । चख्नतुः । जक्षतुः॥ ङे किम् , अगमत् ११४

( त० ) **गमां स्वर** इति ॥ बहुवचनस्य बहूपलक्षकत्वमभिप्रेत्य गणयति **गमहने-**

( क ) 'अत उपधाया' अनेन वृद्धौ प्राप्तायां ह्यन्तक्षणेत्यादिना वृद्धेरभावः ।

( ख ) बहुवचनान्तास्तद्गणसूचका इति न्यायात् गम् यम् इषूणां ग्रहणम् । षष्ठीनिर्देशादादेशोऽन्त्यस्य न समुदायस्य ।

( ग ) **यमिरमिनमाताम्** । आदन्तानां यमिरमिनमीनां च धातूनां सेरिट् सगागमश्च परस्मैपदे इत्यर्थः । अनेन यच्छतेर्लुङ्:—अयम् सि ईट् दिप् इत्यवस्थायां सगिटौ । तदा अयम् सक् इट् सि ईट् दिपिति, ककारटकारश्चेतौ । 'इट ईटि', 'सवर्णे०' 'दिसिमि०' 'सोपकार इत्' 'स्वरहीनम्' 'वावसाने' 'ह्यन्तनः' अनेन वृद्ध्यभावः, 'नश्चापदान्ते' मकारस्यानुस्वार—**अयंसीदिति** ।

( घ ) **उपधाया** इति 'उपधायालघो'रित्यतोऽनुवर्त्तते, 'नो लोप' इत्यतो लोप इति, 'क्ङित्यद्गुणि' इत्यतः क्ङिति, अनुवर्त्यार्थ आह—एषामुपधाया लोप इति, क्ङितीति ॥

त्यादि । नो वेत्यतो वानुवृत्तेर्व्यवस्थया क्वचिन्नेत्यभिप्रेत्याह—न तु ङे इति ॥ तेन अगमदित्यत्र लोपो न ॥ ११४ ॥

**हन्नृतः स्यपः** (क) ॥ हन्तेर्ऋदन्ताच्च परस्य स्यप इड् भवति, गमेस्तु पे । गमिष्यति ॥ ११५ ॥

( सु० ) **हन्नृतः स्यपः** ॥ अनुदात्तत्वादिण्निषेधे प्राप्ते विधिः । हन् च ऋच्चानयोः सामाहारो हन्नृत् । तस्मात् हन्नृतः । गमेः परस्मैपदस्यैवेट् नातः । तेन सङ्गस्यते इत्यादौ न ॥ ११५ ॥

( त० ) **हन्नृतः** ॥ हन् च ऋच्च हन्नृत् तस्मात् । 'ऊदितो वे'त्यतो वेत्यनुवृत्तेर्व्यवस्थया गमेः परस्मैपदमेवेत्याह—**गमेस्त्व**ति ॥ तेन सङ्गंस्यते इत्यादौ न ॥ हन्तेः ऋदन्ताच्चोभयपदेऽपि । आहनिष्यते, करिष्यते ॥ ११५ ॥

**लित्पुषादेर्ङः** ॥ लितो धातोः पुषादेश्च ङः प्रत्ययः स्यात् पे । सेरपवादः ॥ अगमत् (ख) **म्रुचु म्लुचु गतौ** । म्रोचति ॥ ११६ ॥

( सु० ) **लित्पुषादेर्ङः** ॥ ल् इत् यस्य स लित् । पुषः आदिर्यस्य स पुषादिः । लिच्च पुषादिश्चानयोः समाहारो लित्पुषादिः तस्मात् । सौत्रत्वात्पुंस्त्वम् । **संज्ञापूर्वकविधेरनित्यत्वान्न** नुम् । जेरङ् द्विश्चेत्यतोऽङित्यनुवृत्त्यैव सिद्धे ङ इति योगविभागेन तु द्युतादिभ्योऽस्यतिवक्तीति च लब्धम् । पुषादिश्च दिवाद्यन्तर्गणो ग्राह्यः लित्साहचर्यात् । लितो हि प्रायेणानिटः सत्साहचर्यात्पुषोऽप्यनिड् ग्राह्यः स च दिवादिः न भ्वादिः सेट्त्वात् न चुरादिर्जिना व्यवधानाच्च ॥ ११६ ॥

( त० ) **लित्पुषादे**रिति ॥ ल् इत् यस्य स लित् । पुष् आदिर्यस्य स पुषादिः लिच्च पुषादिश्चानयोः समाहारः लित्पुषादिस्तस्य । नुमोऽनित्यत्वात्क्लीबत्वस्यैव वा पुंस्त्वम् ॥ ननु जेरङ्द्विश्चेत्यनन्तरोक्तसूत्रादङनुवृत्तेः किं ङग्रहणेनेति चेत्सत्यम् । ङग्रहणं योगविभागेनान्यतोऽपि विधानार्थम् । तेन द्युतादिभ्योऽपि अस्यतिवक्तिख्यातिभ्यश्च भवति। अथैकयोगनिर्दिष्टन्यायेनाङि द्वित्वं भवेदिति वाच्यम् । जेरिति ग्रहणात् । ज्यन्तादेवाङि द्वित्वविधानात् । न त्वन्यस्मात् । अङि लघोर्ह्रस्व उपधाया इति ह्रस्वस्तु लित्पुषादेर्दीर्घोपधत्वाभावादेव न द्वित्वाभावेन पूर्वपदत्वाप्रसङ्गाच्च ॥ ११६ ॥

**( म्रुचादेर्वा ङः )** अम्रुचत्—अम्रोचीत् । अम्लुचत्—अम्लोचीत् ॥ **ग्रुचु ग्लुचु चौर्ये** । अग्रुचत्—अग्रोचीत् । अग्लुचत्—अग्लोचीत् ॥ **ग्लुञ्चु गतौ** । अग्लुचत्—अग्लुञ्चीत् ॥ **ञिफला विशरणे** ॥ ११७ ॥

(सु०) **म्रुचादेर्वा** ङः ॥ म्रुचु म्लुचु ग्रुचु ग्लुचु ग्लुञ्चु इति म्रुचादयः ॥ ञिफला विशरणे । विशरणमवयवानां विभागः ॥ ११७ ॥

**( तॄफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्व-**

(क) 'ऋत' इत्यत्र सामर्थ्यादृदन्तो ग्रहणम्, न तु ऋमात्रम्, अन्यथा तपरकरणस्यानर्थक्यं स्यात् ।

(ख) अगमदित्यत्राग्मम् ङ दिपिति जाते, 'गमा स्वरे' अनेनोपधाया अङ इति विशेषणाल्लोपो न ।

**लोपौ** ) फेलतुः । फेलिथ ॥ ११८ ॥

(सु०) **तृफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ** । तरतेरकारस्य गुणशब्देन भावितत्वात् फलभजोस्तु वैरूप्यसम्पादकादेशत्वात् त्रपतेश्च एकहलमध्यस्थत्वाभावादप्राप्ते विधिः । तेरतुः । तेरुः । फेलतुः। फेलुः। भेजतुः, भेजुः। त्रेपे । त्रेपाते॥११८॥

**ऌान्तस्य ऌसमीपाकारस्य सौ नित्यं वृद्धिः ॥ फल निष्पत्तौ** । फेलतुः । अफालीत् ॥ [**मील निमेषणे** ॥ मीलति । **शील समाधौ** ॥ शीलति । **कील बन्धने** ॥ **शूल रुजायाम्** ॥ **दळ विशरणे** ॥ **गल अदने** ॥ गलेति । अगालीत्। **स्खल सञ्चलने** । चस्खाल। अस्खालीत्। **श्वल श्वल्ल आशुगमने** । शश्वाल । अश्वालीत् । शश्वल्ल । अश्वल्लीत् ॥] **चर गतिभक्षणयोः** । अचारीत्। **अभ्र गतौ** ॥ अभ्रति । आनभ्र । माभवानभ्रीत् । **जि जये** ॥११९॥

( सु० ) **ऌान्तस्य ऌसमीपाकारस्य सौ नित्यं वृद्धिः** ॥ अतो हसादेरिति विकल्पस्यापवादः ॥ ऌान्तस्य किम् । अलपीत्, अरणीत् । अत्र ऌसमीपत्वेऽपि ऌान्तत्वाभावान्न नित्यं वृद्धिः । ऌसमीपाकारस्य किम् । श्वल्ल आशुगमने। अश्वल्लीत् । अत्र अस्य ऌसमीपत्वेऽपि अन्त्यऌसमीपत्वाभावान्न वृद्धिः । **जि** जये । जय उत्कर्षप्राप्तिः । अकर्मकोऽयम् ॥ ११९ ॥

( त० ) **ऌान्तस्येति** ॥ ऌान्तस्य किम् । अलपीत् । अरणीत् । अत्र ऌसमीपत्वेऽपि ऌान्तत्वाभावान्न ॥ ऌसमीपाकारस्य किम् । श्वल्ल आशुगमने इत्यस्य अश्वल्लीत् । अत्र ऌसमीपत्वेऽपि अन्त्यऌसमीपत्वाभावान्न । अतो हसादेरिति प्राप्तविकल्पस्यापवादः । **जि जये इति** ॥ जय उत्कर्षप्राप्तिः ॥ ११९ ॥

( **सपरोक्षयोर्जेगिः (क)** ) जिगाय, जिग्यतुः, जिग्युः । जिगयिथ–जिगेथ । जीयात् । अजैषीत् ॥ **कृष विलेखने** । कर्षति । चकर्ष । चकर्षिथ ॥१२०॥

( सु० ) **सपरोक्षयोर्जेगिः** ॥ जेर्गिः स्यात् सप्रत्यये णबादौ च । द्वित्वनिमित्तयोरिति व्याख्येयम् । तेन यङ्लुगन्ताज्जेर्ग्यादेशो न जेजयाञ्चकारेत्यत्र ॥ कृष विलेखने । विलेखनमाकर्षणम् ॥ १२० ॥

( त० ) **सपरोक्षयोरिति** ॥ परोक्षशब्देन तदर्थकणबादिग्रहः । द्वित्वनिमित्तयोरिति व्याख्येयम् । यथाश्रुतव्याख्याने तु यङ्लुगन्ताज्जेर्ग्यादेशः स्यात् ॥ १२० ॥

**रारो झसे दृशाम् (ख)** ॥ दृशसृजकृषमृषतृपदृपसृपां झसेऽरो रे

---

( क ) सपरोक्षयोरिति । इच्छायामात्मन इति सप्रत्ययो गृह्यते । स इति अकारस्तन्त्रम्। **जिगाय** इत्यादौ अनेन गिरादेशः 'द्विश्च' 'कुह्वोश्चुः' अनेन गकारस्य जकारः । जिग्यतुः–इति नुधातोरिति यः, थपि स्वरान्तादित्यादिना वेट् ।

(ख) रारो झसे । रार इति तन्त्रोपात्तम् । तेन रा आरः, र अरः । सकृदुच्चरितमनेकोपकारकं तन्त्रम् ।

भवत्यारो रश्च ॥१२१॥

( सु० ) **रारो भसे दृशाम्** ॥ अश्च आश्च तयोः समाहारः अं तेन सहितो र् अर् तस्य अरः। अरः स्थाने आरः स्थाने च रो भवति। तेन द्रक्ष्यति अद्राक्षीदित्युभयत्रापि गुणवृद्धिस्थाने र आदेशः सिध्यति। बहुवचनं त्वाद्यर्थम्। दृशिर् प्रेक्षणे। सृजविसर्गे। कृष विलेखने। मृश आमर्शने। स्पश स्पर्शने। तृप प्रीणने। दृप हर्षमोहनयोः। सृप् लृ गतौ ॥१२१॥

**( कृषादीनां वा )** क्रष्टा-कर्ष्टा ॥१२२।

( सु० ) **कृषादीनां वा** ॥ कृषादीनां षण्णां तु वाऽरः स्थाने रः ॥ १२२ ॥

**षढोः कः से** ॥ धातोः षढयोः कत्वं स्यात्से परे ॥ क्रक्ष्यति—कर्क्ष्यति। अक्राक्षीत्—अकार्क्षीत् ॥ १२३ ॥

( सु० ) षढोः कः से धातोरित्यनुवृत्तम् ॥ से किम्। क्रष्टा ॥ षढोः किम्। त्रप्स्यति ॥ धातोः किम्। लिट्सु ॥ १२३ ॥

( त० ) **षढोः कः से** ॥ इति ॥ धातोरिति। अत्र धातुग्रहणद्वयानुवर्तनं विधेयम्। तेन धातोरेव धातोर्न तु नामत्वविशिष्टस्यापि। अतो लिड्ढ इत्यत्र नातिप्रसङ्गः। न चात्र कग्रस्य बाधकत्वं तदपवादकत्वादस्य। न चात्र नामत्वेन धातुत्वमिति भ्रमितव्यम्। तेन तदनपायात् ॥ १२३ ॥

**( कृषमृषस्पृशमृशतृपदृपां वा सिः ) हशषान्तात्सक्** (क) । हान्ताच्छान्तात्षान्तान्नाम्युपधादनिटः सक्प्रत्ययः स्याद्दिवादिपरो न तु दृशेः ॥ सेरपवादः। अकृक्षत् ॥ **सृप्लृ गतौ**। सर्पति। सप्ता-सर्प्ता। असृपत् ॥ **क्रुश आह्वाने रोदने च**। क्रोशति। क्रोष्टा। अक्रुक्षत् ॥ **रुष रिष शिष हिंसायाम्** ॥ १२४ ॥

( सु० ) **कृषमृषस्पृशमृशतृपदृपां वा सिः** ॥ एभ्यो वा सिः स्यात्। पक्षे हशषान्तात्सक् ॥ तृपदृपभ्यां पादित्वात्तु ङः हशषान्तात्सक्। अनिटोऽनामिवत इत्यनुवृत्तम् ॥ हशषान्तात्किम्। अतिप्त। नाम्युपधात्किम्। अगाढ। अनिटः किम्। औहिष्ट ॥ दृशेस्तु अद्राक्षीत् (ख)। हश्च शश्च षश्च हशषाः ते अन्ते यस्य स तस्मात्। अत्रान्तग्रहणं चिन्त्यम्। हशषादिति पाठ्यम्। तेन च धातोर्विशेषणादन्तलाभः ॥१२४॥

( त० ) **हशषान्तात्सगिति** ॥ हश्च शश्च षश्च ते अन्ते यस्य स तस्मात्। अत्र चानिटोऽनामिवत इति पूर्वसूत्रान्नामिवत इत्यनुवर्त्य तस्य च विशेषार्थतया विवक्षणान्नाम्युपधात्वलाभ इत्यभिप्रेत्याह-**नाम्युपधादिति** ॥ तेन स्तृहेरस्तार्क्षीदित्येव रूपमिति बोध्यम्। हशषादित्येव युक्तं, धातोर्विशेषणत्वेनान्तलाभात् ॥१२४॥

---

( क ) हशषान्तात्—इत्यत्र सगिति ककारो गुणनिषेधार्थस्थाननियमार्थश्चेति। दिवादावित्यनुकृष्य निर्देशात् सक् परस्मै०आत्मने च भवति।

( ख ) इरितो वा इति व्यवस्थितविकल्पार्थो वा शब्दः सिंहावलोकितन्यायेन वेति योगविभागेन च 'हशषान्तात्सक्' 'ञेरङ् द्विश्च' लिट्पुषादेङः' इत्येतैः 'सम्बध्यते। तेन दृशेः सक् न स्यादित्यत आह—नतु दृश इति। एवं च दृशस्त्वद्राक्षीदिति रूपम्।

**( इषुसहलुभरिषरुषामनपि तस्येड्वा )** रेषिता–रेष्टा । रोष्टा–रोषिता । अशिक्षत ॥ **उष गतौ**, ओषति । ओषाञ्चकार–उवोष ॥ **मिह सेचने** ॥ १२५ ॥

( सु० ) **इषुसहलुभरिषरुषामगपि तस्येड्वा** ॥ इषु इच्छायाम् । षह मर्पणे । लुभ गार्ध्ये । रुष रिष हिंसायामेभ्यः परस्य तकारस्य इड्वा भवति अनपि परे ॥ विद्दरिद्रेत्याम् । उपधाया लघोरिति गुणः । ओषांचकार । असवर्णे स्वरे इत्युव् । उवोष । **मिह सेचने** । सेचनमार्द्रीकरणम् ॥ १२५ ॥

**ढि ढो लोपो दीर्घश्च** ॥ ढे परे ढस्य लोपो पूर्वस्य चानृतो दीर्घः । मेढा । षढोः कः से । अमिक्षत् ॥ **दह भस्मीकरणे** । देहिथ–ददग्ध । धक्ष्यति । अधाक्षीत् । झसात्, अदाग्धाम् ॥ **इवि व्याप्तौ** । इन्वति । इन्वाञ्चकार । ऐन्वीत ॥ **हिवि दिवि धिवि जिवि प्रीणने** । हिन्वति १२६

( सु० ) **ढि ढो लोपो दीर्घश्च** ॥ अनृतः किम् जर्गृढात् ॥ हो ढ इति ढत्वम् । तथोर्ध इति तस्य धः । ष्टुभिः ष्टुः इति ढः । ढलोपे मेढा ( क ) । हशषान्तात् इति सेक् । अमिक्षत् ॥ हिवि दिवि धिवि जिवि प्रीणने । प्रीणनं तर्पणम् इदितो नुमिति नुम्, हिन्वति ॥ १२६ ॥

( त० ) **ढि ढो लोप** इति ॥ वान्यत्रेत्यतो वानुवृत्तेर्व्यवस्थयाऽनृतः पूर्वस्येति बोध्यम् । ढ्रि ढ्रोलोपो दीर्घश्चेति सुवचम् । एवं च रिलोपो दीर्घश्चेति न सूत्रणीयम् ॥ **प्रीणन** इति ॥ प्रीणनं वृत्तिस्तर्पणं च ॥१२६॥

**( धिन्विकृण्व्योर्वस्य लोपो गुणाभाव उप्रत्ययश्चाऽविषये** ॥ विकरणस्य नुप्रत्ययस्योप्प्रत्ययस्य च गुणो भवति पिति परे ( ख ) धिनोति ॥ १२७ ॥

( सु० ) **धिन्विकृण्व्योर्वस्य लोपो गुणाभावः उप्रत्ययश्चाबविषये** ॥ आभ्यामुप्प्रत्ययः स्यात् धातोर्वकारस्य लोपो गुणाभावश्च चतुर्षु । अपोऽपवादः ॥ **धिवि प्रीणते । कृषि हिंसायाम्** । नूप इति गुणे धिनोति ॥ १२७ ॥

**ओऽम्मोर्वा लोपः** ॥ असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा वमयोः ॥ धिन्वः–धिनुवः, धिन्मः–धिनुमः । मिपि तु गुणो बाधकः । धिनोमि ॥१२८॥

( सु० ) **ओऽम्मोर्वा लोपः** ॥ उकारः प्रत्ययावयवः प्रत्ययरूपश्च गृह्यते । ओर्वाहेरित्यतो वेत्यनुवृत्तम् । तस्यासंयोगपूर्वस्य प्रत्ययस्येत्यर्थः । प्रत्ययोकारस्य किम् । युवः ।

( क ) **मेढा**—इति । ढलोपे ष्टुत्वासिद्धं न, लोपविधानसामर्थ्यात् ।

( ख ) 'गुण' इत्यनेन गुणाप्राप्तौ विधिरयमारभ्यते-**नूप** इति । पितीति चानुवृत्तम् । उप्रत्ययसाहचर्यात् नुप्रत्यय एव गृह्यते न तु स्तुत्यर्थो नुधातुः, इत्यत आह— **विकरणस्ये**ति **धिनोती**त्यत्र उप्रत्ययसम्बन्ध्युकारस्य पित्परत्वाद्गुणः ।

युमः । असंयोगपूर्वस्य किम् । शक्नुवः, तक्ष्णुमः । (क)धिनोमीत्यत्र पषत्वादुगुणः॥ १२८॥

( त० ) ओऽम्मोर्वा लोप इति । ओर्वाहेरित्यतो वेत्यनुवर्त्य व्यवस्थया संयोगपूर्व-प्रत्ययोकारलाभः । उकारश्च प्रत्ययस्तदवयवश्च ॥ १२८ ॥

**ओर्वा हेः** ॥ असंयोगपूर्वात्प्रत्ययोकाराद्धेर्लोपो (ख) वा भवति ॥ धिनु–धिनुतात् । **कृवि हिंसाकरणगतिषु** । कृणोति । कृण्वन्ति । चकृ-ण्व । **अक्षु व्याप्तौ** । ( **अक्षेर्वा नुप्रत्ययोऽब्विषये** ) अक्ष्णोति । अक्ष्णुवन्ति । अक्षति । आनक्षिथ–अनिष्ठ । अक्षिता–अष्टा । आक्षिष्यति— अक्ष्यति । आक्षीत् । आक्षिष्टाम् । आक्षीत् । आष्टाम् । आक्षुः । **तक्ष त्वक्षू तनूकरणे** ॥ १२९ ॥

( सु० ) **ओर्वा हेः** ॥ वेति न विकल्पार्थः किन्तु प्रत्ययसंबन्धिनोऽसंयोगपूर्वादि-त्यस्यार्थस्य प्रतिपादनार्थम् (ग)॥ उः प्रत्ययरूपः प्रत्ययावयवश्च गृह्यते ॥ प्रत्ययसंबन्धिनः किम् । युहि । रुहि । असंयोगपूर्वात्किम् । शक्नुहि ॥ **अक्षू व्याप्तौ** । व्याप्तिः कार्त्स्न्य-म् । **अक्षेर्वा नुप्रत्ययोऽब्विषये** । अक्षेर्नुप्रत्ययो वा स्यात् चतुर्षु । अपोऽपवादः । ऌटि स्कोरिति कलोपः । षढोः कः से इति कः । पत्वम् । अक्ष्यति । लुङि ऊदित्त्वादिट् । आक्षीत् । आक्षिष्टाम् । इडभावपक्षे तु आक्षीत् । झसादिति सिलोपे आष्टाम्, आक्षुः॥ १२९॥

( त० ) ओर्वाहेरिति ॥ वाशब्दोऽत्र न विकल्पार्थः किन्तु व्यवस्थार्थः । तत्फलं तूक्तमेव ॥ १२९ ॥

**(तक्षेस्तनूकरणे नुर्वाऽब्विषये)** तक्ष्णोति–तक्षति वा काष्ठम् । ततक्षिथ–ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् । वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः ॥ **क्षिण चुम्बने** । प्रणिक्षति । निक्षति । [**अव** रक्षण गतिकान्तिप्रीति तृप्त्यवगम प्रवेशश्रवण स्वाम्यर्थयाच-नक्रियेच्छादीप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति । आव । मा भवानवीत् । (घ)] **ग्लै म्लै हर्षक्षये** ॥ १३० ॥

( सु० ) **तक्षेस्तनूकरणे नुर्वाऽब्विषये** ॥ तनूकरणेऽर्थे तक्षेर्नुप्रत्ययो चतुर्षु । अपोऽपवादः **ग्लै म्लै हर्षक्षये** । हर्षक्षयो धातुक्षयः ॥ १३० ॥

**संध्यक्षराणामा** ॥ अनपि ॥ १३१ ॥

( क ) मः० [ वमोः किम्, सुनुत । ओः किम्, अकृष्महि ] धि०, अत्रायं पाठो निवेशनीयः ।

( ख ) 'अवध्यवधिमतोः साजात्यात्' 'असंयोगपूर्वात्' इति उप्रत्यय एव विशिष्यते इत्यभिप्रेत्याह— **प्रत्ययोकार** इति ।

( ग ) वा शब्दस्य निपातत्वात् अनेकार्थत्वमतोऽसंयोगपूर्वादिति लाभः ।

( घ ) अव इति । कान्तिरत्र शोभा इच्छा वा, दीप्तेः पृथग् ग्रहणात् । दीप्तिस्तेजः, तृप्तिरिच्छानाशः, स्वाम्यर्थः स्वामिधर्मः स्वामित्वरूपः, हिंसा प्राणवियोगानुकूलव्यापारः, आदानं ग्रहणम् ।

( सु० ) **संध्यक्षराणामा** ॥ सन्ध्यक्षरान्तानां धातूनामा अनपि ॥ धातोः किम् । गोभ्याम् । नौभ्याम् ॥ १३१ ॥

**आतो णब् डौ** (क) ॥ आदन्ताद्धातोः परो णब् डौ ॥ जग्लौ ॥ १३२ ॥

( सु० ) **आतो णब् डौ** । आत इति धातोर्विशेषणात्तदन्तविधिः । आदन्तादाकाररूपाच्च धातोः परो णब् डौ स्यात् अद्दवाचचारेति औ ॥ १३२ ॥

( त० ) **आतो णब् डाविति** ॥ धातोर्विशेषणत्वात्तदन्तलाभ इत्यभिप्रेत्याह—आदन्तादिति ॥ आदन्तादाकाररूपाच्चेति बोध्यम् । णबित्यत्रानुबन्धद्वयग्रहणम् । प्रथमपुरुषबहुवचने गाते इत्यादावतिप्रसंगवारणाय डित्करणम् । आतो युग्वारणाय णित्त्वं वा स्थानिवत्त्वात् । तज्ज्ञापकं चात्र डग्रहणमेव । नित्यत्वात्प्रथमप्राप्तोऽपि युक् सावकाशन्यायेन वारितः ॥ १३२ ॥

**आतोऽनपि** ॥ धातोरातो लोपोऽनपि क्ङिति स्वरे इटि च ॥ जग्लतुः । जग्लिथ । जग्लाथ (ख) ॥ १३३ ॥

( सु० ) **आतोऽनपि** ॥ आत इति योगविभागात् सेटि थपि चेति लब्धम् ॥ १३३ ॥

( त० ) **आतोऽनपि** ॥ आत इति योगविभागात्सेटि थपि चेत्यस्य लाभः ॥ १३३ ॥

**( संयोगादेरादन्तस्य किति लिङ्येकारो वा )** ग्लायात्—ग्लेयात् (ग) । अग्लासीत् ॥ **कै गै रै शब्दे** । जगौ ॥ १३४ ॥

( सु० ) **संयोगादेरादन्तस्य किति ङिङ्येकारो वा** ॥ संयोगादेरादन्तस्य धातोरेत्वं वा किति लिङि ॥ १३४ ॥

**दादेरे** (घ) ॥ अपिद्दाधामागैहाकुपिबतिसोस्थामात एकारो भवत्याशीर्यादादौ पे ॥ गेयात् । अगासीत् (ङ) । [ ध्यै चिन्तायाम् । ध्यायति ] ।

( क ) आतः किम्, निनाय । तपरः किम्, क इवाचचार चक आदित्युक्ते तु स्यात् । अत्र पञ्चमीनिर्देशे युक्तो व्यर्थस्तः । चक्रेत्यादौ यदि परत्वाल्लोपस्तदादिति निर्देशेऽपि न क्षतिः । णप् किम्, ददाथ अडाविति किन्नं, मध्यमपुरुषबहुवचने एव स्यात् । निरनुबन्धकग्रहणे न सानुबन्धकस्येति न्यायात् । तर्हि ण इत्येवास्तु । तर्हि ज्वलादेर्णप्रत्यये दोषः । अवश्यायः, अवसाय इत्यादावेव स्यात् । एकानुबन्धग्रहणे नह्यनुबन्धकस्येति नियमात् । तर्हि अबित्येवास्तु, न च गाते इत्यादावेव स्यात् । गा अन्ते इति स्थिते अपः सवर्णदीर्घो जायते । एकानुबन्धकन्यायात् । अतो णबित्युक्तम् । न च पकारादन्येन द्वितीयानुबन्धेन सिद्धिः, उत्तमपुरुषे णित्त्वाभावे कित्कार्य्यप्रसङ्गात् । चकरेत्यादौ चक्रेत्यादिः स्यात् । ननु कथं डकारः, औरेव विधीयताम् । आवि कृते आतो युक् प्रसङ्गः । न च णित्त्वाभावान्न सः । स्थानिवद्भावात् स्थानिवत्त्वे चेदं डग्रहणमपि ज्ञापकम् । इत्थं 'आतो युग्' इति सूत्रेण कृतोरिति व्यर्थं तस्मिन्नेव सूत्रे डौ एतस्य डित्त्वेनैव सिद्धत्वात् । इति लघुभाष्यम् । ( ख ) स्वरान्तादत्वतश्चेत्यादिना थपि वेट् ।

( ग ) 'षष्ठीनिर्दिष्ट' इति नियमेन विधिरयमन्तस्यैव भवति ।

( घ ) ननु दादेरित्यनुवर्त्तनलाभसत्त्वात्पुनः किमर्थं दादेरिति शङ्कायां समाधत्ते विवरणकारः—यद्यपि दादेरित्यस्माद्दादेरित्यनुवर्त्तते तथापि अत्र तदन्येषामपि संयोगादीनामादन्तानां पाक्षिकः पाठोऽस्तीति पुनर्दादिग्रहणम् । एतेन संयोगादेरादन्तस्येत्यादि० सि० चि० शास्त्रस्य वैयर्थ्यमापद्येतेति विचिन्त्यम् ।

( ङ ) यमिरमिनमातामित्यादिना सक् प्रत्ययः ।

**स्त्यै ष्ट्यै शब्दसंघातयोः** । स्त्यायति । तस्त्यौ । स्त्यायात्–स्त्येयात् अस्त्यासीत् ॥ **दैप् शोधने** । ददौ । दायात् (क) । अदासीत् ॥ **धेट् पाने** (ख) । दधौ धेयात् । अधासीत् । सिलोपपक्षे । अधात् । अधाताम् ॥ १३५ ॥

( सु० ) **दादेरे** । इह दारूपाश्चयः । डुदाञ् दाने । दाण् दाने । दो अवखण्डने । न देङ् रक्षणे गृह्यते, लिङि कित्त्वासम्भवात् ॥ धारूपौ द्वौ । डुधाञ् धारणपोषणयोः । धेट् पाने । दाश्च दाश्च दाश्च दाः धाश्च धाश्च धौ दाश्च धौ च दाधा इति विग्रहः । दाप् लवने । दैप् शोधने । एतौ पित्त्वात् न ग्राह्यौ ॥ मा माने ॥ माङ्मेङौ नेह गृह्येते लिङि कित्त्वासम्भवात् ॥ गै शब्दे । गाङ् गताविति तु न गृह्यते क्ङिति कित्त्वासम्भवात् ॥ ओहाक् त्यागे । पा पाने षोऽन्तकर्मणि । ष्ठा गतिनिवृत्तौ । एषामेत्वं किति लिङि । देयात् । धेयात् । मेयात् । हेयात् । पेयात् । अवसेयात् । स्थेयात् ॥ किति किम् । दासीष्ट ॥ १३५ ॥

( त० ) दादेरित्यत्र दादेरित्यतो दादेरित्यस्यानुवृत्त्यैव सिद्धेऽत्र दादेरितिग्रहणसामर्थ्यादेतल्लाभः ॥ तादादौ पे इति ॥ एतदत्युक्तयुक्तेर्लभ्यते । ष्ट्यै स्त्यै इति । अत्र वासुदेवः नामधातुष्वङ्कष्टयैष्ठिवां सत्वं नेत्युक्तवान् तद्भाष्यविरुद्धम् । पृथक्पाठस्तु तिष्ट्यासति अतिष्ट्यासदित्यत्र षत्वार्थः ॥ १३५ ॥

**( उस्यालोपः )** अधुः ॥ १३६ ॥

( सु० ) **उस्यालोपः** ॥ आदन्तस्य धातोरातो लोप उदि परे ॥ १३६ ॥

**(धेटो भूतमात्रे दिबादिपरो ङो वा द्वित्वं च)** अतोऽनपि ॥ अदधत् ॥ **दृशिर् प्रेक्षणे (ग)** ॥ १३७ ॥

( सु० ) **धेटो भूतमात्रे दिबादिपरो ङो वा द्वित्वं च** ॥ धेटो ङप्रत्ययो वा स्यात्, द्वित्वं च लुङि । सेरपवादः ॥ पक्षे यमिरमिनमातामिति सक् । अधासीत् ॥ शाच्छेति सिलोपे अधात् ॥ दृशिर प्रेक्षणे । प्रेक्षणं दर्शनम् ॥ १३७ ॥

**दृशादेः पश्यादिः** ॥ चतुर्ष्वपि दृशऋसृशदषदपाघ्राध्माम्नादाण्स्थां पश्यऋच्छधौशीयसीदपिबजिघ्रधमनयच्छतिष्ठाः । पश्यति । ददर्श, ददृशतुः (घ) ॥ १३८ ॥

( सु० ) **दृशादेः पश्यादिः** ॥ दृशिर् प्रेक्षणे । ऋ गतौ । सृ गतौ । शद्लृ शातने । षद्लृ विशरणादौ । पा पाने । पा रक्षणे इति तु न गृह्यते लुग्विकरणत्वात् ।

---

( क ) पित्त्वादेकाराभावः, किञ्च—दपित्यत्र पकारो धातुभेदज्ञापनार्थः ।

( ख ) **धेट्पाने** । इति । टकार इबर्थः, लिटि 'संध्यक्षराणाम्' 'द्विश्च' 'ह्रस्वः' ० 'झपानाम्'० 'आतोणबौ'०, **दधौ** । दाते रे, धेयात्, लुङि अधासीत्, पक्षे 'शाच्छा'० अनेन वा सिलोपः, अधात् ।

( ग ) दृशिर् इति । इर् अनुबन्धः इरितो वा इति सूत्रविशेषणार्थः ।

( घ ) लिटि—'उपधाया लघोः' अनेन गुणः, द्विवचनबहुवचने कित्वाद्गुणो न, तेन ददर्श ददृशतुरित्यादिः ।

घ्रागन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः । म्ना अभ्यासे। दाण् दाने । ष्ठा गतिनिवृत्तौ । एषामेकादशानां यथासंख्यमेकादशः पश्यादय आदेशा भवन्ति अप् प्रत्यये परे ॥ १३८ ॥

( त० ) **दृशादेः पश्यादिरिति** ॥ पा पाने इत्यस्यैव ग्रहणं न तु पा रक्षणे इत्यस्यापि लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति केचित् । तन्न । न्यायेन सिद्धौ साहचर्यस्यागतिकत्वात् ॥ १३८ ॥

( **सृजिदृशोस्थपो वेट्** ) ददर्शिथ–दद्रष्ठ (क) । द्रष्टा । अद्राक्षीत्, अद्राष्टाम् (ख) ॥ १३९ ॥

( सु० ) **सृजिदृशोस्थपो वेट्** ॥ क्रादेर्णादेरिति नियमान्नित्ये प्राप्ते विभाषेयम् । लुङि इरि तो वेति ङः ॥ १३९ ॥

( **ऋवर्णदृशोर्ङे गुणः** (ग) ) अदर्शत् । **ऋ गतौ** । ऋच्छति । आर्च्छत ॥ १४० ॥

( सु० ) **ऋवर्णदृशोर्ङे गुणः** ॥ ऋवर्णान्तस्य धातोर्दृशेश्च गुणः स्यात् ङप्रत्यये ॥ ङाभावे अनिटोऽनामिवत इति वृद्धिः । ततो रारो झसे दृशामित्यारो रः । अत उपधाया इति पुनर्वृद्धौ अद्राक्षीत ॥ १४० ॥

( **गुणोऽर्तिसंयोगाद्योः** ॥ ) अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि यङि किति णादावाशीर्वादादौ च पे । आर, आरतुः, आरुः(घ) ॥ १४१ ॥

( सु ) **गुणोऽर्तिसंयोगाद्योः** । अर्तीति भ्वादिह्वाद्योर्ग्रहणम् । लुका निर्देशस्तु सौत्रस्तिब्निर्देशो यङ्लुङ्निवृत्त्यर्थः । व्याख्यानात् ऋत इति लभ्यते । तच्च संयोगादित्वेन विशिष्यते । तेन अर्तेः संयोगादेः ऋदन्तस्य च धातोर्गुणः यग्यङोः परयोः कितोलिङ्लिङोश्च ॥ संयोगादेरिति किम् । क्रियात् ॥ १४१ ॥

( त० ) **गुणोऽर्ति संयोगाद्योरिति** ॥ अर्तिश्च संयोगादिश्च तौ तयोः ॥ **ऋदन्तस्य** चेति ॥ अर्तिसाहचर्यादेवैतल्लभ्यते ॥ १४१ ॥

( **अत्त्यर्तिव्ययतीनां थपो नित्यमिट्** ) आरिथ । अर्यात् । अर्ता । अरिष्यति (ङ) । आरिष्यत् ॥ १४२ ॥

( सु० ) **अत्त्यर्तिव्ययतीनां थपो नित्यमिट्** ॥ अद भक्षणे । ऋ गतौ । व्यञ् संवरणे । स्वरान्तादत्वतश्चेति विकल्पे प्राप्ते विधिः ॥ १४२ ॥

( **सर्तिशास्त्यर्तिभ्यो ङो लुङि सेरपवादः** ) स्वरादेः ।

---

( क ) **ददर्शिथ** । इत्यत्र इडभावपक्षे–ददृश् थप् इति जाते 'उपधाया लघोः' इति गुणः,'रारो झसे' अनेन अरोरः जातः 'छशष' ० ष्टुत्वम् । दद्रष्ठ ।

( ख ) दृशेर्लुङि—'अतोपधाया' 'झसात्' अद्राष्टाम् ।

( ग ) ङित्त्वाद्गुणाप्राप्तौ विध्यर्थमिदम् ।

( घ ) ऋच्छतेर्लिटि–ऋ णप् इति स्थिते 'द्विश्च' 'रः', अ ऋ णप् इति जाते, 'ऋ अर्' अर् णप् इति जाते 'अत उपधाया' अनेन वृद्धिः, आर । 'गुणोर्ति०' 'सवर्णे०, आरतुः आरुः ।

( ङ ) **अरिष्यति** । इति–'हनृतः स्यपः' अनेनास्येट्, गुणः ।

आरत्, आरताम् । अर्तेर्ह्रादेरिति केचित् । आर्षीत्, आर्ष्टाम् । **सृ गतौ** । धावति । अधावत् । ( **शीघ्रगतावेवायम्** ) । अन्यत्र—सरति । ससार । सस्रतुः । ससर्थ । सस्रुव । सस्रम ॥१४३॥

( सु० ) **सर्तिशास्त्यर्तिभ्यो ङो लुङि** ॥ इह लुका निर्देशात् सर्त्यर्तो जौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्न ङ इति केचित् ॥ शासु अनुशिष्टौ । अस्यैव ग्रहणं न तु आङः शासु इच्छायामित्यस्य । परस्मैपदिसर्त्यर्तिभ्यां साहचर्यात् परस्मैपदिनः शासेर्ग्रहणात् क्रादेरिति नेट् । ससर्थ । सस्रुव ॥ १४३ ॥

( त० ) **शीघ्रगतावेवेति** ॥ एतच्च विदो नवानामित्यतो वेत्यस्यानुवृत्तेर्व्यवस्थया बोध्यम् ॥ १४३ ॥

**यादादौ** (क) ॥ ये यादौ धातोः ऋतो रिङ् भवति । ङो व्यवधानार्थस्तेन ये इति न दीर्घः ॥ स्रियात् । सर्ता । सरिष्यति । असरत् , असरताम् । **स्रु गतौ** (ख) ॥ स्रवति । अस्रवत् । सुस्राव । सुस्रुवतुः । सुस्रोथ । स्रूयात् स्रोता ॥ १४४ ॥

( सु० ) **यादादौ** ॥ ये धातोर्ऋतो रिङ् स्यात् किति लिङि ॥ ङकारोऽन्त्यादेशार्थो न, किंतु मध्यव्यवधानार्थः ॥ १४४ ॥

( त० ) **ङो व्यवधानार्थ** इति ॥ न त्वन्त्यादेशार्थः धातोरधिकारात्षष्ठीनिर्दिष्टत्वेनैतल्लाभात् । व्यवधानफलमाह—**तेनेति** ॥ १४४ ॥

( **श्रिश्रुद्रुभ्यो ङो धातोश्च द्वित्वं लुङि सेरपवादः** )

असुस्रुवत् । **दु द्रु गतौ** । दुदविथ–दुदोथ ( ग ) । दोता । अदौषीत् ॥ द्रवति । दुद्रोथ । दुद्रुव । अदुद्रुवत् ॥ **श्रु श्रवणे** ॥१४५॥

( सु० ) **श्रिश्रुद्रुभ्यो ङो धातोश्च द्वित्वं लुङि** ॥ एभ्यो ङप्रत्ययः स्यादेषां द्वित्वं च लुङि न तु सिः ॥ १४५ ॥

( **श्रुवः शृआदेशो नुप्रत्ययश्चाब्विषये** ) नुपः । शृणोति । शृणोमि । ओर्म्वोर्वा लोपः । शृणुवः–शृण्वः, शृणुमः–शृण्मः । शृणुयात् । शुश्राव । श्रूयात् । अश्रौषीत् । ( षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञाम् । ) शद्लृ शातने ॥ १४६ ॥

( सु० ) **श्रुवः शृआदेशो नुप्रत्ययश्चाब्विषये** ॥ श्रुवो नुप्रत्ययः स्यात् धातोः

---

( क ) **यादादा**विति । अत्रानब्विषयाधिकाराद्याशिषि यादादयो गृह्यन्ते नतु पूर्वोपीति तु सारस्वतविषयकम् , तत्र भवनपोः पृथगधिकारत्वात् । अत्रैतद्विचार्य्यम् ।

( ख ) 'सु' । अत्र द्रवद्रव्यगतिर्विवक्षिता ।

( ग ) **दुदविथ–दुदोथ** इति । 'स्वरान्ताद०' इत्यादिना वेट् ।

शृ इत्यादेशश्च चतुर्षु। अपोऽपवादः। शदॢ शातने। शातनं विशीर्णता ॥१४६॥

( त० ) **शातन** इति। विशीर्णतायामित्यर्थः ॥ १४६ ॥

(**शीयादेशे आत्**) शीयते। अशीयत। शशाद। शेदिथ–शशत्थ। शत्ता। अशदत्। **षदॢ विशरणगत्यवसादनेषु**। सदति ॥१४७॥

( सु० ) **शीयादेशे आत्** ॥ शदेरात्मनेपदं भवति शीयादेशे कृते सति। षदॢ विशरणगत्यवसादनेषु। विशरणमवयवानां विभागः। अवसादो नाशः ॥१४७॥

( **सदिस्वञ्जोर्लिटि परस्य न षः** ) निषसाद। सत्ता। सत्स्यति। असदत् ॥ **पा पाने** (क)। पिबति। पपौ। पेयात्। पाता। पास्यति। दादेः पे। अपात् ॥ **घ्रा गन्धोपादने**। जिघ्रति। जघ्रौ। घ्रेयात्–घ्रायात्। घ्रास्यति। अघ्रासीत् ॥ **ध्मा शब्दाग्निसंयोगयोः**। धमति। दध्मौ। ध्मेयात्–ध्मायात् (ख)। अध्मासीत् ॥ **ष्ठा गतिनिवृत्तौ**। तिष्ठति। तस्थौ। दादेरे। स्थायात् ॥ **म्ना अभ्यासे**। मनति। मम्नौ। म्नायात्–म्नेयात्। अम्नासीत्। **दाण् दाने**। यच्छति। ददौ। देयात्। अदात्। **ह्वृ कौटिल्ये**। ह्वरति। जह्वार। गुणोर्तिसंयोगाद्योः। जह्वरतुः ॥

( सु० ) **सदिस्वञ्जोर्लिटि परस्य न षः** ॥ द्वित्वात्परस्यैतयोः सस्य षो न लिटि। अड्द्वित्वव्यवधानेऽपीति प्राप्तौ निषेधः ॥ लिटि किम्। निषिषत्सति। पिबतीत्यत्र पिबादेशोऽदन्तः ( ग ) अदे इत्यलोपः। अल्लोपस्यासिद्धत्वादुपधाया लघोरिति गुणो न। अकारयुक्तोच्चारणसामर्थ्याद्वा ॥ घ्रा गन्धोपादाने। गन्धोपादानं गन्धग्रहणम्। शाच्छासेति वा सिलुक्। यमिरमीतीट्सकौ। अघ्रात्–अघ्रासीत् ॥ ध्माशब्दाग्निसंयोगयोः। शब्दशब्देन तदनुकूलो वायुरिह गृह्यते। तेन शङ्खं धमतीति वत् मृदङ्गं धमतीति प्रयोगो न। अग्निसंयोगे सुवर्णं धमति, अग्निना संयुनक्तीत्यर्थः ॥ म्ना अभ्यासे। मनति विद्याम् अभ्यस्यतीत्यर्थः ॥ अदादित्यत्र दादेः पे इति सिलुक्। गुणोऽर्तीति गुणः। जह्वरतुः ॥ १४८ ॥

( त० ) **सदिस्वञ्जोरि**ति। लिटि परे परस्य सस्येति शेषः। स्वञ्जेर्ग्रहणं तु भाष्याननुगुणमपि वृत्त्यादिसंमतत्वात्कृतम् ॥ १४८ ॥

( **ऋदन्तात्थपो नेट्** ) जह्वर्थ। ह्वर्यात्। ह्वर्ता। ह्वरिष्यति। अह्वरिष्यत्। अह्वार्षीत् ॥ **स्वृ शब्दोपतापयोः**। स्वरति। सस्वरिथ–सस्वर्थ सस्वरिव। स्वरिता–स्वर्ता। स्वरिष्यति। अस्वरिष्यत्। अस्वारीत्।

---

( क ) **पा पाने**। द्रवद्रव्यस्य गलबिलाधः संयोगानुकूलो व्यापारः **पानम्**।

( ख ) **ध्मेयात्**। इति। संयोगादेरादन्तस्येत्यादिनैकारः स च पाक्षिकस्तेन **ध्मायात्**।

( ग ) अनुवृत्तपरिभाषा न लक्ष्यसंस्कारिकेत्यभिप्रेत्याह— **पिबादेशोऽदन्त** इति। अदन्त इत्युपलक्षणमाद्युदात्तस्यापि।

अस्वार्षीत्, अस्वार्ष्टाम्, अस्वार्षुः ॥ **बुध अवगमने** । बोधति । बोधिता । **रुह बीजजन्मनि प्रादुर्भावे च** । रोढा । रोक्ष्यति । अरुक्षत ॥ **स्कन्दिर् गतिशोषणयोः** । स्कन्दति । चस्कन्दिथ—चस्कन्त्थ । स्कद्यात् । स्कन्ता । स्कन्त्स्यति । अस्कान्त्सीत्—अस्कदत् ॥ **यभ मैथुने** । यभति । ययाभ, येभतुः, येभुः । येभिथ—ययब्ध । यभ्यात् । यब्धा । अयाप्सीत्, अयाब्धाम्, अयाप्सुः ॥ **तॄ प्लवनतरणयोः** । तरति । ततार । तेरतुः । तरिथ ॥ १४९ ॥

( सु० ) **ऋदन्तात् थपो नेट्** ॥ ऋदन्तात् धातोः परस्य थप इण्न भवति ॥ स्वरान्तादिति पाक्षिके प्राप्ते निषेधः। हन्नृत इतीट् । ह्वरिष्यति ॥ **स्वृ शब्दोपतापयोः** । उपतापो रोगः । स्वरतिसूतीति वेट् । सस्वरिथ-सस्वर्थ 'गुणोऽर्त्ति' इति गुणः । स्वर्यात्, लृटि हन्नृत इति नित्यमिट् । स्वरिष्यति । लुङि अस्वारीत्, अस्वारिष्टाम् । इडभावे अस्वार्षीत्, अस्वार्ष्टाम् ॥ स्वरान्तादृत्वत इति वेट् । चस्कन्दिथ-चस्कन्त्थ । आशिषि नो लोप इति नलोपः । स्कद्यात् । लुङि **'इरितो वेति'** वा ङः । अस्कदत् । ङाभावे सावनिटो नित्यं वृद्धिः । अनिटो धातोरनुपधाभूतस्यातो वृद्धिः स्यात् सिप्रत्यये । अस्कान्त्सीत् ॥ तॄफलेत्येत्वपूर्वलोपौ । तेरतुः ॥ १४९ ॥

**ऋत इर्** ॥ ऋकारस्य इर् भवत्यगुणवृद्धिविषये तीर्यात् ॥ १५० ॥

( सु० ) **ॠत इर्** ॥ धातोॠकारस्य इर् भवति गुणवृद्धिनिमित्ताभावे ॥ र्वोर्वीति दीर्घः । तीर्यात् ॥ १५० ॥

**ईटो ग्रहाम्** ग्रहादीनामिट ईकारो न तु णादौ ॥ १५१ ॥

( सु० ) **ईटो ग्रहाम्** ॥ ग्रहादेः परस्येटो दीर्घः स्यान्न तु लिटि । ग्रहामिति बहुवचनेन वक्ष्यमाणव्यवस्था ॥ १५१ ॥

( त० ) **न तु णादाविति** । ऊदितो वेत्यतो वानुवृत्तेर्व्यवस्थया लाभः ॥१५१॥

**( वृङ्वृञ्ॠदन्तानां वा )** तरिता— तरीता ॥ १५२ ॥

( सु० ) **वृङ्वृञ्ॠदन्तानां वा** ॥ एभ्यः परस्येटो वा दीर्घः न तु लिटि ॥ लिटि किम् । तेरिथ ॥ १५२ ॥

**( पे सेरिटो न दीर्घः सीष्टादेश्च )** अतारीत्, अतारिष्टाम्, अतारिषुः । **दंश दशने** ॥ १५३ ॥

( सु० ) **पे सेरिटो न दीर्घः सीष्टादेश्च** ॥ वृङ्वृञ्ॠदन्तात्परस्येटो न दीर्घः । पे सौ सीष्टादौ च परे ॥ दंश दशने । दशनं दंष्ट्राव्यापारः ॥ निपातनान्नस्य लोपः॥१५३॥

( त० ) **दशन** इति । इहैव निपातनान्नलोपः ॥ १५३ ॥

**( अपिरञ्जदंशसञ्जस्वञ्जां नस्य लोपो वाच्यः )** दशति । दंष्टा । अदाङ्क्षीत् ॥ **षञ्ज संगे** । ससञ्जिथ—ससङ्क्थ ।

व्यषाङ्क्षीत् ॥ **कित रोगापनयने संशये च ॥ १५४ ॥**

( सु० ) **अपि रञ्जदंशसञ्जस्वञ्जाम्** ॥ रञ्ज रागे । दंश दशने । सञ्ज संगे । ष्वञ्ज परिष्वङ्गे । एषामुपधाभूतस्य नस्य लोपो भवति अप्प्रत्यये । लुङि सावनिट इति वृद्धिः । छशषेति षत्वम् । षढोरिति कत्वम् । यमा यपेस्येति परसवर्णः । अदाङ्क्षीत् । अड्व्द्वित्वव्यवधानेऽपीति षत्वम् । व्यषाङ्क्षीत् । कित रोगापनयने संशये च । रोगापनयनं व्याधिप्रतीकारः । संशये प्रायेण विपूर्वः । "विचिकित्सा तु संशयः", इत्यमरः॥१५४॥

**गुप्भ्यः** ॥ गुप्तिज्कित्मान्बध्दान्शान्भ्यः स्वार्थे सप्रत्ययो भवति धातोश्च द्वित्वम् ॥ चिकित्सति । चिकित्सांचकार । चिकित्सिता । अचिकित्सीत् ॥ **पत्लृ पतने** पपात । पेततुः ॥१५५॥

( **पातेर्ङे पुम्** ॥ ) अपप्तत् ॥ **भ्रमु चलने** । योवा । भ्राम्यति । भ्रमति । भ्राम्यतीति तु दिवादौ वक्ष्यते ॥१५६॥

( सु० ) **गुप्भ्यः** ॥ गुप् गोपने । तिज निशाने । मान पूजायाम् । बंध बन्धने । दान आर्जवे । शान तेजने । बहुवचनमाद्यर्थम् । गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधे श्चित्तविकारे । दानेरार्जवे । शानेर्निशाने वाच्ये नित्यं स्वार्थे सप्रत्ययः धातोर्द्वित्वं च । गुपिप्रभृतयः किद्भिन्ना अनुदात्तेतः । दानशानौ स्वरितेतौ । अत्र सप्रत्ययस्य सिसतेत्यनेनेण् न भवति । आगमजमनित्यमित्युक्तत्वात् । 'नानिटि से' इत्युपधाया गुणो न । स धातुरिति धातुत्वात्तिबादिः । कितेर्व्याधिप्रतीकारादावेव स इत्युक्तम् । तदुदाहरति—चिकित्सति, रोगमपनयतीत्यर्थः ॥ शत्रुं चिकित्सति, निगृह्णातीत्यर्थः ॥ क्षेत्रे तृणानि चकित्सति, अपनयति नाशयति वेत्यर्थः ॥ कासादिप्रत्ययादाम् इत्याम् । यत इत्यलोपः । चिकित्सांचकार । भ्रमु चलने । मण्डलाकारेण चलनमेव धात्वर्थो न किंतु चलनमात्रम् । भ्राशभ्लाशिति वा यः । भ्रम्यति-भ्रमति ॥ १५५ ॥ १५६ ॥

( त० ) **गुप्भ्य** इति ॥ बहुवचनमाद्यर्थमतो गणयति-**गुप्तिज्** इत्यादि ॥ **स्वार्थ** इति ॥ अन्यार्थानुक्तेरिति भावः । **चिकित्सतीति** ॥ आगमजस्यानित्यत्वादिडभावस्ततो 'नानिटि से' इति गुणाभावः । **भ्रमु** इति ॥ उदित्त्वं क्त्वाप्रत्यये भ्रमित्वा भ्रान्त्वेतीड्विकल्पार्थम् ॥ १५५ ॥ १५६ ॥

**फण्राज्भ्राज्भ्राश्भ्लाश्स्वन्स्यमुजॄष्भ्रमुत्रसामेत्वपूर्वलोपौ वा** ॥ भ्रेमतुः—बभ्रमतुः । अभ्रमीत् । **टुवम् उद्गिरणे** । ( **वम एत्वपूर्वलोपो वेति केचित्** ) वेमतुः—ववमतुः । अवमीत् ॥ **फण-गतौ** फेणतुः—पफणतुः । अफाणीत्—अफणीत् ॥ **स्वन स्यमु शब्दे** । स्वेनतुः—सस्वनतुः । अस्वानीत् ॥ अस्वनीत् । स्येमतुः—सस्यमतुः । अस्यमीत् ॥ **शसु हिंसायाम्** । शशसतुः । शशसिथ ॥ **तुहिर् दुहिर्**

**उहिर् अर्दने ।** अतुहत्-अतोहीत् । दोहिता । अदुहत्-अदोहीत् ॥ उवोह, ऊहतुः ॥ **वस निवासे** ॥ १५७ ॥ १५८ ॥

( सु० ) **फणराजृभ्राजभ्राश्टभ्लाश्टस्वनस्यमुजृषृभ्रमुत्रसामेत्वपूर्वलोपौ वा ॥ फण् गतौ । राजृ** दीप्तौ । **टुभ्राश्ट ।टुभ्लाश्ट** दीप्तौ । **स्वनस्यमु** शब्दे । **जषृइर्** । वयोहानौ । भ्रमु चलने । त्रसी उद्वेगे । एषामेत्वपूर्वलोपौ वा किति लिटि सेटि थपि च । **टुवम्** उद्गिरणे । केचिदमुमुदितं पठन्ति । **वामनस्तु**–नोदितम् । गृधातोर्युट्प्रत्यये गुणे कृते तूद्गिरण इति स्यात्ततो निपातनादिरिति-**सुधाकरः** । उद्गिरणं वामनम् । वादित्वादेत्वादेत्वपूर्वलोपौ न । ववमतुः । '**वेमुश्च केचिद्रुधिरम्**' इत्यादि प्रयोगा भाष्यविरुद्धाः ॥ १५७-१५८ ॥

( त० ) **अभ्रमीदिति** ह्ययन्तेत्यादिना न वृद्धिः । **टुवम उद्गिरण** इति ॥ वेमथुरित्यथुप्रत्ययार्थं टित्त्वम् । इहैव निपातनादुद्गिरणे इत्यत्र गुणाभावः । **शशसतु** ति॥ न शशददेति निषेधः ॥ १५७ ॥ १५८ ॥

**णबादौ पूर्वस्य** ॥ यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं णबादौ ॥१५९ ॥

( सु० ) **णबादौ पूर्वस्य** ॥ यजामिति ग्रहामिति चानुवृत्तेः । यद्यपि ग्रहिवृश्चिपृच्छतिभृज्जतीनां पूर्वस्य संप्रसारणे कृते विशेषो नास्ति तथापि पर्जन्यवल्लक्षणं प्रवर्तते । जग्राह । वव्रश्च । पप्रच्छ । बभ्रज्ज ॥ लिटि किम् । विवक्षति । पिपृक्षति ॥ १५९ ॥

( **यवराणामिदुदृतः** ) सस्वरस्य संप्रसारणम् । दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः । उवास ॥ १६० ॥

( सु० ) **यवराणामिदुदृतः** ॥ यकारवकाररकाराणां स्थाने इकारोकारऋकारा भवन्ति । ते संप्रसारणसंज्ञकाः स्युः ॥ १६० ॥

**यजां यवराणां य्वृतः संप्रसारणं किति** ॥ यजादीनां संप्रसारणं किति । ( क )

"यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिः स्वपिः ।
वद्वसी श्वयतिर्वक्तिरेकादश यजादयः" ॥ १६१ ॥

( सु० ) **यजां यवराणां य्वृतः संप्रसारणं किति** ॥ यजादिधातूनां यकारवकाररकाराणामिकारोकारऋकाराः संप्रसारणे भवन्ति किति प्रत्यये परे ॥ "यजिर्वपिर्वहिश्चैव वेञ्व्येञ्ह्वेञ्स्वपवदस्तथा ॥ वसिश्च श्वयतिर्वक्तिरेकादश यजादयः ॥ १ ॥" **यज-**

---

( क ) **यजामिति** । बहुवचनेन-अन्याम् गृह्णातीत्याह—यजादीनामिति । एषां ये यकारवकाररेफास्तेषां सम्प्रसारणमित्यर्थः ।

यवयोश्च तद्विधौ प्रयोजनाभावात् य्वृत इति इकारोकारयोग्रहणम् ।

सम्प्रसारणमिति संज्ञानिर्देशः । य्वृत इत्येव सिद्धे संज्ञाविधानं पाणिनीयमतानुशरणार्थम् ।

देवपूजादौ । **टुवप्** बीजतन्तुसंताने । **वह्** प्रापणे । **वेञ्** तन्तुसन्ताने । **व्येञ्** संवरणे । **ह्वेञ् स्पर्द्धायाम्** । **शिवपृशये** । **वद्** व्यक्तायां वाचि । **वस्** निवासे । **टुओश्विइर्** गतिवृद्ध्योः । **वच्** परिभाषणे । एते एकादश धातवो यजादयो ज्ञेयाः ॥१६१॥

**घसादेः षः** ॥ घसिशासिवसीनां सस्य षो निमित्ते सति ॥

ऊषतुः । उवसिथ–उवस्थ । उस्यात् । वस्ता ॥१६२॥

( सु० ) **घसादेः षः** ॥ सस्याकृतत्वादप्राप्ते विधिरयम् । घस्लृ अदने । शासु अनुशिष्टौ । (क) वस निवासे । किशात्परस्यैषां शस्य षः । स्वरान्तादृत्वत इति वेट् । उवसिथ-उवस्थ ॥ १६२ ॥

( त० ) **निमित्त** इति । किशात्परस्येत्यर्थः ॥ १६२ ॥

**सस्तोऽनपि** ॥ सस्य तोऽनपि से ॥ वत्स्यति । अवात्सीत्, अवात्ताम् ॥ **वद व्यक्तायां वाचि** । वदति । उवदिथ । उद्यात् । वदिव्रज्योः सौ नित्यं वृद्धिः । अवादीत् । **टुओश्विइर्** गतिवृद्ध्योः ॥ १६३ ॥

( सु० ) **सस्तोऽनपि** । धातोः सस्य तोऽनपि सकारे परे ॥ से किम् । वस्ता ॥ सस्येति किम् , रप्स्यते ॥ धातोः किम् , वेधः ॥ से लुङि-'**णित्पे**' इति सेर्णित्वादत उपधाया इति वृद्धिः । अवात्सीत् । सस्य ते कृते झसादिति सिलोपः । अवात्ताम् । (ख) वदिव्रज्योरिति वृद्धिः । अवादीत् ॥ **टुओश्विइर्** गतिवृद्ध्योः । टु इतीत्संज्ञकः । ट्वितो थुरित्येतदर्थः । श्वयथुः । ओरिति ल्वाद्योदितश्चेतदर्थः (ग) । इरितीरितो वेति ङप्रत्ययार्थः ॥ १६३ ॥

( **श्वयतेर्णादौ यङि च संप्रसारणं वा** ) ततो द्वित्वम् । शुशाव, शुशुवतुः, शुशुविथ । शिश्वाय, शिश्वियतुः, शिश्वयिथ । शूयात् । श्वयिता । अश्वयीत् ॥ १६४ ॥

( सु० ) **श्वयतेर्णादौ यङि च संप्रसारणं वा** । ततो द्वित्वम् । श्वयतेः पूर्वं संप्रसारणं स्याद्वा पश्चाद् द्वित्वं लिटि । नुधातोरित्युव् । शुशुवतुः । आशिषि यजामिति संप्रसारणे कृते ये इति दीर्घः । शूयात् । ह्यन्तेति न वृद्धिः । अश्वयीत् (घ) पक्षे इरितो वेति ङप्रत्यये ॥ १६४ ॥

( **श्वयतेरितो लोपो ङे** ) अश्वत् ॥ १६५ ॥

( सु० ) **श्वयतेरितोलोपो ङे** ॥ श्वयतेरिकारस्य लोपः स्यात् ङप्रत्यये । अश्वत् १६५

---

( क ) **अत्र केचित्**—शासु अनुशिष्टौ, आङः शासु इच्छायामेतद्वयमप्याहुः ।

( ख ) **अवात्तामिति**—सिलोपस्यासिद्धत्वात् पूर्वं धातोः सस्य तकारे जाते वर्णसमाम्नाय एतदर्थमेवाकृतिग्रहणस्य भाष्ये सिद्धान्तितत्वेन द्वयोरपि तयोस्तकारयोर्झसत्वात् झसादिति सिलोपः ।

( ग ) ओदित्त्वेन—उच्छून इति रूपम् ।

( घ ) **अश्वयीदिति** । नन्वत्र परस्मैपदसिनिमित्तत्वेन वृद्धेर्बहिरङ्गत्वात् सिमात्रापेक्षत्वेनान्तरङ्गे गुणे कृते इकारान्तत्वाभावाद्वृद्ध्यप्राप्त्याऽयादेशे यान्तत्वादेव इसादिलक्षणाया वृद्धेर्निषेधे सिद्धे किं 'ह्म्यन्त' इत्यत्र श्विग्रहणेनेति चेन्न, सौ वृद्धेर्येन नाप्राप्तिन्यायेनान्तरङ्गत्वादिति ।

( **श्वयतेर्ङे द्वित्वं वा एरलोपः** ) अशिश्वियत् ॥ **घस्लृ अदने** (क) ॥ घसति । घसेत् । घस्ता । घत्स्यति । अघत्स्यत् ॥ १६६ ॥

इति पंप्रक्रिया ॥

( सु० ) **श्वयतेर्ङे द्वित्वं वा एरलोपः** । श्वयतेर्वा द्वित्वं भवति इकारस्य लोपाभावश्च ङे परे । नुधातोरितीय् । अशिश्वियत् ।

इति सुबोधिन्यां पंप्रक्रिया ॥

( त० ) श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायां दीपिकायां हि परस्मैपदपूरणम् ॥

इति तत्त्वदीपिकायां पंप्रक्रिया ॥

**एध वृद्धौ** ॥ एधते । एधांचक्रे ।

( सु० ) **एध वृद्धौ** ॥

( त० ) **एध वृद्धाविति** ॥ अकारोऽनुदात्त आत्मनेपदार्थः ॥

( **आमो भ्वसोर्नात्कर्तरि** ) एधामास -एधांबभूव । ऐधिष्ट । **ईक्ष दर्शनाङ्कनयोः** (ख) । ईक्षांचक्रे । ऐक्षिष्ट । **ष्वष्क गतौ** । ष्वष्कते । ष्वष्किषीष्ट । अष्वष्किष्ट । **वेष्ट वेष्टने** । विवेष्टे । **चेष्ट चेष्टायाम्** । अचेष्टिष्ट । **ऋज गतौ स्थैर्ये च** । अर्जते । आनृजे । आर्जिष्ट । **ष्वञ्ज परिष्वङ्गे** । स्वजते ॥ १ ॥

( सु० ) **आमो भ्वसोर्नात्कर्तरि** । आम्प्रत्ययान्तात्परयोर्भ्वसोः कर्तर्यर्थे आत्मनेपदं न भवति भावकर्मणोस्त्वात्मनेपदमेव । नामधातुष्वष्कष्ठिवामिति सत्वाभावः । ष्वष्कते ॥ आनृजे इत्यत्र द्वित्वम् । हसादिः शेषः, र इत्यत्वं । आभ्वो रित्यात्वम् । नुगशामिति नुक् ॥ **ष्वञ्ज** परिष्वङ्गे । परिष्वङ्ग आलिङ्गनम् । अपि रञ्जेति नलोपः ॥ १ ॥

( त० ) **नात्कर्तरीति** ॥ आत् आत्मनेपदम् । कर्तरीत्युक्तेर्भावादात्मनेपदमेव ॥ **ष्वष्केति** ॥ नामधातुष्वष्कष्ठिवामिति सत्वनिषेधः ॥ **आनृजे इति** ॥ द्वित्वं हसादिः शेषः र इत्यत्वम् । आभ्वोरित्यात्वम् । नुगशामिति नुक् ॥ १ ॥

( **स्वजतेर्णादेर्वा किरवम्** ) सदिस्वञ्जोर्लिटि परस्य न षः । परिषस्वञ्जे-परिषस्वजे । स्वङ्क्षीष्ट । स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्त, अस्वङ्क्षाताम् । पर्यष्वङ्क्त—पर्यस्वङ्क्त । **त्रपूष् लज्जायाम्** । त्रपते । त्रेपे । ऊदितो वा । त्रपिषीष्ट-त्रप्सीष्ट । अत्रपिष्ट-अत्रप्त ॥ **तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे** । तेपते । तितिपे । तिप्सीष्ट । अतिप्त ॥ **तेपृ** । तेपते ।

---

( क ) सर्वत्र नार्यामिति तु लक्ष्यानुसारिणी व्यवस्था, यत्र लिङ्गं वचनं चास्ति तत्रैवास्य प्रयोगः । इति श्री नवकिशोर-काव्यव्याकरणतीर्थवेदान्तशास्त्रिविरचितायां सारदर्शिन्यनुसारिण्यां चक्रधराख्य-टिप्पण्यां भ्वादिपरस्मैपदप्रक्रिया समाप्ता ॥

( ख ) अङ्कनं परीक्षणम् ।

तितेपे । तेपिषीष्ट । अतेपिष्ट ॥ **ष्टिपृ** । स्तेपते । तिष्टिपे । स्तेपिषीष्ट ॥ **ष्टेपृ** । स्तेपते । तिष्टेपे । स्तेपिषीष्ट ॥ **जभीजृभी गात्रविनामे ॥ २ ॥**

(**रधिजभोः स्वरे नुम्**) जम्भते । अजम्भिष्ट ॥ जृम्भते । जजृम्भे ॥ **ष्टुभ स्तम्भे** । विष्टोभते । तुष्टुभे । स्तोभिषीष्ट ॥ स्तोभिता । **क्षमूष् सहने** । क्षमते । चक्षमे । चक्षमिषे-चक्षंसे ॥ ३ ॥

**मो नो धातोः ॥** मान्तस्य धातोर्मकारस्य नः स्यात् झसे पदान्ते वमयोश्च ॥ चक्षमिवहे-चक्षण्वहे । चक्षमिमहे-चक्षण्महे । अक्षमिष्ट-अक्षंस्त ॥ **क्नूयी शब्दे उन्दे च** । क्नूयते । अक्नूयिष्ट ॥ **क्ष्मायी विधूनने** । क्ष्मायते । चक्ष्माये । अक्ष्मायिष्ट ॥ **स्फायी ओप्यायी वृद्धौ** । स्फायते । पस्फाये । अस्फायिष्ट । प्यायते ॥ ४ ॥

( सु० ) **स्वजतेर्णादेर्वा कित्त्वम्** ॥ स्वजते परस्य लिटो वा कित्त्वं भवति । सदिस्वञ्जोरिति परस्य न पः । परिषस्वजे । झसादिति सिलोपः । अस्वङ्क्त ॥ तृफलभजत्रपामित्येत्वपूर्वलोपौ । त्रेपे । उदितो वेति वेट् । त्रप्सीष्ट-त्रपिषीष्ट । लुङि झसादिति सिलोपः । अत्रप्त ॥ तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे । आद्योऽनिट् । क्षीरस्वामी त्वयं सेडिति बभ्राम । कादेर्णादेरिति नित्यमिट् । तितिपिषे । सिस्योः । उपधाभूतस्य नामिनो गुणो नानिटि । सिप्रत्यये सीष्टादौ च परे । लुङि सादिति सिलोपः । अतिप्त ॥ जभी जृभी गात्रविनामे । गात्रस्वेदे इत्यर्थः । ईदित्वात् आदीदित इति क्तक्तवत्वोर्नेट् (क) । रधिजभोः स्वरे नुम् । एतयोर्नुमागमः स्यात् स्वरे ॥ रध हिंसायाम् । ञिप्रत्यये तु रन्धयतीत्यत्र ञिनिमित्ता परापि वृद्धिर्नित्येन नुमा बाध्यते । स्वरे किम् । रब्धा । जब्धा ॥ ष्टुभ स्तम्भे । स्तम्भो निरोधः ॥ क्षमूष् सहने । षकारः षिद्भिदामङ् इत्यङ्प्रत्ययार्थः (ख) । मो नो धातोरिति मस्य नः । अवकुप्यन्तरेऽपीति णत्वम् ? चक्षण्वहे ॥ क्नूयी शब्दे उन्दे च । उन्दः क्लेदनमार्द्रीभाव इत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥

( त० ) **परिषस्वजे** इति । कित्वान्नलोपः । सदिस्वञ्जोरिति परस्य षत्वनिषेधः ॥ **त्रप्सीष्टेति** ॥ ऊदितो वेति वेट् ॥ **चक्षण्महे** इति ॥ इडभावपक्षे वमयोश्चेति मस्य नत्वम् ॥ **क्नूयी शब्दे उन्दे चेति** । ईदित्वं क्तक्तवत्वोरिडभावार्थम् ॥ २ ॥ ३ ॥ ४ ॥

**( लिड्यङोः प्यायः पी )** पिप्ये ॥ ५ ॥

( सु० ) **लिड्यङोः प्यायः पी** ॥ लिटि यङि च प्यायः पी । आदौ परत्वात् पीभावे पश्चात् पीशब्दस्य द्वित्वे कृते नुधातोरिति यः । पिप्ये । यङि पेपीयते ॥ ५ ॥

( त० ) **पिप्ये इति** ॥ आदौ परत्वात्पीभावे (ग) पुनः प्रसङ्गविज्ञानात्पीशब्दस्य

( क ) तेन जब्धं जृब्धमित्यादिसिद्धिः । ( ख ) तेन क्षमेत्यादिरूपसिद्धिः ।

( ग ) ननु प्याय ए इत्यवस्थायां परत्वाद् 'द्विश्च' इति द्वित्वं बाधित्वा पीभावे कृते गतौ पूर्वपरयोर्युगपत्प्राप्तौ यो विप्रतिषेधः परेण पूर्वबाधः=तस्मिन् सति यत् सकृद् एकबारं बाधितं तद्बाधितमेव इत्यर्थ-

द्वित्वम् । ततोऽनेकस्वरपूर्वकत्वाद्यत्वम् ॥ ५ ॥

**( दीपजनबुधपूरितायिप्यायिभ्यो वा इण् तनि कर्तरि सेरपवादः ) ॥ ६ ॥**

( सु० ) **दीपजनबुधपूरितायिप्यायिभ्यो वा इण तनि कर्तरि सेरपवादः** ॥ दीपी दीप्तौ । जनी प्रादुर्भावे । बुध अवगमने । पूरी आप्यायने । एते दिवादयः ॥ तायृ संतानपालनयोः । ओप्यायी वृद्धौ । एतौ भौवादिकौ ॥ एभ्य इण् प्रत्ययो वा स्यात् कर्त्रर्थे तनि परे । सेरपवादः ॥ ६ ॥

( त० ) **दीपजनेति** ॥ अत्र पण्डिताः । दीपपूरादिभिरात्मनेपदिभिः साहचर्यात् बुध बोधने, बुध जनने, इति परस्मैपदिनो न ग्रहणम् । तेनाभ्यां कर्मव्यतिहारे आत्मनेपदे तनि न भवति ॥ ६ ॥

**लुक्** ॥ इणः परस्य तनो लुक् ॥ अप्यायि–अप्यायिष्ट ॥ **तायृ संतानपालनयोः** । तताये । अतायिष्ट ॥ **वल वल्ल संवरणे** । वलते । वल्लते ॥ [मल मल्ल धारणे ॥ मेले–ममल्ले । भल भल्ल परिभाषणहिंसादानेषु ॥ बभले । बभल्ले । कल शब्दसंख्यानयोः । कलते । चकले । कल्ल अव्यक्ते शब्दे । कल्लते । अशब्द इति स्वामी । अशब्दस्तूष्णीभावः । ] **टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ** । भ्रेजे–बभ्राजे । भ्राश्यते–भ्राशते । भ्रेशे–बभ्राशे । भ्लाश्यते–भ्लाशते । भ्लेशे–बभ्लाशे ॥ **तिज निशाने क्षमायां च** । गुब्भ्यः । तितिक्षते । तितिक्षांचक्रे ॥ **गुप गोपनकुत्सनयोः** । जुगुप्सते ॥ **मान विचारणे** ॥ ७ ॥

( सु० ) **लुक्** ॥ इण् तनीत्यत इणिति तनीति चानुवृत्तम् । इणिति पञ्चम्या विपरिणमनीयं तनीति षष्ठ्या च । अप्यायि-अप्यायिष्ट ॥ **तायृ** संतानपालनयोः । **संतानः** प्रबन्धः ॥ **टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ** । दीप्तिस्तेजः । फणिराजभ्राज इत्येत्वपूर्वलोपौ । भ्रेजे—बभ्राजे । भ्राशभ्लाशिति वा यप्रत्ययः । भ्राश्यते ॥ **तिज** निशाने । **निशानं** तीक्ष्णीकरणम् । गुब्भ्य इति तिजेः क्षमायां सः । तितिक्षते क्षमां करोतीत्यर्थः ॥ **गुप** गोपनकुत्सनयोः । **गोपनं** रक्षणम् । गुपेर्निन्दायां सः । जुगुप्सते । निन्दां करोतीत्यर्थः ॥ ७ ॥

( त० ) **लुक्** ॥ अत्रेण् तन्यकर्तरीति पूर्वसूत्रादनुवृत्तं तनीति षष्ठ्या विपरिणमनीयमिणिति पञ्चम्या । तत्र षष्ठीनिर्देशादन्त्यलोपः । आदेरित्यस्यानुवृत्त्या आदेरपि लोप इति सूत्रपाठपक्षे । क्वचित्तु लुगिति पाठः । तत्र सर्वस्य तनो लुग्भवतीति । अत्रेदं वक्त-

---

कतया 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति परिभाषया पुनर्द्वित्वं न स्यादिति शंकमानं प्रत्याह—पुनः प्रसङ्गेति ।

'पिप्ये' इत्यादौ 'पी' इति दीर्घोच्चारणस्य फलाभावेऽपि 'प्यायः पी' इत्यादिसूत्रे फलमस्त्येव, पीनं मुखं' पीनौ बाहू' पीनमूर इति ।

व्यम् । अत्र तनीति नानुवर्त्यम् । इणः परस्य लुक् स्यात् इत्येव व्याख्येयम् । तथा चेणः परस्यान्यस्यासंभवात्तत एव लुग्भविष्यति न चाकारितरामित्यत्रातिप्रसङ्गः । तत्रासिद्धत्वेन तनः इण्परत्वाभावात् ॥ **निशाने** इति ॥ निशानं तीक्ष्णीकरणम् ॥ ७ ॥

**यः से** ॥ पूर्वस्यात इत्से ॥८॥

(सु०) **यः से** ॥ इ अः से इति पदच्छेदः । पूर्वस्येत्यनुवृत्तम् ॥ तपरः किम् । पापचिषति । यङन्तात्सः ॥ ८ ॥

(त०) **यः से** इति ॥ इ अः से इति छेदः ॥ ८ ॥

**(मानादीनां पूर्वस्येतो दीर्घः)** मीमांसते । **बध निन्दायाम्** । आदिजबानामिति भः । बीभत्सते ॥ **पण व्यवहारे स्तुतौ च (क) पन च** । पणायति । स्तुतावेवायः । पणायांचक्रे । पेणे ॥ **एवं पन** ॥ **कमु कान्तौ** ॥९॥

(सु०) **मानादीनां पूर्वस्येतो दीर्घः** ॥ एषां पूर्वस्येकारस्य दीर्घः स्यात् । मान विचारणे । बध निन्दायाम् । दान आर्जवे । शान तेजने । इत्यादि । मानेर्जिज्ञासायां सः । मीमांसते । जिज्ञासां करोतीत्यर्थः । बध निन्दायाम् । निन्दा परापवादः । बधेश्चित्तविकारे सः । आदिजबानामिति भः । खसे चपा इति तः । बीभत्सते । ग्लानिं करोतीत्यर्थः ॥ पण व्यवहारे स्तुतौ च । पन च । क्रयविक्रयरूपो व्यवहारः । पनेति स्तुतावित्यनेन संबध्यते । पृथग् निर्देशात् । पनिसाहचर्यात् पणेरपि स्तुतावेवायप्रत्ययः (ख) । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तादात्मनेपदं न भवति । पणायति । यतइत्यल्लोपे पणायांचकार । भट्टिस्तु व्यवहारेऽप्यायप्रत्ययं कृतवान् । 'न चोपलेभे वणिजा पणायाम्" इति । व्यवहारमित्यर्थः । आयान्तादङ्प्रत्यये आप् ॥ कमु कान्तौ । कान्तिरिच्छा ॥ णिङभावे उदित्त्वात् क्त्वायामिड्विकल्पः । कमित्वा—कान्त्वा क्तक्तवत्वोस्तु क्वचिद्वेट् इति निषेधात् । कान्तः । कान्तवान् ॥ ९ ॥

(त०) **पन** चेति ॥ व्यवहारे स्तुताविति चार्थः । **पणायतीति** । व्यवहारे पणते इत्यत्र चरितार्थत्वादनुबन्धस्यायप्रत्ययाच्च त्वात् ॥ ९ ॥

**(कमेः स्वार्थे णिङनपि तु वा)** कामयते । कामयांचक्रे । चकमे ॥

(सु०) **कमेः स्वार्थे णिङनपि तु वा** ॥ कमेर्णिङ् स्याच्चतुर्षु नित्यमनपि वा धात्वर्थे ॥

**ञेरङ् द्विश्च** ॥ ञ्यन्ताद्धातोः कर्तरि अङ् लुङि ॥ सेरपवादः । धातोश्च द्वित्वम् ॥११॥

(सु०) **ञेरङ् द्विश्च** ॥ ञेरित्यस्य प्रत्ययत्वात्तदन्तलाभः । अप् कर्तरीत्यतो मण्डूकप्लुत्या कर्तरीत्यनुवृत्तम् । ङकारोऽङि लघाविति विशेषणार्थः । अङि परे चकारात्

( क ) **पण** । व्यवहारः कुसीदादिः । 'वि नानार्थेऽव सन्देहे हरणं हार उच्यते, नानासंदेहहरणाद् व्यवहार इति स्मृत' इति कात्यायनः ।

( ख ) **पनेति**-स्तुतावित्यनेन सम्बध्यते । यद्यपि पृथग् निर्देशो यथासंख्यनिवृत्त्यर्थं इत्यपि वक्तुं शक्यते, तथापि सम्प्रदायानुरोधेनेदमाह ।

ण्यन्तस्य धातोर्द्वित्वम् । तच्च नित्यत्वात् णिलोपे कृते प्रवर्त्तते ॥ कर्तरि किम् । अकारयिषातां घटौ कुलालेन ॥ ११ ॥

(त०) **णेरङ् श्रिश्च** ॥ अस्य प्रत्ययत्वात्तदन्तलाभः । अप् कर्तरीत्यतो मण्डूकप्लुत्या कर्तरीत्यनुवर्तते ॥ कर्तरि किम् । अकारयिपातां घटौ कुलालेन । अत्राहुः । ङकारोऽङि लघाविति विशेषणार्थः। चकारस्य वाक्यभेदेन व्याख्यानात् श्रिश्रुद्रुभ्यो ङः क्वचिद्विकल्पेनेत्यादि । अत्रेदं वक्तव्यम् । अशिश्रियदित्यादौ ङकारस्य गणप्रतिषेधार्थतयादृष्टत्वेनान्यार्थताया अन्याय्यत्वात् । अचूचुरदित्यादौ तु ह्रस्वविधिसामर्थ्यादेव न ॥ ११ ॥

**णेः** ॥ अनपि णेर्लोपो न त्विडामन्तात्वाय्येत्न्विष्णुषु ॥ १२ ॥

(सु०) णेः ॥ णेरिति णिजिङोः सामान्येन ग्रहणम् । इडादिषु प्रत्ययेषु परेषु णेर्लोपो नान्यत्र । अनपि णेलोपः स्यात् । इटि–कामयिता । आमि–कामयामास । विशादेरन्त इत्यौणादिकेऽन्ते मण्डयन्तः । आलुप्रत्यये स्पृहयालुः । श्रादेराय्य इत्यौणादिके आय्ये स्पृहयाय्यः । इत्नुप्रत्यये औणादिके स्तनयित्नुः । इष्णुप्रत्यये छान्दसिके वीरुधः पारयिष्णवः ॥ १२ ॥

(त०) णेरिति ॥ णिजिङोः सामान्येन ग्रहणम् । त्विडित्यादि । इट् । कारयिता । आम् । कारयामास । अन्तः । मण्डयन्तः । औणादिकोऽन्तः । आलुः । स्पृहयालुः । स्पृहीत्यादिनोक्त आलुः । आय्यः–स्पृहयाय्यः । औणादिक आय्यः । इत्नुः–स्तनयित्नुः । इष्णुः । पारयिष्णवः । एषु णेर्लोपो नेत्यर्थः ॥ १२ ॥

**अङि लघौ ह्रस्व उपधायाः** (क) ॥ अङि सत्युपधाया ह्रस्वो भवति पूर्वस्यातो लघुनि धात्वक्षरे इकारः ॥ १३ ॥

(सु०) **अङि लघौ ह्रस्व उपधायाः** ॥ येन नाव्यवधानं तेन व्यवहितेऽपीति वचनसामर्थ्यात् धात्वक्षरस्थककारे व्यवधानेऽपि पूर्वस्यातोऽत्रेत्वम् । अजजागरदित्यत्र त्वनेकवर्णव्यवधानत्वान्नेत्वम् ॥ उपधायाः किम् । अचकाङ्क्षत् ॥ १३ ॥

(त०) **अङि लघौ ह्रस्व उपधायाः** ॥ धात्वक्षरस्य ककारेण व्यवधानेऽपि येन नाव्यवधानं संभवति तेन व्यवहितेऽपीति वचनसामर्थ्याद्भवति । अजजागरदित्यत्र त्वनेकवर्णव्यवधानत्वान्न भवति । न चाचिक्षणदित्यत्राप्यनेकवर्णव्यवधानत्वान्न भविष्यतीति वाच्यम् । अत्स्मृद्दृत्वरेतीत्वबाधनार्थमत्वेन संयोगव्यवधाने भवतीति ज्ञापितत्वात् । तेन स्वरहससमुदाय एव न भविष्यतीतिबोध्यम् ॥ १३ ॥

**लघोर्दीर्घः** (ख) ॥ अङि सति पूर्वस्य लघोर्दीर्घो भवति लघुनि धात्वक्षरे परे ॥ अचीकमत (ग) । णेरभावे ॥ १४ ॥

---

(क) लघावित्यस्य नपुंसकत्वेऽपि उक्तपुंस्कत्वेन पुम्वत्वान्न नुम् । अङि सतीत्यत्र णेरङि,सति पूरणीयम् , अन्यथा अचकमतेत्यत्र अचीकमत स्यात् णेरिति किम् , अचकमत । लघुनीति किम् । अततक्षत् । हसादेरिति किम् । औजढत् । (ख) अत्रापि णेरिति पूरणीयम् । लघुनीति किम् ; अबभक्षत् ।

(ग) लुङ् लकारे—अकामि तन् इति स्थिते णेरङ् श्रिश्च अनेनाङ् प्रत्ययः सेरपवादो धातोश्च द्वित्वम् । णेः, इति णिप्रत्ययस्य लोपः तदा अका काम अङ् तन् इति । 'ह्रस्वः' 'कुहोश्चुः' तदा अचकाम् अङ् तन् इति । 'अङि लघौ ह्रस्वोपधायाः' अनेनाऽकारस्य इकारो भवति । उपधाया ह्रस्वः । तदा अचिकम् अङ् तन् इति 'लघोः दीर्घः' अनेनेकारस्य दीर्घः, अङ् तनो ङकारनकारलोपः । 'स्वरहीन',

(सु०) **लघोर्दीर्घः** ॥ अङि लघावित्यतो लघावित्यनुवृत्तम् ॥ लघोः किम् । अचिक्षणत् । णेरभावे ॥ १४ ॥

(त०) **लघो दीर्घः** ॥ अत्राङि लघावित्यनुवर्तते इत्याह–**लघुनीत्यादि** ॥ अत्र प्राञ्चः हसादेर्धातोः पूर्वस्य लघोर्दीर्घो भवति । तेनारिरदित्यादावप्रसङ्ग इति । वस्तुतस्तु अत्र दीर्घप्राप्तिरेव लघुधात्वक्षरपरत्वाभावात् ॥ १४ ॥

( **कमेरङ्द्वित्वे** ) अचकमत(क) । **अय गतौ** । अयते ॥१५॥

(सु०) **कमेरङ् द्वित्वे** ॥ अण्यन्तात्कमेरङ् स्यात्धातोर्द्वित्वं लुङि सेरपवादः ॥१५॥

**अयतौ प्रादेरेफस्य लत्वम्** ) प्लायते । अयांचक्रे । आयिष्ट ॥
**दय दानगतिरक्षणहिंसादानेषु** । दयते । दयांचक्रे ॥ **घट चेष्टायाम्** । घटते । जघटे । अघटिष्ट ॥ **ईह चेष्टायाम्** । ईहांचक्रे ॥ **ऊह वितर्के** । ऊहांचक्रे ॥ **कासृ शब्दकुत्सायाम्** । कासांचक्रे ॥ **षेवृ** [ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ ] **सेवने** । सिषेवे । असेविष्ट [ अयं सोपदेश इति न्यासकारादयः,(ख) तद्भाष्यविरुद्धम् । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते ॥ **शेवृ खेवृ केवृ इत्यप्येके** । **रेवृप्लुतगतौ** । रेवते ।] **प्रुङ् प्लुङ् च्युङ् गतौ** । अप्रोष्ट । अप्लोष्ट । अच्योष्ट ॥ **गाङ् गतौ** । गाते । अन्तरङ्गत्वात्सवर्णे दीर्घः सह । गाते, गाते । गै, गावहे, गामहे । जगे । अगास्त ॥ **रुङ् गतौ भाषणे च** । रवते । रुरुवे । अरविष्ट । अनिडयमित्येके ॥ मुङ् वन्धने । मविता । अमविष्ट ॥ **पूङ् पवने** अपविष्ट ॥ **देङ् त्रेङ् पालने** (ग) । दयते ॥ १६ ॥

(सु०) **अयतौ प्रादे रेफस्य लत्वम्** ॥ प्रादिस्थरेफस्य लत्वमयतौ । अयताविति रेफस्य विशेषणं न तु प्रादेः । येन नाव्यवधानमिति वचनादेकव्यवधाने लत्वम् । पलायते । प्रत्यय इत्यादौ त्वनेकव्यवधानान्न (घ) । कासादिप्रत्ययादाम् । अयांचक्रे । आशिषि सेटो हलाड्वेति वा ढः । अयिषीढ्वम्–अयिषीध्वम् । लुङि आयिष्ट । आयि-

अचीकमत । ( क ) **अचकमत,** इति । ण्यन्तत्वाभावान्न दीर्घेकारौ ।

( ख ) **अयमिति** । पेवृ धातुः । तद्भाष्येति । सोपदेशत्वं भाष्यविरुद्धम् । षोपदेशलक्षणवाक्ये स्त्यायतिरिवार्यं न पर्युदस्त इत्ययं दन्त्याजन्तसादित्वात् षोपदेश एव, अन्यथा भाष्यस्य न्यूनत्वापत्तिरिति, सोपदेशत्ववादिनो भाष्यविरोध इति भावः ।

( ग ) **'देङ्'–पालने अत्र** 'दौङ्पालने' दायेत, दायेत, दायताम्, अदायत, इति सारस्वते । दृश्यते किन्तु पाणिनीये नोपलभ्यते ।

( घ ) अत्र केचित् पाणिनीयाः स्वमतमवलम्ब्याहुः, श्रुतत्वाद् अयताविति प्राद्युपसर्गविमर्षणे तेन 'निलयते' 'प्लायते' पलायते इत्यादौ सर्वत्र लत्वसिद्धिः । रेफविशेषणत्वे तु 'निलयते इत्यत्र श्रुतिकृताव्यवधान एव स्यादिति ।

ध्वम्–आयिध्वम् । अथ कथम् 'उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः ॥ अत्र शान प्रत्ययेन भाव्यमिति शङ्कितुराशयः । उच्यते । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङो ङित्करणाज्ज्ञापितम् (क) ॥ दय दानगतिरक्षणहिंसादानेषु । हिंसा हननम् । 'आदानं' ग्रहणम् । कासादिप्रत्ययादित्याम् । दयांचक्रे ॥ ऊह वितर्के । वितर्को विचारः ॥ गाते इत्यत्र पूर्वमप्प्रत्ययेन सह सवर्णदीर्घे कृते पश्चादादाथ इरिति न आतोन्तोदनत इति तु प्रवर्तते एव । ते अन्ते परतः तुल्यं रूपमिति भावः । गातेऽत्र आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः । रुङ् गतौ रेषणे च । रेषणं हिंसा । देङ् त्रेङ् पालने । पालनं रक्षणम् ॥ १६ ॥

(त०) अयताविति रेफस्य विशेषणं न तु प्रादेरित्यभिप्रेत्याह–प्रादेरेफस्येति ॥ तेन रेफस्याव्यवधानेनायतौ परे लत्वं नान्यत्र । प्रत्ययत इत्यादौ तिशब्देनव्यवधानात् । न च प्लायत इत्यत्राप्यकारेण व्यवधानमेवास्तीति वाच्यम् । येन नाव्यवधानमिति वचनादेकव्यवधानेऽपि प्रवृत्तिसंभवात्। अथ निर्दुरोर्व्यवधानसम्भवः । तदर्थं निर्दुरोरित्येव ब्रूयात्॥ अन्तरङ्गत्वादिति गा अ आते इति स्थिते प्रकृत्याश्रयत्वे सवर्ण दीर्घे आदाथ इरिति न भविष्यतीति भावः ॥ गै इति 'ए ऐ ऐ' इति वृद्धिरेव । यत्तु कैश्चिदालोपे गे इत्युक्तम् , तद्भ्रमसात् ॥ १६ ॥

(देङो णादौ दिग्यादेशो द्वित्वाभावश्च) दिग्ये । दासीष्ट॥१७॥

(सु०) देङो णादौ दिग्यादेशो द्वित्वाभावश्च ॥ देङः स्थाने दिगिः स्याद् दिगेर्द्वित्वाभावश्च । लिटि ज़ुधातोरिति यत्वम् । दिग्ये ॥ १७ ॥

(अपिदाधास्थामित्सेर्ङित्त्वमाति न तु दीङः) ॥१८॥

(सु०) अपिदाधास्थामित्सेर्ङित्वमाति न तु दीङः ॥ एभ्यः परस्य से ङित्वं भवति । एषामात् इश्च आत्मनेपदे लुङि ॥ १८ ॥

लोपो ह्रस्वाज्झसे ॥ ह्रस्वात्परस्य सेर्लोपो झसे ॥ अदित, अदिपाताम् । त्रायते । तत्रे । अत्रास्त । ष्मिङ् ईषद्धसने । स्मयते । सिष्मिये । स्मेषीष्ट । स्मेता । अस्मेष्ट । डीङ् विहायसा गतौ ॥ डयते । डिड्ये । अडयिष्ट ॥ द्युत दीप्तौ । द्योतते ॥ १९ ॥

(सु०) लोपो ह्रस्वाज्झसे ॥ सेः इति सूत्रमनुवृत्तम् ॥ ह्रस्वात्किम् । अनेष्टाम् ॥ झसे किम् । अकृषाताम् ॥ डीङ् विहायसा गतौ । आकाशेन गमने ॥ १९ ॥

(त०) लोपो ह्रस्वाज्झसे ॥ लोपो ह्रस्वझसात्सेरित्येव सूत्रयितुमुचितम् । पृथक्करणस्य व्यर्थत्वात् । डीङ् विहायसा गतौ । विहायसा आकाशेनेत्यर्थः । 'वा तु पुंस्याकाशविहायसी' इत्यमरोक्तेः ॥ विहायसमिति त्वपपाठः ॥ १९ ॥

---

(क) उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् । वहति गिरिरयं विलम्बिघण्टद्वयपरिवारितवारणेन्द्रलीलाम् । अस्मिन्छिशुपालवधोक्तश्लोके उदयतीति इट किट कटी गतावित्यत्र इ इ इति प्रश्लिष्य अयतीतिरूपे जाते सिद्धमितिकेचिदाहुः । इ इ इति प्रश्लेषे मानाभाववादिनां मतमवलम्ब्याह–अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङोङित्करणाज्ज्ञापितमिति ।

**( द्युतेः पूर्वस्य सम्प्रसारणं स्वापेश्च )** दिद्युते ॥२०॥

(सु०) **द्युतेः पूर्वस्य संप्रसारणं स्वापेश्च** ॥ द्युतेः पूर्वरूपस्य स्वापेश्च संप्रसारणं भवति । सस्वरयकारस्य इः ॥ २० ॥

**( द्युतादिभ्यो लुङि वा पं पे ङः )** अद्युतत्— अद्योतिष्ट ॥ **श्विता वर्णे** । अश्वितत्—अश्वेतिष्ट ॥ **ञिष्विदा स्नेहन-मोचनयोः** । अश्विदत्—अश्वेदिष्ट ॥ **ञिक्ष्विदा च** । अक्ष्विदत्—अक्ष्वेदिष्ट ॥ **ञिमिदा स्नेहने** । अमिदत्—अमेदिष्ट ॥ **रुच दीप्तावभिप्रीतौ च** । अरुचत्—अरोचिष्ट ॥ **घुट परिवर्तने** । अघुटत्—अघोटिष्ट ॥ **रुट लुट लुठ प्रतिघाते** । अरुटत्—अरोटिष्ट । अलुटत्—अलोटिष्ट ॥ अलुठत् अलोठिष्ट ॥ **शुभ दीप्तौ** । अशुभत्—अशोभिष्ट ॥ **क्षुभ संचलने** । अक्षुभत्—अक्षोभिष्ट ॥ **णभ तुभ हिंसायाम्** । नेभे । अनभत्-अनभिष्ट ॥ **स्रंसु ध्वंसु भ्रंसु अवस्रंसने** । अस्रसत्—अस्रंसिष्ट ॥ **ध्वंसु गतौ च** । अध्वंसत्- अध्वंसिष्ट ॥ **स्रम्भु विश्वासे** । अस्रम्भत्—अस्रम्भिष्ट ॥ **वृतु वर्तने** । वर्तते ॥ २१ ॥

(सु०) **द्युतादिभ्यो लुङि वा पं पे ङः** ॥ द्युतादयः कृपिपर्यन्तास्त्रयोविंशतिधातवस्तेभ्यः परस्मैपदं वा भवति । पक्षे आत्मनेपदं च लुङि पे । पक्षे लित्पुपादेरिति ङप्रत्ययः । अनिट्कारिकायां स्विद्यतिरिति निर्देशादयं सेट् । स्वेदिता ॥ **घुट परिवर्तने** । परिवर्तनमितस्ततो भ्रमणम् । णादिः किदिति कित्त्वात् गुणाभावः । जुघुटे ॥ **क्षुभ संचलने** । **संचलनं** प्रकृतिविपर्यासो मथनं च । क्षोभते । दैवादिकः क्र्यादिश्च ॥ णभ तुभ हिंसायाम् । आद्योऽभावेऽर्थेऽपि । 'नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे' इति निरुक्तम् । इमौ दिवादी क्र्यादी च (क) ॥ स्रंसु, ध्वंसु भ्रंसु अवस्रंसने । अवस्रंसनमधः पतनम् । परस्मैपदपक्षे ङः । **नो लोप** इति नलोपः । अस्रसत् । 'नास्रसत् करिणां ग्रैवम्' इति **रघुकाव्ये** ॥ नास्रंसदित्यपपाठ एव । न चैवं लङो रूपं तत्र परस्मैपदासम्भवादिति भावः ॥ भ्रंसु भ्रंसु अधः पतने इति दैवादिकौ च । ऋजी भृजी भर्जने । भर्जनं जलं विना तण्डुलादेः सन्तापविशेषः । ईदित्त्वादादीदित इति क्तक्तवत्वोर्नेट् । भृक्तः । भृक्तवान् ॥ २१ ॥

( त० ) **क्षुभ सचलने** । संचलनं प्रकृतिविपर्यासो मथनं च ॥ २१ ॥

**(वृतादिभ्यः स्यसयोर्वा पं पेऽनिट्त्वं च)** वर्त्स्यति—वर्तिष्यते । अवृतत्—अवर्तिष्ट ॥ **वृधु वृद्धौ** । वर्त्स्यति—वर्धिष्यते । अवर्त्स्यत्—अवर्धि-

( क ) **णभ तुभ हिंसायाम्** । हिंसा प्राणवियोगानुकूलो व्यापारः अर्थान्तरं प्रकटयति—**आद्य** इति, णभधातुरित्यर्थः । तस्यैवार्थान्तरं प्रमाणयति—**नभन्तामन्यक** इत्यादिना । '**इमावि**'ति—णभ तुभावित्यर्थः ।

ष्यत । अवृधत्–अवर्धिष्ट ॥ **शृधु शब्दकुत्सायाम्** । शर्धते ॥ **स्यन्दू प्रस्रवणे** । स्यन्दते । स्यन्त्स्यति–स्यन्दिष्यते–स्यन्त्स्यते । अस्यदत्–अस्यन्दिष्ट– अस्यन्त ॥ **कृपू सामर्थ्ये** ॥ २२ ॥

( सु० ) **वृतादिभ्यः स्यसयोर्वा पं पेऽनिट्त्वं च** ॥ वृतु वृधु शृधु स्यन्दू कृपू इति वृतादयः । स्यन्दिकृप्वोरूदित्त्वादिड्विकल्पे प्राप्ते इतरेषां नित्यमिति प्राप्ते निषेधः । वृतादिभ्यः परस्मैपदं वा स्यात् । परस्मैपदे इडभावश्च । स्यपि सप्रत्यये च गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः । वर्तिष्यति । विवर्तिषते ॥ शृधु शब्दकुत्सायाम् । शब्दकुत्सा पर्दनम् । शर्द्धजहा माषाः । अपानशब्दं त्यजन्तीत्यर्थः ॥ २२ ॥

**कृपो रो लः (क)** ॥ कृपो रेफस्य लः ऋकारस्य ऌकारः । कल्पते । चक्लृपे । कल्पिषीष्ट ॥ २३ ॥

( सु० ) **कृपो रो लः** ॥ कृपः उः रः लः इति छेदः । कृपेति लुप्तषष्ठीकम् पदम् । आवृत्त्याऽत्र वाक्यद्वयं बोध्यम् । उः ऋकारस्येत्यर्थः ॥ २३ ॥

( त० ) **कृपो रो लः** इति ॥ कृपः उः रः ल इति छेदः । कृपेति लुप्तषष्ठीकम् । आवृत्त्या वाक्यद्वयसिद्धिरित्याह **ऋकारस्येति** ॥ तत्फलं तु अक्लृपदित्यादिसिद्धिः । यद्यपि क्लृपू सामर्थ्ये इति पाठेनैव रूपसिद्धिः सूत्राकरणलाघवं च । कृपणादिसिद्धिस्तु कृप कृपायामित्यस्योणादयो बहुलमिति बहुलग्रहणात्संप्रसारणे तथापि अचीक्लृपदिति सिद्ध्यर्थः तथा पाठः । तथाहि । ऋऌवर्णयोः सावर्ण्यादुपधाभूतऌकारस्य ऋदादेशे अचीक्लृपदिति स्यात् । लत्वविधौ ल सिद्धम् । कृपेत्यादौ कृपः सम्प्रसारणं चेत्यादि कृपेर्बोध्यम् ॥ २३ ॥

**सिस्योः** ॥ उपधाया गुणो न सिस्योरनिटोः परतः । क्लृप्सीष्ट(ख) ॥ २४ ॥

**( कृपेस्तादौ पं वा पेऽनिट्त्वं च )** कल्प्ता । आति ( ग ) । कल्पिता–कल्प्ता । कल्प्स्यति–कल्पिष्यते–कल्प्स्यते । अक्लृपत्–अकल्पिष्ट अक्लृप्त ॥ एते द्युतादयो वृतादयश्च । **व्यथ दुःखसंचलनयोः** । व्यथते २५

( सु० ) **कृपेस्तादौ पं वा पेऽनिट्त्वं च** ॥ कृपेः परस्मैपदं वा भवति । परस्मैपदे इडभावश्च । लुटि कल्प्ता–कल्पिता । लुङि परस्मैपदे **'लित्पुषादेरिति'** ङः अक्लृपत् । **ऊदितो वेति** वेट् । अकल्पिष्ट । इडभावे **झसादिति** सिलोपे अक्लृप्त ॥ **व्यथ दुःखसंचलनयोः** । संचलनं प्रकृतिविपर्यासो मथनं च ॥ २५ ॥

**व्यथेर्णादौ पूर्वस्य यस्य इः** । विव्यथे । अव्यथिष्ट । **ज्युङ् गतौ** । ज्यवते । जुज्युवे । अज्योष्ट । **रमु क्रीडायाम्** । रमते ॥ २६ ॥

---

( क ) **कृप इति** । कृपधातो रेफस्य लो भवति अगुणस्थाने तु ऋकारस्य ऌकारो भवतीति वैशिष्ट्यं व्याख्यानतो ज्ञेयम् ।

( ख ) अत्र–'उपधाया लघो' रिति गुणप्राप्तौ **'सिस्योर'**ति निषेधः । **'क्लृप्सीष्ट'** इति **'ऊदितो वा'** इति इडभावपक्षे रूपम् । इट्पक्षे तु गुणः, रकारस्य लकारः, अतः कल्पिषीष्टेति रूपम् । अनिट्ग्रहणमत्र 'नानिटिसे' इत्यतोऽनुवर्त्तते । ( ग ) आति—आत्मनेपदपक्ष इत्यर्थः ।

( सु० ) **व्यथेर्णद्वौ पूर्वस्य यस्य इः** । व्यथतेः पूर्वरूपस्य यकारस्येत्वं भवति लिटि । **'पूर्वस्य हसादिः शेषः'** इत्यस्यापवादः इस्ततः थस्य हसादिशेषेण निवृत्तिः । विव्यथे ॥ **रमु** क्रीडायाम् । माधवस्तूदितमाह (क) । पचाद्यप्रत्यये आप् । रमा । घञि तु रामः ॥ २६ ॥

**व्याङ्पर्युपेभ्यो रमः पम्** ॥ विरमति । आरमति । परिरमति । उपरमति । रेमे (ख) । अरंसीत्—अरंस्त ॥ **लोकृ दर्शने** । लुलोके ॥ **श्लोकृ संघाते** । अश्लोकिष्ट ॥ **शकि शङ्कायाम्** । शशङ्के । अशङ्किष्ट ॥ **अकि लक्षणे** । आनङ्के ॥ **ढौकृ त्रौकृ रधिगतौ** । डुढौके । तुत्रौके । अत्रौकिष्ट ॥ **लघि भोजननिवृत्तौ** । ललङ्घे । अलङ्घिष्ट ॥ **बाधृ बिलोडने** । बाधते । बबाधे । अबाधिष्ट । **नाथृ नाधृ याञ्चोपतापैश्वर्याशीःषु ॥ २७ ॥**

(सु०) **व्याङ्पर्युपेभ्यो रमः** ॥ एभ्यः परस्माद्रमतेः परस्मैपदं भवति ॥ **श्लोकृ संघाते** । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मकः द्वितीये सकर्मकः ॥ अकि लक्षणे । लक्षणं चिह्नम् । नुगशामिति नुक् । आनङ्के ॥ **बाधृ** विलोडने । विलोडनं प्रतिघातः । **नाथृ नाधृ** याञ्चोपतापैश्वर्याशीः षु । याञ्चा भिक्षा । उपतापो रोगः ॥ २७ ॥

**( नाथ आशिष्येवात्मनेपदम्(ग) )** नाथते । अन्यत्र नाथति । ननाथे । अनाथिष्ट ॥ **दध धारणे** । देधे । अदधिष्ट ॥ **स्कुदि आप्लवने** । चुस्कुन्दे । अस्कुन्दिष्ट ॥ **वदि अभिवादनस्तुत्योः** । वन्दते । ववन्दे । अवन्दिष्ट । **भदि कल्याणे सुखे च** । बभन्दे ॥ **मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु** । मन्दते । ममन्दे । अमन्दिष्ट ॥ **स्पदि किञ्चिच्चलने** । पस्पन्दे ॥ **मुद हर्षे** । मुमुदे ॥ **दद दाने** । ददृदे । **यती प्रयत्ने** । येते ॥ **ञित्वरा संभ्रमे(घ)** । त्वरते । तत्वरे ।

---

( क ) अत्रायमाशयः—अमुं रमधातुमुदितं मत्वा **'उदितः क्त्वोवेट्'** इति सूत्रेण 'रन्त्वा-रमित्वा' इति केचिदुदाजहुः । तदन्ये न सहन्ते । तथा च क्त्वायां रन्त्वैवेति साधु वदन्ति । कौमुद्यां तु 'रम क्रीडायामि'ति कस्यांचित् पाठः ।

( ख ) **'रेमे'** । 'लोपपचा' मित्यादिना पूर्वस्य लोपोऽकारस्य रेफगतस्य चैकारः ।

( ग ) इष्टशंसनमाशीः । तदर्थे विद्यमानान्नाथतेरात्मनेपदं भवति । तथाच—भक्तिं नाथते देवदत्तः, भक्तिरूपेष्टविषयकाशंसनानुकूलकृत्याश्रयो देवदत्त इति शाब्दबोधः । अन्यत्र आशीर्भिन्नार्थे तु नाथति-याचते इत्यर्थः ।

( घ ) **ञित्वरा** । आदित्वमिह व्यर्थम्, ह्रस्वोच्चारणेनैवात्मनेपदविधानात् । न च निष्ठायाम् **'आदीदितः'** इतीट्प्रतिषेधार्थमिति शङ्क्यम्, **'दान्तादयो वा निपात्यन्ते'** इति निपातेन इड्विकल्पविधानात् । तेन 'तूर्णः—त्वरितः, इत्युभयपक्षरूपम् ।

अत्वरिष्ट । **षह मर्षणे** । सहते । सेहे । सहिता । इषुसहलुभरुषरिषामनपि तस्येड्वा ॥ २८ ॥

(सु०) **नाथ आशिष्येवात्मनेपदम्** ॥ नाथतेरात्मनेपदं स्यादाशीरर्थे एवान्यत्र तु पम् ॥ **स्कुदि आप्रवणे**। आप्रवणमुत्प्लवनमुद्धरणं च। इदितो नुमिति नुम्। स्कुन्दते। **वदि अभिवादनस्तुत्योः** । अभिवादनं नमस्कारः ॥ **मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु** । **मोदः** संतोषः। **मदो** गर्वः । **स्वप्न** आलस्यम् । **कान्तिः** शोभा । **गतिः**प्रसिद्धा ॥ **यती प्रयत्ने** । प्रयत्न उद्यमः । **षह मर्षणे** । **मर्षणम्** अपराधे सत्यपि कोपाद्यनाविष्करणम् ॥ २८ ॥

(त०) **भदि कल्याणे सुखे च** ॥ कल्याणं मङ्गलम् । सुखमात्मगुणः ॥ **मदीति** । मोदो हर्षः । मदो गर्वः । स्वप्न आलस्यम् ॥ **ददद्देइति** ॥ न शसददेत्येत्वपूर्वलोपाभावः ॥ **षहमर्षणे** ॥ मर्षणं क्षमा । सहिता । इषुसहेति वेट् ॥ २८ ॥

**(सहिवहोरोदवर्णस्य ढलोपे सति)** (क) सोढा । असहिष्ट ॥ **गाहू विलोडने** । गाहते । जगाहिषे–जघाक्षे । जगाहिढ्वे–जगाहिध्वे–जगाढ्वे । गाहिषीष्ट—घाक्षीष्ट । गाहिता—गाढा । गाहिष्यते—घाक्ष्यते । अगाहिष्ट–अगाढ । अघाक्षाताम् । अघाढ्वम् ॥ **गृहू ग्रहणे** । जगृहिषे–जघृक्षे । जगृहिढ्वे–जगृहिध्वे–जघृढ्वे । गर्हिषीष्ट–घृक्षीष्ट । गर्ढा । गर्हिष्यते । घर्क्ष्यते । अगर्हिष्ट–अघृक्षत ॥ २९ ॥

(सु०) **सहिवहोरोदवर्णस्य ढलोपे सति** ॥ सहिवहोरवर्णस्यौत्वं भवति ढस्य लोपे सति । इषुसहेति वेट् । सहिता । इडभावे हो ढ इति ढत्वम् । तथोर्द्ध इति धत्वम् । ष्टुभिः ष्टुरिति ष्टुत्वम् । ढि ढो लोपः इति ढलोपः ततोऽनेन ओत्वे सोढा ॥ **गाहू विलोडने** । ऊदित्त्वादिड्वा । जगाहिषे । इडभावे तु हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोः कः से इति कः । कात्परस्य सस्य पत्वम् । जघाक्षे । सेटो हलादिति वा ढः । जगाहिढ्वे–जगाहिध्वे । इडभावे तु आदिजबानामिति घः । ढि ढो लोप इति ढलोपः । जघाढ्वे । लुङि अगाहिष्ट । इडभावे तु ढत्वे कृते झसादिति सिलोपः । ततो धत्वष्टुत्वढलोपाः । अगाढ ॥ **गृहू ग्रहणे** । ऊदितो वेति वेट् । इडभावे हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोरिति कत्वम् । षत्वं च । जिघृक्षे । सेटो हलादिति वा ढः । जगृहिढ्वे–जगृहिध्वे । इडभावे जघृढ्वे । आशिषि गर्हिषीष्ट । सिल्योरिति गुणाभावे घृक्षीष्ट । लुटि गर्हिता–गर्ढा । लृटि गर्हिष्यते–घर्क्ष्यते । लृङि अगर्हिष्यत–अघर्क्ष्यत । लुङि अगर्हिष्ट । इडभावे हशषान्तादिति सक् । हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोरिति कः । षत्वं च । अघृक्षत ॥ २९ ॥

(त०) **सोढेति** इडभावपक्षे ॥ २९ ॥

---

( क ) ढलोपे किम्, सहते वहते ।

इति चक्रधराख्यटिप्पण्यामात्मप्रक्रिया ।

( **आति सको लोपः स्वरे** ) अघृक्षाताम्, अघृक्षन्त । अघृक्षध्वम् । इत्यात्प्रक्रिया ॥ ३० ॥

(सु०) **आति सको लोपः स्वरे** ॥ स्वरादावात्मनेपदे परे सको लोपः । षष्ठीनिर्दिष्टस्येत्यन्त्यलोपः । अघृक्षाताम् ॥ ३० ॥ इति सुबोधिन्यामात्प्रक्रिया ।

(त०) **आति सक** इति ॥ षष्ठीनिर्दिष्टत्वादन्त्यस्य ॥ ३० ॥

लोकेशकरसंज्ञेन विद्यानगरवासिना । कृतायामिह टीकायामगादाता निरूपणम् ॥

इति तत्त्वदीपिकायामात्प्रक्रिया ॥

**राजृ दीप्तौ** । रेजतुः—रराजतुः । रेजे-रराजे । अराजीत , अराजिष्टाम् । अराजिष्ट ॥ **खनु खनने** । चखान, चख्नतुः, चख्नुः । खायात्-खन्यात् । अखानीत्—अखनीत् ॥ **हृञ् हरणे** । जहार । ऋदन्तात्थपो नेट् । जहर्थ । जह्रे । ह्रियात् ॥ *

(सु०) **राजृ दीप्तौ** ॥ दीप्तिस्तेजः । फणराजृ इत्येत्वपूर्वलोपौ । रेजतुः, रराजतुः ॥ **खनु खनने** । खननमवदारणम् । उदित्त्वात् क्त्वायां वेट् । खनित्वा । गमां स्वरे इत्युपधालोपः । चख्नतुः । जनसनखनामित्यात्त्वं वा । खायात् , खन्यात् । अतो हसादेरिति वा वृद्धिः । अखानीत्—अखनीत् ॥ **हृञ् हरणे** । हरणं-प्रापणं, स्वीकारः स्तेयं, नाशनं चेति चत्वारोऽर्थाः । भारं हरति-प्रापयतीत्यर्थः । अंशं हरति स्वीकरोतीत्यर्थः । स्वर्णं हरति-चोरयतीत्यर्थः । पापं हरति-नाशयतीत्यर्थः । ऋदन्ता त्थप इति नेट् । जहर्थ । क्रादेर्णादेरितीट् जह्रिव । यादाविति रिङ् । ह्रियात् ॥ *

(त०) **राजृ** ॥ ऋदित्वमङ्युक्तोपधाह्रस्वादिनिवृत्त्यर्थम् । **हृञ् हरणे** । हरणं प्रापणं, स्वीकारः, स्तेयं, नाशनं च । ग्रामं हरति । अंशं हरति । स्वर्णं हरति । पापं हरति ॥ *

**उः** ॥ ऋवर्णस्य सिस्योरनिटोर्न गुणः(क) ॥ हृषीष्ट । अहार्षीत् । अहृत ॥ **दान आर्जवे** । गुब्भ्यः । दीदांसति । दीदांसाञ्चकार ॥ **शान तेजने** । शीशांसाञ्चक्रे । **गुहू संवरणे** ॥ १ ॥

(सु०) उः ॥ षष्ठ्येकवचनान्तमिदम् । ऋवर्णान्तस्य धातोर्गुणो न स्यात् अनिटि सिप्रत्यये सीष्टादौ च । हन्नृतः स्यप इतीट् हरिष्यति । लोके स्वदिति सिलोपः । अहृत ॥ **दान आर्जवे** । ऋजोर्भाव आर्जवम् । तस्मिन्नर्थे । अस्मात् गुब्भ्यः इति सः । यः से इति पूर्वस्येत्वम् । मानादीनामिति पूर्वस्य दीर्घः ॥ दीदांसति । **शानतेजने** । तेजनं तीक्ष्णीकरणम् । शानेर्निशाने सः । अर्थान्तरे त्वननुबन्धकौ चौरादिकाविमौ । दानयति । शानयति ॥ १ ॥

---

( क ) उः । अत्र 'नानिटिसे' इत्यस्मादनिट्निषेधे **'सिस्यो'**रिति सूत्रात् सिसी चानुवर्त्तेते । अनिडिति च सिस्योर्विशेषणम् । अतएव—ऋगताविति धातुर्न गृह्यते तद्ग्रहणे हि तस्यानिट्त्वान्निविशादेरित्यात्मनेपदेऽपि सिस्योरवश्यमनिट्त्वान्नास्ति अनिड्ग्रहणस्य व्यावर्त्तनमिति सर्वमालोच्याह-**ऋवर्णस्येत्यादि** । इति—**माधवविवरणम्** ।

(त०) उः ॥ षष्ठ्येकवचनान्तम्। सिस्योरिति ॥ भूते सिः सीष्टादिःसी तयोर्ङित्त्वादेव गुणाप्राप्तौ नियमार्थमिदम्। ऋवर्णस्यैवानयोः परतो गुणो न। तेन वेवेष्टीत्यादौ भवत्येव। विशेषाप्रतिपादकलिङ्गाभावादृवर्णमात्रं गृह्यते न तु ऋगताविति। आरम्भसामर्थ्यादुपधाया न। अन्यथा सिस्योरित्येव सिद्धे किमनेन ॥ १ ॥

( **गुहेरुपधाया ऊद् गुणहेतौ स्वरे** ) (क) जुगूहतुः। जुगूहिथ-जुगोढ। जुगूहिषे-जुघुक्षे। जुगुहिध्वे-जुगुहिढ्वे-जुघूढ्वे। गूहिषीष्ट-घुक्षीष्ट। गूहिता-गोढा। गूहिष्यति, घोक्ष्यति॥ २ ॥

(सु०) **गुहेरुपधाया ऊद्गुणहेतौ स्वरे**॥ गुह उपधाया ऊत्स्यात् गुणविधायके स्वरादौ प्रत्यये परे। गूहति। ऊदितो वेति वेट्। जुगूहिथ। इडभावे हो ढ इति ढत्वम्। तथोर्द्ध इति थस्य धः ष्टुत्वं च। जुगोढ। हो ढ इति ढत्वम्। आदिजबानामिति घः। षढोरिति कः षत्वं च। जुघुक्षे। जुगुहिध्वे। सेटो हलादिति वा ढः। जुगुहिढ्वे। इडभावे होढ इति ढत्वम्। आदिजबानामिति घत्वं ष्टुभिः ष्टुरिति ढः। ढि ढो लोप इति ढलोपदीर्घौ जुघूढ्वे। लुङि अगूहीत्। इडभावे हशषान्तादिति सक्। आदिजबानामिति घः। अघुक्षत्। आति अगूहिष्ट। इडभावे तु सक्॥ २ ॥

(**दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोरादि**) (ख) अगूढ—अघुक्षत, अघुक्षाताम्, अघुक्षन्त। अगूढाः—अघुक्षथाः, अघुक्षाथाम्, अघूढ्वम्—अघुक्षध्वम्। अघुक्षावहि—अगुह्वहि। अघुक्षामहि। अगूहिष्ट। अघुक्षत्—अगूहीत्। **भज सेवायाम्**। भेजिथ—बभक्थ। भेजे। भक्षीष्ट। अभाक्षीत्। अभक्त॥ **श्रिञ् सेवायाम्**। शिश्रियतुः। शिश्रिये। श्रीयात्। श्रयिषीष्ट। श्रयिता। अशिश्रियत्। अशिश्रियत॥ **त्विष दीप्तौ**। तित्विषे। त्विक्षीष्ट। त्वेष्टा। त्वेक्ष्यते। अत्विक्षत्॥ **स्पश बाधनस्पर्शनयोः**। पस्पाश। पस्पशे। अस्पशीत्—अस्पाशीत्। अस्पशिष्ट॥ **लष कान्तौ**। लष्यति—लषति। लष्यते—लषते। लषिता॥ **रञ्ज रागे**। रजति। ररञ्जिथ—ररङ्क्थ। ररञ्जे। रज्यात्। रङ्क्षीष्ट। अराङ्क्षीत्। अरङ्क्त॥ **भृञ् भरणे**। भरति। बभर्थ। बभृव। बभृढ्वे। भर्ता॥ **धृञ् धारणे**। दधर्थ। दध्रिध्वे—दध्रिढ्वे। अधार्षीत्। अधृत॥ **णीञ् प्रापणे**। निनयिथ-निनेथ। निन्ये। अनैषीत्। अनेष्ट॥ **टुयाचृ याच्ञायाम्**। याचति। ययाचे। अयाचीत्। अयाचिष्ट॥ **यज देव-**

---

(क) गुणस्य हेतुरिति गुणहेतुस्तस्मिन्-**गुणहेतौ**।

(ख) **दुहदिहलिहगुहूभ्य** इति। अत्र लघुभाष्यम्—एतच्चानुवृत्त्या बोध्यम्, द्वितीयं चमनुवर्त्य कृषमृशस्पृश् तृप् दृशां वा सक् विधेयः, को गुणप्रतिषेधार्थं इति।

**पूजासंगतिकरणदानेषु** । इयजिथ–इयष्ठ । अयाक्षीत् । अयष्ट । अयड्ढ्वम् ॥ **टुवप् बीजसंताने** । उवपिथ–उवप्थ । ऊपे । उप्यात् । वप्सीष्ट । अवाप्सीत्, अवाप्ताम् । अवप्त ॥ **वह प्रापणे** । वहति । उवहिथ–उवोढ । ऊहे । उह्यात् । वक्षीष्ट । वोढा । अवाक्षीत्, अवोढाम् । अवोढ, अवक्षाताम् ॥ **वेञ् तन्तुसन्ताने** ॥ ३ ॥

( सु० ) **दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोराति** ॥ लोप इत्यनुवर्तमाने लुग्ग्रहणं सर्वलोपार्थम् । दुह प्रपूरणे । दिह उपचये । लिह आस्वादने । गुहू संवरणे । एभ्यः सको लुग्वा आत्मनेपदस्थवकारे तवर्गे च परे । अदुग्ध-अधुक्षत । अदिग्ध-अधिक्षत । अलीढ-अलिक्षतेत्यादि । ढत्वधत्वष्टुत्वढलोपदीर्घाः, अगूढ । पक्षे अघुक्षत । आति सको लोप इत्यल्लोपे अधुक्षाताम्-अघुक्षन्त । तृफलभजत्रपेत्येत्वपूर्वलोपौ । भेजतुः । स्वरान्तादत्वत इति वेट् । भेजिथ-बभक्थ । कुत्वपत्वे भक्ष्यति । झसादिति सिलोपः । अभक्त । श्रिश्रुद्रुभ्यो ङ इति ङो द्वित्वं च । अशिश्रियत् । अशिश्रियत । त्विष दीप्तौ । दीप्तिस्तेजः । हशषान्तादिति सक् । कत्वषत्वे । अत्विक्षत् । आति सको लोप इत्यल्लोपः । अत्विक्षाताम् । स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् ॥ लष कान्तौ । कान्तिरिच्छा । भ्राशभ्लाशिति वा यः । लष्यति-लषति । लेपः पचामित्येत्वपूर्वलोपौ । लेषतुः ॥ अपि रञ्जेति नलोपः । रजति । कुत्वषत्वे । अराङ्क्षीत् । सावनिटोनित्यमिति वृद्धिः । अरङ्क्त । स्याविद इत्यन उस् । अराङ्क्षुः ॥ क्रादेर्णादेरितीण् न । बभर्थ । आशिषि याद्रादाविति रिङ् । भ्रियात् । उरिति न गुणः । भृषीष्ट । लृटि हन्नृतः स्यप इट् । भरिष्यति । लोपो ह्रस्वादिति सिलोपः । अभृत ॥ यज देवपूजासङ्गतिकरणदानेषु । देवपूजा त्विह देवतोद्देशेन विधिबोधितद्रव्यत्यागः । सङ्गतिकरणं मैत्रीकरणम् । णबादौ पूर्वस्येति पूर्वस्य सम्प्रसारणम् । अत उपधाया इति वृद्धिः । इयाज । यजामिति सम्प्रसारणम् । ईजतुः । छशषेति षः । षढोरिति कः । यक्षीष्ट । लुङि । अयाक्षीत् । अयष्ट । ध्वे चेति सलोपः । अयड्ढ्वम् ॥ डुवप् बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं, गर्भाधानं च । अयं छेदनेऽपि । केशान् वपति । ड्वितस्त्रिमगिति त्रिमक् प्रत्ययः । उप्त्रिमम् ॥ वहतेर्लिङि हो ढ इति ढः । षढोरिति कत्वम् । वक्षीष्ट । लुटि ढत्वं तथोर्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपः । सहिवहोरोदित्योत्वम् । वोढा । लुङि पूर्वं वृद्धिस्ततो ढत्वे कृते झसादिति सिलोपः । धत्वष्टुत्वढलोपाः । ओत्वं च अवोढाम् । ध्वे चेति सलोपः । अवोढ्वम् ॥ ३ ॥

( त० ) **डुवप् बीजसन्ताने** ॥ बीजसन्तानं-क्षेत्रे विस्तारणं गर्भाधानं च । केशान्वपतीति प्रयोगाच्छेदनेऽपि । त्रिमगर्थं ड्वित्वम् । तेनोप्त्रिममिति । सिद्ध्यति ॥३॥

**( वेञो णादौ न सम्प्रसारणम् )** ववौ । ववे ॥ ४ ॥

( सु० ) **वेञो णादौ न सम्प्रसारणम्** ॥ वेञः संप्रसारणं न स्यात् णादौ ॥ णादौ किम् । उतः । उतवान् । सन्ध्यक्षराणामित्यात्वम् । आतो णब् डौ इति णपो डौत्वम् । ववौ ॥ ४ ॥

**( वेञो वय् वा णादौ )** उवाय ॥ ५ ॥

( सु० ) **वेञो वय् वा णादौ** ॥ वेञो वय् वा स्यात् णादौ । अत उपधाया इति वृद्धिः । उवाय ॥ ५ ॥

**(क) ग्रहां क्ङिति च** ॥ ग्रहिज्यावयिव्यधिवष्टिवृश्चतिपृच्छतिविचतिभृज्जतीनां सम्प्रसारणं किति ङिति च ॥ वयो यस्य नेत्वम् । ऊयतुः, ऊयुः । ऊवयिथ । ऊये ॥ ६ ॥

( सु० ) **ग्रहां क्ङिति च** ॥ यजामित्यतः कितीति सम्प्रसारणमिति चानुवृत्तम् । एषां किति ङिति च सम्प्रसारणं स्यात् ॥ ग्रह उपादाने । ज्या वयोहानौ । वेञ् तन्तुसन्ताने । व्यध ताडने । वश् कान्तौ । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । व्यच व्याजीकरणे । भ्रस्ज पाके । ङिति गृह्णाति । जिनाति । किति गृहीतः । जीनः । ङिति वयेरुदाहरणं न । किति तु यजामिति सम्प्रसारणं सिद्धं यजादिषु वेञः पाठात । अत एव णबादाविति पूर्वसम्प्रसारणमिति सिद्धम् । वेञो णादाविति सम्प्रसारणनिषेधस्तु वयो यस्येति निषेधारम्भान्न प्रवर्तते । तस्मात् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थम् । वयो यस्य नेत्वम् । ग्रहामिति यकारस्य सम्प्रसारणे प्राप्ते निषेधः । लिटि वयो यस्य सम्प्रसारणं नेत्यर्थः । वयेस्तादावभावात् थपि नित्यमिट् (ख)। उवयिथ । स्थानिवद्भावेन ञित्त्वादात्मनेपदम् । ऊये ॥ ६ ॥

**( वयो यस्य किति लिटि वो वा )** ऊवतुः(ग) । ऊवे । ऊयात् । वासीष्ट । अवासीत् । अवास्त ॥ **व्येञ् संवरणे** ॥ ७ ॥

(सु०) **वयो यस्य किति लिटि वो वा** ॥ वयो यकारस्य वत्वं वा भवति किति लिटि ॥ ऊवे । वयादेशाभावे । ववे । आशिषि संप्रसारणे कृते । ऊयात् । संध्यक्षराणामित्यात्वे । वासीष्ट ॥ ७ ॥

**(व्येञो लिटि नात्वम्)** विव्याय । विव्ययिथ । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त ॥ **ह्वेञ् स्पर्धायां शब्दे च** । द्विरुक्तस्य ह्वयतेः सम्प्रसारणम् । जुहाव । जुहविथ–जुहोथ । जुहुवे । हूयात् । ह्वासीष्ट ॥८॥

(सु०) **व्येञो लिटि नात्वम्** ॥ व्येञ आत्वं न भवति लिटि ॥ संध्यक्षराणामित्यस्यापवादः । लिटि किम् । व्याता । व्यास्यति । व्येव्ये णप् इति स्थिते परत्वात् हसादिः शेषं बाधित्वा यस्य संप्रसारणम् । यजादीनां ग्रहादीनामित्युभयेषां ग्रहणसामर्थ्याच्च (घ) । धातोर्नामिन इति वृद्धिः । विव्याय । नुधातोरिति यः । विव्यतुः ।

---

( क ) **ग्रहामिति** । बहुवचनमन्येषामपि ग्रहणार्थमित्याह—ग्रहिज्यावयीत्यादि ।

( ख ) आदेशस्यादन्तत्वात् थपि नियममाशङ्क्याह—**वयेस्तादाविति** ।

( ग ) **ऊवतुरिति** । नन्वत्र वकारे कृते वकारस्य संप्रसारणापत्तिरिति चेन्न वादेशविधानसामर्थ्येन वस्य संप्रसारणाप्रवृत्तेः ।

( घ ) **सामर्थ्यादिति** । तत्सामर्थ्यात्पुनर्नियमः, एतेन उभयेषां ग्रहणेन पूर्वावयवस्य पूर्वस्य **'हसादिशेष'** इत्यनेन प्राप्ताया निवृत्तेर्बाध इत्युक्तं तल्लाभोऽक्षरमर्यादया न संभवति इत्यपास्तम् ।

अस्यतिव्ययतीनामिति नित्यमिट् (क) । विव्ययिथ । यमिरमिनमातामितीट्सकौ । अव्यासीत् । अव्यासिष्टाम् ॥ ह्वेञ् स्पर्द्धायां शब्दे च शब्दे इति सामान्योक्तावपि संबोधनरूपः शब्द एवात्र गृह्यते । तथा च माघे-'यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्वाहुना जुहुविरे मुहुरात्मवर्ग्याः' इति कर्मणि प्रयोगः ॥ द्विरुक्तस्य ह्वयतेः संप्रसारणम् । ह्वेञः पूर्वं द्वित्वम् । तेन उभयत्र संप्रसारणं स्यात् ॥ ८ ॥

( **लिपिसिचिह्वयतीनां ङो लुङि वा आति** ) अह्वत् । अह्वास्त–अह्वत ॥ **डुपचष् पाके** । पचति । पेचिथ-पपक्थ । पेचे । अपाक्षीत्, अपाक्ताम्, अपाक्षुः ॥ **षच समवाये** । सेचे । असाचीत् । असाचिष्ट ॥ **शप आक्रोशे** । शेपे । शप्ता । अशाप्सीत् । अशप्त ॥ **हिक्क अव्यक्ते शब्दे** । जिहिक्क । अहिक्कीत् ॥ **अञ्चु गतौ याचने च** आनञ्चे । आञ्चीत् ॥ **रटृ परिभाषणे** । रिरटे । अरेटीत् ॥ **चते चदे याचने च** । चेते । अचतीत् । चेदे । अचदीत् । अचदिष्ट ॥ **प्रोथृ पर्याप्तौ** । पुप्रोथ । पुप्रोथे । अप्रोथीत् । अप्रोथिष्ट ॥ **मिदृ मेदृ मेधाहिंसनयोः** । मिमिदे । अमेदीत् । अमेदिष्ट । मिमेदे । अमेदीत् । अमेदिष्ट ॥ **मेधृ सङ्गमे च** । मिमेधे । मेधिता ॥ **णिदृ णेदृ कुत्सासन्निकर्षयोः** । निनेदे । नेदिता ॥ **शृधु मृधु क्लेदने** । शर्द्धति । शशर्द्ध । शशृधतुः । शशृधे । मर्द्धति । ममृधे । अमर्द्धीत् । अमर्द्धिष्ट ॥ **बुधिर् बोधे** । बोधति । बोधते । अबुधत्–अबोधीत् । अबोधिष्ट । **उबुन्दिर निशामने** । बुन्दति । बुबुन्दे । अबुदत् । अबुन्दीत् ॥ अबुन्दिष्ट । **वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु** । वेणते । विवेण । अवेणीत् । अवेणिष्ट । नान्तोऽप्ययम् । वेनति ॥ **चीवृ आदानसंवरणयोः** । चीवति । चिचीव । चिचीवे । अचीवीत् । अचीविष्ट ॥ **चायृ पूजानिशामनयोः** । चायति ॥ चचाय । चचाये । अचायीत् । अचायिष्ट ॥ **व्यय गतौ** । व्ययति । वव्याय । वव्यये । अव्ययीत् । अव्ययिष्ट ॥ **दाशृ दाने** । दाशति । दाशते । ददाश । ददाशे । अदाशीत् । अदाशिष्ट ॥ **भ्रेशृ भ्लेशृ गतौ** । भ्रेशति । भ्लेशति । **भेषृ भ्लेषृ गतौ भये च** । भेषति । बिभेष । बिभेषे । बिभ्लेष । अभेषीत् । अभेषिष्ट । **अस गतिदीप्त्यादानेषु** । असति । आस । आसे । आसीत् । आसिष्ट । अयं षान्तोऽपि ।

( क ) अस्यतिं—इति । नोचेत् '**रुरान्ता**' इति विकल्पः स्यादिति भावः ।

अषति ॥ **चष भक्षणे** । चचाष । चेषतुः । चेषे । अचासीत्—अचषीत् । अचषिष्ट । **छष हिंसायाम्** । छषति । छषते । चच्छाष । चच्छषे । अच्छाषीत्—अच्छषीत् । अच्छषिष्ट ॥ **झष आदानसंवरणयोः** । झषति । जझाष । जझषे । अझाषीत्—अझषीत् । अझषिष्ट ॥ **भ्रक्ष भ्लक्ष अदने** । बभ्रक्षे । अभ्रक्षीत् । अभ्रक्षिष्ट ॥ **दासृ दाने** । दासते । ददासे ॥ **माहृ माने** । ममाह । ममाहिषे । अमाहीत् । अमाहिष्ट ॥ इत्युभयपदप्रक्रिया ॥९॥

( सु० ) **लिपिसिचिह्वयतीनां ङो लुङि वा आति** ॥ एभ्यो ङप्रत्ययो नित्यं स्यात्परस्मैपदे लुङि । आत्मनेपदे लुङि तु वा ॥ लिपि उपदेहे । षिच क्षरणे । अलिपत् । असिचत् ॥ आतोऽनपीत्यालोपः अह्वत् ॥ षच समवाये । समवायः संबन्धः । शप आक्रोशे । आक्रोशो विरुद्धाऽनुध्यानम् । अञ्चु गतौ याचने च । नुगशामिति नुक् । आनञ्चे नो लोप इति नलोपः । अच्यात् । अयमिदिति मते तु इदितो नलोपो नेति निषेधात् । अञ्च्यात् ॥ रेट् परिभाषणे । 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्' इत्यमरः । ऋदित्वात् नरित इत्युपधाया ह्रस्वो न । अरिरेटत् ॥ प्रोथृ पर्याप्तौ । पर्याप्तिः समाप्तिः । मेदृ मिदृमेधाहिंसनयोः । थान्ताविमाविति स्वामी । धान्ताविति न्यासः ॥ मेधृ संगमे च । चात्पूर्वोक्तेऽर्थे । 'प्रजार्थे गृहमेधिनाम्' इत्यत्र गृहैर्दारैर्मेधंते संगच्छन्ते इति विग्रहः । णिनूप्रत्ययान्तः ॥ णिदृ णेदृ कुत्सासन्निकर्षयोः । संनिकर्षः सम्बन्धः ॥ शृधु मृधु उन्दने उन्दनं क्लेदनम् । आर्द्रीभाव इत्यर्थः । उदित्वात् क्त्वायां वेट् । शर्धित्वा । शृद्धा ॥ बुधिर् बोधने । बुध्यतेरेवानिट्कारिकासु पाठादयं सेट् । ईरितो वेति वा ङः । अबुधत्—अबोधीत् । दीपजनेतीण्तु न पूर्वोत्तरसाहचर्येण दैवादिकस्यैव सूत्रे ग्रहणात् । उबुन्दिर् निशामने । निशामनं चाक्षुषं ज्ञानमित्यर्थः ॥ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु गत्यादयः पदार्थाः । वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः ॥ चीवृ आदानादौ । चीवते । औणादिके रप्रत्यये चीवरं वस्त्रम् । ह्म्यन्तेति न वृद्धिः । अव्ययीत् ॥ भेषृ भये च । चाद्गतौ ॥ ९ ॥

इति सुबोधिन्यामुभयपदप्रक्रिया ॥ ९ ॥

(त०) **शप आक्रोश इति** ॥ आक्रोशो विरुद्धानुध्यानम् ॥ **अचदीदिति** ॥ एदित्वान्न वृद्धिः । प्रोथृ इत्यादीनाम् ऋदित्त्वमङ्युक्ताभावार्थम् ॥ **अबोधीदिति** ॥ दीपजन इत्यात्मनेपदिभिः साहचर्यात्तथाभूतस्यैव ग्रहणात् ॥ उबुन्दिर् उदित्वाद्वेट् । बुन्दित्वा बुत्वा । निशामनं चाक्षुषज्ञानम् । वेणृ । वाद्यभाण्डस्य वादनापादनं वादित्रग्रहणम् ॥

इति तत्त्वदीपिकायामुभयपदप्रक्रिया ॥ ९ ॥

## ऋत जुगुप्सायां कृपायां च(क) ॥*॥

( सु० ) **ऋत जुगुप्सायां कृपायां च** ॥ 'अर्तनं न ऋतीया च घृणीया च घृणार्थकाः' इति ॥ 'जुगुप्सा करणे गृणे' इति चामरः ॥*॥

---

( क ) **ऋतजुगुप्सायामिति** । जुगुप्सायामयं धातुरिति बहवः कृपायां चेत्येके । केचित्—इममिदन्तं पठन्ति, इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादित्याहुस्तच्चिन्त्यम् ।

(ऋतेरीयङ् स्वार्थेऽनपि तु वा) ऋतीयते। ऋतीयेत। ऋतीयताम्। आर्तीयत। ऋतीयाञ्चक्रे। ऋतीयिषीष्ट। ऋतीयिता। ऋतीयिष्यते। आर्तीयिष्यत। आनर्त। ऋत्यात्। अर्तिता। अर्तिष्यति। आर्तिष्यत्। आर्तीत्। आर्तीयिष्ट॥ १०॥ इति भ्वादिप्रक्रिया॥

(सु०) ऋतेरीयङ्स्वार्थेऽनपि तु वा॥ ऋतिः सौत्रस्तस्मादीयङ् स्यात स्वार्थे अनपि तु वा। सधातुरिति धातुत्वम्। आदनुदात्तङित इत्यात्मनेपदम्। ऋतीयते। ईयङभावे परतोऽन्यदिति परस्मैपदम्॥ नुगशामिति नुक्। आनर्त॥ १०॥

इति सुबोधिन्यां भ्वादिप्रक्रिया॥ १॥

(त०) रामाश्रमेण विहिता याहि सिद्धान्तचन्द्रिका। तट्टीकायामगादेतद्भव्यं भ्वादिनिरूपणम्॥

इति तत्त्वदीपिकायां भ्वादिप्रक्रिया॥ १॥

# अथाऽदादयः॥ २॥

अद भक्षणे॥ अदादेर्लुक् (क)॥ अदादेः परस्यापो लुक्॥ अत्ति, अत्तः, अदन्ति। अत्सि, अत्थः, अत्थ। अद्मि, अद्वः, अद्मः। अद्यात्॥१॥

(सु०) अद भक्षणे॥ भक्षणं खादनम्॥ अदादेर्लुक्॥ अप् कर्तरीत्यतः अबित्यनुवृत्तम्। तच्च षष्ठ्या विपरिणम्यते। अद आदिर्यस्य सोऽदादिस्तस्माददादेः॥ १॥

(त०) अदादेर्लुक्॥ अद आदिर्यस्य सोऽदादिस्तस्मात्। अप् कर्तरीत्यतोऽनुवृत्तमबिति षष्ठ्या विपरिणम्यते। चतुर्थी तु न तत्रापोऽभावात्। तद्गुणसंविज्ञानबहुव्रीहेरदेरप्यपो लुक्॥ १॥

झसाद्धिर्हेः (ख)॥ झसाद्धकाराच्च परस्य हेर्धिर्भवति॥ अद्धि— अत्तात्। अत्तम्। अत्त॥ २॥

(सु०) झसाद्धिर्हेः॥ झसात् ह् धिः हेरिति पदच्छेदः। हस्य हो झभा इति धत्वे झबे जवा इति दत्वे हसात्परस्य झसस्येति दलोपः। अत्तादित्यत्र स्थानिवद्भावेन तातङो हित्वेऽपि सकृद्गताविति न्यायेन धिरादेशो न (ग)॥ २॥

(त०) झसाद्धिर्हेः॥ झसात् ह्धिः हेरिति छेदः। हस्य हो झभा इति धत्वे झबे जवा इति दत्वे हसात्परस्य झसस्येति लोपेन सिद्धेः। इह लुप्तपञ्चमीकं पदमित्यभिप्रेत्याह हकाराच्चेति॥ अत्र स्थानिवद्भावेन तातङो हित्वेऽपि सकृद्गताविति न्यायेन न धिरादेशः॥ २॥

---

(क) अद् आदिर्यस्य, स अदादिस्तस्माददादेरर्थाददभक्षण इत्यारभ्यैतद्गणप्राग्वर्तिधातुसमुदायोऽदादिपदेन गृह्यते। तस्य चानुद्भूतावयवभेदस्यान्यपदार्थत्वेन विवक्षणाददादेरित्येकवचनम्।

(ख) झसाद्धिर्हे इति। झसेभ्यो हकाराच्च परस्य निर्दिश्यमानस्य हेर्धिः स्यादिति सूत्रार्थः। तेन 'रुदिहि' इत्यादौ न दोषः।

(ग) केचित्तु—हेर्धिरित्यत्र स्थान्यादेशयोरपीकार उच्चारणार्थ इति हकारस्य धकारादेश इति वदन्ति। सकृद्गताविति। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति समुदायः।

**अद्रुदादेरट्॥** अत्तेरुदादेश्च परयोर्दिप्सिपोरडागमः॥ आदत्। आदः॥३॥

(सु०) **अद्रुदादेरट्** ॥ अत्तेरुदादेश्च परयोर्दिप्सिपोरडागमः स्यात् ॥ ३ ॥

(**सिसयोरदेर्घस्लृ लिटि तु वा**) जघास। गमां स्वरे। घसादेरिति षः। जक्षतुः। जघसिथ। जक्षथुः। जक्ष। आद, आदतुः, आदुः। आदिथ। अत्ता। लृदित्वात् ङः। अघसत्॥ **प्सा भक्षणे**। प्साति। प्सायात्। प्सातु। अप्सात्॥ ४॥

(सु०) **सिसयोरदेर्घस्लृ लिटि तु वा** ॥ अदो घस्लृ इत्यादेशः स्यात्। सिप्रत्यये सप्रत्यये च लिटि तु वा ॥ सप्रत्यये जिघत्सति। जघास। गमामित्युपधालोपः। खसे चपा इति घस्य कः। घसादेरिति षत्वं कत्वं च। जक्षतुः। घसस्तादावभावात् थपि नित्यमिट् जघसिथ। पक्षे अत्त्यर्त्तिव्ययतीनामिति नित्यमिट्। आदिथ॥ ४॥

(**आदन्ताद्विषोऽन उस् वा**) अप्सु-अप्सान्। पप्सौ। आतोऽनपि पप्सुः। प्सायात्-प्सेयात्। अप्सासीत्॥ **मा माने**। माति। प्रादिस्थादित्यत्र न ग्रहणम्, प्रनिमाति-प्रणिमाति॥ अमात्। अमुः, अमान्। ममौ॥ मेयात्। अमासीत्। **या प्रापणे**। याति। ययौ। अयासीत्॥ **वा गतिगन्धनयोः**॥ वाति। **रा दाने**। राति। **ला दानग्रहणयोः** (क)। लाति। ललौ। अलासीत्॥ **प्रा पूरणे**। प्राति॥ **श्रा पाके**॥ श्राति। श्रायात्, श्रेयात्॥ **दाप् लवने**। दाति। ददौ। दायात्। आदासीत्॥ **ख्या प्रकथने** (ख)। ख्याति। ख्यायात्। ख्यातु। अख्यात्। **द्रा कुत्सायाम्**। द्राति। द्रेयात्। द्रायात्। अद्रासीत्॥ **पा रक्षणे**। पाति। पपौ। पायात्। अपासीत्। **भा दीप्तौ**। भाति। बभौ॥ **ष्णा शौचे**। स्नाति। स्नायात, स्नेयात्॥ **वश कान्तौ**। वष्टि, उष्टः, उशन्ति। वक्षि, उष्ठः, उष्ठ। वश्मि, उश्वः, उश्मः। उश्यात्। वष्टु, उष्टात्, उष्टाम्, उशन्तु। उड्ढि, उष्टम्, उष्ट। वशानि, वशाव, वशाम॥५॥

(सु०) **आदन्ताद्द्विषोऽन उस् वा** ॥ आदन्ताद्धातोर्द्विषश्च परस्यानो वा उस् स्यात्॥ उस्यालोप इत्यालोपः। अप्सुः। लिटि आतो णब् डावित्यौ। पप्सौ। संयोगादेरादन्तस्यैकारो वा। प्सेयात्-प्सायात्। यमिरमिनमातामितीट्सकौ। अप्सासीत्।॥

(क) **लादान ग्रहणयोः**। दाने इति चन्द्रः। अन्ये आदाने।

(ख) अत्र सिद्धान्तकौमुदी। अयं सार्वधातुकमात्रविषयः। 'सस्थानत्वं नमः ख्यात्रे' इति वार्त्तिकं तद्भाष्यं चेह लिङ्गम्। सस्थानो जिह्वामूलीयः। स नेति ख्याञादेशस्य खशादित्वे प्रयोजनमित्यर्थः। संपूर्वस्य ख्यातेः प्रयोगो नेति न्यासकारादयः, इति।

**मा माने।** अकर्मकः। '**तनौ ममुस्तत्र न कैटभद्विषः**' इति माघे (क)। उपसर्गवशे-नार्थान्तरे सकर्मकः। '**उदरं परिमाति मुष्टिना**' इति नैषधे (ख)॥ **या प्रापणे।** प्रापणमिह गतिः॥ **रा दाने॥ ला आदाने।** आदानं ग्रहणम्। द्वावपि दाने इति चन्द्रः। **ख्या प्रकथने।** चतुर्ष्वेवास्य प्रयोग इति भाष्यम्॥ **द्रा कुत्सायाम्। पा रक्षणे। भा दीप्तौ। ष्णा शौचे। वश कान्तौ। कान्तिरिच्छा।** छशषेति षत्वम्। वष्टि। ग्रहामिति संप्रसारणम्। उष्टः। उश्यात्। वष्टु-उष्टात्। उष्टाम्, उशन्तु। हौ संप्रसारणम्। छशषेति षत्वम्। झसाद्धिहंरिति धः। पो ड इति डत्वम्, ष्टुभिः ष्टुरिति ढत्वम्। उड्ढि॥ ९॥

**दिस्योर्हसात् (ग)॥** हसात्परयोर्दिप्सिपोर्लोपः॥ अवट्-अवड्, औष्टाम्, औशन्। अवट्-अवड्, औष्टम्, औष्ट। अवशम्, औश्व, औश्म। उवाश, ऊशतुः। उवशिथ। उष्यात्। वशिता। अवाशीत्। अवशीत्॥ **हन हिंसागत्योः।** हन्ति॥ ६॥

(सु०) **दिस्योर्हसात्॥** दिप्सहचरितस्य सेर्ग्रहणान्नेह। अत्सि (घ) ननु संयोगान्तलोपेनैव गतार्थमिदम्। सत्यम्। सभिन्नस्य रान्नेति सूत्रमनेन ज्ञाप्यते। तेन अविभर्भवानित्यादौ संयोगान्तलोपाभावादस्यारम्भः (ङ)। अवट्, औष्टाम्, औशन्। उवाश, ऊशतुः। उश्यात्। वशिता। वशिष्यति। अवशिष्यत्। अतो हसादेरिति वा वृद्धिः। अवाशीत्-अवशीत्॥ ६॥

(त०) **दिस्योर्हसात्॥** दिश्च सिश्च दिसी तयोः। अत्र दिप्साहचर्याल्लङ एव सिप् गृह्यते न त्वन्यः। तेनात्सीत्यादौ नातिप्रसंगः। संयोगान्तलोपेनैव सिद्धे सभिन्नस्य रान्नेति ज्ञापयितुमस्यारम्भः॥ सिग्रहणं तूत्तरार्थम्॥ ननु अरोदीदरोदित्यत्रातिप्रसङ्गः। यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इति न्यायादिति चेन्न। तेन विभक्तित्वप्रत्ययत्वयोरेव ग्रहणान्न तु दित्वसित्वयोः (च)॥ ६॥

(क) युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवामुदः। इति। माघे० १-२३ श्लोकः

(ख) उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु।
धृततच्चतुरङ्गुलीव यत् वलिभिर्भाति सहेमकाञ्चिभिः॥ इति। निषेध० स० २-३५ श्लोकः

(ग) **दिस्योर्हसादिति।** हसादिति किम्, अभवत्। दिस्योरिति किम्, अत्ति। अत्र "लोपस्त्वनुदात्ततनाम्" इत्यतो लोप इत्यनुवर्त्तते। अत आह—**लोप इति॥**

(घ) अत्सीत्यादौ सिपः प्रत्ययस्य हसात्परत्वाल्लोपमाशङ्क्य वारयति—**दिप्सहचरितस्य सेरिति।**

(ङ) अवट्-अवड् इत्यत्र दिप्सिपोः प्रत्यययोः संयोगान्तत्वेन '**संयोगान्तस्य लोप**' इति लोपे सिद्धे सूत्रारम्भस्य वैयर्थ्यं स्यादिति शङ्कते—**नन्वित्यादिना।** रात्सस्येति सूत्रेण अविभभवान् इत्यादौ संयोगान्तलोपाभावादस्यारम्भ इति समाधत्ते—**सभिन्नस्य रान्नेत्यादिना।** केचित्तु—संयोगान्तस्य लोप इति नामसम्बन्धित्वाद् अवट्-अवड् इत्यादौ न लोप इत्यतो **दिस्योर्हसादिति** सूत्रस्यारम्भः इति समादधन्ति। तच्चिन्त्यम्।

(च) रुदिर् **अश्रुविमोचने** इति धातोर्लङि **अरोदत्-अरोदीदित्यत्राडीटोर्व्यवधानत्वेन सतोरपि "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते"** इति न्यायेन दिसित्वानपायाद् दिस्योर्हसादिति **सूत्रेण**

**लोपस्त्वनुदात्ततनाम्** ॥ अनुदात्तानां तनादीनां वनतेश्च अमस्य लोपो भवति झसे क्ङिति हकारे च (क) ॥ हतः, घ्नन्ति । हन्यात् । हन्तु-हतात्, हताम्, घ्नन्तु ॥ ७ ॥

(सु०) **लोपस्त्वनुदात्ततनाम्** । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्ताः (ख) षट् । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वणु मनु इति तनोत्यादयो नव । अनुदात्तेति लुप्तषष्ठीकं पदम् । तुशब्देन अमान्तानां ग्रहणम् । वन संभक्तौ वनति । इह हवत्योर्नं-ङिति इड्निषेधात् किति झसे नस्य लोपः ॥ झसे किम् । गम्यते । क्ङितीति किम्, गन्ता । 'गमां स्वरे' इत्युपधालोपः । 'हनो घ्ने' इति घः । घ्नन्ति ॥ ७ ॥

(त०) **लोपस्त्वनुदात्ततनाम्** ॥ यमिरमिनमिगमिहनिमन्यतयोऽनुदात्ताः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु इति तनोत्यादयः ॥ अनुदात्तेति लुप्तषष्ठीकं पृथक्पदम् । तु शब्दोऽपरलार्थ इत्याह—**तनादीनामिति** ॥ लुप्तषष्ठीनिर्दिष्टन्यायेनान्त्यलोप इत्याशयेनाह-**अमस्येति** ॥ अन्यथा अम्यादिष्वनन्त्यस्यापि अमस्य संभवाल्लोपःस्यात् ॥

**जह्येधिशाधि (ग)** ॥ हन्तेर्जहिरस्तेरेधि शास्तेः शाधिर्निपात्यते हिविषये ॥ जहि । हनानि । अहन्, अहताम्, अघ्नन् ॥ ८ ॥

(सु०) **जह्येधिशाधि** ॥ हिसहितानां हनासशासीनां यथासंख्यमेते स्युः ॥ ८ ॥

**(पूर्वाद्धन्तेर्हस्य घः)** जघान, जघ्नतुः । जघ्नुः । जघनिथ–जघन्थ ॥९॥

(सु०) **पूर्वाद्धन्तेर्हस्य घः** ॥ द्वित्वे सति पूर्वरूपात् परस्य हन्तेर्हस्य घत्वं भवति । जघनिथ ॥ ९ ॥

**(हनो लुङ्लिङोर्वधो लुङ्यात्ति वा)** वध्यात्, हनिष्यति ॥१०॥

( सु० ) **हनो लुङ्लिङोर्वधो लुङ्यात्ति वा** ॥ लुङ्लिङोः परतो हन्तेर्वधः स्यात् आत्मनेपदे लुङि तु वा ॥ वध्यात् । हनृत इतीट् । हनिष्यति ॥ १० ॥

( त० ) **हन इति** ॥ लुङ्साहचर्यादनब्विषय एव लिङ् गृह्यते । तेन विधौ नातिप्रसङ्गः (घ) । यत्तु विधावतिप्रसंगवारणाय किदिति लिङो विशेषणमुपन्यस्तं तद्भ्रमसात् ।

---

हसात्परत्वाच्च दिस्योर्लोपः स्यादिति शङ्कायामुत्तरयति-**तेन विभक्तित्वप्रत्ययत्वयोरिति** ॥

अयमाशयः—तेन यदागमा इति न्यायेन विभक्तित्वं प्रत्ययत्वञ्च गृह्यते, न तु दित्वं सित्वम् । तथाच दिस्योर्हसपरत्वाभावान्न लोपातिप्रसङ्ग इति ।

यद्वा—अर्थवत्त्वाभावात् कर्तृसंख्यार्थयोर्दिस्योर्ग्रहणात्, अडिटोः सतोः समुदायस्यार्थवत्त्वेन दिस्योरानर्थक्यान्नातिप्रसङ्ग इति ।

( क ) **लोपस्त्वनुदात्ततनामिति** । अत्र 'अमे अमा वा' इति सूत्रात् अम इति पदमनुवर्त्य षष्ठ्याविपरिणम्य चाह—**अमस्येति** । एवमपि ग्रहां क्ङिति चेति सूत्रात् किति ङिति चेत्यनुवर्त्याह—**क्ङितीति** । झसाद्धेर्हेरित्यतो झसादिति हेरिति चानुवर्त्य सप्तम्या विपरिणम्य चाह—**झसे हकारे चेति** । अनुदात्तानामिति धातुपाठोक्तानां ग्रहणम् ।

( ख ) **यमिरमिनमि...इति** । तुदादीनामपि अनुदात्तत्वान्न्यूनमिदमित्यपास्तम् ।

( ग ) **जह्येधिशाधि—इति** । जहिश्च एधिश्च शाधिश्चैषां समाहारः समाहारद्वन्द्वत्वादेकवचनं नपुंसकत्वञ्च । ( घ ) **नातिप्रसङ्ग इति** । तथा च—हन्तेर्विधौ हन्यादिति रूपम् ।

वृश्चिकभियेति न्यायेन कर्मणि पक्षे वधिषीष्टेत्यत्रातिव्याप्तेरनिवारणात् ॥ १० ॥

**( जनिवध्योर्न वृद्धिः )** अवधीत् (क) ॥ **यु मिश्रणे अमिश्रणे च** (ख) ॥ **११** ॥

( सु० ) **जनिवध्योर्न वृद्धिः** ॥ अनयोर्वृद्धिर्न भवति । जन जनने । जनी प्रादुर्भावे च । वध हिंसायाम् । वधादेशोऽदन्तः । तेनाद्योच्चारणेऽनेकस्वरत्वात् नैकस्वरादितीण् निषेधो न प्रवर्तते । यत इत्यल्लोपः । अवधीत् ॥ ११ ॥

**ओरौ** ॥ उकारस्याऽद्विरुक्तस्यौकारो भवत्यत्रादौ पिति (ग) ॥ यौति, युतः, युवन्ति । यौषि । यौमि, युवः । युयात् । यौतु । युहि । अयौत् । अयाः । युयाव । युयविथ । यूयात् । यविता । अयावीत् ॥ **तु गतिवृद्धिहिंसासु** ॥ **१२** ॥

( सु० ) **ओरौ** ॥ अद्विरुक्तस्य धातोरुत औः स्यात् पिति तकारसकारदकारादौ लुग्विषये । उतः किम् । एति । एषि । लुकि किम् । सुनोति । पिति किम्, रुतः । अद्विरुक्तस्य किम् । योयोति । नुधातोरित्युव् । युवन्ति । ये दीर्घः स्यात् । यूयात् । धातोर्नामिन इति वृद्धिः । अयावीत् ॥ तु इति सौत्रो धातुः गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति (घ) ॥ १२ ॥

( त० ) **ओरौ** इति ॥ विदो नवानामित्यतो वेत्यनुवर्त्य व्यवस्थयाऽद्विरुक्तस्येति बोध्यम् । तेन जुहोतीत्यादौ नातिप्रसंगः ॥ १२ ॥

(त०) ओरौ इति ॥ विदो नवानामित्यतो वेत्यनुवर्त्य व्यवस्थयाऽद्विरुक्तस्येति बोध्यम् । तेन जुहोतीत्यादौ नातिप्रसंगः ॥ १२ ॥

**(तुरुस्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड्वा)** तौति-तवीति, तुतः-तुवीतः, तुवन्ति । तौषि-तवीषि, तुथः-तुवीथः, तुथ, तुवीथ । तौमि-तवीमि । तुयात्-तुवीयात्- (ङ) । तौतु-तवीतु । तुवीतात्-तुवीताद् , तुतात्-तुताद् । तुहि-तुवीहि । अतौत्- अतवीत् । तुताव । तोता । तोष्यति । अतौषीत् ॥ **रु शब्दे** । रौति-रवीति । रुरविथ । अरावीत् ॥ **णु स्तुतौ** । नौति, नुतः । नुनाव । नुनविथ । अनावीत् ॥ **टुक्षु शब्दे** । क्षौति । क्षुयात् । क्षौतु । अक्षात् । चुक्षविथ ॥ क्षविता । अक्षावीत् ॥

---

( क ) अतो हसादेरिति वृद्धौ प्राप्तायामाह—**जनिवध्योर्न वृद्धिरिति** ॥ **अवधीदिति**—अल्लोपस्य स्थानिवत्त्वाद् 'अतो हसादे' रिति न वृद्धिरिति केचित् ।　　( ख ) मिश्रणं सम्पर्कः ।

( ग ) **ओरात्रिति** । गुणस्यापवादकमिदम् । ओरिति षष्ठ्यन्तम् । आविति लुप्तप्रथमान्तम् ।

( घ ) **स्मरन्तीति** । न्यासकारादयः ।

( ङ ) **तुवीयादिति** । अत्रेटः परत्वाद् गुणः स्यादिति चेदुच्यते, यादादिप्रत्ययस्य ङित्वाद् यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इति न्यायेन ईटोऽपि ङित्वाद्गुणाभाव इति ।

**क्ष्णु तेजने** । क्ष्णौति । चुक्ष्णविथ । अक्ष्णावीत् । **ष्णु प्रस्रवणे** । स्नौति । सुष्णविथ । अस्नावीत् ॥ **द्यु अभिगमने** । द्यौति । दुद्यविथ–दुद्योथ । अद्यौषीत् ॥ **षु प्रसवैश्वर्ययोः** । सौति । सुषाव । सुषविथ–सुषाथ । असौषीत ॥ **कु शब्दे** । कौति । चुकविथ–चुकोथ अकौषीत् ॥ **वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु** । वेति, वीतः, वियान्ति । वेषि । वेतु । वीहि । अवेत् , अवियन् । विवयिथ–विवेथ । अवैषीत् ॥ एति, ईतः । ईयात । एतु , ऐयन् । आयम् । अयांचकार । एता । ऐषीत् ॥ **इण् गतौ** । एति, इतः ॥ १३ ॥

(सु०) **तुरुस्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड् वा** ॥ अद्विरुक्तेभ्य एभ्यः परेषां हसादिचतुर्णामीडागमो वा भवति । क्ष्णु तेजने । तेजनं तीक्ष्णीकरणम् । ष्णु प्रस्रवणे । प्रस्रवणमुत्कण्ठा । षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् (क) । वीगतिव्याप्तिप्रजननकान्त्यसनखादनेषु । प्रजननं–गर्भग्रहणम् । असनं–क्षेपणम् । अडागमात्प्राग् नुधातोरिनीय् । अवियन् । नित्यत्वादडागमे कृते सत्यनेकस्वरत्वाद्य इति केचित् (ख) अव्यन् । अत्र इकारोऽपि धात्वन्तरं प्रश्लिष्यते । तथा च प्रयुञ्जते । 'नहि तरणि रुदीते दिक्पराधीनवृत्तिः' इति । व्याख्यातं च मनोरमायाम् । कर्मव्यतिहारे आत् (ग) । न च गतिहिंसार्थत्यान्निषेधः शङ्क्यः । उत्पूर्वस्याविर्भावार्थत्वादिति । इण् गतौ ॥ १३ ॥

(त०) **तुरुस्तुभ्य** इति ॥ यत्तु प्राचा युरुणुस्तुभ्य इत्युक्तं यच्च वासुदेवेन व्याख्यातम् । यु मिश्रणे । रु शब्दे । णु स्तुतौ । ष्टुञ् स्तुतौ । एभ्यः पितितिस्मि ईकारो वक्तव्य इति तत्सर्वं प्रामादिकम् । युणु एतयोरत्राग्रहणस्य सर्वसंमतत्वात् । पितितस्मीति निमित्तोपादानमप्ययुक्तम् । रुवीत इत्यादावव्याप्तेः ॥ १३ ॥

( **इणः क्ङिति स्वरे यः** ) (घ) यन्ति । एषि । इयात् एतु, यन्तु । इहि । आयम् , ऐव, ऐम, इयाय ॥ १४ ॥

( सु० ) **इणः क्ङिति स्वरे यः** ॥ इणो यत्वं भवति किति ङिति च स्वरे । यन्ति । लिटि वृद्धौ च कृतायाम् असवर्णे स्वरे इतीय् इयाय (ङ) ॥ १४ ॥

( **इणः किति णादौ पूर्वस्य दीर्घः** ) ईयतुः (च), ईयुः ।

---

( क ) **प्रसवोऽभ्यनुज्ञानमिति** । 'देवस्य त्वा सवितुः प्रसव' इत्यादौ अभ्यनुज्ञानार्थदर्शनात् ।

( ख ) **नित्यत्वादडागम इति** । कृताकृतप्रसङ्गिकत्वमात्रेण अटो नित्यत्वादिति भावः ।

( ग ) **कर्म्मव्यतिहारे आदिति** । अत्र वदन्ति–व्यति विना कर्म्मव्यतिहारकल्पनं क्लेशापहमिति परकीयकर्म्म च कर्म्मव्यतिहारेऽपेक्षेत । तच्चात्र नोपात्तम् । परस्परकरणं तु न सम्भवत्येव । ततश्चोदीते इति भावे क्तप्रत्ययो बोध्यः । तथा चोदये दिक्पराधीनवृत्तिस्तरणिर्नेत्यर्थः सुगम इति ।

( घ ) **इणः क्ङितीति** । यन्तीत्यत्र येन नाप्राप्तिन्यायेन इयोऽपवादः । गुणवृद्धी तु परत्वाद्बाधिके ।

( ङ ) **इयायेति** । अत्र इशब्दस्य द्वित्वे 'वर्णादाङ्गं बलीय' इति न्यायेन सवर्णदीर्घं बाधित्वा परस्य वृद्धौ 'असवर्णे स्वरे पूर्वस्य' इतीयादेश इति भावः ।

( च ) **ईयतुरिति** । ननु 'इ इ अतुस्' इति स्थिते पूर्वस्य दीर्घे यकारेऽपि स्थानिवत्त्वेन सवर्णदी-

इययिथ–इयेथ । ईयात् । एता । दादेः पे । इणः सिलोपे गा । अगात्, अगाताम्, अगुः ॥ **इक् स्मरणे** । इङिकावध्युपसर्गतो न व्यभिचरतः । अध्येति, अधीतः, अधियन्ति । अध्यैत्–अध्यैद् ॥१५॥

( सु० ) **इणः क्किति णादौ पूर्वस्य दीर्घः** ॥ इणः पूर्वरूपस्य दीर्घो भवति किति ङिति । आशिषि ये इति दीर्घः । ईयात् । इक् स्मरणे । ककार इहेण्वदिक इति विशेषणार्थः । अयमधिपूर्वः । तथा च भट्टिः 'ससीतयो राघवयोरधीयन्' (क) स्मरन्नित्यर्थः । राघवयोरित्यत्र कर्मणि षष्ठी । इङि कावविति । इङिकावध्युपसर्गं विना प्रयोगं नार्हत इत्यर्थः ॥ १५ ॥

( **इण्वदिकः** ) अधीयाय । अधीयतुः । अधीययिथ–अधीयेथ । अधीयिव । अधीयात् । अध्येता । अध्यगात् ॥ **विद ज्ञाने** । वेत्ति, वित्तः, विदन्ति । वेत्सि, वित्थः, वित्थ, वेद्मि ॥ १६ ॥

( सु० ) **इण्वदिकः** ॥ इणो यत् कार्यमुक्तं तदिकोऽपि भवति । कार्यातिदेशोऽयम् (ख) ॥ विद् ज्ञाने । ज्ञप्तिर्ज्ञानम् ॥ १६ ॥

**विदो नवानां त्यादीनां णवादिर्नवको वा** (ग) ॥ विदः परेषां त्यादीनां नवानां णवादिर्नवको वा ॥ वेद, विदतुः, विदुः । वेत्थ, विदथुः, विद । वेद, विद्व, विद्म । विद्यात् । वेत्तु । विद्धि ॥१७॥

( सु० ) **विदो नवानां त्यादीनां णवादिर्नवको वा** ॥ वर्तमानार्थकणादियोगे धातोर्द्वित्वं न उक्तार्थणादियोगे इत्युक्तत्वात् (घ) । झसादिति धिः । विद्धि ॥१७॥

( त० ) वेदेति ॥ अनन्तरस्येति न्यायादुक्तार्थणादियोग एव द्वित्वं नान्यत्र ॥१७॥

( **वेत्तेर्लोट्याम्गुणाभावः करोत्यनुप्रयोगश्च वा** ) ॥१८॥

( सु० ) **वेत्तेर्लोट्याम् गुणाभावः करोत्यनुप्रयोगश्च वा** ॥ वेत्तेराम् प्रत्ययो गुणनिषेधः करोतेरनुप्रयोगश्च वा स्याल्लोटि ॥ १८ ॥

**तनादेरुप्** ॥ विदांकरोतु ॥ १९ ॥

र्घे पूर्वस्य दीर्घविधानसामर्थ्यात्पुनर्यकाराप्राप्तौ 'ई अतुः' इति प्राप्नोति "अनन्तरस्य विधिर्वा प्रतिषेधो वेति" न्यायेन तत्सामर्थ्येन यकारस्य एव बाधो न तु दीर्घस्येति चेन्न, पूर्वस्यैव विधौ स्थानिवत्त्वेन यकारे दीर्घाप्रवृत्तेरिति नागेशभट्टः ।

( क ) सूतोऽपि गङ्गासलिलैः पवित्वा सद्याश्वमात्मानमनल्पमन्युः । ससीतयोराघवयोरधीयन् श्वसन् कदुष्णं पुरमाविवेश ॥ भट्टिः—३–१८ ॥

( ख ) **कार्यातिदेशोऽयम् इति** । आर्धधातुकाधिकारे वार्तिकपाठात्तदधिकरोक्तानामेव कार्याणामुपदेशत्वादतिदेश इति भावः ।

( ग ) **विदोनवानामिति** । अत्र विद इति पञ्चमी न तु षष्ठी तेन विद्यतिविन्दत्योर्व्यवहितपरतिबाधभावान्नैते आदेशाः ।

( घ ) **इत्युक्तत्वादिति** । द्विश्चेति सूत्रस्य वृत्तौ उक्तार्थणवादियोगे धातोर्द्विवचनमित्युक्तत्वाद् 'वेद' इत्यादौ णबादीनां परोक्षार्थत्वाभावान्न द्वित्वमिति भावः ।

( सु० ) **तनादेरुप्** ॥ तन् आदिर्यस्य स तनादिस्तस्मात्तनादेरुप् प्रत्ययः स्यात् कर्तरि चतुर्षु । नृप इति गुणे कृते विदांकरोतु ॥ १९ ॥

**ङित्यदुः** (क) ॥ कृञोऽत उत् ङिति ॥ विदांकुरुतात् । विदांकुर्वन्तु (ख) । अवेत्—अवेद् । स्याविदः । अविदुः ॥ २० ॥

( सु० ) ङित्यदुः । कृञो ये इत्यतः कृञ् इत्यनुवृत्तम् । लङि दिस्योरिति दिप्-सिपोर्लोपः स्यात् । अवेत् । स्याविद इत्थन उस् अविदुः ॥ २० ॥

( त० ) **ङित्यदुः** ॥ ङिति अत् उरिति च्छेदः । कृञो ये इत्यतः कृञ् इत्यनुवर्तते । विदांकुरुतादित्यत्र तपरत्वादुप्रत्ययनिमित्तो गुणो न । कुर्वन्त्वित्यत्र तु संज्ञापूर्वकत्वेनानित्यत्वात् य्वोर्विहस इति दीर्घो न । तपरः किम् । अकारि । तपरकरणं सुखमुखोच्चारणार्थमिति वासुदेवः । तन्न । ङित्य उरिति पाठेऽपि सुखोच्चारणस्याव्याहतत्वात् ॥ २० ॥

**दः** ॥ पदान्ते दस्य रो वा स्यात् सिपि ॥ अवेः—अवेद्—अवेत् ॥ २१ ॥

( सु० ) दः ॥ पदान्ते धातोर्दस्य रो वा स्यात् सिपि ॥ सिपि किम् । अवेद् । पदान्ते किम् । वेत्सि ॥ २१ ॥

( त० ) **दः** इति ॥ अत्र रोऽरात्रिष्वित्यतो मण्डूकप्लुत्या र इत्यनुवर्तते अजर्घा इत्यादिसिद्ध्यर्थम् । स इति त्वव्यवहितमपि न । दोषादिकल्पने च गौरवम् । यदि दोषादिकल्पने व्यवहितानुवृत्त्या गौरवं समानं तदा सानुवृत्तिरप्यस्तु ॥ २१ ॥

( **आमि विदेर्न गुणः** ) विदांचकार । अवेदीत् ॥ **अस भुवि** । अस्ति ॥ २२ ॥

( सु० ) **आमि विदेर्न गुणः** ॥ वेत्तेर्गुणो न स्यात् आमि । विददरिद्रेत्याम् । विदांचकार । अस भुवि सत्तायामित्यर्थः ॥ २२ ॥

**नमसोऽस्य** ॥ प्रत्ययस्य नमोऽस्तेश्चाकारस्य लोपो ङिति (ग) । स्तः, सन्ति ॥ २३ ॥

(सु०) **नमसोऽस्य** ॥ नम् च अस् चानयोः समाहारो नमस् तस्य । नमिति प्रत्ययो गृह्यते प्रतिपदोक्तत्वात् । न धातुः लाक्षणिकत्वात् । (घ) तस्य हि आदेः ष्णः स्न इति कृते नमिति रूपम् । अस्तेरीडित्यतोऽस्तेरित्यनुवृत्त्याऽस्तेरित्यस्य योऽस् तस्ये-

( क ) **ङित्यदुरिति** । ङितीति सप्तम्यन्तम् । अदिति लुप्तषष्ठ्यन्तम् । उरिति प्रथमान्तम् । अदिति तपरकरणमुकारस्योपधागुणाभावार्थमसन्देहार्थं चेति ।

(ख) कुर्वन्त्वित्यत्र उवमिति वत्वस्य बहिरङ्गस्यान्तरङ्गदीर्घं प्रत्यसिद्धत्वाद् 'य्वोर्वि हसे' इति न दीर्घः ।

( ग ) **नमसोऽस्य** । इत्यत्र कस्यांचिद् वृत्तौ अब्विषये ङितीति लभ्यते, तन्निष्फलम्, असधातोरनब् विषये भूभावात् । नमश्चाब्विषये एव सत्त्वात् । नम उदाहरणं 'रुन्धः—रुन्धन्ति' इत्यादि । ङिति किम्, रुणद्धि—अस्ति ।

( घ ) **प्रतिपदोक्तत्वादिति** । प्रतिपदोक्तं शीघ्रं बुद्ध्यारूढं भवति । अतो नमिति प्रत्ययो गृह्यते । **लाक्षणिकत्वादिति** । लाक्षणिकं तु लक्षणानुस्मरणद्वारेण । अतो विलम्बोपस्थितिकत्वान्न नमिति धातु गृह्यत इति भावः ।

ति व्याख्यानात् असप्रत्ययस्य अस दीप्तौ, असु क्षेपणे इत्यादीनां च ग्रहणं न भवति (क)। ङित्यदुरित्यतो ङितीति ओर्म्नोरित्यतो लोप इति चानुवृत्तम् ॥ २३ ॥

(त०) **नमसोऽस्य** ॥ नम् च अस् चानयोः समाहारः नमस् तस्य। नमधातोरादेः ष्ण स्न इति सूत्रेण नत्वकरणाल्लाक्षणिकत्वेनाग्रहात्। अस्तेरीडित्यतोऽस्तेरित्यनुवृत्तेरस्तेरिति रूपस्य प्रकृतिभूतो योऽस् तस्येति व्याख्येयम्। तेनासप्रत्ययः। अस् दीप्तौ, असु क्षेपणे, इत्यादीनां न ग्रहणम्। यत्तु वासुदेवेन नन्वसा धातुना साहचर्यान्नमपि धातुरेव गृह्यताम्, इत्युक्तम् तन्न असप्रत्ययस्यापि संभवेन धातोर्ग्रहणमिति निर्णयाभावात् ॥२३॥

**सि सः** ॥ अस्तेः सस्य लोपो भवति सादौ (ख) ॥ असि, स्थः स्थ। अस्मि, स्वः, स्मः। स्यात्। अस्तु–स्तात्, सन्तु। जह्येधिशाधि। एधि। असानि ॥ २४ ॥

(सु०) **सि सः**। नमसोऽस्येत्यतोऽस्ग्रहणमप्यनुवृत्तम्। जह्येर्धीति एध्यादेशः। एधि २४

(त०) **सि सः** ॥ अत्र वमः मकारासंभवादस एवानुवृत्तिः (ग) ॥ २४ ॥

---

(क) **असप्रत्ययस्य असदीप्तौ, असुक्षेपणे, इत्यादीनां च ग्रहणं न भवतीति**। अत्र लघुभाष्यम्। प्रत्ययाप्रत्यययोर्ग्रहणे सम्भवति सति प्रत्ययग्रहणस्य न्याय्यत्वात्। तस्य प्राधान्यात् असिति प्रत्यय औणादिको गृह्यते। उणादीनां तु क्वचिद् व्युत्पत्तिकार्याभावात्। अत एव कंसेन पय इति न भवति। धातुरपि 'असुर्दीप्तौ' असु क्षेपणे न गृह्यते। विकरणस्य व्यवधानेन ङित्परत्वाभावात्। नमो विकरणस्य ङितोऽसम्भवात् यथा निबादेर्ङितः ग्रहणं तथा असधातोरप्येनादृशोऽसमुच्येत। नन्वस्तेरपि कथं ग्रहणं लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव स्वीकारादिति चेन्न। एतद् वचनस्य न्यायस्य वात्राभावात्। अस्यैव साक्षात् ङित्परत्वसम्भवाच्च। यद्वा। अस्तेरीडित्यत अस्तेरित्यनुवर्त्य अस्तेरिति रूपस्य प्रकृतिभूतो योसिति व्याख्यानात्। माधवस्तु। ननु किमयं नमिति नत्यर्थो धातुर्गृह्यते विकरणो वा। युक्तं तत्रास्ति धातुसाहचर्याद्धातुग्रहणमिति। तन्न। असधातोर्ग्रहणमिति निर्णयाभावात्। असप्रत्ययग्रहणस्यापि सम्भवात्। यदपि सत्यं अस्तेस्त्वनपि श्वादेशेन प्रयोगाभावादविषयो विभक्तिचतुष्टयमस्य सूत्रस्य निमित्तमनुमीयत इत्युक्तम्। तदपि न। भविता, भविष्यति इत्यादौ स्थानिवद्भावेनास्तित्वादकारस्य च श्रूयमाणत्वात् ङित्परत्वाभावादिति तु वक्तुं युक्तत्वात् णबादियादाद्योः कित्त्वं न ङित्त्वम्। सिस्योस्तु तादिपर्युदासान्न ङित्त्वं स्यपस्तु पित्त्वात्तदपि न चात्र ङित्यनन्तरो नमतिः सम्भवति अत्राव्यवधानात्। नमंतीत्यादावप्यल्लोपस्य यद्वद् भावात्तदवश्यमेव व्यवधानमित्युक्तम्। एवमेवास्तेरपि वक्तुमुचितम्। यदपि नापि येन नाव्यवधानमिति न्यायस्याप्ययं विषयः, वचनस्य विकरणग्रहणेनापि चरितार्थत्वादित्युक्तम्। तदपि न। धातुग्रहणे हेतुत्वेनोक्तस्य साहचर्यस्यादूषितत्वात्। प्रत्ययग्रहणे हेतोरप्रतिपादनाच्च। यदपि न चात्रापि धात्वक्षरेण व्यवाय इत्याशङ्क्य विधिकाले एवमस्येत्संज्ञातः प्रागलोपात्। पश्चाच्च मित्त्वेनान्त्यस्वरात्परत्वमित्युक्तम्। तदपि न। विधिकाल इत्यस्य सूत्रे इत्यर्थः प्रयोगे वा। नाद्यः सूत्रे ङित्परत्वासंभवात् मस्येत्स्यसंज्ञातः प्रागलोपविधानात्। मकारव्यवधानस्यापरिहरणीयत्वाच्च। नान्त्यः। मस्येत्संज्ञाभावे नान्त्यस्वरात्परत्वासम्भवात् धातोःपरत्वप्रसंगात्। अक्षरेणेत्यप्यसंगतम्। हससहितस्वरस्याक्षरत्वाङ्गीकारात्। द्वात्रिंशदक्षरा अनुष्टुबिति व्यवहारात् धातुवर्णेनेति वक्तुं युक्तत्वाच्च यदपि सूत्रेप्येवं नमस इति मकारनिर्देश उपपद्यते। अन्यथा नास इत्येवं वाच्यं स्यादित्युक्तम्। तदपि न नास धातोर्ग्रहणप्रसंगात्। किं च धानायै इत्यादौ नाप्रत्ययाकारस्यापि लोपप्रसंगात्। न आस इति छेदेन आसेः परस्य नस्य नस्यासीनायेत्यादौ अल्लोपस्य संभवात्।

(ख) **अस्तेरिति**। अस्तेः किम्, वस्सि। सि किम्, अस्ति ॥ सः किम्, अस्य माभूत्।

(ग) अत्रायमर्थः **'सिस'** इति सूत्रे नमसोऽस्येति सूत्रादस्ग्रहणं कथमनुवर्त्तते? नम्ग्रहणमनु-

**अस्तेरीट्** ॥ विद्यमानादस्तेः रुदादेश्च परयोर्दिप्सिपोरीट् ॥ आसीत्, आस्ताम् । आसीः । आसम् ॥ २५ ॥

(सु०) **अस्तेरीट्** ॥ दिस्योर्हसादित्यतो दिस्योरित्यनुवृत्तम् । अस्तेरिति तु तन्त्रादिना व्याख्येयम् । तेन विद्यमानादस्तेरिति लभ्यते ॥ विद्यमानात्किम् । अस्तेर्भूरित्यादेशेऽभूदित्यादौ मा भूत । स्थानिवद्भावेन नमसोऽस्येत्यत्र ओर्म्मोर्वेत्यतो वानुवृत्त्याऽव्यवस्थया लोपाभावे स्वरादित्वात् द्वितीयोऽट् । आस्ताम् ॥ २५ ॥

(त०) **अस्तेरीट्** ॥ अत्राद्रुदादेरिति सूत्रात् रुदादेरित्येकदेशोऽनुवर्तते । नत्वदिति । क्वचिदेकदेशोऽनुवर्तत इति स्वीकारात् । अस्तेरित्यस्य तन्त्रादिना लब्धं विद्यमानादिति । तेन भ्वादेशे अभूदित्यादौ नातिप्रसंगः ॥ **आस्तामिति** । अत्र ओर्म्मोर्वेत्यतो वानुवृत्त्या व्यवस्थया लोपाभावे द्वितीयोऽट् । उपदेशस्वरादिति तु न, अगादित्यत्रातिव्याप्ते ॥२५॥

(**अस्तेरनपि भूः**) बभूव इत्यादिसिद्धम् ॥ **मृजू शुद्धौ** ॥२६॥

(सु०) **अस्तेरनपि भूः** ॥ अस्तेर्भूरादेशः स्यादचतुर्षु ।मृजू शुद्धौ । अयं न षित्, भिदादिपाठसामर्थ्यात् ॥ २६ ॥

( **मृजेर्वृद्धिः क्ङिति स्वरे वा** (क) ) मार्ष्टि, (ख) मृष्टः, मृजन्ति–मार्जन्ति । मार्क्षि । मृज्यात् । मार्ष्टु । मृड्ढि । मार्जानि । अमार्ट्–अमार्ड् । ममार्ज, ममृजतुः–ममार्जतुः । ममार्जिथ–ममार्ष्ठ । मृज्यात् । मार्जिता मार्ष्टा ॥ अमार्जीत् ॥ **वच परिभाषणे** । वेत्ति । नहि वचिरन्तिपरः (ग) वक्षि, वक्थः । वच्मि । वच्यात् । वक्तु । वग्धि । अवक्–अवग् । उवाच, ऊचतुः । उवचिथ–उवक्थ । उच्यात् । वक्ता । वक्ष्यति । अवक्ष्यत् । अस्यातिवक्तीति ङः ॥ २७ ॥

( सु० ) **मृजेर्वृद्धिः क्ङिति स्वरे वा** ॥ गुणापवादः । अक्ङिति प्रत्यये परे मृजेर्वृद्धिर्भवति क्ङिति परे वेष्यते । छशषेति षत्वम् । मार्ष्टि ॥ झसादिति हेर्धिः । छशषेति षत्वम् ष्टुत्वम् । झबे जबा इति षस्य डः स्थानैकत्वात् । मृड्ढि । दिस्योरिति दिप्सिपोर्लोपः । अमार्ट्–अमार्ड् । लुङि इडभावे षत्वकत्वे । अमार्क्षीत् । झसादिति सिलोपः । अमार्ष्टाम् । स्याविद इत्यन उस् । अमार्क्षुः । वच परिभाषणे । अयमन्तिपरो न प्रयुज्यते इत्येके । बहुवचनपरो न प्रयुज्यते इत्यपरे (घ) । झसादिति हेर्धिः । चोः कुरिति

वर्त्ततामिति शङ्कायां समाधत्ते—**नमः सकारासम्भवादिति** । अयमाशयः—'सि स' इति सूत्रे सकारस्यैव लोपविधानान्नमस्तदभावान्न नमोऽनुवृत्तिः, किन्तु असः सकारसत्त्वात् 'असि' इत्यादिसिद्धयर्थं तस्यानुवृत्तिरेवेत्याह—**अस एवानुवृत्तिरिति** ॥

( क ) वित्युपधाया लघोरिति गुणप्राप्तौ क्ङिति स्वरे वृद्धावप्राप्तायां चाह—**मृजेर्वृद्धिरिति** ।

( ख ) ननु मार्ष्टीत्यत्र संयोगान्तस्य लोपो भवत्विति चेन्न, रेफादुत्तरस्य संयोगान्तस्य लोपो न भवतीति निषेधात, संयोगान्तस्य लोप इति स्यादिरसपरकत्वाच्च ।

( ग ) **नहीति** । किञ्च बहुवचने वदन्तीत्युच्चारणीयम् ।

( घ ) **अन्तिपर इति** । तथा च–वचन्ति, वचन्ति, वचन्तु अवचन्, अवोचन् अवक्ष्यन्नित्येतेऽसा-

कः। झबे जश्रा इति गः। वग्धि ॥ दिस्योरिति दिप्सिपोर्लोपः। अवक्। णबादौ पूर्वस्येति संप्रसारणम्। अत उपधाया इति वृद्धिः। उवाच। अस्य तिवक्तिख्यातिभ्य इति ङः॥

(त०) नहि वचिरिति ॥ बहुवचनपर इत्येके। अन्तमात्रपर इत्यन्ये ॥२७॥

(**ङे वचेरुम्**) अवोचत्, अवोचताम्, अवोचन्, ॥ **रुदिर् अश्रुविमोचने** (क) ॥२८॥

(सु०) ङे वचेरुम् ॥ वचेरुमागमः स्यात् ङप्रत्यये। अवोचत् ॥ रुदिर् अश्रुविमोचने। अश्रुविमोचनं रोदनम् ॥ २८ ॥

**रुदादेश्चतुर्णां ह्वसादेः** ॥ रुदादेः परस्य तिबादिचतुर्णां मध्ये हकारवसादेः प्रत्ययस्येट् ॥ रोदिति, रुदितः, रुदन्ति। रोदिषि, रुदिथः, रुदिथ। रुद्यात्। रोदितु। रुदिहि। अरोदीत्—अरोदत्। अरुदिताम्, अरुदन्। इरितो वा अरुदत् ॥ **ञिष्वप् शये**। स्वपिति। स्वप्यात्। स्वपितु। अस्वपीत्—अस्वपत्। सुष्वाप। स्वप्ता। अस्वाप्सीत् ॥

**श्वस् प्राणने**। श्वसिति। श्वस्यात्। श्वसितु। अश्वसत्। अश्वसीत्। शश्वास ॥ **अन प्राणने** अनिति ॥ २९ ॥

(सु०) रुदादेश्चतुर्णां ह्वसादेः ॥ ह् च वसश्च ह्वसौ तौ आदी यस्य ह्वसादिस्तस्य ॥

"रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा।
जक्षितिश्चेति विज्ञेया रुदादिः पञ्चको गणः ॥"

ह्वसादेः किम्। रुदन्ति ॥ चतुर्णां किम्। स्वप्ता। हौ परत्वादिटि कृते धिरादेशो न(ख)। रुदिहि। लुङि इरित इति वा ङः। अरुदत्। णबादौ पूर्वस्येति संप्रसारणम्। यजामिति संप्रसारणम्। सुषुपतुः। अत उपधाया इति वृद्धौ अस्वाप्सीत्। ह्म्यन्तेति न वृद्धिः। अश्वसीत् ॥ २९ ॥

(त०) रुदादेरिति ॥ ह् च वसश्च ह्वसौ तौ आदी यस्य स तथा। रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा। जक्षितिश्चेति विज्ञेयो रुदादिः पञ्चको गणः ॥ १ ॥ अरोदीदिति। अद्रुदादेरडित्यट्। अस्तेरीडिति पक्षे ईट् ॥ २९ ॥

(**प्रादेरेफादनितेर्नस्य णत्वम्**) प्राणिति। प्राणिहि। आनीत्। आनत्। आन, आनतुः। अन्यात्। अनिता। आनीत ॥ **जक्ष भक्षहसनयोः**। जक्षिति, जक्षितः ॥ ३० ॥

(सु०) प्रादे रेफादनितेर्नस्य णत्वम् ॥ प्रादिस्थरकारात्परस्यादेर्नस्य णत्वं स्यात् ३०

थवः। **बहुवचनपर इति**। अस्मिन् पक्षे लटि मध्यमे। वक्थः। उत्तमे तु। वच्मः। लिटि। ऊचः। मध्यमे। ऊच। उत्तमे तु ऊचिम। लुटि। वक्तारः। लिङि। वच्यासुः। उच्यासुरित्यादयोऽसाधवः।

(क) **रुदिरिति**। अश्रुमोचनमात्रेऽर्थे रुदिरकर्मकः। शब्दयुक्तक्रन्दनेऽर्थे तु सकर्मकः। तथा च भट्टिकाव्ये—रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वयेति साधु।

(ख) **धिरादेशो नेति**। सकृद्गताविति न्यायात्।

**( जक्षादेरन्तोऽदन उस् )** जक्षजागृदरिद्राशासुचकास्भ्यः परस्यान्तोऽत् अन उस् च ॥ जक्षति । जक्ष्यात् । जक्षितु । जक्षिहि । अजक्षीत् । अजक्षत् । जक्षिता ॥ इति रुदादयः । **जागृ निद्राक्षये** । जागर्ति, जागृतः, जाग्रति । जागृयात् । जागर्तु । अजागः । अजागृताम् ॥ ३१ ॥

( सु० ) **जक्षादेरन्तोऽदन उस्** ॥ जक्षप्रभृतयः सप्त । उक्तं च—

"जक्षजागृदरिद्रातिचकास्तिशास्तयस्तथा ।
दीधीङ् वेवीङ् च विज्ञेयो जक्षादिः सप्तको गणः ॥ १ ॥

दिस्योरिति दिप्सिपोर्लोपः । अजागः ॥ ३१ ॥

**( उसि गुणः )** अजागरुः । जजागार ॥ ३२ ॥

( सु० ) **उसि गुणः** ॥ नाम्यन्तस्य धातोर्गुणः स्यादनादेशे उसि परे । विददद्रिद्रेति वाम् । जागरांचकार ॥ ३२ ॥

**( जागर्तेर्वीण्णब्ङिङ्विन्नेषु गुणः )** जजागरतुः, जजागरुः । जजागरिथ । जागराञ्चकार । जागर्यात् । जागरिता । जगारिष्यति । अजागरिष्यत् । अजागरीत् ॥ **दरिद्रा दुर्गतौ** । दरिद्राति ॥ ३३ ॥

( सु० ) **जागर्तेर्वीण्णब्ङिङ्विन्नेषु गुणः** ॥ जागर्तेर्विइण्णब्ङिभिन्नप्रत्यये गुणः स्यात् । विइण्णब्ङिङ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च । विशब्देन वादिः प्रत्ययो गृह्यते । इकारस्तु उच्चारणार्थः । क्वसुप्रत्यये जजागृवान्' जजागृवांसौ इति । इणि अजागारि । णपि जजागार । ङिति जागृतः । वृद्धिविषये वुणि जागरकः । घञि जागरः । ङिप्रत्यये जागरयति न चैतेषु गुणे कृतेऽप्यत उपधाया इति वृद्धिः स्यादिति वाच्यम् । गुणविधेरिण्णप्प्रतिषेधस्य चानर्थक्यापत्तेः । लुङि जागृ इ स् ईदित्यत्र रत्वं प्राप्तं तद्गुणो बाधते । तं णित्पे इति सेणित्वाद्धातोर्नामिन इति वृद्धिर्बाधते । तां जागर्तेरिति गुणो बाधते । तत्र गुणे कृते अतो हसादेरिति विकल्पं वाधित्वा ल्रान्तस्येति वृद्धिः प्राप्ता हृम्यन्तेति सूत्रेण निषिध्यते(क) अजागरीत् ॥ दरिद्रा दुर्गतौ ॥ ३३ ॥

**दरिद्रातेरिदालोपश्च ङिति** ॥ दरिद्रातेरातो लोपो ङिति स्वरे इकारश्च ङितिहसे ॥ दरिद्रितः, दरिद्रति । दरिद्रियात् । दरिद्रातु । अदरिद्रात् , अदरिद्रिताम् , अदरिद्रुः ॥ ३४ ॥

( सु० ) **दरिद्रातेरिदालोपश्च ङिति** । हसे इति स्वरे इति चानुवृत्तम् ॥ ३४ ॥

( त० ) **अदरिद्रुरिति** । जक्षादेरित्यन उस्दरिद्रादेरिदालोप इत्यनेन परत्वादालोप आदन्तत्वाभावादादन्ताद्द्विष इत्यादिलक्षणविकल्पाप्रवृत्तिः ॥ ३४ ॥

( क ) तत्र गुणे कृते इति । हसादिलक्षणाया वृद्धेर्जागर्तिगुणेन बाधस्तेन गुणेन हसान्तत्वसम्पादनात् । या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते नान्येति भावः । तदाहुः—गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् , पुनर्वृद्धिनिषेधोऽतो यण् (१) पूर्वाः प्राप्तयो नवा । इति ।

( १ ) **यण्पूर्वा इति** । यण् इति पाणिनीयानां संज्ञा तत्र यवरलाः ज्ञेयाः ।

**( दरिद्रातेरनप्यालोपः सौ वा णबवुणनिट्सयुट्सु न )**
ददरिद्रौ, ददरिद्रतुः । दरिद्राञ्चकार । दरिद्रियात् । दरिद्रिता । अदरिद्रीत्, अदरिद्रिष्टाम् । अदरिद्रासीत् ॥ **शासु अनुशिष्टौ** । शास्ति ॥३५॥

( सु० ) **दरिद्रातेरनप्यालोपः सौ वा णबवुणनिट्सयुट्सु न** । दरिद्रातेरातो लोपः स्यात् अचतुर्पु सिप्रत्यये तु वा णबादिषु परेषु न । वुणि दरिद्रायकः ॥ अनिटि सप्रत्यये दिदरिद्रासति ॥ युटि दरिद्राणः लुङि आलोपाभावे यमिरमीतीट्सकौ । अदरिद्रासीत् । अदरिद्रासिष्टाम् । शासु अनुशिष्टौ अनुशिष्टिरनुशासनम् ॥ ३५ ॥

**शासेरिः** ॥ शासेरातो हसे क्ङिति ङे च इद्भवति । घासादेः षः । शिष्टः, शासति । शास्सि, शिष्ठः, शिष्ठ । शास्मि । शिष्यात् । शास्तु । जह्येधिशाधि । शाधि ॥ ३६ ॥

**दिपि** । धातोः सस्य तः स्याद्दिपि ॥ अशाद्–अशात्, अशिष्टाम् अशासुः॥

**सिपि वा** । धातोः सस्य वा तः स्यात्सिपि ॥ अशाः–अशात्–अशाद् । शशास । शिष्यात् । शासिता । अशासिष्यत् । अशिषत् ॥ **चकासृ दीप्तौ** ॥ चकास्ति, चकास्तः, चकासति । झसाद्धिर्हेः । घे सलोपः चकाधि । अचकात् । अचकासुः । अचकाः–अचकात्–अचकाद् । चकासांचकार । अचकासीत् । इति परस्मैपदम् ॥ ३८ ॥

(सु०) **शासेरिः** ॥ शास उपधाया इत् स्यात् ङप्रत्यये हसादौ क्ङिति च । ङस्यानुवर्तनात् आङः शासु इच्छायामित्यस्य तु न ग्रहणम् । अर्तिसर्तिसाहचर्यात्परस्मैपदिन एव शासेर्ङविधानात् । तेन प एत्वम् । नेह आशास्ते । अन्ये तु व्यतिशिष्टे । व्यतिशिट्वे । इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वन्ति । हौ जह्येधिशाधीति शाधिरादेशः । शाधि । सर्तिशास्त्यर्तिति ङः । अशिषत् ॥ चकासृ दीप्तौ । दीप्तिस्तेजः चक्षादेरित्यन्तोऽत् । चकासति । घे च सलोपः । धातोः सकारस्य लोपः स्यात् धकारे परे । दिस्योरिति दिप्सिपोर्लोपः । दिपि सस्येति तः । अचकात् । सिपि तु वा तः । अचकाः-अचकात् । कासादिप्रत्ययादित्याम् । चकासांचकार । दीधीङ् दीप्तिदेवनयोः । देवनं शोकः । वेवीङ् वेतिना तुल्ये । वीगतीत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः । छान्दसाविमौ । अत एव न व्याख्या तौ(क) ॥ इति सुबोधिन्यां परस्मैपदम् ॥

---

( क ) तथापि स्मर्यमाणत्वादनयोर्व्याख्यानं प्रस्तौमि–**दीधीङ्दीप्तिदेवनयोरिति** ङित्त्वादात् दीधीते । अनेकस्वरत्वाद्यः । दीध्याते । दीध्ये । दीध्यांचक्रे । दीधिता । दीधिष्यते । **वेवीङ् वेतनातुल्ये** वेवीते । वेव्याते इत्यादि दीधीवद्रूपम् । **षसषस्ति स्वप्ने** । इमावपि छान्दसौ धातू परस्मैपदिनौ । सस्ति । सस्तः । ससन्ति । लोटि–सस्तु । सधि । लङि–असत् । असस्ताम् । असः । लिटि–ससास । सेसतुः । लुङि–असासीत्–अससीत् । सन्ति । इदित्त्वान्नुमि कृते सस्त इति स्थिते 'स्कोराद्योश्च' इति सलोपे 'हसात्परस्य झसस्य लोपो वा सवर्णे झसे' इति तकारस्य वा लोपः । सन्तः । संस्तन्ति । बहूनां समवाये द्वयोः । संयोगसंज्ञा नेत्याश्रित्य 'स्को' इति लोपाभावात् । संस्ति । संस्तः इत्येके ।

इति चक्रधराख्यटिप्पण्यामदादिपरस्मैपदप्रक्रिया समाप्ता ।

( त० ) शासेरिः। ङे चेति ङानुवृत्तेराङ् शासु इच्छायामित्यस्य नेत्वम्। अर्तिसाहचर्यात्परस्मैपदिन एव शास्तेर्ङविधानात् भाष्यमतमाह–धे सलोप इति ॥ ६८ ॥

कृतायामिह टीकायां लोकेशकरशर्मणा। आगाद्दादिमध्यस्थं परस्मैपदसाधनम् ॥

इति तत्त्वदीपिकायां परस्मैपदम् ॥

---

**चक्षिङ् व्यक्तायां वाचि।** स्कारायोश्च। चष्टे, चक्षाते। आतोऽन्तोऽदनतः। शक्षते। चक्षे, चक्षाथे, चड्ढ्वे। चक्षे, चक्ष्वहे, चक्ष्महे। चक्षीत। चष्टाम्। अचष्ट ॥*॥

( सु० ) **चक्षिङ् व्यक्तायां वाचि** ॥ अयं दर्शनेऽपि। इकारोऽनुदात्तः। इदितो नुमिति नुम् तु न अन्ते इदित इति व्याख्यानात्। ङकारस्तु अनुदात्तेत्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः। स्कोरिति कलोपः ष्टुत्वम्। चष्टे। आतोऽन्तोऽदनत इत्यत्। चक्षते। मध्यमे तु स्कोरिति कलोपः। षढोरिति कः। षत्वम्। चक्षे। कलोपे ष्टुत्वे झबे जबा इति डः। चड्ढ्वे। लङि अचष्ट ॥ * ॥

( त० ) **चक्षिङ्** ॥ अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति ज्ञापनार्थो ङकारः। तेन 'अनुक्तमप्यूहति पण्डितो जनः' इत्यादि सिद्धम्। इदित इति नुम् तु न भवति अन्ते इदिति व्याख्यानात्। अकारस्तु वक्तुमुचितः ॥ * ॥

**चक्षिङोऽनपि ख्याञ्क्शाञौ णादौ तु वा )** चख्यौ, चख्यतुः। चख्ये, चख्याते। चक्शौ। चक्शे। चचक्षे। ख्येयात्–ख्यायात्। ख्यासीष्ट। क्शायात्–क्शेयात् ॥ १ ॥

**(अस्यतिवक्तिख्यातिभ्यो ङो लुङि सरपवादः)** अख्यत्–अख्यत–अक्शास्त ॥ **ईर् गतौ कम्पने च।** ईर्ते, ईराते। ईर्ताम्, ईराताम्। ऐर्त। ईराञ्चक्रे ॥ ईरिषीष्ट। ऐरिष्ट। **आङः शासु इच्छायाम्।** आशास्ते। आशशासे। आशासिष्ट ॥ **कसि गतिशासनयोः।** कंष्टे, कंसाते। अयमनिदिदित्येके। कस्ते। तालव्यान्तोऽप्यनिदित्। कष्टे, कशाते। कक्षे, कड्ढ्वे। अकशिष्ट ॥ **णिसि चुम्बने।** निंस्ते, निंसाते। निंसिता ॥ **णिजि शुद्धौ।** चोः कुः। निङ्क्ते। निङ्क्ष्वे। निञ्जिता॥ **शिजि अव्यक्ते शब्दे।** शिङ्क्ते। शिङ्क्षे। शिञ्जिता ॥ **पिजि वर्णे संपर्चने च।** पिङ्क्ते। पिपिञ्जे। पिञ्जिता ॥ **पृचि संपर्चने।** पृङ्क्ते। पपृञ्चे। पृञ्चिता ॥ **पृची संपर्चने** पृक्ते। पपृचे। अपर्चिष्ट ॥ **वृजी वर्जने।** ईदित्। वृक्ते। वृजाते। वृक्षे। इदिदित्यन्ये ॥ वृङ्क्ते। **ईड स्तुतौ।** ईट्टे॥२॥

( सु० ) **चक्षिङोऽनपि ख्याञ्क्शाञौ णादौ तु वा** ॥ चक्षिङः ख्याञ्क्शाञावादेशौ भवतः अचतुर्षु। लिटि परे तु वा ॥ ङित्त्वात्पदद्वयम् ॥ **(अस्यतिवक्ति-**

**ख्यातिभ्यो ङो लुङि सेरपवादः)** असु क्षेपणे । ब्रुवो वचिः । वच परिभाषणे । इत्युभयोर्ग्रहणम् । एभ्यो ङप्रत्ययः स्याल्लुङि सेरपवादः ॥ आतो णबडाविति डौ । चख्यौ । आतोऽनपीत्यालोपः । चख्ये । चक्शौ । चक्क्षे । चचक्षे । संयोगादेरादन्तस्यैकारो वा । ख्यायात्-ख्येयात् क्शायात्-क्शेयात् । ख्यासीष्ट । क्शासीष्ट । ख्याता । क्शाता । ख्यास्यति-ख्यास्यते । क्शास्यति-क्शास्यते । अख्यास्यत् । अख्यास्यत । अक्शास्यत् । अक्शास्यत । अस्यतिवक्तीति ङः । आतोऽनपीत्यालोपः । अख्यत्-अख्यद् । अक्शासीत् । अक्शास्त । वर्जने ख्याञ्क्शाञौ नेष्टौ । समचक्षिष्ट । आङः शासु इच्छायाम् । आङ्पूर्वकत्वं प्रायिकम् । तेन 'नमो वाकं प्रशास्महे' इति सिद्धम्(क) । वचेर्घञ् । चजोरिति कः । कसि गतिशासनयोः । शासनमाज्ञा । तालव्यान्तोऽप्ययनिदित् । छशषेति षत्वम् । ष्टुत्वम् । कष्टे षढोरिति कः षत्वं च । कक्षे । षत्वष्टुत्वे । झषे जवा इति डः । कड्ढ्वे । णिजि शुद्धौ । अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेट् । चोः कुरिति जस्य गः खसे चपा इति कः । निङ्क्ते । गत्वकत्वषत्वानि । निङ्क्षे शिजि अव्यक्ते शब्दे । क्तप्रत्यये शिञ्जितम् । णिन्यन्तादीपि कृते शिञ्जिनी 'भूषणानां तु शिञ्जितम्' इत्यमरः । 'मौर्वी ज्या शिञ्जिनी गुणः' इति चामरः ॥ चोः कुरिति जस्य गः । खसे चपा इति कः । शिङ्क्ते (ख) ॥ पिजि वर्णे । संपर्चनं मिश्रीभावः ॥ १ ॥ २ ॥

**( ईडीशिभ्यां स्ध्वयोरिट् ॥ )** ईडिषे । ईडिध्वे ॥ ३ ॥

(सु०) ईडीशिभ्यां स्ध्वयोरिट् ॥ आभ्यां परयोस्ध्वशब्दयोरिट् स्यात् ॥३॥

**(लङो ध्वस्य नेट् )** ऐड्ढ्वम् । ईडांचक्रे । ऐडिष्ट ॥ **ईश ऐश्वर्ये** । ईष्टे । ईशिषे । ईशिध्वे । ईशांचक्रे । ईशितासे ॥ **आस उपवेसने** । आस्ते आध्वे । आसांचक्रे ॥ **वस आच्छादने** । वस्ते । ववसे । अवसिष्ट ॥ **षूङ् प्राणिगर्भविमोचने** । सूते । नुधातोः । सुवाते । सूताम् ॥

(सु०) लङो ध्वस्य नेट् । ईडीशिभ्यां परस्य लङो ध्वशब्दस्य इण्न स्यात् ॥ आस उपवेशने । उपवेशनं स्थितिः । धे चेति सलोपे आध्वम् । कासादिप्रत्ययादित्याम् । आसांचक्रे ॥ वस आच्छादने । धे चेति सलोपे । वध्वे । शसददेत्येत्वपूर्वलोपौ न ववसे । षूङ् प्राणिगर्भविमोचने । प्राणिगर्भविमोचनं प्रसवः ॥ ४ ॥

**(सुवो न गुणश्चतुर्षु)** सुवावहै ॥ सुषुवे । सविषीष्ट-सोषीष्ट । सविता-सोता । **शीङ् स्वप्ने** ॥५॥

(सु०) **सुवो न गुणश्चतुर्षु** ॥ सुवो गुणो न स्यात् त्यादिषु चतुर्षु । स्वरतिसूतीति विकल्पं बाधित्वा कित इति निषेधे प्राप्ते क्रादेर्णादेरिति नित्यमिट् ॥ नुधातो रित्युव् । सुषुविषे ॥ स्वरतिसूतीति वेट् । सविषीष्ट-सोषीष्ट ॥ शीङ् स्वप्ने । स्वप्नमालस्यं निद्रा च ॥५॥

---

( क ) **नमो वाकमिति** । 'नमस्ते रुद्रमन्यवं' इत्यादि नमो वचनम् । नमस्कारमित्यर्थः । प्रशास्महे—कुर्महे । वाक इत्यत्र वचोर्भावे । घञ् । 'चजोः कगौ इति' कत्वम् ।

(ख) **'शिङ्क्ते' इति** । अथ कथं "तालैः शिञ्जद्वलयसुभगै"रिति, उच्यते, अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् शतृप्रत्ययो बोध्य इति ।

**( शीङो गुणश्चतुर्षु )** (क) ॥ शेते, शयाते ॥ ६ ॥

( सु० ) **शीङो गुणश्चतुर्षु** ॥ क्ङित्यग्घुसीत्यस्यापवादः ॥ ६ ॥

**( शीङोऽतो रुट् ॥ )** शीङः परस्यातो रुडागमः ॥ शेरते । शेताम् ॥ अशेत, अशेरत । शिश्ये (ख) । अशयिष्ट ॥ **इङ् अध्ययने ।** अधिपूर्वः । अधीते, अधीयाते, अधीयते । अधीयीत, अधीयीयाताम् । अध्ययै । अध्यैत (ग), अध्यैयाताम् ॥ ७ ॥

( सु० ) **शीङोऽतो रुट्** ॥ शीङः परस्यातः प्रत्ययस्य रुडागमः स्यात् । नुधातोरिति यः । शिश्ये ॥ इङ् अध्ययने । अध्ययनं पठनम् । नुधातोरितीय् । अधीयाते । आतोऽन्तोऽदनत इत्यत् । अधीयते । लोटि उत्तमपुरुषे गुणायादेशयोः कृतयोरुपसर्गस्य इयं स्वरे इति यत्वम् । अध्ययै । लङि । अध्यैत । प्रथममियू ततोऽटौ अध्यैयाताम् । अध्यैयत । उत्तमे तु । अध्यैयि, अध्यैवहि ॥ ७ ॥

( त० ) **अध्यैयातामिति** ॥ परत्वादियादेशे पुनरडागमद्वयेन सिद्धिः ॥ ७ ॥

**( इङो णादौ गाङ् )** (घ) अधिजगे । अध्येषीष्ट ॥ ८ ॥

(सु०) **इङो णादौ गाङ्** ॥ इङो गाङादेशः स्याल्लिटि ॥ आतोऽनपीत्यालोपे अधिजगे ८

**( इङो वा गीर्लुङ्लृङोर्गुणाभावश्च )** अध्यगीष्यत–अध्यैष्यत । अध्यगीष्ट–अध्यैष्ट (ङ) ॥ **ह्नुङ् अपनये ।** ह्नुते । ह्नुवीत । जुह्नुवे । ह्नोषीष्ट । अह्नोष्ट ॥ ९ ॥

( सु० ) **इङो वा गीर्लुङ्लृङोर्गुणाभावश्च** ॥ इङो गी रित्यादेशो वा स्यात् गुणनिषेधश्च लुङ्लृङोः परयोः ॥ इति सुबोधिन्यामात्मनेपदम् ॥ ९ ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । अगाङ्गादिमध्यस्थमात्मनेपदसाधनम् ॥

इति तत्त्वदीपिकायामात्मनेपदम् ।

---

**द्विष अप्रीतौ (च)।** द्वेष्टि, द्विष्टः । द्वेष्टु । द्विड्ढि । अद्वेट्–अद्वेड्,

---

( क ) **शीङ् इति ।** ङिति प्रत्ययेऽपि गुणविधानार्थं वचनमिदमाह । एवञ्च—शीङ्धातोर्गुणो भवति पिति ङिति च प्रत्ययेऽब्विषय इत्यर्थः ।

( ख ) **'शिश्ये' इति ।** लिट्लकारे 'द्विश्च' 'ह्रस्वः' 'नुधातोः' अनेन यकारो भवति ।

( ग ) **अध्यैयातामिति ।** पूर्वमियादेशो पश्चादडागमद्वयम् ।

( घ ) **इङोणादाविति ।** इह गाङिति सर्वादेशः। लिटि 'अधि गा णप्' इति जाते 'द्विश्च' 'ह्रस्वः' 'कुहोश्चुः' 'आतोऽनपि अनेनाकारलोपे' **'अधिजगे'** इति रूपम् ।

( ङ ) अधीतेर्लुङि **'इङो वा'** इति गुणाभावः। 'भूते सि' 'क्लिात्' ष्टुत्वम् । **अध्यगीष्ट ।** गीरादेशाभावेऽडागमद्वयम् । 'गुणः' 'एऐऐ' 'इयं स्वरे' **अध्यैष्ट ।** अध्यैषाताम् । अध्यैषत । इत्यादिरूपम् ।

इति चक्रधराख्यटिप्पण्यामदादेरात्मनेपदं समाप्तम् ।

( च ) **द्विष अप्रीतौ ।** अकार उभयपदार्थः । लट् लकारे–तिबादयस्तआदयश्च प्रत्यया भवन्ति । 'अप् कर्त्तरि' अनेन चतुर्षु लकारेषु अप्प्रत्ययो भवति । 'अदादेर्लुक्' अनेन तस्य लुग् भवति । द्विष् तिप्–इति जाते 'गुणः' ष्टुभिः ष्टुः, **द्वेष्टि, द्विष्टः,** द्विषन्ति । द्विष् सिप् इति स्थिते, 'गुणः, 'षढोः कः से,

अद्विष्टाम्, अद्विषुः-अद्विषन्। दिद्वेषिथ। द्विक्षीष्ट। अद्विक्षत्॥ **दुह प्रपूरणे**। दादेर्घः। तथोर्धः। दोग्धि, दुग्धः, दुहन्ति। धोक्षि। दुग्धे। दोग्धु। दुग्धि। दोहानि। अधोक्-अधोग्। दुदोह। धुक्षीष्ट। अधुक्षत्। अदुग्ध-अधुक्षत, अधुक्षाताम्। अदुग्धाः-अधुक्षथाः। अधुग्ध्वम्-अधुक्षध्वम्। अदुह्वहि-अधुक्षावहि॥ **दिह उपचये**। देग्धि॥ **लिह आस्वादने**। लेढि, लीढः॥ **ष्टुञ् स्तुतौ**। स्तौति-स्तवीति, स्तुतः-स्तुवीतः, स्तुवन्ति। स्तौषि-स्तवीषि। स्तुते-स्तुवीते। स्तुवीष्व। अस्तौत्। तुष्टोथ। तुष्टुव। तुष्टुम। स्तोषीष्ट॥*॥

( सु० ) **द्विष अप्रीतौ**॥ अप्रीतिः अत्रुता। ष्टुत्वम्। द्वेष्टि। द्विष्टे। द्विष्यात्। द्विषीत। द्विष्टाम्। हौ ष्टुत्वम्। झभे जबा इति डत्वम्। द्विड्ढि। द्वेषाणि। द्वेषे। दिस्योरिति दिप्सिपोर्लोपः। वावसाने इति वा टः। अद्वेट्-अद्वेड्। आदन्ताद्विष इत्यन उस् वा। अद्विषुः-अद्विषन्। आति तु अद्विष्ट। दिद्वेष। दिद्विषे। द्विष्यात्। षढोरिति कः षत्वं च। द्विक्षीष्ट। द्वेष्टा। द्वेक्ष्यति। द्वेक्ष्यते। अद्वेक्ष्यत्। अद्वेक्ष्यत। हशषान्तादिति सक्। अद्विक्षत्। अद्विक्षत। आति सको लोप इत्यल्लोपे अद्विक्षाताम्। दुह प्रपूरणे। प्रपूरणं त्यजनम्। दादेर्घ इति घः। तथोरिति तस्य धः। झभे जबा इति गः। दोग्धि। सिपि तु घत्वम्। आदिजबानामिति धः। खसे चपा इति कः षत्वं च। धोक्षि। लङि दिस्योरिति दिप्सिपोर्लोपः। घत्वधत्वकत्वानि। अधोक्। लुङि हशषान्तादिति सक्। घत्वधत्वकत्वषत्वानि। अधुक्षत्। आति तु अधुक्षत। दुहदिहेति सको लुक्, पक्षे तन्थास्ध्वंवहिषु लङ्वत्। घत्वं तथोर्ध इति धत्वम्। झभे जबा इति गः। अदुग्ध। अदुग्धाः। धत्वे अदुग्धम्। अदुह्वहि॥ दिह उपचये। उपचयो वृद्धिः॥ लिह आस्वादने। हो ढ इति ढः। तथोर्द्ध इति धः। ष्टुत्वम्। ढि ढो लोप इति ढलोपः। लेढि। सिपि

अनेन षस्य कः। 'किलात्' द्वेक्षि, द्विष्ठः, द्विष्ठ, द्वेष्मि, द्विष्वः, द्विष्मः। आत्मनेपदपक्षे—द्विष्टे, द्विषाते द्विषते इत्यादिरूपम्।

विधौ लिङि—द्विष्यात् द्विष्याताम्, द्विष्युः। आत्मनेपदपक्षे—द्विषीत, द्विषीयाताम्, द्विषीरन्। इत्यादिरूपम्।

लोटि—द्वेष्टु—द्विष्टात्, द्विष्टाम्, द्विषन्तु। द्विष् हि इति जाते 'झसाद्धिर्हेः' 'षो डः' ष्टुत्वम्। द्विड्ढि द्विष्टात्, द्विष्टम्, द्विष्ट, द्वेषाणि, द्वेषाव, द्वेषाम। आत्मनेपदपक्षे—द्विष्टाम, द्विषाताम्, द्विषताम्। इत्यादिरूपम्।

लङि—द्विष् दिप् इति जाते 'गुणः' 'षो डः' 'दिस्योर्हसात्' 'वावसाने' 'दिवादावट्', अनेन पूर्वमडागमः। अद्वेट्—अद्वेड्, अद्विष्टाम्, 'आदन्ताद्द्विषोऽन उस' अनेन वा अन उस् भवति, अद्विषुः—अद्विषन्। अन्यानि सुगमानि। आत्मनेपदे—अद्विष्ट, अद्विषाताम्, अद्विषत। इत्यादिरूपम्।

लिटि—द्विष् णप् इति स्थिते 'द्विश्च' 'पूर्वस्य' 'उपधाया लघोः' अनेन गुणः, दिद्वेष, दिद्विषतुः, दिद्विषुः, दिद्वेषिथ। आत्मनेपदे-दिद्विषे, द्विद्विषाते, द्विद्विषिरे। इत्यादिरूपम्।

आशीर्लिङि—परस्मैपदपक्षे, द्विष्यात्। आत्मनेपदपक्षे, 'सिस्योः' अनेन गुणाभावः 'षडोः कः से' 'किलात्' द्विक्षीष्ट।

ढत्वम् । षढोरिति कः । षत्वम् । लेक्षि । हौ ढत्वं झसादिति हेर्धिः । ष्टुत्वम् । ढि ढ इति ढलोपपूर्वदीर्घौ । लीढि । लुङि हशषान्तादिति सक् । अलिक्षत् । आति तु अलिक्षत । दुहदिहेति सको लुक्पक्षे ढत्वधत्वष्टुत्वढलोपपूर्वदीर्घाः । अलीढ । आति सक इत्यलोपे । अलिक्षाताम् , अलिक्षन्त । अलीढाः-अलिक्षथाः । अलोपः । अलिक्षाथाम् । अलीढ्वम्-अलीक्षध्वम् । अलिक्षि, अलिह्वहि-अलिक्षावहि, अलिक्षामहि । ओरौ इत्यौ । स्तौति । तुरुस्तुभ्य इतीड् वा । स्तवीति । नुधातोरित्युव् । स्तुवन्ति ॥ * ॥

**स्तुसुधूञ्भ्यः पे सेरिट्** ) अस्तावीत् । अस्तोष्ट ॥ **ब्रूञ् व्यक्तायां वाचि ॥ १ ॥**

(सु०) **स्तुसुधूञ्भ्यः पे सेरिट्** ॥ ष्टुञ् स्तुतौ । षुञ् अभिषवे । धूञ् कम्पने । एषां परस्मैपदस्य सेरिट् आति तु न । धातोर्नामिन इति वृद्धिः । अस्तावीत् । आति तु गुणः । षत्वष्टुत्वे । अस्तोष्ट ॥ १ ॥

**अबादावीप्पिति त्स्मि (क)** ॥ ब्रुव ईप्प्रत्ययोऽबादौ पिति त्स्मि । ब्रवीति, ब्रूतः, (ख) ब्रुवन्ति ॥ २ ॥

( सु० ) **अबादावीप्पिति त्स्मि** । ब्रुवः परेषां पितां तिबादीनां चतुर्णां तकारसकारमकारादिप्रत्ययानामीबागमः स्यात् ॥ २ ॥

(त०) **अबादाविति** ॥ अप् आदिः स्थानी यस्य स तथा अब्लुक् तेन लुग्विषय इत्यर्थः । त्स्मीत्यत्र हि सतकारको निर्देशः । दस्य खसे चपा इति तः । तेनाब्रवीदिति सिद्ध्यति ॥ २ ॥

**ब्रुव आहश्च पञ्चानाम्** ॥ ब्रुवः परेषां तिबादीनां पञ्चानां णवादयः पञ्चादेशा वा स्युः ब्रुव आहश्च ॥ आह, आहतुः, आहुः ॥ ३ ॥

(सु०) **ब्रुव आहश्च पञ्चानाम्** ॥ ब्रुवः धातोराहादेशः । अकार उच्चारणार्थः । तिबादीनां पञ्चानां क्रमेण णवादयः पञ्चादेशाश्च ॥ अत्र द्विश्चेति द्वित्वं न (ग) उक्तार्थ इत्युक्तत्वात् ॥ ३ ॥

(त०) **पञ्चानामिति** ॥ आदेशादेशिनोः संख्यासाम्यादादेशा अपि पञ्चैव ग्राह्याः । द्विश्चेत्यत्र परोक्षार्थणादियोगे द्वित्वविधानादेतद्योगे द्वित्वं न ॥ ३ ॥

---

लुटि—'उपधाया लघोः' अनेन गुणः, द्वेष्टा । अन्येषां लकाराणां रूपाणि सुगमानि ।

लङ्लकारे—'हशषान्तात्सक्' अनेन सक्, कित्त्वाद् गुणाभावः, 'षढोः कः से' 'किलात्' अद्विक्षत् अद्विक्षताम्, अद्विक्षन् । आत्मनेपदेऽपि–सक्प्रत्ययः, अद्विक्षत, आति सको लोप इत्यल्लोते अद्विक्षाताम् अद्विक्षत, अद्विक्षथाः, अद्विक्षाथाम् । अन्यानि सुगमानि ।

( क ) **अबादाविति** अत्र 'ब्रुव आह' इत्यतो ब्रुव इत्यनुवर्त्तते । अपि इत्येव सिद्धे आदिशब्द उत्तरार्थः । तेन जायते जानाति इत्यत्र यनाप्रत्ययेऽपि जादेशो भवति । अत्र विषयसप्तमी । पिति किम्, ब्रूतः । अबादाविति किम्, वक्ता ।

( ख ) **ब्रूत इति** । अत्र प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेन गुणप्राप्तौ लुकि न तन्निमित्तमिति गुणाभावः ।

( ग ) **अत्र द्विश्चेति** । यदादेशस्तद्वद्भवतीति न्यायेनोक्तार्थत्वाभावान्न द्वित्वं नापि परोक्षतेति भावः ।

**तस्थे** ॥ आहो ह्रस्य तस्थे परे ॥ आत्थ, आहतुः । ब्रूते । ब्रवीतु । अब्रवीत् ॥४॥

(सु०) **तस्थे** ॥ आह इत्यनुवर्त्तते तच्च षष्ठ्या विपरिणम्यते। षष्ठीनिर्दिष्टत्वेनान्त्यस्य ह्रस्येत्यर्थः ॥ ४ ॥

(त०) **तस्थ** इति ॥ आह इत्यनुवर्त्य तच्च षष्ठ्या विपरिणम्य षष्ठीनिर्दिष्टत्वेनान्त्यस्येत्याह—ह्रस्येति ॥ ४ ॥

( **ब्रुवोऽनपि वच्** ) (क) उवाच । ऊचे । अवोचत् । अवोचत । आदाथ इः ॥ अवोचेताम्, अवोचन्त । अवोचेथाः । अवोचेथाम् , अवोचध्वम् । अवोचे । अवोचावहि ॥ **ऊर्णुञ् आच्छादने** ॥ ५ ॥

(सु०) **ब्रुवोऽनपि वच्** ॥ ब्रुवो ववादेशः स्याद्चतुर्षु । णवादौ पूर्वस्येति पूर्वस्य संप्रसारणम् । उवाच । यजामिति संप्रसारणम् । ऊचतुः। अस्यतिवक्ती ङः वचेरित्युम्। अवोचत् । ऊर्णुञ् आच्छादने । आच्छादनमावरणम् ॥ ५ ॥

( **ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु** ) ऊर्णोति, ऊर्णौति, ऊर्णुतः, ऊर्णुवन्ति । ऊर्णुते (ख) । ऊर्णुयात् । ऊर्णुवीत (ग) । ऊर्णौतु । ऊर्णोतु । ऊर्णुहि (घ) ॥ ६ ॥

(सु०) **ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु** ॥ ओरौ इति नित्ये औत्वे प्राप्ते इति विभाषा ॥ हसादौ । किम् ऊर्णवानि । पिति किम् । ऊर्णुतः । वृद्ध्यभावे गुणः । ऊर्णोति । नुधातोरित्युव् ऊर्णुवन्ति ॥ ६ ॥

(त०) **ऊर्णोतेरिति** । श्तिपा निर्देशो यङ्लुग्व्यावृत्त्यर्थः ॥ ६ ॥

(**ऊर्णोतेर्गुणो दिस्योर्वृद्धेरपवादः**) और्णोत् । और्णो (ङ)॥७॥

---

( क) ब्रुवोनऽपीति। एतत्सूत्रारम्भसामर्थ्याद् 'वच परिभाषणे' इति धातोरनप्विषये प्रयोगाभावः। अन्यथा 'वक्ता' इत्यादिरूपं स्वतन्त्रस्यैव धातोर्भविष्यति, किमनेन । एवमपि–'अस्तेरनपि भूः' इति सूत्रारम्भसामर्थ्यात् भूधातोरनपि स्वतन्त्रस्य प्रयोग इति केचित् ।

( ख ) लटलकारे–ऊर्णोति, ऊर्णौति, ऊर्णुतः, ऊर्णुवन्ति । ऊर्णोषि, ऊर्णौषि, ऊर्णुथः, ऊर्णुथ । ऊर्णोमि, ऊर्णौमि, ऊर्णुवः, ऊर्णुमः । आत्मनेपदपक्षे–ऊर्णुते, ऊर्णुवाते, ऊर्णुवते, ऊर्णुषे, ऊर्णुवाथे, ऊर्णुध्वे । ऊर्णुवे ऊर्णुवहे, ऊर्णुमहे ।

( ग ) विधौ लिङि–ऊर्णुयात्, ऊर्णुयाताम्, ऊर्णुयुः, ऊर्णुयाः, ऊर्णुयातम्, ऊर्णुयात, ऊर्णुयाम्, ऊर्णुयाव, ऊर्णुयाम, ऊर्णुवीत, ऊर्णुवीयाताम् , ऊर्णुवीरन्, ऊर्णुवीथाः, ऊर्णुवीयाथाम्, ऊर्णुवीध्वम्, ऊर्णुवीय, ऊर्णुवीवहि, ऊर्णुवीमहि ।

( घ ) ऊर्णौतु, ऊर्णोतु, ऊर्णुतात् ऊर्णुताम्, ऊर्णुवन्तु, ऊर्णुहि, ऊर्णुतात्, ऊर्णुतम्, ऊर्णुत, ऊर्णवानि, ऊर्णवाव, ऊर्णवाम । ऊर्णुताम्, ऊर्णुवाताम्, ऊर्णुवताम् , ऊर्णुस्व, ऊर्णुवाथाम्, ऊर्णुध्वम्, ऊर्णवै, ऊर्णवावहै, ऊर्णवामहै ।

( ङ ) लङ्लकारे—और्णोत्, और्णुताम् , और्णुवन् , और्णोः, और्णुतम् , और्णुत, और्णवम् , और्णुव, और्णुम । और्णुत, और्णुवाताम्, और्णुवत । और्णुथाः, और्णुवाथाम्, और्णुध्वम् । और्णवि, और्णुवहि, और्णुमहि ।

(सु०) ऊर्णोतेर्गुणो दिस्योर्वृद्धेरपवादः ॥ ऊर्णोतेर्गुणः स्यात् दिपि सिपि च ऊर्णोतेर्वा इत्यस्यापवादः ॥ ७ ॥

**ऊर्णोतेराम्न ॥ ८ ॥**

(सु०) ऊर्णोतेराम्न ॥ अनेकस्वरत्वात्प्राप्त आम् अनेन निषिध्यते ॥ ८ ॥

**स्वरादेः परः ॥** स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः । सस्वरो द्विर्भवति

(सु०) स्वरादेः परः ॥ सस्वर आदिरित्यस्यापवादः । अद्विरुक्तेत्युक्तत्वात् ॥ ९ ॥

(त०) स्वरादेरिति ॥ सस्वर आदिरित्यस्यापवादः ॥ अद्विरुक्त इति ॥ तेन इयाजेत्यादौ नातिप्रसंगः ॥ ९ ॥

**(स्वरात्पराः संयोगादयो नदरा द्विर्न)** ऊर्णुनाव, ऊर्णुनुवतुः १०

(सु०) स्वरात्पराः संयोगादयो नदरा द्विर्न ॥ संयोगस्यादयः संयोगादयो नकारदकाररकारास्तेषां द्वित्वं नेत्यर्थः ॥ यथा उन्दी । उन्दिदिषति । इन्दि । इन्दिदिषति । अड्डु । अड्डिडिषति । अर्च । अर्चिचिषति ॥ इयायेत्यादौ नातिप्रसंगः ॥ १० ॥

(त०) आद्योच्चारणनकार एव णत्वं तु पश्चात् इत्यनेन विधीयते तेन नुशब्दस्य द्वित्वम् १०

**( ऊर्णोतेरिडादिप्रत्ययो वा ङित् )** ऊर्णुनुविथ - ऊर्णुनविथ (क) ऊर्णुविता—ऊर्णविता । ऊर्णोतेर्वा वृद्धिः सौ पे । पक्षे वा गुणः । और्णावीत्, और्णाविष्टाम् । और्णवीत्—और्णुवीत् । और्णुविष्टाम् । और्णविष्ट—और्णुविष्ट (ख) ॥ इत्यदादयः ॥ ११ ॥

(सु०) ऊर्णोतेरिडादिप्रत्ययो वा ङित् ॥ ङित्वपक्षे तु नुधातोरित्युव् । ऊर्णुनुविथ । पक्षे गुणः । ऊर्णुनविथ । और्णावीत्-और्णवीत्-और्णुवीत् ॥ इत्यात्वे ॥ ११ ॥

इति सुबोधिन्यामदादयः ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । गणोऽदादिरगादेष शेषभाषितपृष्ठगः ११

इति तत्त्वदीपिकायामदादयः ॥ २ ॥

---

# अथ ह्वादयः ॥ ३ ॥

**हु दानादनयोः । ह्वादेर्द्विश्च ॥** हु इत्यादेरुत्पन्नस्यापो लुक् धातोश्च द्वित्वम् ॥ जुहोति, जुहुतः ॥१॥

---

(क) लिट्लकारे—ऊर्णुनाव, ऊर्णुनुवतुः, ऊर्णुनुवुः । ऊर्णुनुविथ, ऊर्णुनविथ, ऊर्णुनुवथुः, ऊर्णुनुव । ऊर्णुनाव, ऊर्णुनुविव, ऊर्णुनुविम । ऊर्णुनुवे, ऊर्णुनुवाते, ऊर्णुनुविरे । अन्यानि सुगमानि ।

आशीर्लिङि—'ये' अनेन दीर्घः । ऊर्णूयात्, ऊर्णूयास्ताम्, ऊर्णूयासुः । आत्मनेपदपक्षे-ङित्त्वाद् विकल्पेन गुणः, ऊर्णुविषीष्ट, ऊर्णविषीष्ट । अन्येषां रूपाणि ज्ञातव्यानि । विस्तरभयान्न लिख्यन्ते ।

(ख) लुङ्लकारे—ऊर्णोतिधातोर्वा वृद्धिर्भवति सिप्रत्यये परे । अनेनास्य वा वृद्धिः । द्वौ अडागमौ भवतः । और्णावीत, पक्षे गुणो भवति, और्णवीत्, पक्षे ङित्वात् वा उव् भवति, और्णुवीत् । आत्मनेपदे-और्णाविष्ट, और्णाविषाताम् । पक्षे-और्णविष्ट, और्णुविष्ट, और्णुविषाताम्, और्णुविषत, इति ।

इति चक्रधराख्यटिप्पण्यामदादिप्रक्रिया समाप्ता ।

(सु०) हु दानादनयोः ॥ आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः (क) ॥ ह्वादेर्द्विश्च ॥ हु आदिर्यस्य स ह्वादिस्तस्य ह्वादः । अह्वादेरित्यतो लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते ह्वादेरिति कर्मणि षष्ठी । उच्चारणक्रियायाः कर्मत्वात् । तथा च लुकि सति ह्वादिर्द्विवारमुच्चारणीय इति फलितम् । द्विः प्रयोगो द्विर्वचनमिति सिद्धान्तः १

(त०) हु दानादनयोः ॥ दानमिह प्रक्षेपमात्रम् । अग्नौ हविषश्चेति स्वभावाल्लभ्यते (ख) । अस्य च नित्यपरस्मैपदित्वात् कुत्रचिद्धोष्यत इत्यादिप्रयोगाः प्रामादिका एव । 'समाराग्नौ जुह्वाना' इत्यत्र न शानः किंतु आनश्प्रत्ययान्तम् ॥ ह्वादेः ॥ हु आदिर्यस्य स तथा तस्य । द्वौ वारावित द्विः । योग्यतयेहोच्चारणक्रिया लभ्यते । तदावृत्तौ द्विरुब्दात्सुः । लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते । तस्मिन्सतीत्यर्थः ॥ १ ॥

**द्वेः** ॥ द्विरुक्तात्परस्यान्तोऽत् ॥ जुह्वति । जुहोषि, जुहुथः, जुहुथ । जुहोमि, जुहुवः, जुहुमः । जुहुयात् ॥२॥

(सु०) द्वेः ॥ द्वेः किम् । युवन्ति । हुश्नुवोरिति वः जुह्वति ॥ २ ॥

(त०) द्वेः ॥ द्विर्वचनमस्यास्तीति विग्रहे मत्वर्थीयः इप्रत्ययोऽव्ययस्य तद्धिते यस्वरयोर्टिलोपश्चास्मादेव लिङ्गात् द्विस्तस्मात् । अन्तोऽत् इति द्वयमप्यनुवृत्तम् ॥ २ ॥

( **जुहोतेर्हेर्धिः** ) जुहुधि । अजुहोत् ॥३॥

(सु०) जुहोतेर्हेर्धिः ॥ जुहोतेः परस्य हेर्धिः स्यात् ॥ लोडुत्तमे तु परत्वाद् गुणः (ग) जुहवानि ॥ ३ ॥

**अन उस्** ॥ द्विरुक्तादन उस् ॥ उसि गुणः ॥ अजुहवुः । जुहाव ॥४॥

(सु०) **अन उस्** ॥ द्वेरित्यनुवृत्तम् । परत्वादुसि चेति गुणः । अजुहवुः ॥ ४ ॥

(त०) **अन उस्** ॥ द्वेरित्यनुवृत्तेराह—**द्विरुक्तादिति** ॥ ४ ॥

( **भीह्रीभृहुवामाम्वा स च लुग्वत्** ) जुहवांचकार । ये । हूयात् । होता । होष्यति । अहोषीत् ॥ **ञिभी भये** । बिभेति ॥ ५ ॥

(सु०) **भीह्रीभृहुवामाम्वा स च लुग्वत्** ॥ एभ्यश्चतुर्भ्यो वाम् प्रत्ययो भवति लिटि स चाम् लुग्वत् ॥ कार्यातिदेशोऽयम् । तेन लुकि सति यत्कार्यं द्वित्वादि तदामि परेऽपि भवतीत्यर्थः । जुहवांचकार । पक्षे जुहाव । ये इति दीर्घः । हूयात् । होता । होष्यति । अहोष्यत् । धातोर्नामिन इति वृद्धिः । अहौषीत् ॥ ५ ॥

(**ङिति हसे भीह्राकोरिद्वा**) बिभीतः—बिभितः, बिभ्यति । बिभीयात्—बिभियात् । बिभेतु—बिभीतात्—बिभितात् । अबिभयुः । बिभयांचकार—

(क) **दानमिति** । यद्यपि स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादानमेव दानं तथापि प्रयोगमनुसृत्य व्याचष्टे—**प्रक्षेप इति** ।

(ख) **अग्नाविति** । आहवनीयादावित्यर्थः । **हविष इति** । विधिबोधितद्रव्यस्येत्यर्थः । **स्वभावादिति** । तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः पुरोडाशो वा गर्तादौ स तु प्रक्षेपो न होम इति ज्ञेयम् ।

( ग ) **परत्वादिति** । उवर्णान्तेषु हुश्नुवो'रिति वत्वापेक्षया परत्वादित्यर्थः ।

बिभाय । अभैषीत् ॥ **ह्री लज्जायाम्** । जिह्रेति । अजिह्रयुः । जिह्रयांचकार—जिह्राय । ह्रियात् । ह्रता । अह्रैषीत् ॥ **पॄ पालनपूरणयोः** ॥६॥

(सु०) **ङितिहसे भीहा कारित्रा** ॥ अनयोः स्वरस्य वेकारो भवति ङिति हसे परे ६

**ऋप्रोरिः पूर्वस्य** ॥ ऋपोः पूर्वस्यात इत् लुकि ॥ पिपर्ति ॥७॥

(सु०) **ऋप्रोरिः पूर्वस्य** ॥ ऋ गतौ । पॄ पालनादौ गुणे कृते । पिपर्ति ॥ ७ ॥

**पोरुर्** ॥ पवर्गात् वकाराच्च ॠत उर् अगुणवृद्धिविषये । य्वोर्वि हसे । पिपूर्तः, पिपुरति । पिपूर्यात् । पिपर्तु—पिपूर्तात्, पिपूर्ताम्, पिपुरतु । दिस्योरीसात् । अपिपः । पपार, पपरतुः । पपरिथ । पूर्यात् । परिता—परीता । परिष्यति—परीष्यति । अपारीत् ॥ **पृ पालनपूरणयोः** । पिपर्ति, पिपृतः, पिप्रति । पिपृयात् । पिपर्तु । पिपृतात्, पिपृताम्, पिप्रतु । पिपृहि—पिपृतात् । पिपृतम्, पिपृत । पिपराणि, पिपराव, पिपराम । अपिपः, अपिपृताम् । पपार, पप्रतुः, पप्रुः । पपर्थ । प्रियात् । पर्ता । परिष्यति । अपरिष्यत् । अपार्षीत्, अपार्ष्टाम् ॥ **ओहाक् त्यागे** । जहाति ॥८॥

(सु०) **पोरुर्** ॥ पवर्गात् वकारादुत्तरस्य ऋत उर् अगुणवृद्धिविषये ॥ यथा बुबूर्षति । य्वोर्वि हसे इति दीर्घः । पिपूर्तः । द्वेरित्यन्तोऽत् । पिपुरति । दिस्योरिति दिप् सिपोर्लुक् । अपिपः । उसि तु गुणः अपिपरुः । ऋसंयोगादित्यकित्वाद्गुणः पपरतुः । वृङ्वृञिति वेटो दीर्घः । परिता—परीता ॥ ८ ॥

(त०) **पोरुर्** ॥ धात्ववयवात्पवर्गादिति बोध्यम् । तेन समीर्णमित्यादौ नातिप्रसङ्गः ॥

**द्वेस्तौ** ॥ द्विरुक्तस्य धातोरातो लोपो ङिति स्वरे ईकारश्च ङिति हसे ॥ जहितः—जहीतः । जहति ॥९॥

( **हाको यादादावालोपः** ) जह्यात् ॥ १० ॥

( सु० ) **द्वेस्तौ** ॥ द्वौ वारावितिं द्विरुच्चारणे सुप्रत्ययः । द्विरकारि इति जिर्डित्करणे इति जिः । जौ स्वन्तस्य टिलोपः । औणादिके इप्रत्यये जिलोपः । अत्रानुवृत्त्यैव ईलोपयोर्लाभेऽपि अनन्तरत्वादीकारस्यैव ग्रहणं मा भूदित्येतदर्थं तावित्युक्तम् ॥ ननु तर्हि द्वेश्चेति पाठ्यम्, अनन्तरत्वादीश्चालोपोऽनुवर्तताम् । एवं ङिति हसे लोपः । ङिति स्वरे ईरिति विपर्ययस्यापि संभवात् । तावित्युक्ते तु नातः ईहसे अनयोर्यादृशौ दृष्टौ तावेवाऽत्र स्त इति न दोषः । पक्षे भीहाकोरिति इत्वम् । जहितः । **हाको यादादावालोपः** ॥१०॥

( त० ) **द्वे स्तौ** ॥ द्वेरित्यस्य पूर्ववत्प्रक्रिया । अनुवृत्त्यैव ईलोपयोर्लाभेऽपि अन्तरत्वादीकारस्यैव ग्रहणे मा भूदित्येतदर्थं तावित्युक्तम् ॥ ओर्मोरितो लोपः । ई हसे इत्यत ईकारस्तस्य हसे इत्यनेन योगाद्धसे ईकारः । परिशेषात्स्वरे लोपः ॥ १० ॥

**ईर्वाहौ** ॥ जहातेर्हौ परे इकार ईकारश्च वा । जहिहि—जहीहि—जहाहि ।

अजहात्, अजहिताम्—अजहीताम्। अजहुः। जहौ। दादेरे। हेयात्। अहासीत् ॥ **ऋ गतौ** । असवर्णे स्वरे इय् ॥ इयर्ति, इयृतः, इय्रति । इयृयात्। इयर्तु। ऐयः, ऐयृताम्, ऐयरुः। आर, आरतुः आरुः। अत्त्यर्तिव्ययतीनामितीट् ॥ आरिथ। आरत् ॥ **सृ गतौ** । ससर्ति। ससर्थ। स्रियात्। असरत् ॥ इति पम् (क) ॥ ११ ॥

(सु०) **ईर्वा ह्रौ** ॥ जहातेर्ह्रौ परे इत्वमीत्वमात्वं च भवति ॥ अत एव भट्टिः प्रायुङ्क्त। 'जहिहि जहीहि जहाहि रामभार्याम्' इति ॥ दादेरित्येत्वम्। हेयात्। यमिरमिनमाताःमितीट्सकौ। अहासीत्। ऋप्रोरिति पूर्वस्येत्वम्। असवर्णे स्वरे इतीय्। इयात्। लङि अडागमो दिस्योरिति दिप्सिपोर्लोपः। ऐयः। उसि तु गुणः। ऐयरुः। अत्त्यर्तिव्ययतीनामिति थपि नित्यमिट्। आरिथ। आशिपि गुणोऽर्तीति गुणः। अर्यात्। हन्नृत इतीट्। अरिष्यति। सर्तिशास्त्यर्तिभ्य इति ङः। ऋवर्णदृशोरिति गुणः। आरत्, आरताम्, आरन् ११

इति सुबोधिन्यां परस्मैपदम् ॥

(त०) **ईर्वा ह्रौ** ॥ ई इरीति छेदः, तयोरभावपक्षे आकारः स्थित एव ॥ ११ ॥

कृतायामिह टीकायां लोकेशकरशर्मणा। अगमद्ध्वादिमध्यस्थपरस्मैपदसाधनम् ॥

इति तत्त्वदीपिकायां परस्मैपदम् ॥

**ओहाङ् गतौ** । **भृञां लुकि** ॥ डुभृञ्हाङ्माङां पूर्वस्यात इत् लुकि ॥ जिहीते, जिहाते, जिहते। जहे। अहास्त ॥ **माङ् माने** । मिमीते। ममे। अमास्त ॥ इत्यात् ॥१॥

(सु०) **भृञां लुकि** ॥ बहुवचनेन डुभृञ्हाङ्माङामिति त्रयाणां ग्रहणम्। ह्रेरित्यन्तोऽत्। जिहते। आतोऽनपीत्यालोपः। जहे, जहाते ॥ १ ॥

इति सुबोधिन्यामात्मनेपदम् ॥

(त०) **भृञामिति** ॥ कपिञ्जलाधिकरणन्यायेन धातुत्रयमेव लभ्यत इत्याह **डुभृञ्हाङ्माङामिति** ॥ १ ॥

कृतायामिह टीकायां लोकेशकरशर्मणा। अगमद्ध्वादिमध्यस्थमात्मनेपदसाधनम् ॥

इति तत्त्वदीपिकायामात्मनेपदम् ॥

**डुभृञ्** धारणपोषणयोः। बिभर्ति, बिभृतः, बिभ्रति। बिभृयात्। बिभर्तु। अबिभः। बिभरांचकार। बभर्थ। बभृव। बभ्र। बभृम। बभृद्वे।

---

(क) अस्मिन् ह्वादिपरस्मैपदे एते धातव उपलभ्यन्ते वैदिकास्तथा–घृ **क्षरणदीप्त्योः**। जिघर्ति। जिघर्म्यग्निं हविषा घृतेन। **हृ प्रसह्यकरणे**। जिहर्ति। अर्थं स्रुवो अभिजिहर्ति होमान्। **भस भर्त्सनदीप्त्योः**। बभस्ति। **कि ज्ञाने**। चिकेति। **तुर् त्वरणे**। तुतोर्ति। तुतूर्तः तुतरति। **धिषशब्दे**। दिधेष्टि। **धन धान्ये**। दधन्ति, दधन्तः, दधनति। **जन जनने**। जजन्ति, जजातः, जज्ञति। जजंसि। जजान। **गास्तुतौ**। देवाञ्जिगाति सुम्नयुः। जिगीतः। जिगति।

इति चक्रधराख्यटिप्पण्यां ह्वादिपरस्मैपदम्।

भृषीष्ट । अभार्षीत् । अभृत ॥ **डुदाञ् दाने** । ददाति ॥*॥

(सु०) डुभृञ् धारणपोषणयोः ॥ ड्वितस्त्रिमक् इति त्रिमक् (क) भृत्रिमम् । भृञां लुकि इति पूर्वस्येत्वम् । बिभर्ति । बिभृते । बिभृयात् । बीभ्रीत । बिभर्तु, बिभृताम् । दिस्योरिति दिप्सिपोर्लोपः । अबिभः । उसि तु गुणः । अबिभरुः । अबिभृत । भीह्रीभृहुवामामिति वाम् । बिभरांचकार । बिभरांचक्रे । पक्षे बभार । बभ्रे । यादादौ इति रिङ् । भ्रियात् । उरिति न गुणः । भृषीष्ट । भर्त्ता । हन्नृत इतीट् । भरिष्यते । अभरिष्यत् । अभरिष्यत । धातोर्नामिन इति वृद्धिः । अभार्षीत् । लोपो ह्रस्वादिति सिलोपः । अभृत ॥*॥

(त०) डुभृञिति । ड्वितस्त्रिमगर्थो डुः ॥*॥

**दादेः** ॥ द्विरुक्तानामपिद्दाधामातो लोपो ङिति ॥ दत्तः, ददति । दत्ते । ददातु ।

(सु०) दादेः ॥ द्वेरित्यनुवृत्तम् । द्वेस्तौ इत्यस्यापवादो येन नाप्राप्तिन्यायात् ॥१॥

(त०) दादेरिति ॥ द्वेस्तावित्यस्यापवादो येन नाप्राप्तिन्यायात् ॥ १ ॥

**दां हौ** ॥ अपिद्दाधामेत्वं पूर्वस्य च लोपो हौ ॥ देहि । अददात् । ददौ । ददिथ–ददाथ । देयात् । अदात् । अदित, अदिषाताम् ॥ **डुधाञ् धारणपोषणयोः** । दधाति ॥ २ ॥

(सु०) दां हौ ॥ बहुवचनेन धाञो ग्रहणम् । लिटि आतो णबित्यौकारः । ददौ । आतोऽनपीत्यालोपः । ददे । दादेरित्येत्वम् । देयात् । दादेः पे इति सेर्लुक् । अदात् । आति तु अपिद्दाधास्थामितीत्वम् । लोपो ह्रस्वादीति सिलोपः । अदिति ॥ डुधाञ् धारणपोषणयोः । दानेऽपीत्येके ॥ २ ॥

(त०) दामिति बहुवचनेन दारूपाणां ग्रहणं धाग्रहणं च ॥ २ ॥

**पूर्वस्य ङिति झसे धः** ॥ धाञः पूर्वस्य दकारस्य धो भवति ङिति झसे परे ॥ धत्तः, दधति । धत्ते । धेहि । अधात् । धेयात् । अधित, अधिषाताम् ॥ **णिजिर् शौचपोषणयोः** ॥३॥

(सु०) पूर्वस्य ङिति झसे धः ॥ धाञ् धातोरेवेत्यर्थः ॥ ङिति झसे किम् । दधाति । दधति । दादेरित्यालोपे तथोर्ध इति धत्वं न दधातेनेत्युक्तत्वात् । धत्तः । धत्ते । दादेरित्यालोपः । दध्यात् । दधीत । दधातु । धत्ताम् । अदधात् । अधत्त । दधौ । दधे । धेयात् । धासीष्ट । धाता । धास्यति । धास्यते । अधास्यत् । अधास्यत । दादेः पे इति सिलोपे । अधात् । अपिद्दास्थामितीत्वम् । अधित ॥ ३ ॥

(त०) धत्त इति ॥ तथोर्ध इत्यत्र वावसान इत्यतो वानुवृत्तेर्व्यवस्थया तस्य धत्वाभावः ३

**निजां गुणः** ॥ णिजिविजिविषां पूर्वस्य गुणो लुकि (ख) ॥ नेनेक्ति, नेनिक्तः, नेनिजति । नेनेक्षि । नेनिक्ते । नेनिज्यात् । नेनेक्तु । नेनिग्धि ॥४॥

( सु० ) निजां गुणः ॥ बहुवचनमाद्यर्थम् । बहुवचनेन त्रयाणां ग्रहणम् । णिजिर्

(क) चन्द्रास्तु ट्वितं पठित्वा भरथुरित्युदाहरन्ति । (ख) लुकीति किम् , निनेज ।

शौचपोषणयोः । विजिर् पृथग्भावे । विष्लृ व्याप्तौ । एषां पूर्वस्य गुणो लुकि ॥४॥

**द्वेः स्वरेऽपि नोपधागुणः ॥** द्विरुक्तस्य धातोरब्विषये स्वरे परे उपधाया गुणो न ॥ नेनिजानि । अनेनेक्–अनेनेग् । निनेज । निनिजे । निनिजिषे । निक्षीष्ट । अनिजत्–अनैक्षीत्, अनैक्ताम् । अनिक्त ॥ **विजिर् पृथग्भावे ।** वेवेक्ति । विवेजिथ । विक्षीष्ट । अविजत्–अवैक्षीत् । अविक्त ॥ **विष्लृ व्याप्तौ ॥** वेवेष्टि । विविषीढ्वे । विक्षीष्ट । अविषत् । तानिहशषान्तात्सक् । अविक्षत, अविक्षाताम्, अविक्षन्त॥५॥ इत्युभयपदप्रक्रिया ॥

इति ह्वादयः ॥

( सु० ) **द्वेः स्वरेऽपि नोपधागुणः ॥** द्विरुक्तस्य धातोरुपधाया गुणो न चतुर्षुपिति स्वरे ॥ द्विरुक्तस्य किम् । द्वेषाणि । स्वरे किम् । वेवेष्टि ॥ चतुर्षु किम् । निनिजे ॥ नेनेक्ति । नेनिक्ते । नेनिज्यात् । नेनिजीत । नेनेक्तु । नेनिक्ताम् । दिस्योरिति दिप्सिपोर्लोपः । अनेनेक् । अन ऊसि अनेनिजुः । अनेनिक्त । निनेज । निनिजे । निज्यात् । सिस्योरिति न गुणः । निक्षीष्ट । नेक्ता । नेक्ष्यति । नेक्ष्यते । अनेक्ष्यत् । अनेक्ष्यत । इरितो वेति वा ङः । अनिजत् । अनिटोनामीति वृद्धिः । अनैक्षीत् । आति तु । झसादिति सिलोपः । अनिक्त, अनिक्षाताम् ॥ विजिर् पृथग्भावे । विवेजिथ । अत्र विजेरिडादिप्रत्यय इति ङित्त्वं न । ओविजी भयचलनयोरित्यस्यैव तत्र ग्रहणात्(क) । णिजिविजी रुधादावपि (ख) ॥ विष्लृ व्याप्तौ । व्याप्तिः कात्स्न्र्यम् । लित्पुषादेरिति ङः । अविषत् । आति तु । हशषान्तादिति सक् । षढोरिति कः । अविक्षत । आति सको लोपः स्वरे इति अल्लोपः । अविक्षाताम्, अविक्षन्त ॥ इत्यात्मे ॥ ५ ॥

इति सुबोधिन्यां ह्वादयः ॥

( त० ) कृतायामिह टीकायां लोकेशकरशर्मणा । सङ्क्षिप्ता बालबोधार्थं जुहोत्यादिगणोऽगमत् ॥ ५ ॥		इति तत्त्वदीपिकायां ह्वादयः ॥ ३ ॥

---

# अथ दिवादयः ॥ ४ ॥

**दिवु** क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ (ग) **दिवादेर्यः** (घ) ॥ कर्तरि चतुर्षु । अपोऽपवादः ॥ य्वोर्वे हसे ॥

---

(क) **ओविजीति** । श्रूयमाणविकरणकस्य तौदादिकस्य रौधादिकस्य चैव ग्रहणमित्यत्र व्याख्यानमेव शरणमित्याशयः ।

(ख) **णिजिविजी रुधादावपीति** । रुधादौ णिजधातोः पाठाभावेन 'णिजि' इत्यस्यानन्तर पठितो विजधातुस्तत्रापि बोध्यः ।		इति चक्रधराख्यटिप्पण्यां ह्वादयः ।

(ग) दिवु **क्रीडेति** । क्रीडा खेलनम् । विजिगीषा जेतुमिच्छा । कान्तिरभिलाषः । शेषाः सुगमाः ।

(घ) **दिवादेर्यः** । अत्र केचिदनुक्तसमुच्चयार्थश्चकारोऽनुवर्त्तते, तेन 'आशम्लाशभ्रमुत्रसित्रुटिलसांयोवा' 'अनुपसर्गाद्यसः सम्पूर्वाच्चे' ति बोध्यमिति वदन्ति, तत्र, आशादीनां दिवादिभ्योऽन्यत्र पाठसत्त्वात् यसतेरुपसर्गविशेषेण विकरणविधानाच्च ।

दीव्यति । दीव्येत् । दिदेव । दीव्यात् । अदेवीत् ॥ **षिवु तन्तुसं**ताने । सीव्यति ॥ १ ॥

**(सिवादेरड्व्यवाये वा षः)** न्यषेवीत् ॥ न्यसेवीत् ॥ **स्रिवु गतिशोषणयोः** । स्रीव्यति । सिस्रेव ॥ **ष्ठिवु निरसने(क)** । ष्ठीव्यति ॥ **ष्णुसु अदनादानदर्शनेषु** । सुष्णोस ॥ **ष्णसु निरसने** । स्नस्यति ॥ **क्नसु कौटिल्ये दीप्तौ च** । चक्नसिथ । अक्नासीत् । अक्नसीत् । **व्युषु प्लुषु दाहे(ख)** । व्युव्योस । **नृती गात्रप्रक्षेपे** । नृत्यति । ननर्त ॥२॥

( सु० ) दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ उदित्करणं क्त्वाप्रत्यये इड्विकल्पार्थं क्तक्तवत्वोरनिडर्थं च । क्ङिति झसे कौ अमे चेत्यूः । द्यूत्वा-देवित्वा । द्यूतेन दीव्यन्ति माणवकाः क्रीडन्तीत्यर्थः । शत्रुं दीव्यति विजिगीषतीत्यर्थः । कान्तिरिच्छा, द्युतेः पृथग्ग्रहणात् । दिवादेर्यः । दिव् आदिर्यस्य स दिवादिः तस्माद्यप्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु परतः । य्वोरिति दीर्घः । दीव्यति ॥ षिवु तन्तुसंताने । आदेः ष्णः स्न इति सः । सीव्यति । सिवादेरड्व्यवाये वा षः । उपसर्गस्थान्निमित्तात्परस्य सिवादेः सस्याड्व्यवधाने वा षः स्यात् ॥ प्रादेश्चेत्यत्र सिवादिरुक्तः (ग) ॥ नृती गात्रविक्षेपे । नर्तने इत्यर्थः । ईदित्करणमार्दीदित इत्यनेन क्तक्तवत्वोरिण्निषेधार्थम् । यद्यपि नृततृदेतीटो विकल्पितत्वात् क्वचिद्वेट् इत्यनेनैवेष्टं सिद्ध्यति तथापि क्वचिद्वेट इति सूत्रस्य नित्यत्वज्ञापनार्थमीदित्करणम् । तेन धावु गतिशुद्ध्योरित्यस्मात् क्तप्रत्यये इटि च 'धावितमिभराजधिया' इत्यादि सिद्धम् ॥ १ ॥

( त० ) दिवु ॥ व्यवहारः क्रयादिः । उकारः क्तप्रत्यये इड्विकल्पार्थः ॥ **दिवादेर्यः** दिव आदिर्यस्य स तथा तस्मात् ॥ **अपोऽपवाद** इति ॥ अपो गणविशेषाकाङ्क्षाभावात्प्राप्तेः ॥ **दीव्यतीति** ॥ यप्रत्ययस्य ङित्त्वाद् गुणो न ॥ २ ॥

( **नृततृदछृदचृतकृद्भ्योऽसेः सादेरिड्वा** ) नर्तिष्यति—नर्त्स्यति । अनर्तीत् ॥ **त्रसी उद्वेगे** । भ्राशम्लाशेति वा यः । त्रस्यति—त्रसति । तत्रास, तत्रसतुः ॥ **कुथ पूतीभावे** । कुथ्यति । चुकोथ—चुकोथिथ ॥ **पुथ हिंसायाम्** । पुथ्यति । अपोथीत् ॥ **गुध परिवेष्टने** । गुध्यति । अगोधीत् ॥ **क्षिप प्रेरणे** । क्षिप्यति । क्षेप्ता । अक्षैप्सीत् ॥ **पुष्प विकसने** । पुष्प्यति ॥ पुपुष्प ॥ **तिम् तीम् ष्टिम् ष्टीम् आर्द्रीभावे** । तिम्यति । तीम्यति । तितेम । तिष्टीम ॥ **व्रीड लज्जायाम्** । व्रीड्यति । विव्रीड ॥ **इष गतौ** । इष्यति । इयेष । ईषतुः ।

---

(क) **ष्ठिवु निरसन इति** । केचिदिहेमं न पठन्ति ।

(ख) **व्युषुदाह इति** । अयं दन्तोष्ठादिर्मूर्द्धन्यान्तः । तथा च—वधके त्रिकटुकपर्याये व्योषशब्दः पठ्यते

(ग) सिवुसहसुट्स्तुस्वञ इति सिवादयः ।

एषिता । ऐषीत् ॥ **षह षुह तृप्तौ** (क) । सह्यति । ससाह, सेहतुः, सेहुः । असहीत् । सुह्यति ॥ **जॄषिर् झॄष् वयोहानौ ।** जीर्यति । जजरतुः—जेरतुः । जीर्यात् । जरिता—जरीता । ऋद्दृशोऽङि गुण इत्यनेन गुणः । अजरत्—अजारीत् । झीर्यति । जझरतुः । अझारीत् ॥ **शो तनूकरणे ॥३॥**

( सु० ) **नृततृदच्छृदचृतकृद्भ्योऽसेः सादेरिड्वा ॥** एभ्यः परस्य सिभिन्नस्य सादेः प्रत्ययस्येड्वा स्यात् ॥ उतृदिर् हिंसानादरयोः । उच्छृदिर् दीप्तिदेवनयोः । कृती छेदने । असेरित्युक्तत्वादिह नित्यमिट् । अनर्तीत् । स्यप्रत्यये निर्नर्तिष्यति-निर्नर्त्स्यति । त्रसी उद्वेगे । भ्राशभ्लाशेति वा श्यः । त्रस्यति-त्रसति । फणां च सप्तानाम् इत्येत्वाभ्यासलोपौ । त्रेसतुः । अतो हलादेरिति वा वृद्धिः । अत्रासीत्—अत्रसीत् ॥ कुथ पूतीभावे । पूतीभावः पवित्रभवनम् । कुथ्यति भूमिः पवित्री भवतीत्यर्थः । पुथ विकसने । पान्तोऽयम् । शतृप्रत्यये पुष्यन् । पचाद्यच्प्रत्यये पुषम् । संज्ञायां कप्रत्यये पुष्पकम् ॥ व्रीड चोदने लज्जायां च । चोदनं प्रेरणम् । गुरोश्च हल इत्यप्रत्यये अजाद्यतष्टाप् । व्रीडा । घञि तु व्रीडः । अत एव 'व्रीडादिवाभ्यासगतैर्विलिल्ये' इति माघः ॥ 'व्रीडमावहति मे स संप्रति' इति कालिदासः ॥ षह षुह तृप्तौ । तृप्तिस्तर्पणम् । इषुसहलुभेति विकल्पस्तत्रस्य न भवति सहेत्यपा निर्देशात् । नपुंसके भावे क्तप्रत्यये सुहितं तृप्तिः (ख)॥ जॄषिर् झॄष् वयोहानौ । षित्वात् षिद्भिदादिभ्योऽङित्यङ्प्रत्यये जरा । ॠत इद् धातोः इति इर् । हलि चेति दीर्घः । जीर्यति । ऋच्छत्यॄतामिति गुणे कृते ... संयोगादेरित्यकित्त्वाद्गुणे कृते शसददेति गुणशब्देन भावितस्य निषेधाल्लोपः पचामित्यस्याप्रवृत्तौ फणां च सप्तानाम् इत्येत्वपूर्वलोपविकल्पः । जेरतुः-जजरतुः । वॄतो वेति वा दीर्घः । जरिता-जरीता । इरितो वेति वा ङः । ऋदृशोऽङि गुण इति गुणः । अजरत् पक्षे णित्वं इति गित्वाद्धातोर्नामिन इति वृद्धिः । अजारीत् ॥ ३ ॥

( त० ) **नृतति** ॥ उतृदिर् हिंसानादरयोः । उच्छृदिर् दीप्तिदेवनयोः । त्रस्यति । भ्राशेति वा श्यः । पक्षेऽप् । पुथ विकसने । पान्तः । 'तया नभः पुष्प्यतु कोरकेण" इति श्रीहर्षः (ग) । व्रीड ॥ 'व्रीडादिवाभ्यासगतैर्विलिल्ये' (घ) इत्यत्र घञ् । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यत्र गुरोश्चेत्यः ॥ षह । अत्रेषुसहेतीड्विकल्पः कस्यचिन्मते न भवति, अवन्तनिर्देशाद्भौवादिकस्यैव तत्र ग्रहणात् । महान्तस्तु विकल्पं मन्यन्ते, अकारस्योच्चारणार्थत्वात् । **जॄषिर्** ॥ षकारो जंग्यत्राऽर्थः । अजरत् । ऋवर्गदृशोरिति गुणः ॥ ३ ॥

(क) **षहतृप्ताविति** । अत्र सहेः पाठोनाभिमतः कथांचिदिति कश्चित् । तदापाततः । पुंशकादिति सूत्रे शकादिना सहमर्षण इत्युपादाय ननु षहपुह तृप्त्यर्थ इत्यस्यैव परस्मैपदिनोऽनुबन्धकस्य ग्रहणं प्राप्तमित्याशङ्क्यानुबन्धपरिभाषायाः प्रत्ययविषयत्वादुभयोरपीह ग्रहणमिति तेषामुक्तेः ।

(ख) सुहितं तृप्तिरिति । अतएव 'पूरणगुणसुहितार्थैः सह षष्ठ्यां न समस्यते' इत्यत्र सुहितार्थस्य तृप्त्यर्थविधानात् ।

(ग) सव्यापसव्यत्यजनाद्द्विरुक्तैः पञ्चेषुबाणैः पृथगर्जितासु ।
दशासु शेषा खलु तद्दशा या तया नभः पुष्प्यतु कोरकेण इति ॥ नै० स० ३-११४श्लोकः ॥

(घ) यच्छालमुत्तुङ्गतया विजेतुं दूरादुदस्थीयत सागरस्य ।
महोर्मिभिर्व्याहतवाञ्छितार्थैर्व्रीडादिवाभ्यासगतैर्विलिल्ये ॥ इति मा० स० ३-४० श्लोकः ।

**श्योः** ॥ यप्रत्यये परे धातोरातो लोपः ॥ श्यति । **शशौ** (क) ॥ शाता । अशात्–अशासीत् ॥ **छो छेदने** । छ्यति । अच्छात्–अच्छासीत् ॥ **षो अन्तकर्मणि** । स्यति । सेयात् । असात्–असासीत् ॥ **दो अवखण्डने** (ख) । द्यति । देयात् । अदात् ॥ **राध साध संसिद्धौ** ॥ ४ ॥

( सु० ) **श्योः** ॥ यि ओरिति च्छेदः । धातोरोतो लोपः स्यात् दिवादिविकरणे ये परे ॥ तेन लव्यमित्यादौ न । शाछेति वा सेर्लुक् । अशात् । लुगभावे यमिरमीतीट्सकौ । अशासीत् ॥ षोऽन्तकर्मणि । अन्तकर्म नाशः । दादेरे इत्येत्वम् । सेयात् । 'राघवस्य शरैर्घोरैर्घोरं रावणमाहवे' इत्यत्र राघवेति सम्बोधनम् (ग) । स्येति लोटो मध्यमस्यैकवचनान्तम् ॥ दादेरित्येत्वम् । देयात् । उपसर्गस्थान्निमित्तान्नेति णत्वम् । प्रणिदाता । 'दादेः पे' इति सिलुक् । अदात् ॥ ४ ॥

( त० ) **श्योः** ॥ यि ओरिति च्छेदः । विकरणप्रकरणत्वाद् दिवादेर्य इति विहित एव गृह्यते न त्वन्यः । तेन लव्यमित्यादौ नातिप्रसङ्गः ॥ षो ॥ अन्तकर्म नाशः ॥४॥

**(राधोऽकर्मकादेव यः)** राध्यति । रराधिथ । राद्धा । रात्स्यति । अरात्सीत् । **व्यध ताडने** । ग्रहां क्ङिति च । विध्यति । विव्याध । विविधतुः । विव्यधिथ-विव्यद्ध । व्यद्धा । अव्यात्सीत् ॥ **पुष पुष्टौ** । पुष्यति । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादित्वात् ङः । अपुषत् ॥ **शुष शोषणे** । शोष्टा । शोक्ष्यति । अशुषत् ॥ **तुष तुष्टौ** । तोष्टा । तोक्ष्यति । अतुषत् ॥ **दुष वैकृत्ये** । दोष्टा । अदुषत् ॥ **श्लिष आलिङ्गने** । श्लेष्टा(घ) ॥५॥

( सु० ) **राधोऽकर्मकादेव य.** ॥ अकर्मकाद्राधेर्यप्रत्ययः स्यात् सकर्मकात्तु न । 'यन्मह्यमपराध्यति' द्रुह्यतीत्यर्थः (ङ) । 'विराध्यन्तं क्षमेत कः' द्रुह्यन्तमित्यर्थः (च) । राद्ध्यत्योदनः सिध्यतीत्यर्थः ॥ अकर्मकात् किम् । शत्रुमपराध्नोति हिनस्तीत्यर्थः । राध संसिद्धौ हिंसायां च स्वादिश्चुरादिश्चायम् । राधो हिंसायामित्यनेनैत्वपूर्वलोपाविह न हिंसार्थकस्य सकर्मकतया दृवादित्वाऽयोगात् ॥ ग्रहामिति संप्रसारणम् । विध्यति । लिपुपादेरिति ङः । अपुषत् ॥ षढोरिति कत्वं षत्वं च । शोक्ष्यति ॥ ५ ॥

**(आलिङ्गने श्लिषेः सक् ङाऽपवादः)** अश्लिक्षत्कन्यां चैत्रः ।

---

( क ) **शशाविति** । 'संध्यक्षराणाम्'……'आतो णप्रडौ' अनेन सिद्धम् ।

( ख ) **दो अवखण्डने** । अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः । खण्डने इत्येतावत्युक्तेऽपीष्टसिद्धेः ।

( ग ) **राघवस्येति** । श्लोकोयं भट्टिकाव्यस्य ।

( घ ) **श्लिषआलिङ्गने** । अनिट्कोऽयम्, न तु भौवादिकवत् सेट्क इति दर्शयति–**श्लेष्टेति** ॥

( ङ ) उदाहरणमुखेनाह—यदिति ।

न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति ।

यत्तु दन्दह्यते लोकमतोदुःखाकरोति माम् ॥ इति माघकाव्ये स० २–११. श्लोकः ।

( च ) मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।

क्रियासमभिहारेण विराध्यन्तं क्षमेत कः । इति मा० स० २–४३ श्लोकः ।

अनालिङ्गिते तु समश्लिषज्जतु काष्ठम् ॥ **ष्विदा गात्रप्रक्षरणे** । स्वेत्ता । अस्विदत् ॥ **क्रुध क्रोधे** । क्रोद्धा । अक्रुधत् ॥ **क्षुध बुभुक्षायाम्** । क्षोद्धा । अक्षुधत् ॥ **शुध शौचे** । शोद्धा । अशुधत् ॥ **षिधु संराद्धौ** । सेद्धा । असिधत् । **रध हिंसायां च** । रध्यति । ररन्ध, ररन्धतुः । ररन्धिथ–ररद्ध । ररन्धिव-रेध्व । ररन्धिम–रेध्म ॥६॥

(सु०) **आलिङ्गने श्लिषेः सक् ङाऽपवादः** ॥ अनिटः श्लिषेः सक् प्रत्ययःस्यात् आलिङ्गनेऽर्थे । नान्यत्र । प्राणिकर्तृकमुपगूहनमालिङ्गनम् । लित्पुषादेरित्यस्यापवादः ॥ अनिटः किम् । श्लिष दाहे इति सेटो भौवादिकस्य मा भूत् । अश्लेषीत् । हशषान्तादिति सकि सिद्धे पुनः सको विधानं नियमार्थम् (क) । तेन कर्मणि आतां प्रभृतिषु परतोऽनालिङ्गने सिचेव न तु सक् । यथा इणृतनीतीण् । अश्लेषि, अश्लिक्षाताम्, अश्लिक्षत । अश्लिष्ठाः, अश्लिक्षाथाम् , अश्लिड्ढ्वम् । अश्लिक्षि, अश्लिक्ष्वहि, अश्लिक्ष्महि ॥ ष्विदा गात्रप्रक्षरणे । गात्रप्रक्षरणं घर्मस्रुतिः । ञीदिति न्यासकारः । नेति हरदत्तः । ञीतां तक् वर्तमानेऽपीति तक् (ख) आदीदित इति नेट् । स्विन्नः । ग्वे कर्तरि चादित इतीड् वा ॥ स्विन्नम्—स्वेदितम् ॥ क्षुध बुभुक्षायाम् । भोक्तुमिच्छा बुभुक्षा । अनिडयम् । कथं तर्हि क्षुधित इति (ग) । क्विबन्तादितो जातार्थे इतीतप्रत्यय इति माधवः ॥ वस्तुतस्तु वसिक्षुध्योरिडिति वक्ष्यते ॥ षिधु संराद्धौ । संराद्धिर्निष्पत्तिः । उदितः क्त्वो वात क्त्वाप्रत्यये इड्विकल्पः । सिद्ध्वा । इट्पक्षे इवर्णोवर्णोपधाद्धसादेरिति वा कित्त्वम् । सेधित्वा–सिधित्वा ॥ रधिजभोः स्वरे इति नुम् । ररन्ध । नुमि कृते संयोगात् परत्वेनाकित्त्वात् नलोपो न । ररन्धतुः । स्वरति सूतीति सूत्रे रधाद्यष्टकोऽन्तर्गणो ज्ञेयः । तेन गणनिर्दिष्टत्वाद्यङ्लुकि न वेट् । राराधिता । स्वरतीति वेट् । ररन्धिथ—ररद्ध । लोपः पचामित्येत्वपूर्वलोपौ । रेध्व । इट्पक्षे ररन्धिव ॥ ६ ॥

(त) **अनालिङ्गने त्विति** ॥ आलिङ्गनं प्राणिकर्तृकमुपगूहनम् ॥ **षिधु** ॥ उदितो वेति वेट्कत्वार्थ उः । संराद्धिर्निष्पत्तिः ॥ **रध हिंसायां चेति** । चात्संराद्धावित्यर्थः ॥ **ररन्धिवेति** ॥ नित्यत्वान्नुमि संयोगात् कित्त्वाभावे नलोपो न ॥ ६ ॥

**( लिङ्वर्जिते इटि रधेर्नुम्न )** रधिता—रद्धा । रधिष्यति—रत्स्यति । अरधत्(घ) ॥ **णश् अदर्शने** । नश्यति । ननाश । नेशतुः । नेशिथ ॥७॥

(सु०) **लिड्वर्जिते इटि रधेर्नुम्न** ॥ रधेर्नुम्न स्यात् इटि परे । लिट् सम्बंधि-

---

( क ) **नियमार्थमिति** । आलिङ्गनेऽर्थे एव सगिति नियमः ।

( ख ) ञीत्करणस्य फलं दर्शयति—**ञीतां तगिति** ।

( ग ) **क्षुधित इति** । प्रयोगोऽयं रघुकाव्ये दृश्यते । यथा—

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव । इति ।

(घ) **अरधदिति यत्तु**—प्राचो ग्रन्थे अरन्धदिति नुमनुषक्तं पठ्यते, तत्प्रामादिकम्, न लोपस्यावश्यकत्वात् ।

नीटि तु नुम् स्यादेव ॥ इटि किम् । रन्धकः ॥ लित्पुषादेरिति ङः । नुम् । 'नो लोपः' इति नस्य लोपः अरधत् ॥ ७ ॥

( **मस्जिनशोर्झसे नुम्** ) ननंष्ठ (क) । नेशिव—नेश्व, नेशिम—नेश्म, नशिता—नंष्टा । नशिष्यति—नङ्क्ष्यति । अनशत् ॥ **तृप् प्रीणने** । तृप्यति । ततर्पिथ-तत्रप्थ-ततर्प्थ । तर्पिता-त्रप्ता तर्प्ता । तर्पिष्यति-त्रप्स्यति-तर्प्स्यति । अतृपत्-अतर्पीत्—अत्राप्सीत्-अतार्प्सीत् ॥ **दृप् हर्षगर्वयोः** । दृप्यति । अद्राप्सीत्—अदृपत् ॥ **द्रुह जिघांसायाम्** । दुद्रोहिथ—दुद्रोढ-दुद्रोग्ध । दुद्रुहिव-दुद्रुह्व, दुद्रुहिम-दुद्रुह्म । द्रोहिता-द्रोग्धा-द्रोढा । द्रोहिष्यति-ध्रोक्ष्यति । अद्रुहत् । **मुह वैचित्ये** । मुह्यति । मुमोहिथ--मुमोढ-मुमोग्ध ॥ **ष्णुह उद्गिरणे** । स्नुह्यति । सुष्णोहिथ-सुष्णोढ—सुष्णोग्ध ॥ **ष्णिह प्रीतौ** । सिष्णोहिथ-सिष्णोढ-सिष्णोग्ध ॥ **शमु उपशमे** ॥८॥

(सु०) **मस्जिनशोर्झसे नुम्** ॥ अनयोर्नुम् स्यात् झसे परे ॥ टुमस्जो शुद्धौ । णश अदर्शने । छशषेति षत्वम् । ष्टुत्वम् । ननंष्ठ । नशेरिति कत्वमिह कर्तुं न शक्यं पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्यति ॥ तृप् प्रीणने । प्रीणनं तृप्तिस्तर्पणं च । 'नाग्निस्तृप्यति काष्ठानाम्'। करणस्य सम्बन्धविवक्षायां षष्ठी (ख) । पितॄन् अतार्प्सीत् इत्युभयत्र दर्शनात् (ग) । स्वरतीति वेट् । ततर्पिथ । कृशादीनामिति वा रः । ततर्प्थ-तत्रप्थ । कृपस्पृशमृशतृपदृपामिति वा सिः । अतर्पीत । इडभावे अनिटो नामिवत इति वृद्धिः । अतार्प्सीत । रत्वे अत उपधाया इति पुनर्वृद्धिः । अत्राप्सीत् । अतृपत ॥ दृप् हर्षमोहनयोः । मोहनं गर्वः ॥ मुह वैचित्ये । वैचित्यमविवेकः । द्रुहादेरिति घत्वढत्वे । तथोर्द्ध इति थस्य धत्वम् । झबे इति गः । मुमोग्ध । ष्टुत्वे ढि ढ इति ढलोपः । मुमोढ-मुमोहिथ । लृटि घत्वढत्वयोस्तुल्यं रूपम् । खसे इति षढोरिति च कत्वविधानात् । मोक्ष्यते ॥ शमु उपशमे । उदित्वात् क्त्वाप्रत्यये वेट् । शमित्वा । शान्त्वा । क्वचिद्वेट् इति क्तक्तवत्वोरनिट् । शान्तः ॥ ८ ॥

( त० ) **नंष्टेति** ॥ अत्र नशेः को वेति पक्षे ककारोऽस्त्विति न भ्रमितव्यं तस्य(घ) पदान्त एव विधानात् । स्याद्यधिकाराच्च (ङ) ॥ ७ ॥

**शमां दीर्घः**(च) ॥ शमादीनामष्टानां दीर्घः कर्तरि ये ॥ शाम्यति ।

---

( क ) **ननंष्टेति** । यत्तु प्राचा ननङ्क्थेत्युदाहृतम्, तदपाणिनीयमित्युपेक्षितम् ।

( ख ) विवक्षाभावे नाग्निस्तृप्यति काष्ठैरिति स्यात् ।

( ग ) **दर्शनादिति** । पितॄनतार्प्सीत्समम॑स्त बन्धूनिति भट्टिकाव्ये दृश्यते ।

( घ ) **तस्येति** । कस्येत्यर्थः । पदान्ते एव विधानम्, न त्वपदान्ते । 'न शेः' इति सूत्रस्य वृत्तौ यञ्झस इति पठितम् तद्धि स्यादिपरकम्, न तु तिबादिपरकम् ।

( ङ ) स्याद्यधिकाराच्चेति । नशः ककारविधानं स्यादौविभक्तावेवेति भावः ।

( च ) **शमामिति** । शम्‌तम्‌दम्‌श्रम्‌भ्रम्‌क्षम्‌क्लम्‌मदामिति शमादयः ।

शमिता । अशमत् ॥ **तमु काङ्क्षायाम्** । ताम्यति । तताम । तेमतुः । अतमत् ॥ **दमु शमनायाम्** । दाम्यति । देमतुः । अदमत् ॥ **श्रमु तपसि खेदे च** । श्राम्यति । शश्राम, शश्रमतुः । अश्रमत् ॥ **भ्रमु अनवस्थाने** । भ्राम्यति–भ्रमति । बभ्राम । भ्रेमतुः–बभ्रमतुः । अभ्रमत् ॥ **क्षमू सहने** । क्षाम्यति । चक्षमिथ–चक्षन्थ । अक्षमत् ॥ **क्लमु ग्लानौ** । भ्राशभ्लाशेति यो वा । क्लाम्यति । ष्ठिवुक्लम्वाचमां दीर्घोऽपि । क्लामति ॥ **मदी हर्षे** । माद्यति ॥ मेदिथ । अमदत् ॥ शमादयोऽष्टौ (क) ॥ **असु क्षेपणे** । अस्यति । अस्येत् । आस, आसतुः, आसिथ ॥ ९ ॥

( सु० ) **शमां दीर्घः** ॥ शमादीनामष्टानां दीर्घः स्यात् ये परे ॥ लोपः पचामित्येत्वपूर्वलोपौ । शेमतुः ॥ दमु शमनायां सकर्मकः । भ्राशभ्लाशिति यो वा । भ्राम्यति–भ्रमति । फणराज इत्येत्वपूर्वलोपौ वा । भ्रेमतुः ॥ क्षमू सहने । नायं षित् । भ्वादिस्तु षित् । 'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा ।' ऊदित इति वेट् । चक्षमिथ–चक्षन्थ । मोनो धातोरिति मस्य नत्वणत्वे । चक्षण्व ॥ क्लमु ग्लानौ । अत्रापि यप्रत्ययेऽपि ष्ठिवुक्लम्वाचमामित्येव दीर्घे सिद्धे शमादिपाठः शमादिभ्य इति श्निनुणर्थः ॥ ९ ॥

(**अस्यतेस्थुक् ङे** ) आस्थत् ॥ **यसु प्रयत्ने** ॥ १० ॥

( सु० ) **अस्यतेस्थुक् ङे** ॥ असेः थुगागमः स्यात् ङे परे । असेः पुषादित्वात् ङप्रत्यये सिद्धे अस्यतिवक्तीति वचनमात्मनेपदार्थम् । उपसर्गादस्यत्यूह्योरित्यात्मनेपदं वक्ष्यते । पर्यास्थत ॥ १० ॥

(**अनुपसर्गाद्यसः सम्पूर्वाच्च यो वा**) (ख) यस्यति–यसति । संयस्यति । संयसति । ययास । येसिथ । अयसत् । उपसर्गे तु प्रयस्यति ॥ **जसु मोक्षणे** । जस्यति । जजास । जेसिथ । अजसत् ॥ **तसु दसु उपक्षये** । तस्यति । दस्यति । ददास । देसिथ । अदसत् ॥ **वसु स्तम्भे** । वस्यति । ववास, ववसतुः । अवसत् ॥ **व्युष विभागे** ॥ अव्युषत् (ग) । **बिस् प्रेरणे** । बिस्यति । बिबेस । अबिसत् ॥ **कुष संश्लेषणे** । कुश्यति । चुकोश । कोशिता । अकुशत् ॥ **बुस उत्सर्गे** । बुस्यति । बुबोस । बोसिता । अबुसत् ॥ **मुस खण्डने** । मुस्यति । मोसिता ।

---

( क ) **अष्टाविति** । पूर्वोक्ताष्टावित्यर्थः ।

( ख ) **अनुपसर्गादिति** । अत्र यसुपाठेनैव सिद्धौ संपूर्वपाठस्तु नियमार्थः । संपूर्वादेव यो नोपसर्गान्तरपूर्वात् । शप् तु भ्वादिपाठाद्भवति, येन नाप्राप्तिन्यायेनापोपवादोयम् । य इति चतुर्थं बोध्यम् । चतुर्थीति किम् , ययास ।

(ग) **व्युष विभाग इति** । अयं दाहे पठितः अर्थभेदेन तु ङप्रत्ययार्थमिह पुनः पठ्यते । ओष्ठ्यादिदन्त्यान्तोऽयं प्युस इत्यन्ये ।

अमुसत् ॥ **मसी समी परिणामे** । मस्यति । मेसिथ । अमसत् ॥ **लुठ् विलोडने** । लुठ्यति । लोठिता । अलुठत् । **उच समवाये** । उच्यति । उवोच, ऊचतुः । औचत् ॥ **भृशु भ्रंशु अधःपतने** । भृश्यति । बभर्शिथ । अभृशत् । भ्रश्यति । बभ्रंश । अभ्रशत् ॥ **वृश वरणे** वृश्यति । ववर्शिथ । अवृशत् ॥ **कृश तनूकरणे** । कृश्यति । चकर्शिथ । अकृशत् ॥ **ञितृष् पिपासायाम्** । तृष्यति । ततर्षिथ । अतृषत् ॥ **हृष् तुष्टौ** । हृष्यति । जहर्षिथ । अहृषत् ॥ **रुष् रिष् हिंसायाम्** । रुष्यति । रोषिता—रोष्टा । अरुषत् ॥ रिष्यति । रेषिता—रेष्टा । अरिषत् ॥ **डिप् क्षेपे** । डिप्यति । अडिपत् ॥ **कुप् क्रोधे** । कुप्यति । अकुपत् ॥ **गुप् व्याकुलत्वे** । गुप्यति । अगुपत् ॥ **युप् रुप् लुप् विमोहने** । युप्यति । युयोपिथ । अयुपत् ॥ रुप्यति । रुरोपिथ । अरुपत् ॥ लुप्यति । लुलोपिथ । अलुपत् ॥ **लुभ आकाङ्क्षायाम्** । लुभ्यति । लुलोभ । लोभिता—लोब्धा । अलुभत् ॥ **क्षुभ् संचलने** । क्षुभ्यति । चुक्षोभ । अक्षुभत् ॥ **णभ तुभ हिंसायाम्** ॥ नभ्यति । तुभ्यति । (क) । **क्लिदू आर्द्रीभावे** । क्लिद्यति । चिक्लेद । क्लेत्ता । अक्लिदत् ॥ **ञिमिदा स्नेहने** ॥ ११ ॥

( सू० ) **अनुपसर्गाद्यसः संपूर्वाच्च यो वा** ॥ अनुपसर्गात् संपूर्वाच्च यसेर्यप्रत्ययो वा स्यात् ॥ वादित्वान्नैत्वपूर्वलोपौ (ख) । ववसतुः । बुस उत्सर्गे । उत्सर्गस्त्यागः ॥ मसी समी परिणामे । परिणामो विकारः (ग) ॥ इषु सहेति वेट् । रोषिता—रोष्टा ॥ लुप्यति । सेट्कः । अनिट्कारिकासु लिपिसाहचर्यात् तौदादिकस्यैव ग्रहणात् । इषुसहेति वेट् । लोभिता-लोब्धा ॥ ११ ॥

( **मिदेर्गुणो ये** ) मेद्यति मिमेद । मिद्यात् । अमिदत् (घ) ॥ ञिक्ष्विदा स्नेहनमोचनयोः क्ष्वेदिता । अक्ष्विदत् ॥ **ऋधु वृद्धौ** । ऋध्यति । आर्ध्यत् । आनर्ध । ऋध्यात् । आर्धत् ॥ **गृधु अभिकाङ्क्षायाम्** ।

---

(क) णुभिर्णभतुभयो घुतादौ क्र्यादौ च पठ्यन्ते । घुतादित्वात् ङप्रत्यये सिद्धेऽपि इह पाठस्तु यप्रत्ययार्थः ।

(ख) ववसतुरित्यत्र लोपपचामिति एत्वपूर्वलोपप्राप्तावाह—**वादित्वादिति** । शशददवादिगुणभूताकाराणामिति सूत्रेण नैत्वपूर्वलोपाविति भावः ।

(ग) विकारो नाम उपादानसमसत्ताककार्यापत्तिः । यदभिन्नं कार्यमुत्पद्यते तदुपादानकारणम्, तेन समासत्ता यस्य कार्यस्य तथाभूतकार्यस्यापत्तिरित्यर्थः । यथा—व्यावहारिकसत्ताकदुग्धे तत्समसत्ताकदधिरूपकार्यापत्तिरिति । तदुक्तम्, सतत्त्वतोऽन्यथा प्रथा विकार इत्युदाहृत' इति ।

(घ) **अमिददिति** । धातोरस्य घुतादिपाठादेवामिददमेदिष्टेति सिद्धे पुनरिह पाठोऽमेदीदिति माभूदिति । घुतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः ।

गृध्यति । जगर्धिथ । अगृधत । इति पुषादयः ॥ इति परस्मैपदम् ॥१२॥

( सु० ) **मिदेर्गुणो ये** ॥ मिदेर्गुणः स्यात् दिवादिविकरणे ये परे ॥ नुगशामिति नुक् । आनर्द्ध ॥ इति सुबोधिन्यां परस्मैपदम् ॥ १२ ॥

( त० ) कृतायामिह टीकायां लोकेशकरशर्मणा । अगाद्दिवादिमध्यस्थपरस्मैपद-साधनम् ॥ इति तत्त्वदीपिकायां परस्मैपदम् ॥

**षूङ् प्राणिप्रसवे** । सूयते । सुषुवे । सुषुविषे । सविता–सोता । असविष्ट ॥ **दूङ् परितापे** । दूयते । दुदुविढ्वे–दुदुविध्वे । अदविष्ट ॥ **दीङ् क्षये** । दीयते ॥*॥

( सु० ) **सूङ् प्राणिप्रसवे** ॥ प्रसव उत्पत्तिः । मृत्पिण्डो घटं सूयते इत्यादि प्रयोगाभावात् प्राणीत्युक्तम् ॥ स्वादय ओदितः । वक्ष्यमाणत्वात् ल्वाद्योदितश्चेति नत्वम् । प्रसूनम् ॥ नुधातोरित्युव् । सुषुवे । स्वरतिसूतीति विकल्पं बाधित्वा कित इतीणूनिषेधे प्राप्ते क्रादिनियमान्नित्यमिट् सुषुविषे (क) ॥

(त०) **सवितेति** ॥ स्वरतिसूतीति वेट् ओदित इति फलं तु क्तक्तवत्वोस्तस्य नत्वम्*

**(दीङो युट् क्ङितः स्वरस्य)** दिदीये ॥१॥

(सु०) **दीङो युट् क्ङितः स्वरस्य** ॥ दीङः परस्य स्वरादेः क्ङितः प्रत्ययस्य युट् स्यात् । स्वरादेः किम् । देदीयते । क्ङितः किम् ॥ उपादानम् ॥ १ ॥

**( मिनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि चात्वम् )** दासीष्ट । दाता । दास्यते । अदास्त ॥ **डीङ् विहायसा गतौ** । डीयते । डयिष्यते । अडयिष्ट ॥ **धीङ् धारणे** । धीयते । दिध्यिढ्वे–दिध्यिध्वे । अधेष्ट ॥ **मीङ् प्राणवियोगे** । मीयते । मेता ॥ **रीङ् स्रवणे** । रीयते । रिर्ये । अरेष्ट ॥ **लीङ् श्लेषणे** । लीयते । लिल्ये ॥२॥

(सु०) **मीनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि चात्वम्** ॥ एषामात्वं स्यात् गुणवृद्धिविधायके प्रत्यये क्यपि च । मीञ् हिंसायाम् । डुमिञ् प्रक्षेपणे । दीङ् क्षये ॥ घञि उपादायः । तव्यप्रत्यये प्रमातव्यम् । लुङि आदास्तेत्यत्रापि दाधास्थामितीत्वं न दीङोऽनुकरणे दारूपासम्भवात् । डीङ् विहायसा गतौ । आकाशेन गमने । डीनः । डीनवान् । डीङः स्वादिषु पाठसामर्थ्यान्न क्तक्तवत्वोरिति इट् । इटि सति व्यवधानात् ल्वाद्योदितश्चेति नत्वं न स्यादित्यर्थः । मीङ् प्राणवियोगे । मीयते । प्राणैर्वियुज्यते इत्यर्थः ॥२॥

**( लीलीङोरात्वं वा गुणवृद्धिविषये क्यपि च )** लाता–लेता । अलास्त–अलेष्ट ॥ **व्रीङ् वरणे** । व्रीयते । विव्रिये । व्रेष्यते । अव्रेष्ट ॥ स्वादय ओदितः(ख) ॥ **पीङ् पाने** । पीयते । अपेष्ट ॥ **माङ् माने** ।

(क) **विकल्पमिति** । परमपीति शेषः । **निषेधे प्राप्ते इति** । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः । (ख) **स्वादय इति** । 'षूङ् इत्यारभ्य व्रीङन्ता इत्यर्थः ।

मीयते । ममे । अमास्त, अमासाताम् ॥ **इङ् गतौ** । इयते । अयांचक्रे ॥ **प्रीङ् प्रीतौ** । प्रीयते । पिप्रिये । अप्रेष्ट ॥ **जनी प्रादुर्भावे** ॥ ३ ॥

(सु०) **लीलीङोरात्वं वा गुणवृद्धिविषये क्यपि च** ॥ अनयोरात्वं वा स्यात् गुणवृद्धिविधायके प्रत्यये क्यपि च परे । ली श्लेषणे । क्र्यादिः । लीङ् श्लेषणे । दिवादिः ॥ क्यपि विलाय-विलीय ॥ वीङ् वरणे । वरणमङ्गीकारः ॥ व्री वरणे । क्र्यादिः । **स्वादयः ओदित** इति ॥ तत्फलं तु क्तक्तवत्वोस्तस्य नत्वम्, ल्वाद्योदित इत्यनेन वक्ष्यते ॥ प्रीङ् प्रीतौ । सकर्मकः (क) ॥३॥

**ज्ञाजनोर्जा** ॥ कर्तरि चतुर्षु ॥ जायते । गमां स्वरे । जज्ञे । जनिता दीपजनेति इण् वा । जनिवध्योर्न वृद्धिः । अजनि-अजनिष्ट ॥ **तूरीगतित्वरणहिंसनयोः** । तूर्यते-तुतूरिषे । **दीपी दीप्तौ** । दीप्यते । अदीपि-अदीपिष्ट । **पूरी आप्याने** । अपूरि । अपूरिष्ट ॥ **तप ऐश्वर्ये** । तप्यते । तेपे । तप्ता । अतप्त ॥ **वावृत वरणे** (ख) । वावृत्यते । वावर्तांचक्रे ॥ **पद गतौ** ॥ पेदे । पत्ता ॥ ४ ॥

(सु०) **ज्ञा जनोर्जा** ॥ अनयोर्जादेशः स्याच्चतुर्षु । ज्ञा अवबोधने । जनी प्रादुर्भावे । चतुर्षु किम् । ज्ञाता । दीपजनेतीण् वा । अजनि ॥ वावृतु वरणे । 'ततो वावृत्यमाना सा रामशालां न्यविक्षत' इति भट्टिः ॥ ४ ॥

(त०) **अजनि** ॥ दीपजनेति वा इण् ॥ ४ ॥

( **पदेरिणतनि** ) अपादि, अपत्साताम् ॥ **खिद दैन्ये** । खेत्ता ॥ **विद सत्तायाम्** । विद्यते । वित्सीष्ट । वेत्ता । अवित्त ॥ **बुध अवगमने** । बुध्यते । भुत्सीष्ट । दीपजनेति इण् वा । अबोधि-अबुद्ध ॥ **युध संप्रहारे** । युध्यते (ग) । युयुधे । युत्सीष्ट । अयुद्ध ॥५॥

( सु० ) **पदेरिणतनि** ॥ परेरिण् प्रत्ययः स्यात्कर्त्रर्थे तनि परे । अपादि ॥ दीपजनेतीण् वा । लुगिति तनो लुक् । अबोधि । झवादिति सिलोपः । अबुद्ध । आदिजवानामिति भः । अभुत्साताम् ॥ ५ ॥

( **अनो रुध कामे** ) अनुरुध्यते । अनुरुरुधे । अनुरुत्सीष्ट । अनुरोद्धा । अन्वरुद्ध ॥ **मन ज्ञाने** । मन्यते । मेने । मेनिषे । मन्ता । अमंस्त ।

---

(क) **सकर्मक इति** । रुच्यर्थाना प्रीयमाण इति निर्देशस्य दर्शनेन **सकर्मक** इत्युक्तम् । 'अत्र मानं तु चिन्त्यम्' इति शेखरकृत् ।

(ख) अत्र **'वृतुवरणे'** वृत्यते, इति पाठः सिद्धान्तकौमुद्याम् ।

(ग) **युध्यते इति** । ननु कथं युध्यतीति, युधधातोरनुदात्तेत्त्वात्परस्मैपदानुपपत्तिरिति चेदुच्यते, युधमिच्छतीति क्यच् । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति वेति । 'व्यत्ययो बहुलम्' इति सूत्रभाष्ये तु 'प्रतीपमन्युर्युध्यति" इत्यत्र व्यत्ययेन परस्मैपदमित्युक्तम् । व्यत्ययेन परस्मैपदप्रतिपादनभाष्यविरोधादनुदात्तेत्त्वप्रयुक्तात्मनेपदानित्यत्वमपि चिन्त्यमेवेति शेखरकृत ।

**युज् समाधौ** । युज्यते । योक्ता । अयुक्त ॥ **सृज विसर्गे** । सृज्यते । रारो झसे इशाम् । स्रष्टा । असृष्ट, असृक्षाताम् ॥ **लिश अल्पीभावे** । लिश्यते । लिक्षीष्ट । लेष्टा । अलिक्षत, अलिक्षाताम् ॥ इत्यात् ॥६॥

( सु० ) **अनो रुध कामे** ॥ अनूपसर्गात् परो रुध् धातुरिच्छायामस्ति । दिवादिपाठसामर्थ्यात् रुधादेरिति नमं बाधित्वा यः ॥ युज समाधौ । समाधिश्चित्तवृत्तिनिरोधः। अकर्मकः । सृज विसर्गे । अकर्मकः (क) । 'संसृज्यते सरसिजैररुणांशुभिन्नैः' इति कालिदासः । सिस्योरिति न गुणः । सृक्षीष्ट । क्षशषेति षत्वं ष्टुत्वं झसादिति सिलोपः । असृष्ट ॥ लिश अल्पीभावे । अनल्पस्याल्पत्वेन भवनमल्पीभावः । सिस्योरिति न गुणः । छशषेति षत्वम् । षढोरिति कत्वम् । लिक्षीष्ट । लुङि हसषान्तादिति सक् । अलिक्षत ।

इति सुबोधिन्यामात् ॥ ६ ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । अगाद्दिवादिमध्यस्थमात्मनेपदसाधनम् ॥

इति तत्त्वदीपिकायामात् ॥ ६ ॥

**मृष् तितिक्षायाम्** । मृष्यति । मृष्यते । ममर्ष । ममृषे । अमर्षीत् । अमर्षिष्ट ॥ **ईशुचिर क्लेदने** (ख) । शुच्यति । शुच्यते । अशुचत्–अशोचीत् । अशोचिष्ट ॥ **रञ्ज रागे** । अपि रञ्जदंशेति नलोपः । रज्यति । रज्यते । अराङ्क्षीत् । अरङ्क्त ॥ **शप् आक्रोशे** । शप्यति । शप्यते । शेपतुः । शेपे । शप्ता । अशाप्सीत् अशप्त ॥ **शक् मर्षणे** । शेकिथ–शशक्थ । पुषादित्वात् ङः । अशकत् । अशक्त । सेट्कोऽयमित्येके । शकिता ॥ **णह् बन्धने** ॥ नह्यति । नह्यते । नेहिथ–ननद्ध । नत्सीष्ट । नद्धा । अनात्सीत् । अनद्ध । इत्युभयपदम् ॥ इति दिवादयः (ग) ॥*॥

(सु०) ईशुचिर् क्लेदने । आदीदित इति नेट् । शुक्तम्–क्लिन्नम् । इरित इति वा ङः ॥ अशुचत् ॥ स्वरान्तादत्वतश्चेति । नेहिथ । नह इति धः । तथोरिति थस्य धः । ननद्ध । अत उपधाया इति वृद्धिः । अनात्सीत् ॥ इति दिवादिगणः ॥ * ॥

(त०) **ननद्धेति** ॥ नहो ध इति धत्वे तथोर्द्ध इति धत्वमित्यर्थः ॥ * ॥

कृतायामिह टीकायां लोकेशकरशर्मणा। अगात्समाप्तिं संक्षिप्तं दिवादिगणसाधनम् ॥

इति तत्त्वदीपिकायां दिवादयः ॥ ४ ॥

---

(क) **अकर्मक इति** । 'अकर्मकोऽपि' इत्यर्थः । तेन "(**सृजेः श्रद्धोपपन्ने कर्त्तरि वा)** सकर्मकस्य सृजेः कर्त्ता कर्मवद्वा भवति श्रद्धायुक्तेऽर्थे । ( **युजेर्वा** ) सकर्मकस्य युजेः कर्त्ता कर्मवद्वा भवति" इति न विरोधः । (ख) ईशुचिर्क्लेदने । क्लेदनं पूतीभावः ।

(ग) दिवादिस्तु आकृतिगणो भ्वादिगणवत्। तेन क्षीयते मृग्यतीत्यादिसिद्धिरित्याहुः ।

इति टिप्पण्यां दिवादयः ॥ ४ ॥

# अथ स्वादयः ॥ ५ ॥

**षुञ् अभिषवे ॥ स्वादेर्नुः** ॥ कर्तरि चतुर्षु ॥ नूपः ॥ नुप्रत्ययस्य उप्रत्ययस्य च गुणो भवति पिति ॥ सुनोति । सुनुते । ओर्म्योर्वा लोपः । सुन्वः—सुनुवः । सुनोतु । ओर्वा हेः । सुनु । सुनवानि सुनवै । असुनोत्, असुनुताम् । सुषाव, सुषुवतुः । सोषीष्ट । असावीत् । स्तुसुधूञ्भ्यां पे सेरिट् । असोष्ट ॥ **षिञ् बन्धने** । सिनोति । सिनुते । सिष्ये, सिष्याते । असैषीत्, असेष्ट ॥ **शिञ् निशाने** । शेता । अशैषीत्, अशेष्ट ॥ **डुमिञ् प्रक्षेपे** । मीनातिमिनोतीत्यात्वम् । ममौ, मिम्यतुः, ममिथ-ममाथ । मिम्ये । अमासीत् । अमास्त ॥ **चिञ् चयने** । चिनोति ॥ १ ॥

(छ०) **षुञ् अभिषवे** ॥ स्नपनं स्नानं पीडनं सुरासंधानं(क) चाभिषवः । स्नानेऽकर्मकः । स्वादेर्नुः ॥ सुरादिर्यस्य स स्वादिस्तस्मान्नुप्रत्ययः स्यात् कर्त्रर्थेषु परेषु नूपः॥ उप्साहचर्यान्नुः प्रत्यय एव गृह्यते न धातुः । हुन्वोरिति वः । सुन्वन्ति । ओर्म्योरित्युकारलोपो वा । सुन्वः, सुनुवः । ओर्वाहेरिति हेर्लुक् सुनु । नुधातोरित्युव् । सुषुवे । स्तुसुधूञामितीट् । असावीत् ॥ मीनातिमिनोतीत्यात्वम् । आतो णबित्यौकारः । ममौ । नुधातोरिति यः । मिम्यतुः । यमिरमीतीट्सकौ । अमासीत् । चिञ् चयने चयनं रचनाविशेषः ॥ १ ॥

(त०) **षुञ्** ॥ अभिषवः स्नपनं स्नानं पीडनं सुरासंधानं च । तत्र स्नानेऽकर्मकः । **स्वादेर्नुः** । सुः आदिर्यस्य स तस्मात् ॥ **नूपः** ॥ उपा साहचर्यान्नुः प्रत्यय एव गृह्यत इत्याह ॥ नुप्रत्ययेति ॥ १ ॥

( **चिनोतेः सणादौ किर्वा** ) चिकाय—चिचाय । चिच्यतुः । अचैषीत् । अचेष्ट ॥ **स्तृञ् आच्छादने** । स्तृणोति, स्तृणुतः, स्तृण्वन्ति । तस्तार । गुणोर्तिसंयोगाद्योः । तस्तरतुः । ऋदन्तात्थपो नेट् । तस्तर्थ । तस्तरे । स्तर्यात् ॥ २ ॥

( सु० ) **चिनोतेः सणादौ किर्वा** ॥ चिनोतेः किरादेशः स्याल्लिटि सप्रत्यये च से परे । चिकीर्षति-चिचीषति । णादौ तु चिकाय-चिचाय । गुणोर्तिसंयोगाद्योरिति गुणः । तस्तरतुः स्तर्यात् ॥ २ ॥

( **ऋदन्तात्संयोगादेः सिस्योरिड्वाति** ) स्तरिषीष्ट—स्तृषीष्ट । अस्तार्षीत् । अस्तरिष्ट—अस्तृत । लोपो ह्रस्वाज्झसे ॥ **कृञ् हिंसायाम्** । कृणोति । कृणुते । चकर्थ । चकृवहे । अकार्षीत् । अकृत । **वृञ् वरणे** । ववार । वव्रतुः ॥३॥

---

(क) सुरासन्धानमिति । सुरासन्धानं सुरानिष्पादनप्रकारः ।

( सु० ) **ऋदन्तात्संयोगादेः सिस्योरिड्वाति** ॥ ऋदन्तात्संयोगादेर्धातोः परयोः सिस्योरिड्वा स्यादात्मनेपदे परे । स्तरिषीष्ट । उरिति न गुणः । स्तृषीष्ट ॥ ऋदन्तात्थपो नेट् । चकर्थ । यादादौ इति रिङ् । क्रियात् । उरिति न गुणः । कृषीष्ट ॥३॥

( **वृञस्थप इट्** )(क) ववरिथ ॥ ४ ॥

( सु० ) **वृञस्थप इट्** ॥ वृञः परस्य थप इट् स्यात् । ववरिथ ॥ ४ ॥

( **वृङ्वृञृदन्तात्सिस्योरिड्वाति** ) वरिषीष्ट–वृषीष्ट । वरिता–वरीता । वरिष्यति–वरीष्यति । अवारीत्, अवारिष्टाम् । अवरिष्ट-अवरीष्ट-अवृत ॥ **धुञ कम्पने** । धुनोति । धुनुते । दुधाव, दुधुवतुः । धोष्यति । अधौषीत् । अधोष्ट । दीर्घान्तोऽप्ययम् । धूनोति । स्तुसुधूञामितीट् ॥ अधावीत् । स्वरतिसूतीति वेट् । अधविष्ट–अधोष्ट ॥ इत्युभयपदिनः ॥

**टुदु उपतापे** । दुनोति । दुदाव, दुदुवतुः । अदौषीत् । **हि गतौ वृद्धौ च** । हिनोति ॥५॥

( सु० ) **वृङ्वृञृदन्तात्सिस्योरिड्वाति** ॥ वृङ्वृञ्भ्यामृदन्ताच्च परस्य सिप्रत्ययस्य सीष्टादेश्चेड् वा स्यादात्मनेपदे परे । पे सेरिटो न दीर्घः । सीष्टादेरिति न दीर्घः । वरिषीष्ट । वृङ्वृञिति वा दीर्घः । वरिता, वरीता । स्वरतिसूतीति वेट् । दुधविथ–दुधोथ । किति लिटि तु कित इतीण्निषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । नाः नप्योरित्युव् । दुधुविव । स्तुसुधूञामितीट् । अधावीत् ॥ इत्यात्पे ॥ ५ ॥

( त० ) धुञ् ॥ **दीर्घान्तोऽप्ययमिति** ॥ तथा च कविरहस्ये—

"धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।
वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च ॥" इति ॥

हि गतौ वृद्धौ च ॥ ५ ॥

(**पूर्वाद्धिनोतेर्हस्य घो न त्वङि** ) जिघाय, जिघ्यतुः । अहैषीत् ॥ **आप्लृ व्याप्तौ** । आप्नोति, आप्नुवन्ति । आप्नुहि । आप, आपतुः । आप्ता । आपत् ॥ **शक्लृ शक्तौ** । शक्नोति । शशाक, शेकतुः । शक्ता । अशकत् । **राध साध संसिद्धौ** । राध्नोति, राध्नुवन्ति ॥६॥

( सु० ) **पूर्वाद्धिनोतेर्हस्य घो न त्वङि** ॥ द्वित्वे सति पूर्वात्परस्य हिनोतेर्हस्य घः स्यादङि तु न । अङि किम् । अजीहयत् । संयोगपूर्वकत्वादोर्वा हेरिति न हेर्लुक् । आप्नुहि ॥ ६ ॥

( त० ) **नत्वङीति** ॥ अङीति किम् ॥ अजीहयत् । ण्यन्तस्य धात्वन्तरत्वेन हि-

---

(क) क्रादेर्णादेरिति सूत्रेणेण्निषेधे इड्विधानायाह—वृञस्थप इति । 'बभूथाततन्थजगृम्भववर्थेति निगमे' एषां वेदे इडभावो निपात्यते। इत्यादिना 'विज्ञातमुत्सयितं आबभूथ' 'येनान्तरिक्षमुर्वाततन्थ, "जगृम्भा ते दक्षिणमिन्द्रहस्तम्" यस्य मदे अपगोत्रा ववर्थ, इत्यादि सिध्यति ।

ग्रहणादग्रहणेऽपि जिवारयिषतीत्यत्र ण्यधिकस्यापि कुत्वज्ञापनार्थमिदमिति बोध्यम् ॥६॥

**( राधो हिंसायामेत्वपूर्वलोपौ किति लिटि सेटि थपि च )** रराध, रेधतुः । रेधिथ । अरात्सीत् ॥ **ञिधृषा प्रागल्भ्ये ।** धृष्णोति । दधर्ष । अधर्षीत् ॥ **दम्भु दम्भे ।** दभ्नोति ॥ ७ ॥

( सु० ) राधो हिंसायामेत्वपूर्वलोपौ किति लिटि सेटि थपि च ॥ हिंसार्थकस्य राध एत्वपूर्वलोपौ स्तः नान्यार्थकस्य ॥ सम्भु दम्भे । लोकरञ्जनाय विहित-कर्मानुष्ठानं दम्भः ॥ ७ ॥

**( श्रन्थिग्रन्थिदम्भिभ्यो लिटः कित्त्वं वा ) ( दम्भेर्लि-ट्येत्वपूर्वलोपौ )** । ददम्भ, देभतुः—ददम्भतुः । देभिथ—ददम्भिथ । अदम्भीत् । **ऋधु वृद्धौ ।** अनार्द्ध । नुगशाम् । आनृधतुः । अर्द्धिता ॥ **क्षि हिंसायाम् ।** क्षिणोति, क्षिण्वंति । क्षेता ॥

**तिक तिग गतौ च ।** चादास्कन्दने । तिक्नोति । तिग्नोति । **षघ हिंसायाम् ।** सघ्नोति । इति पम् (क) ॥ ८ ॥ ९ ॥

( सु० ) श्रन्थिग्रन्थिदम्भिभ्यो लिटः कित्त्वं वा ॥ एभ्यः परस्य लिटः कित्त्वं स्याद्वा । श्रन्थ ग्रन्थ संदर्भे । दम्भु दम्भे । स्वञ्ज परिष्वङ्गे । दम्भेः किति लिट्येत्वपूर्व-लोपौ । श्रन्थीति कित्संज्ञायां नो लोप इति नलोपस्तस्यासिद्धत्वादेत्वपूर्वलोपयोरप्राप्तौ सत्यामारम्भः इति सुबोधिन्यां पम् ॥ ८ ॥ ९ ॥

**अशूङ् व्याप्तौ संघाते च ।** अश्नुते । नुगशाम् । आनशे अशि-षीष्ट—अक्षीष्ट । आशिता—अष्टा । आशिष्ट । आक्षाताम् ॥ **ष्टिघ आस्क-न्दने ।** स्तिघ्नुते, स्तिघ्नुवाते । तिष्टिघिध्वे । अस्तेघिष्ट ॥ इति स्वादयः ॥❀॥

( सु० ) नुगशामिति नुक् । आनशे ॥ ष्टिघ आस्कन्दने । आस्कन्दनं संग्रामः । स्तिघ्नुते ॥ इत्यात् ॥ इति सुबोधिन्यां स्वादयः ॥ * ॥

( त० ) कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगमत्स्वादि साधनम् ॥ इति तत्त्वदीपिकायां स्वादयः ॥ ९ ॥

## अथ रुधादयः ॥ ६ ॥

**रुधिर् आवरणे (ख) ॥ रुधादेर्नम् ॥** कर्तरि चतुर्षु ॥ रुणद्धि ।

---

(क) अस्य स्वादिगणस्य परस्मैपदे वैदिका इमे धातवः पठ्यन्ते—तद्यथा—पृ **प्रीतौ** । पृणोति । पर्ता । **स्पृ प्रीतिपालनयोः** । प्रीतिचलनयोरित्यन्ये । स्पृणोति । पस्पार । स्मृ इत्येके । स्मृणोति । **तृप प्रीणने** । तृप्नोति । **अह व्याप्तौ** । अह्नोति । **दघ घातने पालने च** । दघ्नोति । **चमु भक्षणे** । चम्नोति । **रिक्षिचिरिजिरि दाशृ हिंसायाम्** । रिणोति । क्षिणोति । अयं भाषायामपीत्येके । न तद्यशः शस्त्र-भृतां क्षिणोति । इति रघुवंशे । अत एव मूले पाठोऽस्य प्रदत्तः । **ऋक्षीत्येके** । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । इति श्रीनवकिशोरशास्त्रिविरचितायां टिप्पण्यां स्वादिप्रक्रिया ।

(ख) **आवरणं** प्रवृत्तिविघातकमाच्छादनम् ।

नमसोऽस्य । रुन्द्धः, रुन्धन्ति । रुणत्सि । रुन्धे, रुन्धाते । अरुधत्—अरौत्सीत् । अरुद्ध । **भिदिर् विदारणे** । अभिदत्—अभैत्सीत् । अभित्त ॥ **छिदिर् द्वैधीकरणे** । अच्छिदत्—अच्छैत्सीत । अच्छित्त ॥ **रिचिर् विरेचने** (क) रिणक्ति । अरिणक्—अरिणग् । अरिचत्—अरैक्षीत् । अरिक्त ॥ **विचिर् पृथग्भावे** । विङ्क्ते । अविचत्—अवैक्षीत् । अविक्त ॥ **क्षुदिर् संपेषणे** । अक्षुदत्—अक्षौत्सीत् । अक्षुत्त ॥ **युजिर् योगे** । अयुजत्—अयौक्षीत् । अयुक्त ॥ **उच्छृदिर् दीप्तिदेवनयोः** । छृणत्ति । छृन्ते । नृततृद इति वेट् । छृत्सीष्ट—क्षर्दिषीष्ट । अच्छृदत्-अच्छर्दीत् । अच्छर्दिष्ट ॥ **उतृदिर् हिंसानादरयोः** । अतृदत्—अतर्दीत् । अतर्दिष्ट ॥

इत्युभयपदप्रक्रिया ॥१॥

( सु० ) **रुधिर् आवरणे** ॥ **रुधादेर्नम्** ॥ रुध् आदिर्यस्य स रुधादिस्तस्माद्रुधादेर्नम् प्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु ॥ मित्त्वादन्त्यात्स्वरात्परः । नित्यत्वाद्गुणं बाधते । तथोरिति धत्वम् । णत्वम् । रुणद्धि । नमसोऽस्य इत्यल्लोपः । रुन्द्धः । दिस्योरिति दिप्सिपोर्लोपः । 'वावसाने' इति धस्य दकारतकारौ । सिपि 'दः' इति दस्य वा सः । अरुणत्-अरुणः । नृततृदेति वेट् । नृच्छृदिषे चच्छृत्से ॥इति सुबोधिन्यामात्पे॥१॥

( त० ) **रुधिर्** ॥ **रुधादेर्नम्** ॥ रुध् आदिर्यस्य स तथा तस्मात् । न च रुदादेरिति भविष्यति अन्तर्वर्तिविभक्त्या पदत्वादिति वाच्यम् । असंदेहार्थमिदम् । अन्यथा रुध् आदिः रुद् आदिरिति वा संदेहः स्यात् । यद्यपि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायाद्रुधादिरेव गृह्यते तथापि क्वचिदान्तरं पदकार्यं नेति ज्ञापनार्थमिदम् । नमः प्रत्ययत्वेऽपि मित्त्वसामर्थ्यादन्त्यस्वरस्य परत्वम् , अन्यथा मित्त्वं व्यर्थं स्यात । नच नम इति विशेषणार्थं तदिति वाच्यम् । अनुबन्धान्तरस्यैव सुवचत्वात् । अथ नमि मध्येऽपि तिबादिपरत्वस्याबाधनाद्गुणः भाव्यमिति वाच्यम् । न, दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति तक्रकौण्डिन्यन्यायेन तक्रदानेन दधिदानस्येव नमापो बाधनात् । नमानित्यत्वाद्गुणो बाध्यते। **उच्छृदिर्** । उः क्त्वायामिड्विकल्पार्थः । छृत्त्वा-छृदित्वा ॥इत्यात्पे ॥१॥

**शिष्लृ विशेषणे** (ख) शिनष्टि, शिंष्टः, शिंषन्ति । शिण्ढि । शेष्टा । शेक्ष्यति । आशिषत् ॥ **पिष्लृ संचूर्णने** । पिनष्टि । पेक्ष्यति । अपिषत् ॥ **भञ्जो आमर्दने** । भनक्ति । बभञ्जिथ—बभङ्क्थ । भङ्क्ता । अभाङ्क्षीत ॥ **भुज पालनाभ्यवहारयोः** । भुनक्ति, भुङ्क्तः । अभुनक् अभुनग् ॥ **तृह हिंसि हिंसायाम्** ॥ ❀ ॥

---

(क) विरेचनं मलादेर्निःसारणम् , अधोदेशसंयोगानुकूला व्यापारः इति यावत् ।

(ख) कार्यान्वयित्वे सति वर्त्तमानत्वे सति व्यावर्त्तकत्वं विशेषणत्वम् । यथा । रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम् ।

( सु० ) झसादिति हेर्धि । झवे इति षस्य डत्वम् । ष्टुत्वम् । अनुस्वारपरसवर्णौ । शिण्ड्ढि । हसात्परस्य झसस्येति ढलोपे शिण्ढि । लिटपुषादेरिति ङः । अशिषत् ॥ भञ्जो आमर्दने । ओदित्करणं स्वाद्योदिति इति नत्वार्थम् । भग्नः ॥ भुज पालनाभ्यवहारयोः । भुजोऽपालने इत्यात्मनेपदं वक्ष्यते ॥ * ॥

( **तृहो नमि कृते इमागमः पिति हसे** ) तृणेढि । अतृणेट् । अतर्हीत् । इदितो नुम् ॥ २ ॥

**नमः** ॥ नम्प्रत्ययात् परस्य नस्य लोपः ॥ हिनस्ति, हिंस्तः(क) हिंसन्ति । घे सलोपः । हिन्धि(ख) अहिनः । जिहिंस । अहिंसीत् ॥ **उन्दी क्लेदने** । उनत्ति, उन्तः, उन्दन्ति, औनत् । औन्दन् । उन्दांचकार । औन्दीत् ॥ **अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु** । अनक्ति । नुगशाम् । ऊदितो वा । आनञ्जिथ—आनङ्क्थ । अञ्जिता—अङ्क्ता ॥३॥

( सु० ) **तृहो नमि कृते इमागमः पिति हसे** ॥ तृहेः पूर्वं नम् । ततः इम् स्यात् पिति हसे परे ॥ नमः प्रकरणात्प्रत्ययस्य ग्रहणम् । उन्दी क्लेदने । क्लेद्नकार्दोभावः । नम इति नलोपः । उनत्ति । उन्द्यात् । उनत्तु । औनत् । उन्दांचकार । उद्यात् । उन्दिष्यति । औन्दिष्यत् । औन्दीत् ॥ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । व्यक्तिर्विवेचनम् । म्रक्षणं स्निग्धता । नुगशामिति नुक् आनञ्ज ॥ २ ॥ ॥ ३ ॥

( त० ) **तृहो नमि कृते** इति ॥ यद्येवं न स्यात्तर्हि येन नाप्राप्तन्यायेन मा नम् बाध्यते अबाधने वा पूर्वमिमेव स्यादिति शंकानिवृत्तये नमि कृते इति । नमः प्रकरणत्वात्प्रत्ययस्य ग्रहणम् ॥ ३ ॥

(**अञ्जेः सेर्नित्यमिट्** ) आञ्जीत् ॥ **तञ्चू संकोचने** । तनक्ति । अतञ्चीत् । अताङ्क्षीत् **ओविजी भयचलनयोः** । विनक्ति ॥४॥

( सु० ) **अञ्जे सेर्नित्यमिट्** ॥ अञ्जेः परस्य सिप्रत्ययस्य इडागमाः, ऊदित्वा द्विकल्पे प्राप्ते इदम् ॥ ४ ॥

( **विजेरिडादिप्रत्ययो ङित्** ) विविजिथ । विजिता । अविजीत् ॥ **वृजी वर्जने** । वृणक्ति । अवर्जीत् ॥ **पृची संपर्के** । पृणक्ति । अपर्चीत् ॥ ५ ॥ इति पम् ॥

( सु० ) **विजेरिडादिप्रत्ययो ङित्** ॥ विजेः परस्य इट्सहितस्य प्रत्ययस्य ङित्त्वं स्यात् ॥ इति सुबोधिन्यां पम् ॥ ५ ॥

**ञिइन्धी दीप्तौ** । इन्द्धे (ग) । इन्धीत । ऐन्द्ध । इन्धांचक्रे ।

---

(क) 'नमसोऽस्य' 'नश्चापदान्ते' अनेन नमो नकारस्यानुस्वारः । हिंस्तः ।

(ख) '**हिन्धि**' इति । 'झसाद्धिर्हे' तदा हिंस् धि इति जाते, 'घे सलोप' इति संकारस्य लोपे रूपम्॥ किञ्च "धौ सलोपो वा सस्य द" इति केचित् । तेन यदा सकारस्य दकारः, तदा 'हिंद्धि' इति रूपम् ।

(ग) '**इन्द्धे**' इति । अत्र 'हसात् परस्य…' अनेन पक्षे 'इन्धे' इति रूपम् । इति रुधादयः ।

**ऐन्धिष्ट । खिद दैन्ये** । खिन्ते । खित्सीष्ट । अखित्त । **विद विचारणे ।** विन्ते । वित्सीष्ट । अवित्त ॥ * ॥ इति रुधादयः ॥

( सु० ) ञिइन्धी दीप्तौ । तथोर्द्ध इति धत्वम् । झषे जशा इति दत्वम् । इन्धेर्नमो नकारस्यानुस्वारपरसवर्णौ नो लोप इति नलोपस्तु न भवत्यल्लोपस्यासिद्धत्वात् स्थानिवत्वाद्वा ॥ इत्यात् ॥ * ॥ इति सुबोधिन्यां रुधादयः ॥

( त० ) **ञिइन्धीति** ॥ ञीतां तगित्येतदर्थो ञिः । इन्ध इत्यत्रेर्णिषेधार्थः । इन्धी इति नम इति नलोपः । नमसोऽस्येति सलोपः ॥ * ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । मता भाष्यकृतो भव्या रुधादिप्रक्रिया गता ॥

इति तत्त्वदीपिकायां रुधादयः ॥ ६ ॥

# अथ तनादयः ॥ ७ ॥

**तनु विस्तारे** ॥ **तनादेरुप्** ॥ कर्तरि चतुर्षु (क) ॥ नुपः । तनोति, तनुतः, तन्वान्ति । ओर्म्वोर्वा लोपः । तनुवः—तन्वः । तनुते । तेनतुः । तेने । अतानीत्—अतनीत् ॥ १ ॥

(सु०) **तनुविस्तारे** । **तनादेरुप्** । तन् आदिर्यस्य स तनादिस्तस्मादुप्कर्त्रर्थेषु अपोपवादः ॥ तनोति । तनुते । तनुयात् । तन्वीत । तनोतु । तनुताम् । अतनोत् । अतनुत । ततान । तेने । तन्यात् । तनिषीष्ट । तनिता । तनिष्यति । तनिष्यते । अतनिष्यत् । अतनिष्यत । अतो हसादेर्लघोरिति वा वृद्धिः । अतनीत्-अतानीत् ॥ १ ॥

(त०) **तनु** ॥ उकारः क्त्वायामिड्विकल्पार्थः । **तनादेरुप्** । तन् आदिर्यस्य स तनादिस्तस्मात् । नलोपाभावस्त्वसंदेहार्थः (ख) । यदि व्याख्यानत इति न्यायादसंदेहस्तदा क्वचिन्नलोपो नेति ज्ञापनार्थः (ग) । तेन सन् आदिर्येषां ते सनादय इत्यादि सिद्धम् । उपः पित्त्वं कुरुत इत्यादौ गुणार्थम् । यदि ङित्यदुरिति सामर्थ्याद्गुणः । अन्यथाऽकारस्यासंभ इति विभाव्यते तदाघर्णोतीत्यत्र गुणार्थमिति बोध्यम् ॥ १ ॥

(**तनादेस्तथासोर्वा सेर्लुक्**) लोपस्त्वनुदात्तनाम् ॥ अतत अतनिष्ट । अतथाः—अतनिष्ठाः ॥ **षणु दाने** । सनोति । सनुते । सेनतुः । सेने । जनसनखनामात्वमिति आत्वम् । सायात्—सन्यात् । असात—असनिष्ट । असाथाः—

(क) **कर्त्तरि चतुर्ष्विति** । चतुर्षु किम् , ततान कर्त्तरि किम् , तन्यते ।

(ख) तनादिर्यस्य तस्मादित्यत्र नलोपश्चि श्वादेरितिवत्तादेरिति भाव्यमिति शङ्कयोत्तरयति—**नलोपाभावस्त्वसंदेहार्थ इति** । स्पष्टार्थं नलोपाकारणमित्यर्थः । अन्यथा तादेरित्युक्ते तनादेर्वा तकारादेर्वा सन्देहः स्यात् ।

(ग) व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति वचनाद्व्याख्यानेन सन्देहनिरासो भवतीत्याह-**यदीति** ॥ सन आदिर्यस्य सनादिः । वृष् वर्षकं वसुर्यस्य वृषन्वसुः । वृषाश्वो यस्य स वृषणश्व इत्यादौ न लोपो नेत्याह-**तदा क्वचिदिति** ॥ यद्वा । तन आदिर्यस्य सस्तनादिः । उच्चारणार्थोऽकार इति ।

असनिष्ठाः ॥ **क्षणु क्षिणु हिंसायाम्।** क्षणोति। ह्म्यन्तक्षणेति न वृद्धिः। अक्षणीत्। अक्षत–अक्षणिष्ट। अक्षथाः–अक्षणिष्ठाः ॥२॥

(सु०) **तनादेस्तथासोर्वा सेर्लुक्** ॥ तनादेः परस्य सेर्लुग् वा भवति तनि थासि च परे ॥ अतत-अतनिष्ट ॥ षणु दाने। नान्तोऽयम्। णकारस्तु लाक्षणिकः। तेन यङ्लुकि संसन्ति, संसन्तः। इत्यादावनुस्वारपरसवर्णौ स्तः। जनसनेत्यात्वम्। सायात्–सन्यात्। असात-असनिष्ट। असाथाः–असनिष्ठाः॥ क्षणु क्षिणु हिंसायाम्। इमावपि लाक्षणिकौ णकारौ। तेन यङ्लुकि चंक्षन्ति। इत्यत्रानुस्वारपरसवर्णौ। ह्म्यन्तेति न वृद्धिः। अक्षणीत्। तनादेस्तथासोरिति वा सेर्लुक्। लोपस्त्वनुदात्ततनामिति न लोपः। अक्षत-अक्षणिष्ट ॥२॥

(त०) क्षणु। द्वावपि दन्त्यान्तौ। णत्वं नु सूत्रबलात् अन्यथा यङ्लुकि चंक्षन्तीत्यत्रानुस्वारो न स्यात् ॥ २ ॥

(**तनादेरुपधाया गुणो वापि**)(क) क्षिणोति–क्षेणोति। अक्षेणीत् ॥ अक्षित। अक्षेणिष्ट। अक्षिथाः–अक्षेणिष्ठाः ॥ **ऋणु गतौ**। ऋणोति–अर्णोति। ऋणुतः। आनर्ण। आनृणे। आर्णोत्। आर्त–आर्णिष्ठ। आर्थाः–आर्णिष्ठाः ॥ **तृणु अदने**। तृणोति–तर्णोति। तृणुते। तर्णुते। अतर्णीत्–अतृत–अतर्णिष्ट। अतृथाः–अतर्णिष्ठाः ॥ **घृणु दीप्तौ**। घृणोति। घर्णोति। जघर्ण। अघर्णीत्। अघृत–अघर्णिष्ट। अघृथाः–अघर्णिष्ठाः ॥ **डुकृञ् करणे**। करोति। ङित्यदुः। कुरुतः ॥ ३ ॥

(सु०) **तनादेरुपधाया गुणो वापि** ॥ तनुषणुक्षणुधातूनां गुणासंभवात् क्षेण्वादिष्वस्य प्रवृत्तिर्बोध्या। अतद्गुणसंविज्ञानो बहुव्रीहिः। उवमिति वः। कुर्वन्ति ॥३॥

(**कुरुच्छुरोर्न दीर्घः**) कुर्वन्ति (ख) ॥४॥

(सु०) **कुरुच्छुरोर्न दीर्घः** ॥ कृञः कुररूपस्य छुरछेदने इत्यस्य च दीर्घो न भवति। कुर शब्दे इत्यस्य तु न निषेधः ॥ ४ ॥

(**कृञो नित्यं वमोरुल्लोपः**) (ग) कुर्वः, कुर्मः ॥५॥

(सु०) **कृञो नित्यमिति** ॥ कृञः परस्य उप्रत्ययस्य लोपः स्यात् वमयोः परयोः ॥५॥

(त०) **कृञो नित्यमिति**। कृञो ये इत्यत्र वेत्यनुवृत्तेर्व्यवस्थया बोध्यम् ॥ ५ ॥

**कृञो ये** ॥ कृञ उप्रत्ययस्य लोपो यि ॥ कुर्यात्। चकर्थ, क्रादेर्नेट्। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। अकृथाः ॥६॥

---

(क) **तनादेरुपधाया गुणोवापीति**। अत्र 'संज्ञापूर्वको विधिरनित्यः' इति न भवतीति आत्रेयादयः। अत्रारुचिस्तु संज्ञापूर्वकस्य विधेरनित्यत्वे भाष्यानुक्तत्वमिति।

(ख) **'कुर्वन्ति'** इति। अत्र–'र्वोरुपधाया दीर्घ इकः' इति दीर्घविधेर्दीर्घसंज्ञापूर्वकत्वेनानित्यत्वाद्दीर्घविधेरल्पापेक्षत्वेनान्तरङ्गत्वाद् असिद्धं बहिरङ्गमन्तरङ्ग इति वत्वस्यासिद्धत्वाद्वा दीर्घाभाव इति केचित्।

(ग) **कृञो नित्यम्**। आरम्भसामर्थ्यान्नित्यत्वे सिद्धे नित्यवचनं स्पष्टार्थम्।

(सु०) **कृञो ये** ॥ लोप इत्यनुवृत्तम् । आशिषि यादादौ इति रिङ् । क्रियात् । उरिति न गुणः । कृषीष्ट । तनादेरिति हेर्लुगभावो लोपो ह्रस्वादिति सिलोपः अकृत ॥६॥

**( संपर्युपेभ्यः करोतेर्भूषणे सुट् )** संस्करोति । अड्द्वित्वव्यवधानेऽपि कात् पूर्वः सुट् । समस्करोत् । संचस्कार ॥ ७ ॥

(सु०) **संपर्युपेभ्यः करोतेर्भूषणे सुट्** ॥ संपर्युपपूर्वस्य करोतेः सुट् स्यात् । भूषणे संघे चार्थे संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्तीत्यर्थः । अड्द्वित्वव्यवधानेऽपि कात् पूर्वः सुट् । संपर्युपेभ्यः परस्य कृञोऽड्व्यवधाने द्वित्वव्यवधाने च कात्पूर्वः सुट् भवति ॥७॥

(त०) **संपर्युपेभ्य** इति ॥ वृत्तिकारमतेनायं पाठः भाष्यवार्त्तिककारादिमते तु संपरिभ्यामित्येव ॥

**( समुटः कृञो लिट इट् )** संचस्करिथ । संचस्करिव । संस्क्रियात् । संस्कृषीष्ट । एवं परिष्कुरुते । उपस्कुरुते । परिष्करिष्यते । पर्यस्कार्षीत्—पर्यष्कार्षीत् इत्यात्त्वे ॥ ८ ॥

(सु०) **ससुटः कृञो लिट इट्** । सुट्सहितात् कृञो लिट इट् भवति । इत्यात्त्वे ॥८॥

**वनु याचने** । वनुते । ववने । परस्मैपद्ययमित्येके (क) । वनोति । शस दद इति । ववान । ववनिथ । अवानीत् ॥ **मनु अवबोधने** । मनुते । मेने । मनिषीष्ट । अमत—अमनिष्ट ॥ इति तनादयः ॥

( त० ) कृतायामिह टीकायां लोकेशकरशर्मणा । मता भाष्यकृतो भव्या तनादिप्रक्रिया गता ॥ * ॥ इति तत्त्वदीपिकायां तनादयः ॥ ७ ॥

# अथ तुदादयः ॥ ८ ॥

**तुद व्यथने** (ख) । **तुदादेरः** ॥ कर्तरि चतुर्षु ॥ तुदति । तुदते । तुत्सीष्ट । अतौत्सीत् । अतुत्त ॥ **णुद प्रेरणे** । नुदति । नुत्सीष्ट । अनौत्सीत् अनुत्त ॥ **दिश अतिसर्जने** । दिशति । दिक्षीष्ट । अदिक्षत् ॥ **भ्रस्ज पाके** । ग्रहांक्ङितिं च । झबे जबाः । भृज्जते ॥ १ ॥

( सु० ) **तुद व्यथने** । **तुदादेरः** । तुद आदिर्यस्य स तुदादिः तस्मादप्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु ॥ अपोऽपवादः ॥ तुदति । तुदते । तुदेत् । तुदेत । तुदतु । तुदताम् । अतुदत् । अतुदत, अतुदेताम् , अतुदन्त । तुद्यात् । तुत्सीष्ट । सिस्योरिति न गुणः । तोत्ता । तोत्स्यति । तोत्स्यते । अतोत्स्यत् । अतोत्स्यत । अतौत्सीत् । झसादिति सिलोपः । अतुत्त ॥ दिश अतिसर्जने । अतिसर्जनं दानम् । हशषान्तात् सगिति सक् । छशषेति षत्वम् । षढोरिति कत्वं च । अदिक्षत् । अदिक्षत ॥ भ्रस्ज पाके । भर्जनरूपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकस्तत्र प्रयोगाभावात् । ग्रहामिति संप्र-

(क) चान्द्रमते परस्मैपदी । इति तनादयः । (ख) 'तुद' । व्यथनं पीडा ।

सारणम् । सस्य श्चुत्वेन शः । शस्य झबे जबा इति जः । भृज्जति । भृज्जते । भृज्जेत् । भृज्जेत । भृज्जतु । भृज्जताम् । अभृज्जत् । अभृज्जत ॥ १ ॥

( त० ) **तुदादेर** इति ॥ तुद आदिर्यस्य स तथा तस्मात् । अप्रत्ययस्यापित्त्वादा पत्तादिर्ङिदिति ङित्त्वं तेन गुणो न (क)। भ्रस्ज इत्ययं पाठः । भ्रस्जो इति पाठे तु भृष्टः भृष्टवानित्यत्र ल्वाद्योदित इति नत्वं स्यात् ॥ १ ॥

( **भ्रस्जो रसो रमनपि वा** ) बभर्ज-बभ्रज्ज, बभर्जतुः-बभ्रज्जतुः । बभर्जिथ-बभ्रज्जिथ-बभर्ष्ठ-बभ्रष्ठ । स्वरान्तादृत्वतश्चेति वेट् । क्ङिति संप्रसारणं बाधकम् भृज्ज्यात् । अभ्राक्षीत्-अभार्क्षीत् । अभ्रष्ट-अभर्ष्ट ॥ **क्षिप प्रेरणे** । क्षिप्सीष्ट । अक्षैप्सीत् । अक्षिप्त ॥ **कृष विलेखने** । कृक्षीष्ट । क्रष्टा-कर्ष्टा । अक्राक्षीत्-अकार्क्षीत् । अकृक्षत, अकृक्षाताम्, अकृक्षन्त ॥ **मिल संगमे** । मिलति । मिमिले । अमेलीत् । अमेलिष्ट ॥ **मुचॢ मोचने** ।

**मुचादेर्मुम्** ॥ मुचलुप्विद्लिप्षिचकृत्पिशखिदामप्रत्यये मुम् ॥ मुञ्चति । मुक्षीष्ट । लितपुषादेर्ङः । अमुचत् । अमुक्त । **लुपॢ छेदने** । लुम्पति । लुलोप । लुप्सीष्ट । अलुपत् । अलुप्त ॥ **विदॢ लाभे** । विन्दति । अविदत । अवेदिष्ट । अनिडयमित्येके । वेत्ता ॥ **लिप उपदेहे** । लिम्पति । लिपिसिचीति ङः । अलिपत् । अलिपत—अलिप्त ॥ **षिच क्षरणे** । सिञ्चति । सिषिचिषे । असिचत्—असिचत,—असिक्त ॥ इत्याते ॥ ३ ॥

( सु० ) **भ्रज्जो रसो रमनपि** वा ॥ भृज्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यात् अनपि ॥ मित्वादन्त्यात स्वरात्परो भवति ॥ स्थानषष्ठीनिर्देशात् रकारोपधयोर्निवृत्तिः । बभर्ज-बभ्रज्ज, बभर्जतुः-बभ्रज्जतुः । थपि बभर्जिथ । स्वरान्तादृत्वतश्चेति वेट् । बभ्रज्जिथ । स्कोरिति सलोपः । छशषेति पः । बभर्ष्ट-बभ्रष्ट । आति । बभर्जे । बभ्रज्जे । क्ङिति रमागमं बाधित्वा संप्रसारणम् । भृज्यात् । भर्क्षीष्ट-भ्रक्षीष्ट । भर्ष्टा—भ्रष्टा । भर्क्ष्यति-भ्रक्ष्यति, भ्रक्ष्यते । अभर्क्ष्यत-अभ्रक्ष्यत् । अभर्क्ष्यत-अभ्रक्ष्यत । अभार्क्षीत्–अभ्राक्षीत् । अभर्ष्ट-अभ्रष्ट ॥ कृष विलेखने । कृषादीनां वेति वा रः । क्रष्टा-कर्ष्टा । सिस्योरिति न गुणः । कृक्षीष्ट । कृपस्पृशेति वा सिः । अनिटो नामिवत इति वृद्धिः । अक्राक्षीत्-अकार्क्षीत् । पक्षे हशषान्तादिति सक् । अकृक्षत् । सिस्योरिति न गुणः । अकृष्ट । सकि अकृक्षत । आति सको लोपः स्वरे इत्यलोपः अकृक्षाताम् ॥ मिल संगमे । अस्मिन्नेव गणे परस्मैपदिषु मिल संश्लेषणे इति धातुपाठे पठ्यते, इह तस्य पुनः पाठः कर्तर्यात्मनेपदार्थः । मिलति । मिलते । मुचादेर्मुम् मुच्लृ मोचने । लुप्लृ छेदने । विदॢ लाभे । लिप उपदेहे । षिच क्षरणे । कृती छेदने । पिश अवयवे । खिद परिघाते ।

---

(क) किञ्च अप्रत्यये सति वादीपोः शतुरिति नुम् विकल्पः, तेन—तुदती-तुदन्ती, अपि तु नित्यं नुम् तेन पचन्तीति ।

विदूल व्याघ्नभूतिमते सेट्कः। वेदिता। भाष्यमते त्वनिट्कः। वेत्ता॥ लिप उपदेहे। उपदेहो वृद्धिः। लिपिसिचीति ङः। अलिपत्। आति तु वा ङः। अलिपत। झसादिति सिलोपः। अलिप्त॥ इत्यात्मे॥ ३॥

(त०) रसोरिति॥ रश्च स् च रसौ तयोः। रेफसकारयोरादेशो भवतीत्यर्थः॥३॥

**ऋषी गतौ**। ऋषति। आनर्ष॥ **ओव्रश्चू छेदने**। वृश्चति। वव्रश्च, वव्रश्चतुः, वव्रश्चुः। वव्रश्चिथ—वव्रष्ठ। व्रश्चिता—व्रष्टा। व्रश्चिष्यति—व्रक्ष्यति। अव्रश्चीत्—अव्राक्षीत्, अव्राष्टाम्॥ **व्यच् व्याजीकरणे**। विचति। विव्याच, विविचतुः। विच्यात्। व्यचिता। व्यचिष्यति। अवयाचीत्—अव्यचीत्। **उछि उञ्छे**। उञ्छति। उञ्छांचकार। औञ्छीत्॥ **उच्छी विवासे**। उच्छति। उच्छांचकार। औच्छीत्॥ **ऋच्छ** गतीन्द्रियप्रलयमूर्तिभावेषु। ऋच्छति॥ *॥

(सु०) नुगशामिति नुक्। आनर्ष। ओव्रश्चू छेदने। ग्रहामिति संप्रसारणम्। वृश्चति॥ लिटि णवादौ पूर्वस्येत्यनेन पूर्वरेफस्य ऋकारः। ततो न संप्रसारणे संप्रसारणमिति परिभाषया निषेधात्सकृत्सूत्रं प्रवर्तते इति न्यायाद्वा पुनर्वस्य संप्रसारणं न वव्रश्च। ऊदितो वेति वेट्। वव्रश्चिथ। स्कोरिति सलोपः। छशषेति षत्वं ष्टुत्वम्। वव्रष्ठ। ऊदितो वेतीटि अव्रश्चीत्॥ इडभावे स्कोरिति सलोपः। छशषेति षत्वं षढोरिति कः। ततः सस्य षत्वम्। अव्राक्षीत्॥ नन्वत्र शकारस्य कथं लोपः। उच्यते। 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्चेषाट्टवर्गस्तवर्गजः' ॥ १ ॥" इति। व्यच् व्याजीकरणे। व्याजीकरणं छद्मकरणम्। ग्रहामिति संप्रसारणं णवादौ पूर्वस्येति पूर्वस्य संप्रसारणं च। विविचतुः। अतो हसादेरिति वा वृद्धिः। अव्याचीत्-अव्यचीत्॥ उछि उञ्छे। उच्छी विवासे। स्वदेशं परित्यज्य देशान्तरे गमनं विवासः। संप्रति धातुपाठे इमौ भ्वादिगणे पठितौ। इह पुनः पाठस्तु उञ्छन्तीत्यत्र वादीपोः शतुरिति नुम्विकल्पार्थः। अप्प्रत्यये तु अप्ययोरान्नित्यमिति नित्यं नुम् उञ्छन्ती॥ *॥

(**ऋच्छेर्नाम्**)

(**ऋच्छेर्लिटि गुणः**) नुगशाम्। आनर्च्छ, अनार्च्छतुः। ऋच्छिता। **उब्ज आर्जवे**। उब्जांचकार। **उज्झ त्यागे**। उज्झांचकार॥ **लुभ विमोहने**। लुभति—लोभिता—लोब्धा। अलोभीत्॥ **तृप तृम्प तृफ तृम्फ तृप्तौ**। तृपति। अतर्पीत्।

(**तृफादीनामप्रत्यये मुम्**) तुम्फति॥ **तुप तुम्प तुफ तुम्फ हिंसायाम्**। तुपति। तुतोप। अतोपीत्। तुम्पति। अतुम्पीत्। तुफति। तुतोफ। अतोफीत्। तुम्फति। तुतुम्फ। अतुम्फीत्॥ **हृप हृम्फ उत्क्लेशे**।

दृपति। दृम्फति। **ऋफ ऋम्फ हिंसायाम्**। ऋफति। ऋम्फति। ऋम्फांचकार॥ **गुफ गुम्फ ग्रन्थे**। गुफति—गुम्फति। अगुम्फीत्॥ **उभ उम्भ पूरणे**। उभति। उवोभ। औभीत्। उम्भति। उम्भांचकार। औम्भीत्। **शुभ शुम्भ शोभार्थे**। शुभति। अशोभीत्। शुम्भति। अशुम्भीत्॥ **दृभी ग्रन्थे**। दृभति। अदर्भीत्॥ **चृती हिंसाग्रन्थनयोः**। चृतति। नृततृदचृतेतीष्वा। चर्तिष्यति—चर्त्स्यति। अचर्तीत्॥ **विध विधाने**। विधति। वेधिता॥ **लिख अक्षरविन्यासे**। लिखति। लेखिता॥ **कुट कौटिल्ये**। कुटति। चुकोट॥ ६॥

(सु०) **ऋच्छेर्नाम्**॥ ऋच्छतेराम् प्रत्ययो न लिटि॥ गुरुनामित्वादाम्प्राप्ते निषेधः॥ **ऋच्छेर्लिटिगुणः**॥ ऋच्छतेर्गुणः स्याल्लिटि॥ लुभ विमोहने। विमोहनमाकुलीकरणम्। इपुसहेति वेट्। लोभिता-लोब्धा॥ तृप तृम्फ तृप्तौ। कृपस्पृशमृशेति सिविकल्पस्तु पौषादिकस्यैव ङस्यापवादत्वात्। तेनात्र नित्यं सिः। अतर्पीत्॥ तृम्फादीनामप्रत्यये नुम्। आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फाद्यः। अप्रत्ययस्य ङित्वान्ना लोपः इति नलोपे कृते नुम्। तृम्फति। दृफ दृम्फ उत्क्लेशे। उत्क्लेशः पीडा। चृती हिंसाग्रन्थनयोः। ईदित्करणमादीदित इतीण्निषेधार्थम्। यद्यप्यस्य वेट्कत्वादिण्निषेधः सिद्ध्यति, तथापि क्वचिद्वेट् इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम्। तेन, धावितमिभराजधिया' इत्यादि सिद्धमिति॥ नृततृदेति वेट्। चर्त्स्यति॥ विध—विधाने। विधानं करणम्॥ कुट कौटिल्ये। कुटिलस्य भावः कौटिल्यं तस्मिन्॥ ६॥

(त०) गुरुनामित्वादाम्प्राप्त इत्याह—**ऋच्छेरिति**॥ ह्रस्वच्छकारस्य द्वित्वे संयोगपरत्वाल्लघूपधत्वाभावाद् गुणाप्राप्तौ **लिटि गुण** इति॥ ६॥

(**कुटादेर्ञ्णिद्वृजः प्रत्ययो ङित्**) चुकुटिथ। कुटिता। अकुटीत् **पुट संश्लेषणे**। पुटति। पुपोट। अपुटीत्॥ **कुच संकोचने**। कुचति। चुकोच। अकुचीत्॥ **गुज शब्दे**। गुजति। गुजिता। अगुजीत् **गुड रक्षायाम्**। गुडति। गुडिता। अगुडीत्॥ **कुड शब्दे**। कुडति। कुडिता॥ **डिप क्षेपे**। डिपिता। **छुर छेदे**। कुरुच्छुरोर्न दीर्घः। छुर्यात्। छुरिता। **स्फुट विकसने**। स्फुटति॥ **मुट आक्षेपप्रमर्दनयोः**। मुटति। मुमोट। मुटिता। **त्रुट छेदे**। त्रुट्यति—त्रुटति। तुत्रोट। त्रुटिता। **तुट कलहकर्मणि**। तुटिता। तुटिष्यति॥ **चुट छुट छेदे**। चुटिता। छुटति। छुटिता॥ **जुट बन्धने**। जुटति। जुटिता॥ **कड मदे**। कडति। अकडीत्। **लुठ संश्लेषणे**। लुठति। लुठिता। **कूड घनत्वे**। कूडिता॥

**कुड बाल्ये** । कुडति । **पुड उत्सर्गे** । पुडिता । **घुट प्रतीघाते** । घुटिता ॥ **स्फुर स्फुरणे** । स्फुरिता । **स्फुल संचलने** । स्फुलिता ॥ ७ ॥

(सु०) **कुटादेर्ञ्णिद्वर्जः** । **प्रत्ययो ङित्** ॥ कुटादेर्गणात्परः प्रत्ययो ङित् स्यात् ञितं णितं च वर्जयित्वा ॥ ङित्वान्न गुणः चुकुटिथ ॥ छुर छेदने । य्वोर्वि हसे इत्यनेन दीर्घं प्राप्ते कुरुछुरोरिति निषेधः । छुर्यात् ॥ त्रुट छेदे । आशम्लाशिति वा यः । त्रुट्यति–त्रुटति ॥ कडेर्धातुपाठे भ्वादौ पठितस्य पुनरत्र पाठः शतृप्रत्यये वाद्रीपोरिति नुम्विकल्पार्थः । पूर्वपाठस्तु कडन्तीति नित्यनुमर्थः ॥ कुड घनत्वे घनत्वं सान्द्रता ॥ ७ ॥

**(निर्निविभ्यः स्फुरतिस्फुलत्योः सस्य षो वा)** निष्ष्फुरति–निस्स्फुरति–निःस्फुरति । निष्फुरति–निस्फुरति । निष्ष्फुलति—निस्स्फुलति–निःस्फुलति । निष्फुलति–निस्फुलति ॥ **णू स्तवने** । अनुवात् ॥ **धू विधूनने** । अधुवीत् ॥ **गु पुरीषोत्सर्गे** । जुगुविथ–जुगुथ । गूयात् । गुता ॥ **ध्रु गतिस्थैर्ययोः** । ध्रुता । अध्रुषीत् ॥ इति कुटादयः ॥ **कृती छेदने** । मुचादेर्मुम् । कृन्तति । नृततृदचृतछृदकृद्भ्योऽसेः सादेरिड्वा । कर्तिष्यति–कर्त्स्यति । अकर्तीत् ॥ **गॄ निगरणे** ॥ ८ ॥

(सु०) **निर्निविभ्यः स्फुरतिस्फुलत्योः सस्य षो वा** ॥ एभ्यः परस्यानयोः सस्य वा षत्वं भवति ॥ णू दीर्घान्तः । परिणूतगुणोदयः' इत्यत्र कित इर्ताण्णिषेधः । कुटादेरिति ङित्वान्न वृद्धिः । नुधातोरित्युव् अनुवीत् लोपो ह्रस्वादिति सिलोपः । अगुताम् । वृत्ताः कुटादयः ॥ कृती ॥ मुचादेरिति मुम् । कृन्तति । नृततृदेति वेट् । कर्तिष्यति–कर्त्स्यति ८

**( गिरतेः स्वरे रस्य लो वा )** ॠत इर् । गिरति– गिलति । गरिता–गरीता–गलिता–गलीता । अगारीत्–अगालीत् ॥ **स्पृश स्पर्शने** । स्प्रष्टा–स्पर्ष्टा । अस्प्राक्षीत् अस्पार्क्षीत्–अस्पृक्षत् ॥ **प्रच्छ ज्ञीप्सायाम्** । प्रहां विङति च । पृच्छति । पप्रच्छिथ–पप्रष्ठ । अप्राक्षीत् ॥ **सृज विसर्गे** । सृजति । सृजिदृशोस्थपो वेट् । ससर्जिथ–सस्रष्ठ । स्रष्टा । अस्राक्षीत् ॥ **टुमस्जो शुद्धौ** । मज्जति । मस्जिनशोर्झसे नुम् । ममज्जिथ–ममङ्क्थ । मङ्क्ता । अमाङ्क्षीत् ॥ **विच्छ गतौ** । आयः । विच्छायति । विच्छायांचकार-विविच्छ ॥ **इषु इच्छायाम्** । गमां छः । इच्छति । इच्छेत् । इच्छतु ॥ ऐच्छत् । इयेष । इयेषिथ । एषिता–एष्टा । ऐषीत् ॥ **विश प्रवेशने** । वेष्टा । अविक्षत् । **मृश आमर्शने** । अम्रक्षीत्–आमार्क्षीत्–अमृक्षत् । **रि पि गतौ** । रियति । पियति । रेता । पेता ॥ **धि धारणे** । धियति ॥ **क्षि निवासगत्योः** । क्षियति । **षु प्रसवे** । सुवति । सविता । **कृ**

**विक्षेपे** ॥ किरति । चकार, चकरतुः, चकरुः ॥ ९ ॥

(सु०) **गिर०** ॥ गिरतेः रेफस्य लत्वं वा स्यात् स्वरे परे ॥ वृङ्वृञ्ऋदन्तानां वेति वा इटो दीर्घः । गरिता-गरीता॥ स्पृशकृषादीनां वेति वा रकारः । छशषेति षत्वं ष्टुत्वम् । स्प्रष्टा-स्पर्ष्टा । कृषस्पृशेति वा सिः । अनिटो नामिवत इति वृद्धिः । अस्प्राक्षीत्-अस्पार्क्षीत् । पक्षे हशषान्तादिति सक् । अस्पृक्षत् । प्रच्छ ज्ञीप्सायाम् । ज्ञातुमिच्छा ज्ञीप्सा । वुण्प्रत्यये प्रच्छकः । षिद्भिदामङिति भिदादित्वादङ्प्रत्यये संप्रसारणे च पृच्छा । ततो ङिडित्करणे इति ञ्यन्तात् वुण्प्रत्यये तु पृच्छकः । ग्रहामिति संप्रसारणम् । पृच्छति । ऋसंयोगादित्यकित्त्वान्न संप्रसारणम् ॥ पप्रच्छतुः । स्वरान्तादत्वत इति वेट् । पप्रच्छिथ-पप्रष्ठ । सृजिदृशोस्थशे वेति थपि वेट् । ससर्जिथ । रारोऽझसे दृशामिति रः । सस्रष्ठ ॥ टुमस्जो शुद्धौ । ट्वितोऽथुः । मज्जथुः । श्चुत्वेन सस्य शः । झवे जबा इति शस्य जः । मज्जति । मस्जिनशोरिति नुम् । स्कोरिति सलोपः ॥ मङ्क्ता ॥ विच्छ ॥ तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि अः न त्वप् । तेन विच्छायन्तीति विच्छायतीत्यत्र वार्दीपोरिति नुम्विकल्पः । आय इत्यायप्रत्ययः । विच्छायति । आयादयोऽनपि वेति वा आयः । कासादिप्रत्ययादित्याम् । यत इत्यलोपः विच्छायां चकार॥ इषु॥ भाष्यवार्तिकमतेऽनुदित् । गमां छ इति छः । इच्छति । इषुसहेति वेट् । एषिता-एष्टा ॥ **विश प्रवेशने** ॥ हशषान्तादिति सक् । अविक्षत॥ मृश आमर्शने । आमर्शनं स्पर्शः । कृषस्पृशमृशेति वा सिः । कृषादीनां वेति वा रः । अम्राक्षीत्—अमार्क्षीत् । हशषान्तादिति सक् । अमृक्षत् ॥ रि पि । तुधातोरतीय् । रियति । पियति । क ॥ ऋत इतीर् । किरति । ऋसंयोगादित्यकित्त्वाद्गुणः । चकरतुः । वृङ्वृञ्ऋदन्तानामिति वेटो दीर्घः । करिता—करीता ॥९॥

(त०) **गिरतेरिति** व्यवस्थितविकल्पोऽयम् । तेन गल इति कण्ठे नित्यं विषे तु गर इत्यत्र न ॥ **प्रच्छ** ॥ अथ कथं 'वक्तारं पृच्छकं श्रोतॄन्' इति । प्रच्छकमित्येव पाठ इति बहवः । पृच्छकमिति पाठे तु भिदादेराकृतिगणत्वादङिः पृच्छा तत्करोतीति ञ्यन्ताद्वुणि बोध्यम् ॥ **विच्छ** ॥ तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि अ एव न त्वप् । तेन विच्छायती विच्छायन्तीत्यत्र वार्दीपोरिति नुम्विकल्पः । केचित्तु तुदादिपाठादिदमेवविकल्पयन्ति, तन्मते तुदादिपाठस्य केवले विच्छती विच्छन्तीत्यत्र चरितार्थत्वादायप्रत्ययान्तादेव न त्वः । तेन विच्छायन्तीत्यत्र नित्यमेव नुम्॥ **इषु**॥ अनुदित्पाठस्तु भाष्यवार्तिकसंमतः ॥ **रियतीति** ॥ रि अ ति इति स्थिते उपधाया लघोरिति गुणः प्राप्तो बहिरङ्गत्वान्निवारितः । तथा हि । इय् अकारापेक्षत्वेन अन्तरङ्गः अल्पाश्रितत्वात् गुणस्तु अकारतिबपेक्षत्वेन वहिरङ्गः बह्वपेक्षत्वात् ॥ ९ ॥

( **उपात्किरतेः सुट् छेदेऽर्थे** ) ॥ १० ॥

(सु०) **उपात्किरतेः सुट् छेदेऽर्थे** ॥ उपोपसर्गात् परस्य किरतेः सुडागमः स्यात् छेदे वाच्ये नान्यत्र ॥ १० ॥

( **हिंसायां प्रतेश्च** ) उपस्किरति । प्रत्यस्किरत् ॥ **रुजो भङ्गे** । अरौक्षीत् । अरौक्ताम् ॥ **भुजो कौटिल्ये** । भोक्ता । अभौक्षीत् , अभौ-

क्ताम् ॥ **छुप स्पर्शे** । छोप्ता । अच्छौप्सीत् ॥ **रुश रिश हिंसायाम्** । रोष्टा, रोष्टारौ । अरुक्षत् ॥ रेष्टा । अरिक्षत् ॥ **लिश गतौ** । लेष्टा । अलिक्षत् ॥ **खिद परिघाते** । मुचादेर्मुम् । खिन्दति । खेत्ता । अखैत्सीत् ॥ **पिश अवयवे** । पिंशति । पेशिता ॥ इति पम् ॥११॥ **जुषी प्रीतिसेवनयोः** । जुषते ॥ **ओविजी भयचलनयोः** । विजते ॥

(सु०) **हिंसायां प्रतेश्च** ॥ उपात् प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् अड्व्यवधानेऽपि सुट् कात्पूर्वं इति वक्तव्यम् ॥ उपस्किरत् । उपचस्कार 'उरोविदारं प्रतिचस्करे नखैः' इति माघः (क) । कर्मणि लिट् ॥ लिश् गतौ । हशषान्तादिति सक् । अलिक्षत् ॥ मुचादेरिति मुम् । खिन्दति । अयं दैन्येऽपि । दिवादौ रुधादौ च वर्तते ॥ पिश-अवयवे ॥ मुचादेरिति मुम् । पिंशति । अयं दीपनायामपि । 'त्वष्टा रूपाणि पिंशतु' । दीपयत्वित्यर्थः । इति सुबोधिन्यां पम् ॥ **ओविजी** ॥ प्रायेणायमुत्पूर्वः । उद्विजते ॥११॥

( **विजेरिडादिप्रत्ययो ङित् (ख)** ) विजिता ॥ **ओलजी ओलस्जी व्रीडे** । लेजे ॥ ललज्जे । **पृङ् व्यायामे** ॥ १२ ॥

( सु० ) **विजेरिडादिप्रत्ययो ङित्** ॥ विजेः पर इडादिः प्रत्ययो ङित् । इह ओविजी तुदादिः रुधादिश्च गृह्यते न तु विजिर् पृथग्भावे इति जुहोत्यादिः(ग) व्याख्यानात् ॥ पृङ् व्यायामे । प्रायेणायं व्याङ्पूर्वः ॥ १२ ॥

**अयङि** ॥ ऋतो रिङ्भवत्यकारे प्रत्यये यकि च (घ) ॥ नुधातोः । व्याप्रियते । व्यापरिष्यते । व्यापृत, व्यापृषाताम् ॥ **मृङ् प्राणत्यागे** १३

( सु० ) **अयङि** ॥ निर्दिष्टत्वादकारस्यैव रिङि सिद्धे ङकारग्रहणं व्यवधानार्थम् । तेन ये इति न दीर्घः(ङ) ॥ १३ ॥

(**म्रियतेर्लुङ्लिङोश्च तुष्वेवात्**) म्रियते । ममार । ममर्थ । मृषीष्ट । अमृत ॥ **दृङ् आदरे** । आद्रियते । आदद्रे । आदृषीष्ट । आदर्ता ।

---

(क) सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह ! सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः ॥ इति ।
शिशुपालवधे० स० १. ४७. श्लोकः ।

(ख) **विजेरिति** । अनेन विजितेत्यादौ गुणवृद्धिनिषेधः ।

(ग) **न तु** विजिरिति तस्यानिट्कत्वादिति हरदत्तादयः । न च क्रादिनीयमात्लिटीट् सम्भवत्येवेति वाच्यम् । तत्र क्त्विवेन गतार्थत्वादिति भावः । वस्तुतस्तु नेदं युक्तम् । विवेजिथेति थपीट् सम्भवात् । तत्र च पित्त्वेन क्त्विाभावात् । न च पूर्वसूत्रे कुटादीनां प्रक्रान्तत्वात्कथञ्चित्तत्साहचर्यात्तदादेरेव ग्रहणं न जुहोत्यादेरिति वाच्यम् , रुधादावपि ङित्त्वादुद्विजितेत्युदाहरद्भिः सह विरोधापत्तेः । तस्मादिह तुदादिरुधाद्योर्ग्रहणे जुहोत्यादेश्चाग्रहणे व्याख्यानमेव शरणम् ।

(घ) **अयकीति** । अश्च यक् चायक तस्मिन् । अत्र ऋतोरिङित्यनुवर्तत इत्याह—**ऋत इति** ॥

(ङ) **न दीर्घ इति** । म्रियत इत्यत्र ये इति यकारे पूर्वस्याव्यवहितस्य विधीयमानो दीर्घो न भवतीति भावः । एवञ्च क्रियत इत्यत्र यकि दीर्घो न ।

आद्दत ॥ **धृङ् अवस्थाने** । ध्रियते । अध्रियत । लोपो ह्रस्वाज्झसे अधृत ॥१४॥ इति तुदादयः ॥

( सु० ) **म्रियतेर्लुङ्लिङोश्चतुर्ष्वेवात्** ॥ मृङश्चतुर्षु लुङ्लिङोश्च परत आत्मनेपदं स्यादन्यत्र पम् । अयकीति रिङ् । नुधातोरितीय् । उरिति न गुणः । मृषीष्टः । हन्नृतः स्यप इतीट् । मरिष्यति । लोपो ह्रस्वादिति सिलोपः । अमृत । शानप्रत्यये म्रियमाणः ॥ **दृङ्** प्रायेणाङ्पूर्वः । 'तथाद्रियन्ते न बुधाः सुधामपि' इति श्रीहर्षः(क) ॥ इत्यात् ॥ १४ ॥ इति सुबोधिन्यां तुदादयः ॥ ८ ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । मता भाष्यकृतो भव्या तुदादिप्रक्रियागता
इति तत्त्वदीपिकायां तुदादयः ॥ ८ ॥

---

# अथ क्र्यादयः ॥ ९ ॥

**डुक्रीञ् द्रव्यविनिमये** ॥ **ना क्र्यादेः**(ख) ॥ कर्तरि चतुर्षु ॥ क्रीणाति ॥

( सु० ) **डुक्रीञ् द्रव्यविनिमये** ॥ विनिमयो व्यतिहारः ॥ ना क्र्यादेः ॥ क्रीरादिर्यस्य स क्र्यादिस्तस्मात् ना प्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु ॥ १ ॥

( त० ) **डुक्रीञ्** ॥ विनिमयः परिवर्तं ॥ **न क्र्यादेः** ॥ क्रीरादिर्यस्य स तथा तस्मात् ॥ १ ॥

**ई हसे** ॥ ना इत्यस्याकारस्य ई ङिति हसे ॥ क्रीणीतः ॥ २ ॥

( सु० ) **ई हसे** ॥ ङित्यदुरित्यतो ङितीत्यनुवृत्तं नात इति च ॥ २ ॥

( त० ) **ई हसे** ॥ नात इत्यनुवर्तते ॥ २ ॥

**नातः** ॥ ना इत्यस्याकारस्य लोपो ङिति स्वरे (ग) ॥ क्रीणन्ति । क्रीणीते । चिक्रयिथ । चिक्रेथ—अक्रैषीत् । अक्रेष्ट ॥ **प्रीञ् तर्पणे कान्तौ च** । पिप्रिये ॥ **श्रीञ् पाके** । अश्रैषीत ॥ **मीञ् हिंसायाम्** । मीनातिमिनोतीत्यात्वम् । ममौ । मिम्यतुः । ममिथ—ममाथ । मासीष्ट । माता—अमासीत् ॥ **षिञ् बन्धने** । सिनाति । सिनीते । सिषाय । सिष्ये । सेता ॥ **स्कुञ् आप्रवणे** ॥ ३ ॥

---

(क) निपीय यस्य क्षितिरक्षिणः कथास्तथा द्रियन्ते न बुधाः सुधामपि
नलः सितच्छत्रितकीर्त्तिमण्डलः स राशिरासीन् महसां महोज्वलः। इति नैष० स०१–१श्लोकः।
इति टिप्पण्यां तुदादयः।

(ख) **नेति** । प्रत्ययस्यादावुच्चारणं योगविभागार्थम् । ना इति योगो विभज्यते । 'स्वादेर्नुः' इत्यतो नुरित्यनुवर्त्तते। धातोर्नाप्रत्ययो भवति नुश्च कर्त्तरि चतुर्षु । अत्र च स्तम्भु स्तुम्भु स्कुम्भु स्कुञ् एते धातवो गृह्यन्ते । लक्ष्यानुसारात् । स्तभ्नाति स्तभ्नोतीत्यादि । एते सौत्राश्चत्वारः पठ्यंते क्र्यादिषु । पठ्येरस्तदापि नुविधानार्थं योगविभागः कर्त्तव्यः क्र्यादेर्नेति पठित्वा। तत्र नोरनुवर्त्तते। सर्वेभ्यः क्र्यादिभ्यः स्यात् । इति लघुभाष्यम् ।

(ग) ना किम् , यान्ति । ङिति किम् अक्रीणम् । आतः किम् , येतीकारवत्सर्वस्य माभूत् ।

( सु० ) **नातः** ॥ ना आत इति छेदः । ङित्यदुरित्यतो ङितीत्यनुवृत्तम् । ओऽमों-रित्यतो लोप इति च । ङिति हसे ईविधानात्परिशेषात्स्वरे इति लब्धम् । ना इत्यविभक्तिकम् । आतोऽन्तोऽदनत इत्यति नात इत्यालोपे क्रीणते । नुधातोरितीय् । चिक्रिये । वृद्धिः । अक्रैषीत् । अक्रेष्ट ॥ प्रीञ् **तर्पणे कान्तौ च** ॥ कान्तिः कामना ॥ मीञ् ॥ मीनातिमिनोतीत्यात्वम् । ममौ । नुधातोरिति यः । मिम्ये । मीयात् । मासीष्ट । माता । मास्यते । अमास्यत् । अमास्यत । यमिरमिनमातामितीट्सकौ । अमासीत्, अमास्त॥३॥

( त० ) **नातः** ॥ ना आत इति छेदः । नेत्यविभक्तिकम् ॥ षष्ठीनिर्दिष्टत्वेनान्त्यस्यैव स्यादात इत्युत्तरार्थं स्पष्टार्थमिहैव कृतम् । हसे ईविधानात्परिशेषात्स्वर इति लभ्यत इत्याह ॥ **स्वरे परे** इति ॥ **स्कुञ्** ॥ आप्रवणमुद्धरणम् ॥ ३ ॥

**(स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यो नुर्ना च)** स्कुनोति, स्कुन्वन्ति । स्कुन्वीत । स्कुनुताम् । स्कुनाति । अस्कुनीत । चुस्कुविषे । अस्कौषीत् । अस्कोष्ट ॥ **स्तम्भुइर् स्तुम्भु स्कम्भु स्कुम्भु रोधने ।** एते पवन्तः ॥ ४ ॥

**( वे स्तम्भादीनां सस्य षः स्यात्** । विष्टभ्नोति, विष्टभ्नाति व्यष्टभ्नात् । वितष्टम्भ, वितष्टम्भतुः । विष्कभ्नोति ॥ ५ ॥

( हु० ) **स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यो नुर्ना च** ॥ स्तम्भादयश्चत्वारः सौत्राः सर्वे रोदनार्था इत्येके । माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थः चतुर्थो धारणार्थ इत्याह । एते पवन्तः। नो लोप इति नलोपः। स्तभ्नोति, स्तभ्नाति॥४॥

( त० ) **स्तम्भु पवन्त** इति ॥ पं परस्मैपदमस्त्येषामिति पवन्तः ॥४-५॥

( **हसादान हौ** ) हसान्ताद्धातोर्नास्थाने आनः स्याद्धौ परे ॥ स्तुभान । स्कभान । अस्तभत्-अस्तम्भीत् ॥ **युञ् बन्धने** । युनाति । योता ॥ [**क्नूञ् शब्दे** । क्नूनाति । क्नूनीते । क्नविता । **द्रूञ् हिंसायाम्** । द्रूणोति । ] **पूञ पवने** ॥ ६ ॥

( सु० ) **हसादान हौ** ॥ हसादिति धातोर्विशेषणम् । तेन तदन्तलाभः । अत इत्यारम्भसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । स्तभान । इरितो वेति वा ङः । अस्तभत्-अस्तम्भीत् ॥ ६ ॥

( त० ) **हसादान हौ** ॥ हसादिति धातोर्विशेषणात्तदन्तलाभ इत्याशयेनाह—**हसान्तादिति** ॥ येन नाप्राप्तन्यायेन नाप्रत्ययं बाधित्वा एवायं न तु नुमपि । तेन पक्षे स्तभ्नुहीत्येव ॥ ६ ॥

**प्वादेर्ह्रस्वः** ॥ कर्तरि चतुर्पु ॥ पुनाति । अपावीत् ॥ **लूञ् छेदने** । लुनाति । अलावीत् ॥ **स्तॄञ् आच्छादने** । स्तृणाति । तस्तार, तस्तरतुः । स्तीर्यात् । स्तरिषीष्ट—स्तीर्षीष्ट । अस्तारीत् । अस्तरिष्ट—अस्तीर्ष्ट ॥

**कॄञ् हिंसायाम्** ॥ कृणाति । चकरे । करिषीष्ट–कीर्षीष्ट । अकरिष्ट-अकरीष्ट–अकीर्ष्ट । पेसेरिटो न दीर्घः सीष्टादेश्च ॥ **वॄञ् वरणे** । वृणाति । वूर्यात् । वरिषीष्ट–वूर्षीष्ट । अवरीष्ट–अवूर्ष्ट ॥ **धूञ् कम्पने** । धुनाति । दुधविथ–दुधोथ । धविता–धोता । अधावीत् । अधविष्ट–अधोष्ट ॥ **ग्रह उपादाने** । गृह्णाति । गृहाण । जग्राह, जगृहतुः । ग्रहीषीष्ट । ग्रहीता । अग्रहीष्ट ॥ इत्यात्मे ॥ **शॄ हिंसायाम्** ॥ शृणोति ॥७॥

( सु ) प्वादेर्ह्रस्वः ॥ प्वादेर्ह्रस्वो भवति चतुर्षु पंप्सु ॥ ऋसंयोगादित्यकित्त्वाद्गुणः । तस्तरतुः । ऋत इरितीर । य्वोर्वि हसे इति दीर्घः । स्तीर्यात् । सीष्टादेश्चेतीटो न दीर्घः । स्तरिषीष्ट । । वृङ्वृञ्ॠदन्तात्सिस्योरिड् वा इति वेट्पक्षे उरिति गुणो न ऋत इरितीर् । य्वोर्वि हसे इति दीर्घः स्तीर्षीष्ट । वृङ्वृञिति वेटो दीर्घः स्तरिता । स्तरीता। पेसेरिटो न दीर्घः । अस्तारिष्टाम् ॥ वॄञ् पोरुरित्युर् य्वोर्वि हसे इति दीर्घः । वूर्यात् । लुङि अवारीत् । पं सेरिति न दीर्घः । अवारिष्टाम् ॥ आति तु वृङ्वृञ्ॠदन्तात् सिस्योरिति वेट् । अवरिष्ट-अवरीष्ट । उरितो गुणोन । पोरुरित्युर् । य्वोरिति दीर्घः । अवूर्ष्ट ॥ धूञ् ॥ स्वरतीसूतीति वेट् । दुधविथ-दुधोथ । स्तुसुधूञामितोट् आधावीत् । ग्रहामिति संप्रसारणम् । गृह्णाति–गृह्णीते । ईटोग्रहामितीटो दीर्घः । ग्रहीषीष्ट । ह्मयन्तेति न वृद्धिः । अग्रहीत् । ईटो ग्रहामस्मिन्सूत्रे एकस्वराद्ग्रहेर्विहितस्येटो दीर्घ इति वक्तव्यम् । एकस्वरादिति किम् । जाग्रहिता, जाग्रहिष्यतीत्यादौ यङ्लुकि मा भूत् । ग्रहेर्विहितस्य किम् । ग्राहितः अत्र ञेर्विहितत्वान्न दीर्घः । प्रकृतस्येटो ग्रहणात् ग्राहिष्यते इत्यादाविण्वदिटो न दीर्घः ॥ इत्यात्मे ॥ ७ ॥

(**शॄदॄप्रां ह्रस्वो वा लिटि किति**) शशरतुः–शश्रतुः । शीर्यात् । शरिता–शरीता ॥ **पॄ पालनपूरणयोः** । पृणाति । पपरतुः । पूर्यात् ॥ **वॄ वरणे** । वृणाति । ववरतुः । वूर्यात् ॥ **भॄ भर्त्सनभरणयोः** । भृणाति । **मॄ हिंसायाम्** । मृणाति ॥ **दॄ विदारणे** । दृणाति । ददरतुः–दद्रतुः । **जॄ वयोहानौ** । (क) । जृणाति ॥ **नॄ नये** । नृणाति ॥ **कॄ हिंसायाम्** । कृणाति । **ॠ गतौ** । ऋणाति । अरांचकार । ईर्यात् । अरिता-अरीता । आरीत् ॥**गॄ शब्दे** । गृणाति । **ज्या वयोहानौ** । ग्रहां क्ङिति च । जिनाति । जिज्यौ, जिज्यतुः । जीयात् । अज्यासीत् ॥ **री गतिरेषणयोः** । रिणाति । रियतुः ॥ **ली श्लेषणे** । लिनाति । ललौ–लिलाय, लिल्यतुः । ललिथ–ललाथ–लिलयिथ–लिलेथ । लाता–लेता । अलैषीत्–अलासीत् ॥**व्ली वरणे** व्लिनाति ॥ **प्ली गतौ** । प्लिनाति ॥ इति प्वादयः ॥

---

(क) भॄ इत्येके । भृ इत्यन्ये ।

**व्री वरणे** । व्रीणाति ॥ **भ्री भयभरणयोः** । भ्रीणाति ॥ **क्षीष् हिंसायाम्** । एषां त्रयाणां वा ह्रस्वः । **ज्ञा अवबोधने** । ज्ञाजनोर्जा । जानाति । जज्ञौ । ज्ञायात्–ज्ञेयात् । अज्ञासीत् । **बन्ध बन्धने** । बध्नाति । बबन्धिथ–बबन्द्ध । बन्द्धा । भन्त्स्यति । अभान्त्सीत् । सकारलोप आदेश इति न तु मात्रविधौ । तेन अबान्धाम् ॥ **मन्थ विलोडने** । मथ्नाति । मथान ॥ **श्रन्थ ग्रन्थ संदर्भे** । श्रथ्नाति । शश्रन्थ । जग्रन्थ । श्रन्थिग्रन्थीत्यादीनां वा लिटः कित्त्वम् । शश्राथ । जग्राथ ॥ **कुथ कुन्थ संश्लेषणसंक्लेशनयोः** । चुकोथ ।चुकुन्थ ॥ **मृद मृड क्षोदे** । मृदान । मृडान । **गुध रोषे** । गुध्नाति । **कुष निष्कर्षे** । कुषाण ॥१॥

( मु० ) **शॄदॄप्रां ह्रस्वो वा लिटि** ॥ एषां वा ह्रस्वो लिट्येव । शश्रतुः । अन्यत्र ऋसंयोगादित्यकित्त्वाद् गुणः । शशरतुः । कित इति निषेधस्य क्रादिनियमेन बाधः । शशरिव–शश्रिव । ऋत इरितीरि कृते य्वोर्वि हसे इति दीर्घः । शीर्यात् । वृङ्वृञ् इति वेटो दीर्घः । शरिता–शरीता । ऋ ॥ ऋणाति । ऋर्णीयात् । ऋणातु । आर्णीत् । अरांचकार । ईर्यात् । अरिता–अरीता । अरिष्यति—अरीष्यति । आरिष्यत् । आरीत्–ज्या । ग्रहामिति संप्रसारणम् । दीर्घस्य दीर्घ इति दीर्घे कृते त्वादेर्ह्रस्व इति ह्रस्वः । जिनाति ॥ री गतिरेषणयोः । रेषणं वृकशब्दः । लीलीङोरित्यात्वं वा, ललौ–लिलाय । लेता इति ल्वादयः । प्वादयोऽपि । क्षीप् । पित्त्वादङ् । क्षिया । ज्ञाजनोर्जेति जादेशः । जानाति ॥ बन्धः । नोलोप इति नलोपः । बध्नाति । हसादान हावित्यानः । अत इति हेर्लुक् । बधान । आदिजबानामिति भत्वम् । भन्त्स्यति । सावनिटो नित्यमिति वृद्धिः । अभान्त्सीत् । तथोर्ध इति तस्य धत्वम् । झसादिति सिलोपः । अबान्धाम् ॥ अभान्त्सुः ॥ श्रन्थ विमोचनप्रतिहर्षयोरित्यस्य श्रन्थ ग्रन्थसंदर्भे इत्यर्थभेदात् श्रन्थेः पुनः पाठः ॥ श्रन्थग्रन्थीत्यादिना कित्त्वपक्षे एत्वपूर्वलोपावप्यत्र वक्तव्याविति हरदत्तादयः ॥ श्रेथतुः, श्रेथुः । इदं कित्त्वं पितामपीति सुधाकरमते श्रेथिथ । अस्मिन्नपि पक्षे णपि शश्राथ ॥ उत्तमे तु शश्राथ, शश्रथेति माधवः । तत्र मूलं मृग्यम् ॥ मृद मृड क्षोदे । ष्टुत्वम् । मृड्नाति ॥ कुष निष्कर्षे । अन्तर्गतस्य बहिर्निष्कासनं निष्कर्षः ॥ १ ॥

**(निरः कुषो वसादेरनपीड्वा)** निष्कोषिता-निष्कोष्टा । निरकोषीत्–निरकुक्षत् । **क्षुभ संचलने** ॥ २ ॥

**(क्षुभ्नादिषु न णत्वम्)** क्षुभाण ॥ **णभ तुभ हिंसायाम्** । नभान । तुभान ॥ **क्लिश विबाधने** । क्लिश्नाति । अक्लेशीत् अक्लिक्षत् । **अश भोजने** । अश्नाति । आशीत ॥ **उध्रस उञ्छे** । ध्रस्नाति । उकारो धात्ववयव इत्येके । उध्रसांचकार । औधासीत्–औध्रसीत् ॥

**विषविप्रयोगे** । विषाण । वेष्टा । आविक्षत् ॥ **पुष् पुष्टौ** । पोषिता ॥ **मुषस्तेये ॥ खच् खव् हिठ् भूतप्रादुर्भावे** खच्ञाति ॥ ३ ॥

( सु० ) **निरः कुषो वसादेरनपीड्वा** ॥ निर्पूर्वात् कुषेः परस्य वसादिप्रत्ययस्य इड्वा स्यात् अनपि ॥ इड्भावे हशषान्तादिति सक् । निरकुक्षत् । **क्षुभ्नादिषु न णत्वम्** । क्षुभ्नादिराकृतिगणः ॥ णभ तुभ भ्वादौ दिवादौ च ।। क्लिशू विबाधने ॥ न शादिति श्चुत्वनिषेधः(क)। क्लिश्नाति । ऊदितो वेति वेट् । अक्लेशीत् ॥ इडभावे हशषान्तादिति सक् । अक्लिक्षत् ॥ पुष पुष्टौ ॥ अनिट्कैषु पुष्यतीति यप्रत्ययेन निर्देशादयं सेडिति भावः । पोषिता । खच् खव् हिठ् भूतप्रादुर्भावे । भूतप्रादुर्भावः अतिक्रान्तोत्पत्तिः । श्चुत्वम् ॥ खच्ञाति ॥ २-३ ॥

( त० ) **खच्** इति ॥ भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः ॥ **खच्ञातीति** ॥ स्तोः श्चुभिश्चुरिति ञः ॥ २-३ ॥

**( खवौ वस्य औ ने )** खौनाति । हिठ्णाति ॥ इति पम् ॥ **वृङ्सम्भक्तौ** । वृणीते । वव्रे । वरिषीष्ट–वृषीष्ट । अवरिष्ट–अवृत ॥ इति क्रयादयः ॥ ४ ॥

( सु० ) **खवो वस्य औ ने** । खवेर्धातोर्वकारस्य औत्वं भवति नप्रत्यये परे ॥ परत्वादौत्वे हसान्तत्वाभावात् हसादान हाविति न । खौनीहि (ख) । ष्टुत्वम् । हिठ्णाति ॥ इति परम् ॥ वृङ् सम्भक्तौ ॥ सम्भक्तिर्भजनम् । क्रादेरिति नेट् । ववृषे ॥ वृङ्वृञ्ऋदन्तात्सिस्योरिड् वा । वरिषीष्ट-वृषीष्ट । वृङ्वृञ्ऋदन्तानामिति वेटो दीर्घः । वरिता–वरीता । इडभावे लोपो ह्रस्वादिति सिलोपः । अवृत । इत्यात् ॥

इति सुबोधिन्यां क्रयादयः ॥ ३ ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगमत्क्र्यादिसाधनम् ॥ इति तत्त्वदीपिकायां क्र्यादयः ॥ ९ ॥

---

# अथ चुरादयः ॥ १० ॥

**चुर स्तेये ॥ चुरादेः** ॥ स्वार्थे ञिः ॥ चोरयति । चोरयते । चोरयांचकार (ग) । चोर्यात् । अचूचुरत (घ) ॥ **चिति स्मृत्याम्** ।

---

(क) स्तोश्चुभिरिति प्राप्तावाह—**न शादिति** ।

(ख) **खौनीहीति** । 'खवो वस्य औ ने' इति सूत्रस्य 'हसादानह्नौ' इति सूत्रापेक्षया परत्वात् प्रथममौत्वे कृते हसन्तत्वाभावान्नास्थाने आनाभाव इति भावः। इति चक्रधरासमाख्यायां टिप्पण्यां क्र्यादयः।

(ग) **चोरयांचकारेति** । अत्र 'कासादिप्रत्ययादाम्' अनेने आम् प्रत्ययः ।

( घ ) लुङ्लकारे चुर् ञि दिप् इति जाते 'ञेरङ्द्विश्च' अनेन अङ्प्रत्ययो धातोर्द्वित्वं च भवति । पूर्वस्य'...चुचुर् अङ् दिप् इति जाते 'लघोर्दीर्घ' अनेन पूर्वस्य दीर्घः । दिवादावट्, स्वर०, वावसाने, **अचूचुरत्—अचूचुरद्** ॥ अथ वा चोरि इति सिद्धस्यैव अङ्प्रत्यये कृते 'ञेः' अनेन ञेर्लोपे कृते, निमि-

चिन्तयति । अचिचिन्तत् । चुरादेर्णिर्वेति केचित् ॥ चिन्तति ॥ **यत्रि सङ्कोचने** । यन्त्रयति । अययन्त्रत । **ओलडि उत्क्षेपणे** । ओलण्डयति । ओलण्डति । ओलण्डांचकार । औललण्डत् । ओकार इदित्येके । लण्डयति । अललण्डत् । लण्डति । अलण्डीत् ॥ **पीड अवगाहे** । पीडयति । पीडयते । पीडयांचक्रे ॥ १ ॥

(सु०) **चुर स्तेये** ॥ **चुरादेः** ॥ स्वार्थे णिः ॥ चुर आदिर्यस्य स चुरादिस्तस्मात् चुरादेर्गणात् स्वार्थे णिः स्यात् ॥ उपधाया लघोरिति गुणः । धातुत्वात् तिप् । गुणायादेशौ । 'णित्स्वरितेत उभे' इत्युभयपदम् । चोरयति । चोरयते । चोरयेत् । चोरयतु । चोरयताम् । अचोरयत् । अचोरयत । चोरयामास । चोरयांचक्रे । णेरिति णिलोपः । चोर्यात् । चोरयिषीष्ट । चोरयिता । चोरयिष्यति । चोरयिष्यते । अचोरयिष्यत् । अचोरयिष्यत । लुङि अचूचुरत् । अचूचुरत ॥ चिति स्मृत्याम् । चिन्तेति पठितव्ये । इदित्करणं णिप्रत्ययस्य पाक्षिकत्वे ज्ञापकम् । सर्वेऽपि चुरादयो विकल्पेन णिप्रत्ययं लभन्ते इत्यर्थः । तेन चिन्त्यात् , चिन्त्यते इत्यादौ 'न लोपः' इत्यनेन लोपो न ॥ यत्रिसंकोचने । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम(क) । यन्त्र इत्यत्र नकारे पठितेऽपि नो लोप इति नलोपो न लभ्यते नकारस्यानुपधात्वात् । चिन्त्यादित्यत्र तु चिन्त स्मृत्यामिति नकारोपधपाठे नस्य लोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः ॥ ओलडि उत्क्षेपणे । ओदित्करणं ल्वाद्योदितश्चेति धातोरव्यवहितस्य तकारस्य नत्वार्थमिति तद्बलात् नेडित्येके । आदिद्बलादिड्व्यवधानेऽपि नत्वमित्यन्ये । लण्डिनः ॥ १ ॥

( त० ) **चुरादेः**॥ चुर आदिर्यस्य स तस्मात् । तद्गुणसंविज्ञानो बहुव्रीहिः । अनुद्भूतावयवभेदसमुदायस्यान्यपदार्थत्वेनाश्रयणादेकवचनम् । ननु धातोः प्रेरणे इत्यनेनैव चुरादेरपि स्यात्किमनेनेत्यत आह-**स्वार्थे** इति ॥ **णिर्वेति** ॥ अयं भावः । चिन्तेति पठितव्ये इदित्करणं णेः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यादित्यादौ नलोपो न **यत्रि** ॥ यन्त्रेति पठितुं युक्तम् । इदित्त्वाभावेऽपि उपधाभूतनकाराभावे नलोपाभावात् ॥ १ ॥

**(भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वोऽङ्परे णौ)** अपीपिडत्—अपिपीडत् ॥ **प्रथ प्रख्याने** । प्राथयति ॥ २ ॥

( सु० ) **भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वोऽङ्परे णौ** ॥ एषामुपधाया ह्रस्वो वा स्यात् अङ्परो यस्मात् सोऽङ्परस्तस्मिन् णिप्रत्यये परे भ्राज् भ्रास दीप्तौ । भाष व्यक्तायां वाचि । दीपी दीप्तौ । जीव प्राणधारणे । मील निमीलने । पीड अवगाहे । ह्रस्वपक्षे लघोर्दीर्घ इति पूर्वस्य दीर्घः । अपीपिडत् । ह्रस्वाभावे अपिपीडत् ॥ प्रथ प्रख्याने । प्रख्यानं कथनम् । स्वार्थे णौ ज्ञपादिभ्य इति वक्ष्यमाणेन मित्त्वाभावान्न ह्रस्वः । प्राथयति ॥ २ ॥

---

त्वाभावे इति वचनात् चो इत्यस्य चुः । ततो द्वित्वम् । एवमपि साधना भवति ॥ तथा च माघे-अचूचुरच्चन्द्रमसोऽभिरामतामिति । (क) **तच्चिन्त्यमिति** । यत्रितत्रिमन्त्र्यादिषु इकारो व्यर्थ एव न तु ज्ञापनार्थः ।

**( स्मृदृत्वरप्रथम्रदस्तॄस्पशां पूर्वस्याऽदङ्परे णौ इत्वापवादः )** अपप्रथत् ॥ **पृथ प्रक्षेपे** । पर्थयति ॥ ३ ॥

( सु० ) **स्मृदृत्वरप्रथम्रदस्तॄस्पशां पूर्वस्यादङ्परे णौ इत्वापवादः** ॥ एषां द्वित्वे पूर्वस्य अत्वं स्यात् अङ्परे णौ अङि लघावित्यस्यापवादः ॥ स्मृ चिन्तायाम् । दृ भये । ञित्वरा संभ्रमे । प्रथ प्रख्याने । म्रद मर्दने । स्तॄञ् आच्छादने । स्पश् बाधनग्रन्थनयोः ॥ ३ ॥

**( उपधाया ऋवर्णस्य ऋद्वाङ्परे णौ इररारामपवादः )** अपीपृथत् । अपपर्थत् ॥ **भक्ष अदने** ॥ अबभक्षत् ॥ **श्रण दाने** । विश्राणयति । अशिश्रणत्—अशश्राणत् ॥ **तड आघाते** । अतीतडत् ॥४॥

( सु० ) **उपधाया ऋवर्णस्य ऋत् वाङ्परे णौ इररारामपवादः** ॥ ऋवर्णोपधस्य धातोरुपधाया ऋद्वा स्यात् अङ्परे णौ इररारामववादः ॥ धातोरुपधाया ऋत इरिति । अचीकृतदित्यादौ इर्प्राप्तः, अमीमृजदित्यत्र मृजेर्वृद्धिरित्यार् प्राप्तः, इतरेषामृदुपधानामुपधाया लघोरिति अपीपृथदित्यादावर् प्राप्त इति विवेकः ॥ श्रण दाने ॥ प्रायेणायं विपूर्वः (क) । विश्राणनं वितरणम् ॥ ४ ॥

( त० ) इररारामिति ॥ दीर्घोपधे उपधाया ऋत इति इर् प्राप्तः । मृजेर्वृद्धिरित्यार् प्राप्तः । लघूपधत्वे त्वर् प्राप्तः ॥ ४ ॥

**ज्ञप ज्ञानज्ञापनयोर्मित्** ॥ ५ ॥

( सु० ) **ज्ञप ज्ञानज्ञापनयोर्मित्** ॥ ज्ञप धातुर्ज्ञाने ज्ञापने च ञिप्रत्ययं लभते मित्संज्ञकश्च । 'प्रतिपज्ज्ञप्तिचेतनाः'(ख) ॥ ५ ॥

**मितां ह्रस्वः** ॥ मितां धातूनामुपधाया ह्रस्वो णौ ॥ ज्ञपयति । अजिज्ञपत् ॥ ६ ॥

( सु० ) **मितां ह्रस्वः** ॥ म् इत् येषां ते मितः तेषाम् । घटादयो मित इत्यादि मित्संज्ञकानां ग्रहणम् ॥ ६ ॥

( त० ) **मितां ह्रस्वः** ॥ म् इत् येषां ते तथा तेषाम् ॥ ६ ॥

**यम वेष्टने मित्** । यमयति । अयीयमत् ॥ ७ ॥

( सु० ) **यम वेष्टने मित्** ॥ चुरादौ यमधातुर्वेष्टने मित् न तु भोजने । यमयति चन्द्रम् । परिवेष्टते परिवेषं करोतीत्यर्थः । यमधातुश्चुरादौ घटादौ तु यच्छतिर्भोजनतोऽन्यत्र । मिन्नेति भोजने एव मित्संज्ञकः । यमयति ब्राह्मणान् भोजयतीत्यर्थः । अन्यत्र आयामयति द्राघयति व्यापारयति वेत्यर्थः । जनीजॄष्वित्यमन्तत्वादेव सर्वार्थेषु मित्त्वे सिद्धे विशेषार्थं वचनम् ॥ ७ ॥

( त० ) **यमयति** ॥ परिवेष्टत इत्यर्थः ॥ ७ ॥

---

( क ) **प्रायेणेति** । तथा च श्रीहर्षः—'मत्प्राणविश्राणनजं च पुण्यमिति ॥

( ख ) **ज्ञाने ज्ञापने चेति** । प्रच्छ ज्ञीप्सायामित्यत्र ज्ञाने 'श्लाघ ह्नुङ्—इति पाणिनीयसूत्रे ज्ञीप्समानो बोधयितुमिच्छमाण इति व्याख्याया ज्ञापने च प्रयोगदर्शनाद् इति भावः ।

**चह चप परिकल्कने मित्** । चहयति । अचीचहत् । चपयति । अचीचपत् ॥ ८ ॥

( सु० ) **चह चप परिकल्कने मित्** । परिकल्कनं दम्भः शाठ्यं च । अदन्तेषु कथादिषु वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वान्नाद्कःर्यम् । अचचहत् ॥ ८ ॥

( त० ) **परिकल्कने** ॥ परिकल्कनं दम्भः शाठ्यं च । कथनमित्यन्ये ८ ॥

**रह त्यागे मित्** । रहयति । अरीरहत् ॥ ९ ॥

( सु० ) **रह त्यागे मित्** ॥ कथादेस्तु अररहत् ॥ ९ ॥

**बल प्राणने मित्** । बलयति । अबीबलत् ॥ १० ॥

**चिञ् चयने मित्** ॥ ११ ॥

( सु० ) **चिञ् चयने मित्** ॥ रचनायां मिदयम् ॥ ११ ॥

**( चिस्फुरोर्णावात्वं वा )** ॥ १२ ॥

( सु० ) **चिस्फुरोर्णावात्वं वा** ॥ अनयोरात्वं वा स्यात् णिप्रत्यये परे ॥ १२ ॥

**रातो णौ पुक्** ॥ ऋधातोरादन्तस्य च पुक् णौ ॥ चपयति । अचीचपत् । चययति । अचीचयत् ॥ स्वार्थे णौ ज्ञपादिभ्योऽन्ये मितो न॥ कृत संशब्दने १३

( सु० ) **रातो णौ पुक्** ॥ आ च आच्चानयोः समाहारो रात् तस्य आत्वे पुकि ह्रस्वे चपयति । आत्वाभावे चययति । स्वार्थे णौ ज्ञपादिभ्योऽन्ये मितो न । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न । मुख्यमते पञ्च ज्ञपादयः मतान्तरे सप्त। कृत संशब्दने॥ १३॥

( त० ) **रापौ णौ**-॥ आ च आच्च रात् तस्य रातः । ऋ इत्यनेनोभयोरपि ग्रहणम् । तेन ऋच्छन्तम् इयतं वा प्रेरयतीति विग्रहे अर्पयतीति भवति ॥ **ज्ञपादिभ्य** इति॥ सप्तभ्य इति मतान्तरं बोध्यम् । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न ॥ १३ ॥

**(धातोरुपधाया ऋत इर्)** कीर्तयति । अचीकृतत् । अचीकीर्तत् १४

( सु० ) **धातोरुपधाया ऋत इर्** ॥ ननु ऋत इर् इति सूत्रे धातोर्ऋत इर् इति व्याख्याने सिद्धमिष्टं किमनेन सूत्रेणेति चेन्मैवम् । तथाहि सति ऋकारीयति इत्यत्रापि इर्प्रसंगः स्यात् । उपधाया ऋवर्णस्य ऋद्वेति पक्षे अङि लघौ ह्रस्व इति इत्वे कृते हलोर्दीर्घ इति दीर्घः । अचीकृतत् । पक्षे अचिकीर्तत् ॥ १४ ॥

**(आकुस्मादात्मनेपदिनः) चित** संचेतने । चेतयते । अचीचितत ॥ **दशि** दंशने । दंशयते । अददंशत । आकुस्मीयमात्मनेपदं णिसन्नियोगेनैव ॥ दंशति । नलोपो न सञ्जिसाहचर्यात् भ्वादेरेव तत्र ग्रहणात् ॥ **तत्रि कुटुम्ब** धारणे । तन्त्रयते । कुटुम्बयते । अततन्त्रत । अचुकुटुम्बत॥ **मत्रि** गुप्तभाषणे । मन्त्रयते । **शम् लक्ष** आलोचने । शामयते । लक्षयते, अशीशमत । अललक्षत ॥ **दिवु** परिकूजने । देवयते ॥ **गॄ** विज्ञाने । गारयते ।

अजीगरत ॥ **विद** चेतना ख्याननिवासेषु । वेदयते । अवीविदत ॥१५॥

( सु० ) **आकुस्माद् त्मनेपदिनः** ॥ कुस्मनाम्नोवेति वक्ष्यते तमभिव्याप्येत्यर्थः। परगामिफलार्थमिदमात्मनेपदम् । चित संचेतने ॥ संचेतनं मूर्छाद्यवस्थानिवृत्युत्तरकालिकं ज्ञानम् । शम् लक्ष आलोचने । ननु 'निशामय तदुत्पत्तिम्, (क) इति कथं संगच्छते । आकुस्मीयत्वादात्मनेपदे निशामयस्वेति रूपस्य सर्वसम्मतत्वादिति । यदि शमु उपशमने इत्यस्मात् ञिप्रत्ययस्तर्ह्यमन्तत्वान्मित्वे सति ह्रस्वेन भाव्यम् । अत्राहुः । स्वार्थञ्यन्ता-दस्माद्धातोः प्रेरणे इति ञिप्रत्यये निशामयेति रूपं जानीहि । न चार्थासंगतिरिति वाच्यम् । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इति सिद्धान्तात् । स्वार्थे ञौ ज्ञपादिभ्य इति मित्वनिषेधः । शामयते ॥ विद् चेतनाख्याननिवासेषु । "सत्तायां विद्यते ज्ञाने वेत्ति विन्दते विन्दति प्राप्तौ याब्लुग्नमेष्विदं क्रमात् (ख) ॥१॥"१५॥

( त० ) **शामयत** इति ॥ आकुस्मीयत्वादात् । निशामय तदुत्पत्तिमिति तु निवृत्तप्रेरणात् 'धातोः प्रेरणे' इति प्रेरणे ञौ बोध्यम् । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः ॥१५॥

**कुस्मनाम्नो वा** ॥ कुस्मेति धातुः कुत्सितस्मयने ॥ अथवा कुस्मेति नाम ततो ञिः । कुस्मयते । अचुकुस्मत ॥ **कण** निमीलने । काणयति । अचीकणत्—अचकाणत् ॥ १६ ॥

( सु० ) **कुस्मनाम्नो वा** ॥ कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे समासे च कृते निष्पन्नं कुस्मेति नाम ॥ कण निमीलने । एकनेत्रनिमीलने एवायं शब्दस्वभावात् । काण्यादीनां कणरणभणेति सूत्रेण 'अङि लघौ ह्रस्वः' इति ह्रस्वो विकल्प्यते । अचीकणत्-अचकाणत् १६

( त० ) **निमीलने** ॥ स्वभावादेकनेत्रस्यैव ॥ १६ ॥

**( नवगण्यामुक्तेभ्यो हिंसार्थेभ्यः स्वार्थे ञिः )** **हिसि** हिंसायाम् । हिंसयति ॥ **ज्ञा** नियोगे । आज्ञापयति । अजिज्ञपत् ॥ **भू** मिश्रीकरणाचिन्तनयोः । भावयति । अबीभवत् । **लोकृ लोचृ** परिभाषणे।१७।

( सु० ) **नवगण्यामुक्तेभ्यो हिंसार्थेभ्यः स्वार्थे ञिः** ॥ नवगण्यामुक्ता हिंसार्थाः स्वार्थे ञिप्रत्ययं लभन्ते । घातयति हन्तीत्येतौ समानार्थौ ॥ भू मिश्रीकरणचिन्तनयोः । भावयति मिश्रीकरोति चिन्तयति वेत्यर्थः ॥ १७ ॥

**न रितः** ॥ ऋदितः शासेश्चाङ्युपधाया ह्रस्वो न ॥ अलुलोकत् । अलुलोचत् ॥ **धूञ्** कम्पने ॥ १८ ॥

( सु० ) **न रितः** ॥ ऋ इत्यस्य रित् तस्य । शासु अनुशिष्टौ ॥ १८ ॥

**( धूञ्प्रीञोर्नुक् ञौ )** धूनयति । अदुधूनत् ॥ **प्रीञ्** तर्पणे । प्रीणयति । अपिप्रीणत् ॥ १९ ॥

( क ) निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति मार्कण्डेयपुराणोक्त सप्तसती ।

( ख ) प्रकारान्तरेण केचिदिममाहुः—वेत्तिरूपं विदज्ञाने विन्ते विदविचारणे, विद्यते विद सत्तायां लाभे विन्दति विन्दते, इति ।

( सु० ) **धुञ्प्रीञोर्नुक् णौ** ॥ अनयोर्नुगागमः स्यात् णिप्रत्यये ॥ धूञ् कम्पने । प्रीञ् तर्पणे । धूञ् धातुः स्वादौ क्र्यादौ तुदादौ चुरादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये काव्ये । "धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ॥ वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च ॥ १९ ॥

अथादन्ताः ॥ **कथ** वाक्यप्रबन्धे । यत इत्यल्लोपस्य स्थानिवत्त्वेन न वृद्धिः । कथयति ॥ ❀ ॥

(सु०) **अथादन्ताः** ॥ वक्ष्यमाणेषु धातुषु अन्त्यावयवोऽकारोऽविवक्षितो न तूच्चारणार्थ इत्यर्थः ॥ **कथ वाक्यप्रबन्धे** ॥ यत इत्यल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति ॥*॥

( त० ) **कथ** ॥ अदन्तप्रयोजनमाह–**अल्लोपेति** ॥ * ॥

( **अग्लोपिनो नाङ्कार्यम्** ) अचकथत् ॥ **वर** ईप्सायाम् । वरयति । अववरत् । **गण** संख्याने । गणयति । गणेः पूर्वस्य इद्वाङ्परे णौ । अजीगणत् ॥ **स्तन गदी** देवशब्दे । स्तनयति । गदयति । अतस्तनत् । अजगदत् ॥ **पत** गतौ । वा ऽदन्तः । पतयति । पतति । पतांचकार । पतयांचकार । अपपतत् । अपतीत् । वादन्त इत्येके । पातयति । अपीपतत् ॥ **रच** प्रतियत्ने । रचयति ॥ **सूत्र** वेष्टने । सूत्रयति । असुसूत्रत् ॥ **मूत्र** प्रस्रवणे । मूत्रयति ॥ **कल** गतौ संख्याने च । कलयति ॥ **स्पृह** ईप्सायां च । स्पृहयति । अपस्पृहत् ॥ **भाम** क्रोधे । भामयति । अबभामत् ॥ **सूच** पैशुन्ये । सूचयति ॥ **ऊन** परिहाणे । ऊनयति । अजिनिमित्तः स्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् । औननत् ॥ **अर्थङ्** याचने । अर्थयते । आर्तथत ॥ **संग्राम** युद्धे । असंग्रामत ॥ **अन्ध** दृष्ट्युपघाते । अन्धयते । अन्धयति । आन्दधत् ॥ **अङ्क अङ्ग** पदे लक्षणे च । आञ्चकत् । आञ्जगत् । इति चुरादयः(क) ॥ २० ॥

---

( क ) **स्फुडि** परिहासे । स्फुण्डयति । इदित्करणात् स्फुण्डति । स्फुटीति पाठान्तरम् । स्फुण्टयति । **कुद्रि** अनृत भाषणे । कुन्द्रयति । लड उपसेवायाम् । लाडयति । **मिदि** स्नेहने । मिन्दयति । मिन्दति । **जल** अपवारणे । **लज** इत्येके । नट अवस्कन्दने । **श्रथ** प्रयत्ने । प्रस्थान इत्येके । **बध** संयमने । बाधयति । बन्धेति चान्द्रः । **पॄ** पूरणे । पारयति । **ऊर्ज** बलप्राणयोः । पक्ष परिग्रहे । **वर्ण चूर्ण** प्रेरणे । वर्ण वर्णन इत्येके । षम्ब सम्बन्धे । संबयति । अससम्बत् । **शम्ब** च । अशशम्बत् । **साम्ब** इत्येके । **कुट्ट** छेदनभर्त्सनयोः । कुट्टयति । **पुट्ट चुट्ट** अल्पीभावे । **अट्ट षुट्ट** अनादरे । **लुण्ठ** स्तेये । लुण्ठयति । लुण्ठतीति **'लुठि स्तेये'** इति भौवादिकस्य । **शठ श्वठ** असंस्कारगत्योः । **श्वठि** इत्येके । **तुजि पिजि** हिंसाबलादाननिकेतनेषु । तुञ्जयति । पिञ्जयति । इदित्करणा त्तुञ्जति । पिञ्जति । **तुज पिजेति** केचित् । **लजि लुजि** इत्येके । **पिस** गतौ । पेसयति । भ्वादौ पेसतीति । **षान्त्व** सामप्रयोगे ॥ **श्वल्क** वल्क परिभाषणे । **ष्णिह** स्नेहने । **स्फिट** इत्येके । स्मिट अनादरे । अषोपदेशत्वान्न षः । असिस्मिटत् ॥ स्मिङ् अनादर इत्येके । स्मापयते । **श्लिष** श्लेषणे ॥ **पथि** गतौ । पन्थयति । पन्थति । **पिच्छ** कुट्टने । **छदि** संवरणे । छन्दयति । छन्दति । **खड खडि कडि** भेदने । खाडयति । खण्डयति । खण्डति । कण्डयति । कण्डति । **कुडि** रक्षणे । **गुडि** वेष्टने । रक्षण इत्येके । **कुठि** इत्यन्ये । अवकुण्ठयति । अवकुण्ठति । **गुठि** इत्यपरे । **खुडि** खण्डने ।

**(सु०) अय्वृलोपिनो नाङ्कार्यम् ॥** अश्च इश्च उश्च ऋ च तेषां समाहारोऽय्वृ अय्वृणो लोपो अस्यास्तीति अय्वृलोपी तस्य अइउऋलोपिनो धातोरङ्निमित्तं कार्यं न स्यात् । तत्किम् । अङि लघौ ह्रस्व इत्युपधाह्रस्वत्वं पूर्वस्येत्वं च । लघोर्दीर्घ इति दीर्घः अङ्कार्यम् ॥ **पत गतौ इति ॥ वा ऽयन्तः ॥** वादन्त इत्येके । आद्ये पतयति पतति ।

---

**बठि** विभाजने । **वडि** इत्येके । **मडि** भूषायां हर्षे च । **भडि** कल्याणे । **छर्द** वमने । पुस्त बुस्त आदरानादरयोः । **चुद** संचोदने । **नक्क धक्क** नाशने । णोपदेशलक्षणे पर्य्युदासोयम् । प्रनक्कयति ॥ **चक्क चुक्क** व्यथने । **क्षल** शौचकर्म्मणि । **तल** प्रतिष्ठायाम् । **तुल** उन्मादे । तोलयति । तोलयामास । अतूतुलत् । कथं तुलयति तुलना इत्यादि । अतुलोपमाभ्यामिति निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ ततो णिः । **दुल** उत्क्षेपे । दोलयपि । दोलयामास । अदूदुलत् । **पुल** महत्त्वे । चुलसमुच्छ्राये । मूल रोहणे । मूलयति । मूलयामास । **कल विल** क्षेपे । कालयति । **बिल** भेदने । **तिल** स्नेहने । **चल** भृतौ । **पाल** रक्षणे । **लूष** हिंसायाम् । **शुल्ब** माने । **शूर्प** च । चुट छेदने । मुट संचूर्णने । **पडि पसि** नाशने । पण्डयति । पण्डति । पंसयति । पंसति ॥ **व्रजमार्ग** संस्कारगत्योः । **शुल्क** अतिस्पर्शने । **चपि** गत्याम् । चम्पयति । चम्पति । **क्षपि** चान्त्याम् । क्षम्पयति । क्षम्पति । **क्षजि** कृच्छ्रजीवने । **स्वर्त** गत्याम् । **श्वभ्र** च । **घट्ट** चलने । मुस्त संघाते । **खट्ट** संवरणे । **षट्ट** स्फिट्ट **चुबि** हिंसायाम् । **पूल** संघाते । **पूर्ण** इत्येके । **पुण** इत्यन्ये । **पुस** अभिवर्द्धने । **टकि** बन्धने । टङ्कयति । टङ्कति । **धूस** कान्तिकरणे । धूसयति । दन्त्यान्तः । मूर्द्धन्यान्त इत्येके । तालव्यान्त इत्यपरे । **कीट** वर्णे । **चूर्ण** सङ्कोचने । **पूज** पूजायाम् । **अर्क** स्तवने । **तपन** इत्येके । **शुठ** आलस्ये । **शुठि** शोषणे । शुण्ठयति । शुण्ठति । **जुड** प्रेरणे । **गज मार्ज** शब्दार्थौ गाजयति । मार्जयति । **मर्च** च । मर्चयति । **घृ** प्रस्रवणे । स्रावण इत्येके । **पचि** विस्तारवचने । पञ्चयति । पञ्चति । **तिज** निशाने । तेजयति । **बर्ध** छेदनपूरणयोः । **कुबि** आच्छादने । कुम्बयति । कुम्बति । **कुभि** इत्येके । **लुबि तुबि** अदर्शने । अर्दन इत्येके । **हलप** व्यक्तायां वाचि । **क्लप** इत्येके । **चुटि** छेदने । **इल** प्रेरणे । एलयति । ऐलिलत् । **म्रक्ष** म्लेच्छने । **म्लेछ** अव्यक्तायां वाचि । **ब्रूस बर्ह** हिंसायाम् ॥ केचिदिह **गर्जगर्द** शब्दे । **गर्ध** अभिकाङ्क्षायामिति पठन्ति । **गुर्द पुर्व** निकेतने । **जसि** रक्षणे । मोक्षणे इति केचित् । जंसयति । जंसति । **ईड** स्तुतौ । **जसु** हिंसायाम् । **पिडि** संघाते । **रुष** रोषे । **रुठ** इत्येके । **डिप** क्षेपे । **ष्टुप** समुच्छ्राये । **दसि** दर्शनदंशनयोः । दंसयते । दंसति । इत आरभ्य युधातुपर्य्यन्तानामाकुस्मीयान्तर्गतत्वादात्मनेपदं बोध्यम् । **डप डिप** । संघाते । **स्पर्श** ग्रहणसंश्लेषणयोः । **तर्ज भर्त्स** तर्जने । **बस्त गन्ध** अर्दने । बस्तयते । गन्धयते । **विष्क** हिंसायाम् । **हिस्क** इत्येके । **निष्क** परिमाणे । लल ईप्सायाम् । **कूण** संकोचने । **तूण** पूरणे । भ्रूण आशाविशङ्कयोः । **शठ** श्लाघायाम् । **यक्ष** पूजायाम् । **स्यम** वितर्के । **गूर** उद्यमने । **कुत्स** अवक्षेपणे ॥ **त्रुटि** छेदने । **कुट** इत्येके । **गल** स्रवणे । **भल** आभण्डने ॥ **कूट** आप्रदाने । **अवसादने** इत्येके । **कुट्ट** प्रतापे । **वञ्चु** प्रलम्भने । **वृष** शक्तिबन्धने । शक्तिबन्धनं प्रजननसामर्थ्यं शक्तिबन्धश्च । वर्षयते । **मद** तृप्तियोगे । मादयते । **मान** स्तम्भे । मानयते । **यु** जुगुप्सायाम् । यावयते । **चर्च** अध्ययने । **बुक्क** भषणे । **शब्द** उपसर्गादाविष्कारे च । चाद्भषणे । प्रतिशब्दयति । **अनुपसर्गाच्च** । आविष्कारे इत्येव । शब्दयति । **जभि** नाशने । जम्भयति । जम्भति । **पूद** क्षरणे । सूदयति । असूषुदत् । **जसु** ताडने । जासयति । जसति । **पश** बन्धने । पाशयति । **अम** रोगे । आमयति । **चट स्फुट** भेदने । **घट** संघाते । घाटयति । **दिवु** मर्दने । उदित्त्वाद् वतीत्यपि । **अर्ज** प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति । **घुषिर्** विशब्दने । घोषयति । **'घुष्टोऽविशब्दने'** इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिः । घोषति । इरित्वादङ्वा । अघुषत् । अघोषीत् । ण्यन्तस्य तु अजूघुषत् । **आङः क्रन्द** सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थेउक्तः स एवाङ्पूर्वो णिं लभते सातत्ये । आक्रन्दयति । अन्ये तु **'आङ्पूर्वो घुसिः क्रन्दसातत्ये'** इत्याहुः । आघोषयति । **लस** शिल्पयोगे ॥ **तसि भूष** अलङ्कारे । अवतंसयति । अवतंसति । भूषयति । **मोक्ष** असने । मोक्षयति । **अर्ह** पूजायाम् । **ज्ञा** नियोगे । आज्ञापयति । **भज** विश्राणने । **श्रृधु**

अनेकस्वरत्वात्कासादिप्रत्ययादित्याम् । पतांश्चकार । यत इत्यल्लोपः । अपतीत् । द्वितीये तु पातयति । अपीपतत् ॥ **स्तन गदी देवशब्दे** ॥ स्तनादेर्ण्यन्तादित्नुरितीत्नुः । 'स्तनयित्नुर्बलाहकः' । सप्रत्यये तु तिस्तनयिषति ॥ **रच प्रतियत्ने** ॥ प्रतियत्नो गुणाधानम् ॥ **स्पृह ईप्सायाम्** ॥ आप्तुमिच्छा ईप्सा ॥ **भाम क्रोधे** ॥ अबभामदित्यत्राल्लोपस्य स्थानिवत्त्वात् णौ अङि लघौ ह्रस्व इति ह्रस्वो न ॥ **सूच पैशुन्ये** ॥ पिशुनो दुर्जनस्तत्कर्म पैशुन्यम् । लुङि असुसूचत् ॥ **ऊन परिहाणे** ॥ ञिनिमित्तः स्वरादेशो द्वित्वे

---

प्रहसने । अशशर्धत् । अशीशृधत । **यत** निकारोपस्कारयोः । **रक लग** आस्वादने । **रघ** इत्येके । रगेत्यन्ये । **अञ्चु** विशेषणे । अञ्चयति । उदित्त्वमिड्विकल्पार्थम् । अत एव विभाषितो ञिः । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । **लिगि** चित्रीकरणे । लिङ्गयति । लिङ्गति । **मुद** संसर्गे । मोदयति सक्तून् घृतेन । **त्रस** धारणे ॥ ग्रहण इत्येके । वारण इत्यन्ये । **उध्रस** उञ्छे । उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । ध्रसति । उध्रासयति । **मुच** प्रमोचने मोदने च । **वस** स्नेहच्छेदापहरणेषु । **चर** संशये । **च्यु** सहने । हसने चेत्येके । च्यावयति च्युसेत्येके । च्योसयति । **कृप अवकल्कने** । अवकल्कनं मिश्रीकरणम् । चिन्तनं वा । कल्पयति । **आस्वदः सकर्मकात्** । स्वदिमभिव्याप्य संभवत्कर्मभ्य एव ञिः । **ग्रस ग्रहणे** । ग्रासयति फलम् । **पुष** धारणे । पोषयत्याभरणम् । **दल** विदारणे । दालयति ॥ **पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह वल्ह गुप धूप विच्छ चीव णद कुप तर्क वृतु वृधु** भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति । वर्त्तयति । वर्धयति । उदित्त्वाद्वर्तति । वर्धति । **रुट लजि अज दंसि भृशि पुशि शीक नट पुटि जिवि रघि** लघि **अहि रहि महि लडि तड नल च** । **पूरी** आप्यायने । ईदित्त्वं क्तक्तवत्वोरिड्भावार्थम् । अत एव ञिप्रत्ययो वा । पूरयति । पूरति । **रुज** हिंसायाम् । **ष्वद** आस्वादने । स्वादि इत्येके । असिष्वदत् । दीर्घस्य त्वषोपदेशत्वात् । असिस्वदत् । इत्यास्वदीयाः । **आधृषाद्वा** । इत उर्ध्वं धृषधातुमभिव्याप्य ञिर्वा भवति । **युज पृच** संयमने । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पर्चिता । अपर्चीत् । **अर्च** पूजायाम् । **षह** मर्षणे । साहयति । स एवायं नागः सहति कलमेभ्यः परिभवम् । **ईर** क्षेपे । **ली** द्रवीकरणे । लाययति । लयति । लेता । **वृजी** वर्जने । वर्जयति । वर्जति । **वृञ आवरणे** । वारयति । वरति । वरते । वरिता । वरीता । **जॄ** वयोहानौ । जारयति । जरति । जरिता । जरीता । **ज्रि** च । ज्राययति । ज्रयति । ज्रेता । **रिच** वियोजनसंपर्चनयोः । रेचयति । रेचति । रेक्ता । **शिष** असर्वोपयोगे । शेषयति । शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये । **तप** दाहे । तापयति । तपति । तप्ता । तृप तृप्तौ । सन्दीपन इत्येके । तर्पयति । तर्पति । तर्पिता । **छृदी** सन्दीपने । छर्दयति । छर्दति । छर्दिता । छर्दिष्यति । **चृप छृप** दृप सन्दीपन इत्येके । चर्पयति । छर्पयति । **दृभी** भये । दर्भयति । दर्भति । दर्भिता । **दृभ** संदर्भे । अयं तुदादावीदित् । **श्रथ** मोक्षणे । हिंसायामित्येके । मी गतौ । माययति । मयति । मेता । **ग्रन्थ** बन्धने । ग्रन्थयति । ग्रन्थति । **शीक** आमर्षणे । **चीक** च । **अर्द** हिंसायाम् । स्वरितेत् । अर्दयति । अर्दति । अर्दते । **अर्ह** पूजायाम् । आङः **षद पद्यर्थे** । आसादयति । आसीदति । 'दृशादेः पश्यादिः' इति सीदादेशः । आसत्ता । आसात्सीत् । **शुन्ध** शौचकर्मणि । शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् ॥ **छद** अपवारणे । स्वरितेत् । **जुष** परितर्कणे । परितर्कणमूहो हिंसा वा । परितर्पण इत्यन्ये । परितर्पणं परितृप्तिक्रिया । जोषयति । जोषति । **श्रन्थ ग्रन्थ** सन्दर्भे । **आप्लृ** लम्भने । आपयति । आपिपत् । आपति । आप्ता । आपत् । स्वरितेदयमित्येके । आपते । **तनु** श्रद्धोपकरणयोः । उपसर्गाच्च दैर्घ्ये । तानयति । वितानयति । तनति । वितनति । **चन** श्रद्धोपहननयोरित्येके । चानयति । चनति । **वद** सन्देशवचने । वादयति । स्वरितेत् । वदति–वदते । अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववदे । वद्यात् । **वच** परिभाषणे । वाचयति । वचति । वक्ता । अवाक्षीत् । **मान** पूजायाम् । मानयति । मानति । मानिता । **भू** प्राप्तावात्मनेपदी । भावयते । भवते । ञिसन्नियोगेनैवात्मनेपदमित्येके । भवति । **गर्ह** विनिन्दने । **मार्ग** अन्वेषणे । **कठि** शोके । उत्पूर्वोयमुत्कण्ठायाम् । **मृजू** शौचालङ्का-

कर्तव्ये स्थानिवत्। ञिप्रत्ययो निमित्तं यस्य ईदृशः स्वरस्थाने आदेशः स स्थानिना तुल्यः स्थानिवद्भवति द्वित्वे कर्तव्ये। स्वरादेः पर इत्यनेन नशब्दस्य द्वित्वम्। उत्तरखण्डे यत इति अल्लोपः। औननत्। **अर्थञ् याचने**। कथादिषु उपधावृद्धिदीर्घपूर्वत्वविरहेण भामप्रभृतीनामुपधाह्रस्वस्य निषेधेन गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादन्तत्वं सार्थकम्। इह त्वदन्तत्वे प्रागुक्तफलाभावात्किमर्थमदन्तत्वमुच्यते। वोपदेवस्तु धातोर्नामिन इति वृद्धौ कृतायां रातो ञौ पुकि अर्थापयते इति रूपमाह। शाकटायनस्तु कथादीनां सर्वेषां पुकमाह। तन्मते कथापयति। गणापयतीत्यादि॥ इति सुबोधिन्यां चुरादयः॥

(त०) प्रयोजनान्तरमाह-**अग्वृलोपिन** इति॥ अश्च इश्च उश्च आ च ते तथा तान् लोपयतीति स तथा तस्य अङ्कार्यं न। द्वित्वे सतीकारदीर्घत्वादि न॥ **गण संख्याने**। संख्यानिमित्तो ज्ञानविशेषः संख्यानमेकत्वादि तेन च तन्निष्ठः क्रियाविशेषो लक्ष्यते॥ **अङ्क** अङ्ग पदे लक्षणे च। लक्षणं चिह्नकरणम्॥ इति तत्त्वदीपिकायां चुरादयः॥ २०॥

कृतायामिह टीकायां लोकेशकरशर्मणा। इयं दशगणी पूर्णा माननीया मनीषिभिः॥

---

रयोः। मार्जयति। मार्जति। मार्जिता। मार्ष्टा। **मृष** तितिक्षायाम्। स्वरितेत्। मर्षयति। मर्षति। मर्षते। **धृष** प्रसहने। धर्षयति॥धर्षति। इत्याधृषीयाः। **शठश्वठ** सम्यगवभाषणे। **पठ वठ** ग्रन्थे। **पष** अनुपसर्गात्। गतावित्येव। पषयति। **स्वर** आक्षेपे। स्वरयति। **मह पूजायाम्**। महयति। **सार कृप श्रथ** दौर्बल्ये। सारयति। कृपयति। श्रथयति। **खेट** भक्षणे। खोट इत्यन्ये। चोट क्षेपे। **गोम** उपलेपने। अजुगोमत्। **कुमार** क्रीडायाम्। अचुकुमारत्। **शील** उपधारणे। उपधारणमभ्यासः। **वेल कालोपदेशे**। वेलयति। काल इति पृथग्धातुरित्येके। कालयति। **पल्पूल** लवनपवनयोः। पल्पूल इति, ओष्ठ्यद्वयवान्। पल्पूलनं शोधनद्रव्यम्। **वात** सुखसेवनयोः। गति सेवनयोरित्येके। वातयति। अववातत्। **गवेष** मार्गणे। अजगवेषत्। **वास** उपसेवायाम्। **निवास** आच्छादने। अनिनिवासत्। **भाज** पृथक्कर्मणि। **सभाज** प्रीति दर्शनयोः। प्रीतिसेवनयोरित्यन्ये। सभाजयति। **ध्वन** शब्दे। अदध्वनत्। **कूट** परितापे। परिदाहे इत्यन्ये। **संकेत ग्राम कुण गुण** चामन्त्रणे। चात्कूटोऽपि। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति। **केत** श्रावणे निमन्त्रणे च। केतयति। **स्तेन** चौर्ये। अतिस्तेनत्। **आपदात्मनेपदिनः। गृह** ग्रहणे। गृहयते। **मृग** अन्वेषणे। मृगयते। मृग्यतीति कण्ड्वादिः। **कुह** विस्मापने। शूरवीर विक्रान्तौ। स्थूल परिबृंहणे। स्थूलयते। **सत्र** सन्तानक्रियायाम्। अससत्रत। गर्व माने। गर्वयते। पद गतौ। पदयते। गृहारभ्य पदान्तमात्मनेपदमतीतम्। **रूक्ष** पारुष्ये। **पारतीर** कर्मसमाप्तौ। अपपारत्। अतितीरत्। **पुट** संसर्गे। पुटयति। **धेक** दर्शन इत्येके। अदिधेकत्। **कत्र** शैथिल्ये। कत्रयति। कत्रति। कर्तेत्यप्येके। कर्त्तयति। कर्तति। **वष्क** दर्शने। **चित्र** चित्रीकरणे। आलेख्यकरण इत्यर्थः। **अंस** समाघाते। वट विभाजने। लज प्रकाशने। वटि लजि इत्येके। वण्टयति। लञ्जयति। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये। वण्टापयति। लञ्जापयति। **मिश्र** सम्पर्के। **स्तोम** श्लाघायाम्। अतुस्तोमत्। **छिद्र** कर्णभेदने। करणभेदन इत्यन्ये। कर्णेति धात्वन्तरमित्यन्ये। **सुख दुःख** तत्क्रियायाम्। **रस** आस्वादनस्नेहनयोः। व्यय वित्तसमुत्सर्गे। अवव्ययत्। **रूप** रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। **छेद** द्वैधीकरणे। अचिच्छेदत्। **छद** अपवारणे इत्येके। छदयति। **लाभ** प्रेरणे। व्रण गात्रविचूर्णने। **वर्ण** वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृणाति इत्यर्थः। हरिं वर्णयति स्तौतीत्यर्थः। **पर्ण** हरितभावे। अपपर्णत्। **विषक्** दर्शने। **क्षप** प्रेरणे। **वस** निवासे। **तुत्थ** आवरणे। **बाहुलकादन्येऽपि बोध्याः**। एवम्—आन्दोलयति। प्रेङ्खोलयति। विडम्बयति। अवधीरयतीत्यादि। अस्मिन् चुरादिगणे यथायथं लौकिका वैदिकाश्चैते पूर्वोक्ता धातवः पाठ्याः। एते च सिद्धान्तकौमुद्यां दृश्यन्ते।

इति श्रीनवकिशोरकरशास्त्रिप्रणीतटिप्पण्यां चुरादिगणप्रक्रिया समाप्ता।

# अथ ण्यन्तप्रक्रिया ॥११॥

**धातोः प्रेरणे** ॥ धातोः प्रयोजकव्यापारेऽर्थे णिप्रत्ययः (क) ॥ भवन्तं प्रेरयति । भावयति । भावयते । भावयांचकार ॥१॥

( सु० ) **धातोः प्रेरणे** ॥ प्रयोजकः प्रेरकः स च चेतनाचेतनसाधारण्येन विवक्षितः । स च क्वचित्सिद्धः क्वचित् फलरूपः, देवदत्तः पाचयति, गमयतीत्यादौ सिद्धः । भिक्षा वासयति, संभ्रमो वासयतीत्यादौ तु फलरूपः । तस्य व्यापारः प्रेरणम् । भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेरणमाज्ञेत्यर्थः । धातोर्णिः प्रत्ययः स्यात् प्रेरणेऽर्थे (ख) । ननु यदि धातोः प्रेरणे णिर्भवति लोट् च तदा णेर्लोटश्च पर्यायता स्यात् । ततश्चेदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति णिप्रत्ययेनापि प्रयुज्येतेति चेन्मैवम् । प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा णिप्रत्ययस्यार्थः । प्रयोज्यप्रवृत्त्यनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः । उक्तं च । "द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते । सक्रियस्य यदि प्रेषस्तदा स विषयो णिचः ॥" भवन्तं प्रेरयति भावयति । णित्स्वरितेत उभे इत्युभयपदम् । भावयते भावयेत् । भावयतु । भावयताम् । अभावयत् । अभावयत । कासादिप्रत्ययादित्याम् । भावयांबभूव । भावयांचक्रे । णेरिति णिलोपः । भाव्यात् । भावयिषीष्ट । भावयिता । भावयिष्यति । भावयिष्यते । अभावयिष्यत् । अभावयिष्यत ॥ १ ॥

( त० ) दशगणीं निरूप्य स्वार्थणिप्रसंगात्प्रेरणार्थं णिं दर्शयति—**धातोः प्रेरणे** ॥ प्रेरणं चानेकविधम् प्रेषणाध्येषणतत्समर्थाचरणभेदात् । तत्र भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणमाज्ञेति यावत् । गुर्वादेः प्रवर्तनाध्येषणं प्रार्थनेति यावत् । तत्समर्थाचरणं तदनुकूलव्यापारकरणम् । तच्चानुमत्युपदेशानुग्रहान्न दानादिरूपम् । तत्र यस्यानुमतिं विनार्थं निवर्तते तस्य राजादेरनुमत्या प्रयोजकत्वम् । वैद्यादेस्तूपदेशेन पलायमानं निरोधेनानुग्रहेण चौरस्यान्नदानेन सर्वश्चायं प्रकरणादिलभ्यः सर्वत्रानुगतप्रेरणामात्रं ण्यर्थः । अथ पृच्छतु मां भवानित्यत्रास्त्विति चेदुच्यते । प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्ण्यर्थः । केवला तु लोडर्थ

( क ) **धातोः प्रेरणे** । ननु प्रेरणे इति धातोर्विशेषणमस्तु । तदा प्रेरणे वर्त्तमानाद्धातोर्णिरित्यर्थः । अथ पचति पाचयतीत्युक्ते व्यक्तमर्थान्तरं गम्यते । तत्कथमयं स्वार्थिकः । अत्रोच्यते । कः पचेरर्थः । प्रधानार्थः । यासौ तण्डुलानां विक्लित्तिरधिश्रयणादीनां तु तादर्थ्यात्तदवच्छेदेन च पच्यर्थता । न तु यो हि पानार्थं जलमाहरति, विक्रियार्थं चेन्धनमाहरति, शीतं चापनेतुं वह्निं समिन्धे, पेष्टुं च तण्डुलान् प्रक्षालयति, असौ पचतीत्युच्यते, तत्कस्य हेतोर्विक्लित्तिं प्रति साधनत्वाभावात्तदवच्छेदाभावाच्च । अतस्तादर्थ्यादेवाधिश्रयणादीनां पच्यर्थता । तद्वत्प्रेरकव्यापारोपि तादर्थ्यादेव पच्यादिवाच्यो भविष्यतीति ।

(ख) **णिप्रत्ययः** । णिप्रत्ययस्तु द्योतकः । तथाच—योप्येकान्ते तूष्णीमासीनो भक्तबीजबलीवर्दैः प्रतिविधत्ते, स उच्यते पञ्चभिर्हलैः कर्षतीति, तदेवं द्योतकतापक्षेपि सम्भवति । न च यथा प्रकृत्याभिहिते णिर्भवति एवमुक्तप्रेषितादिशब्दाभिहितेऽपि स्यात्, उक्तः करोति प्रेषितः करोति, इत्यत्र प्रेरणविषयार्थत्वात्करोत्यर्थस्य प्रत्ययार्थपक्षे तूक्तार्थत्वात्, णेरभाव इति वाच्यम् । उक्तार्थत्वात् प्रेरकव्यापारद्योतनार्थं णिः प्रयुज्यते । तस्य स्वशब्देनैव द्योतितत्वात् इह तर्हि पाचयत्योदनं चैत्रो । मैत्रेण । द्वयोः कर्त्रोः प्रत्ययेनाभिधानं प्राप्नोति पाचयतश्चैत्रो मैत्र इति । प्रत्ययार्थपक्षे तु प्रकृत्यर्थोपसर्जनस्य अर्थस्य प्राधान्यात्तस्यैव कर्त्तरि प्रत्यय इति दोषान्न द्योतकतापक्षो ग्राह्यः ।

इति । उक्तं च-(क)"द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते । सक्रियस्य यता प्रैषस्तदा स विषयो णिचः" इति । अथ कथं भिक्षा वासयति, कारीषोऽग्निरध्यापयतीत्यत्र ञिः, भिक्षादेश्चाचेतनतया प्रेरणस्य च चेतनधर्मत्वात् इति चेत् शृणु । अत्राप्यानुकूल्याचरणमेव प्रयोजकव्यापारत्वेनाध्यारोप्यते । यतो भिक्षा अपि प्रचुरा व्यञ्जनवत्यश्च लभ्यमाना वासं प्रनुञ्जते । तथा कारीषोऽग्निरेकान्ते निर्वाते प्रज्वलितः शीतकृतमुपद्रवमध्ययनविरोधिनमपनीयाध्यायनेऽनुकूलो भवतीति । ञित्वादुभयपदमाह—भावयतीत्यादि ॥ १ ॥

**( अङ्सयो पूर्वस्योकारस्येत्वम् पवर्गयलजकारेष्ववर्णपरेषु परतः )** (ख) अबीभवत् ॥ **मूङ् बन्धने** । मावयति । अमीमवत् ॥ यावयति । अयीयवत् ॥ अरीरवत् । लावयति । अलीलवत् ॥ अजीजवत् ॥ २ ॥

(सु०) **अङ्सयोः पूर्वस्योकारस्येत्वं पवर्गयलजकारेष्ववर्णपरेषु परतः** ॥ द्वित्पूर्वरूपस्य उत इत्वं भवति अवर्णः परो येभ्यस्तेवऽर्णपरास्तेषु पवर्गयलजेषु परेषु ॥ अवर्णपरेषु किम् । बुभूषति ॥ पवर्गयलजेषु किम् । ऊर्णुनुविषति ॥ भू सत्तायाम् । णरङ् द्विश्चेति अङि कृते द्वित्वे च भूभू इति जातं तत उत्तरस्य वृद्धयावादेशौ ततोऽङि लघौ ह्रस्वे कृते अङ्सयोरिति पूर्वस्येत्वं ततो दीर्घः अबीभवत् । अबीभवत ॥ मुङ् बन्धने । अमीमवत् ॥ यु मिश्रणे । अयीयवत् । रु शब्दे । अरीरवत् ॥ लुञ् छेदने । अलीलवत । जु गतौ । सौत्रोऽयं धातुः । अजीजवत् ॥ २ ॥

**( श्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनामङ्सयोः पूर्वस्येत्वं वावर्णपरे धात्वक्षरे परे )** असिस्रवत्—असुस्रवत् । अशिश्रवत्—अशुश्रवत् । अदिद्रवत्—अदुद्रवत् । अपिप्रवत्—अपुप्रवत् अपिप्लवत्—अपुप्लवत् । अचिच्यवत्—अचुच्यवत् । न रितः । अशशासत् । अडुढौकत् ॥ ३ ॥

(सु०) **स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनामङ्सयोः पूर्वस्येत्वं वावर्णपरे धात्वक्षरे परे** ॥ स्रु गतौ । श्रु श्रवणे । द्रु गतौ । प्रुङ् प्लुङ् च्युङ् गतौ । अक्षरशब्दोऽत्रावर्णपरः ॥ अवर्णपरे किम् । शुशूषति ॥ अपिप्रवत्—अपुप्रवत् । अपिप्लवत्-अपुप्लवत् । अचिच्यवत-अचुच्यवत ॥ ३ ॥

**( ञ्यन्तात् ञिः )** चोरयति अचूचुरत् ॥ ४ ॥

( सु० ) **ञ्यन्तात् ञिः** ॥ स्वार्थञ्यन्ताद्धातोर्ञिः स्यात् प्रेरणे ॥ अपवादत्वाद्वृद्धिं बाधित्वा ञेरिति ञिलोपः । चोरयति । अङि लघोर्ह्रस्व इति ह्रस्वः लघोर्दीर्घ इति

---

(क) **द्रव्यमात्रस्येति** । अस्यार्थः— कतृत्वेनानवधारितस्य देवदत्तादेस्तु प्रैषे प्रश्ने वीप्सायामित्यादेर्लोट् भवति । प्रयोज्यप्रवृत्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदास्याण्णिचो (ञेः) विषय इति । किं च प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः प्रयोज्यप्रयोक्तृकर्तृका तु णिजर्थः (ञ्यर्थः) । पच देवदत्तेत्यत्र हि वक्तैव प्रेरकः । पाचयतीत्यादौ वक्तृभिन्नः पाचयामीत्यादौ तु वक्तेति दिक् ॥

(ख) **पूर्वस्योकारस्येत्वमिति** । नन्वत्र सूत्रे उकारस्येति व्यर्थमिति चेन्न, 'पापचिषते' "वावचिषते' इत्यादौ यङन्तात्सप्रत्यये दीर्घे कृतेऽपि अनेनेकारः स्यादिति तद्व्यावृत्त्यर्थत्वात् । इति केचित् तद्विवेच्यम् ।

दीर्घः । नन्वग्लोपित्वात् द्वयोरप्यसंभवः । ततश्च अचुचोरदित्येव रूपं स्यात् । उच्यते । अङ्गाक्षिप्तस्य णेर्निमित्तत्वेनाश्रयणान्नासंभवः ॥ ४ ॥

(त०) **अचूचुरदिति** ॥ अत्र णेरिकारस्य लोपेऽपि अग्वृलोपिनो नाङ्गार्यमिति निषेधो न शङ्क्यः, अङ्गाक्षिप्तस्य णेर्निमित्तत्वेनाश्रयणात् । तथाहि । णिजातिरेकानिमित्तत्वेनाश्रिता । तथा च तस्या एकत्वाद्गोबलीवर्दन्यायेन व्याकृतेरन्यस्य लोपः प्रतिषेधविषयत्वेनाश्रीयत इत्यर्थः यत्तु कैश्चिदुक्तं परत्वादादौ वृद्धौ सत्यामैकारस्य लोपेऽग्वृलोपित्वाभावादेवाङ्गार्यमिति तन्न । सर्वविधिभ्यो लोपविधिर्बलीयांस्तस्य सर्वसंमतत्वात् ॥ ४ ॥

**हनो घत्** ॥ हन्तेर्घदादेश इण्वर्जिते ञ्णिति (क) ॥ घातयति ॥ अजीघतत् ॥५॥

( सु० ) **हनो घत्** ॥ ङिति णिति च प्रत्यये हन्तेर्घदादेशः स्यात् इण्प्रत्यये णप्प्रत्यये च परे न ॥ घातः । घञ् ॥ घातकः । वुण् । ञ्णिति किम् । हन्ता ॥ ५ ॥

( त० ) **हनो घत्** इति ॥ हनो घदादेश इत्यादिव्याख्यानं तु प्राचामनुरोधेन । व्याख्यानं त्वीदृशम् । हश्च न् चानयोः समाहारो हन् तस्य । घश्च त् चानयोः समाहारो घत् । हनो घ्न इत्यतो हन इत्यनुवृत्तेः हन्तेर्हस्य घो ञ्णिति तस्य न् च तो भवति ञ्णिति । न चेति निषेधादिण्वर्जनम् । एतेन हनो घ्न इत्यतो हनोऽनुवृत्तेर्घत्वसिद्धेश्चोभयं व्यर्थमित्युक्तिरपि परास्ता ॥ ५ ॥

(**शदेरगतौ तो णौ** ) शातयति । अशीशतत् । गतौ तु शादयति (ख) । अशाशिदत् । रातो णौ पुक् ॥ ६ ॥

( सु० ) **शदेरगतौ तो णौ** ॥ अदेर्णौ तोऽन्तादेशः स्यात् न तु गतौ । शातयति गतौ तु गाः शादयति गोविन्दः गमयतीत्यर्थः ऋ गतौ । अस्य रातो णौ पुगित्यन्तरङ्गत्वादादौ पुक् पश्चाद् गुणः ॥ ६ ॥

**पुकि गुणः** । अर्पयति (ग) । आर्पिपत् ॥ दापयति । अदीदपत् ॥ धापयति । अदीधपत् ॥ स्थापयति ॥ ७ ॥

( सु० ) **पुकि गुणः** ॥ पुगागमे परे गुणो भवति । अर्पयति । लुङि स्वरादेः पर इति पि इत्यस्य द्वित्वे णेरिति णिलोपे च आर्पिपत् ॥ डुदाञ् दाने । अङि लघाविति इत्वे ह्रस्वे च कृते लघोर्दीर्घ इति दीर्घत्वम् । अदीदपत ॥ डुधाञ् धारणादौ । अदीधपत् ॥ ष्ठा गतिनिवृत्तौ । रातौ णाविति पुकि स्थापयति ॥ ७ ॥

( **तिष्ठतेरङ्युपधाया इत्** ) (घ) अतिष्ठिपत् ॥ ८ ॥

( सु० ) **तिष्ठतेरङ्युपधाया इत्** ॥ तिष्ठतेरुपधाया इत्वं स्यात् अङ् प्रत्यये । स्थापीत्यत्रात इत्वं ततो द्वित्वादि । अतिष्ठिपत् । तिष्ठतेरिति श्तिपा निर्देशो यङ्लुङ्-

---

(क) **ञ्णिति** । अत्र नामञ्णिभिन्नञ्णित्परकं ञ्णित्पदम् , नामञ्णौ तु ब्रह्म घयतीति दर्शनात् । एवमपि णित्पदमुपदिष्टणित्परम् , नत्वादिष्टणित्परम् , आदिष्टणित्प्रत्यये घानिषीष्टेत्यादिदर्शनात् ।

(ख) **गतौत्विति** । धातूनामनेकार्थत्वात् शदेरपि गत्यर्थत्वमस्ति ॥

(ग) **अर्पयतीति** । वृद्धिं बाधित्वा नित्यत्वात्पुकि 'उपधाया लघोः' इति गुणः ।

(घ) तिष्ठते'''इदिति । तकारो मन्दप्रयोजनः ।

निवृत्त्यर्थः । तेन यङ्लुकि लुङि अस्तास्थपत ॥ ८ ॥

**पादेर्युक्** ॥ पाशोछोसोह्वेञ्व्येञ्वेञ्ञां युक् णौ ॥ पाययति ॥ ९ ॥

( सु० ) **पादेर्युक्** ॥ एषां युक् णौ परे ॥ पा पाने । लुग्विकरणालुग्विकरणेति परिभाषया पा रक्षणे इति नेह गृह्यते । तस्य तु पालयतीति रूपम् ॥ शो तनूकरणे । छो छेदने । षो अन्तकर्मणि । ह्वेञ् स्पर्द्धायाम् । व्येञ् संवरणे । वेञ् तन्तुसंताने ॥ पाययति ॥ ९ ॥

**( पिबतेरङि पूर्वस्येकार उपधालोपश्च )** अपीप्यत् (क) ॥ शाययति । अशीशयत् ॥ छाययति । अचिच्छयत् ॥ साययति । असीषयत् ॥ ह्वाययति ॥ १० ॥

( सु० ) **पिबतेरङि पूर्वस्येकार उपधालोपश्च** ॥ पिबतेः पूर्वरूपस्य इत्वमुत्तररूपस्योपधाया लोपश्च स्यात् अङि परे ॥ पायीत्यत्र पायशब्दस्य द्वित्वे हसादिः शेषे चेत्वमुत्तरत्राकारलोपः इहाऽग्लोपित्वादलघुत्वाच्च इत्वदीर्घयोरप्रासावोत्वम् । अपीप्यत् ॥ शाययति । अशीशयत् ॥ छाययति । ह्रस्वाभावान्न दीर्घः । अचिच्छयत् ॥ शाययति । अशीशयत् ॥ साययति । असीषयत् ॥ ह्वाययति ॥ १० ॥

**( ह्वयतेर्ण्यन्तस्याङ्सयोः संप्रसारणं युगभावश्च )** अजूहवत्—अजुहावत ॥ व्याययति । अविव्ययत् ॥ वाययति । अवीवयत् ॥ ११ ॥

( सु० ) **ह्वयतेर्ण्यन्तस्याङ्सयोः संप्रसारणं युगभावश्च** ॥ ह्वेञः संप्रसारणं युगभावश्च स्यात् अङ्सयोः परः ॥ ह्वायीत्यत्र पूर्वं संप्रसारणे युगभावे च कृते हु इत्यस्य द्वित्वादि उत्तरत्र उ वृद्धौ आवादेशे च कृते कणरणेति ह्रस्वे लघोरिति दीर्घे च अजूहवत् । ह्रस्वाभवे अजुहावत् ॥ ११ ॥

**( पातेर्णौ लुक् )** पालयति । अपीपलत् ॥ (ख) ॥ १२ ॥

(सु०) **पातेर्णौ लुक्** ॥ लुगागमः स्यात् । रातो णौ पुगिति पुकोऽपवादः ॥ लुगागमस्य पुङ्निवृत्तिरेव फलम् । पावयतीति रूपस्य 'पाल लक्षणे, इति धातुनापि सिद्धेः ॥ १० ॥

(त०) **पातेर्णौ लुक्** ॥ कित्त्वादन्ते । पुकोऽपवादः ॥ १२ ॥

**(प्रयोजकात्स्मये णौ स्मयतेरात्वम् )** ॥ १३ ॥

( सु० ) **प्रयोजकात्स्मये णौ स्मयतेरात्वम्** ॥ स्मयजनकः प्रयोजकश्चेत्तस्मिन्नात्वं णौ परे ॥ १३ ॥

( त० ) **स्मयतेरात्वम्** ॥ ष्मिङ् ईषद्धसने । एवं "विस्मापयन्विस्मितमात्मवृत्तौ" इत्यपपाठः ( ग ) । मनुष्यवाचेति करणादेव विस्मयात् । अन्यथा शानोऽपि स्यात् ।

(क) अपीप्यदिति । पूर्वेकारसंयोगशिष्टत्वाद्द्वित्वे कृते उपधालोपः ।

(ख) अत्रायं विशेषः पाठः—**"वो विधूनने जुक्"** वातेर्जुक् स्यात् कम्पनेऽर्थे णौ । वाजयति । कम्पे किम् ? केशान् वापयति सुगन्धीकरोतीत्यर्थः ।

(ग) तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् । विस्मापयन् । विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं दिजगाद सिंहः ॥ श्लोकोयं रघुवंशमहाकाव्यस्य द्वितीयसर्गीयत्रयस्त्रिंशसंख्यकः ।

ण्यन्तात् णौ शता वा (क) विस्मापयते मनुष्यवाक् तथा सिंहो विस्मापयन्निति ॥१३॥

**(भीस्मिभ्यां ण्यन्ताभ्यामात् प्रयोजकाच्चेद्भयस्मयौ)**

जटिलो विस्मापयते । व्यसिष्मयत ॥१४॥

**(भियः स्वरस्यात्वं वा तदभावे षुक् णौ हेतोश्चेद्भयम्)**

मुण्डो भापयते । भीषयते अबीभपत । अबीभिषत ॥ १५ ॥

(सु०) **भीस्मिभ्यां ण्यन्ताभ्यामात् प्रयोजकाच्चेद्भयस्मयौ** ॥ भयस्मययोर्जनकः प्रयोजकश्चेत् ण्यन्ताभ्यां भीस्मिभ्यामात्मनेपदं स्यात् ॥ **भियः स्वरस्यात्वं वा तदभावे षुक् णौ हेतोश्चेद्भयम्** ॥ भयजनकः प्रयोजकश्चेद्भियो वाकारः आत्वाभावे षुगागमश्च स्यात् णौ ॥ 'ञिभी भये' इत्यस्यानेनात्वे रातोऽजाविति पुकि च मुण्डो, भापयते । भीषयते ॥ जटिलो विस्मापयते प्रयोजकाद्भयस्मयावित्युक्तेर्नेह । कुञ्चिकयैनं भाययति । विस्माययति ॥ १४ ॥ १५ ॥

**( रुहेर्णौ पो वा )** रोपयति । अरूरुपत् । रोहयति । अरूरुहत् ॥ कल्पयति । अचीक्लृपत्—अचकल्पत् । वर्तयति । अवीवृतत्—अववर्तत् ॥ मार्जयति । अमीमृजत्—अममार्जत् ॥१६॥

(सु०) **रुहेर्णौ पो वा** ॥ रुहेर्हस्य वा पकारः स्यात् णौ परे ॥ रुह बीजजन्मनि प्रादुर्भावे च । 'रुप विमोहने' इति दैवादिकस्य धातूनामनेकार्थत्वाज्जन्मनि वृत्तौ सूत्रं स्पष्टार्थम् (ख) ॥ कृपू सामर्थ्ये । उपधाऋवर्णास्येति ऋद्भावे अङि लघौ ह्रस्व इति पूर्वस्येकारः लघोर्दीर्घ इति दीर्घत्वे कृपो रोल इति लत्वे च अचीक्लृपत्–अचकल्पत् ॥ वृतु वर्तने अवीवृतत्—अववर्तत् ॥ मृजूष् शुद्धौ । अमीमृजत् । पक्षे मृजेर्वृद्धिरिति वृद्धौ अममार्जत् ॥ १६ ॥

(त०) **रुहेः** ॥ रुह बीजजन्मनि प्रादुर्भावे च । रुप विमोहन इति दैवादिकस्यापि रोपयतीति सिद्धम्, धातूनामनेकार्थत्वाज्जन्मनि वृत्तिः । सूत्रं तु स्पष्टार्थम् ॥ १६ ॥

**( इङ्क्रीजीनामात्वं णौ )** अध्यापयति । अध्यापिपत् ॥१७॥

**( अङ्सपरे णौ इङो गा वा )** अध्यजीगपत ॥ क्रापयति । अचिक्रपत् ॥ जापयति । अजीजपत् ॥१८॥

---

(क) अपपाठ इत्युक्त्वा बहुपुस्तकसम्मतपाठादरेणाह—**ण्यन्तात् णौ शता वेति ।** एवं च ण्यन्तात् णौ आत्मनेपदं दुर्लभम्, भीस्मिप्रकृतिकण्यन्तादेव तद्विधानात् । राजा विस्मयते तं मनुष्यवाक् प्रेरयते । इति मनुष्यवाक् राजानं विस्मापयते । प्रथमञ्चावात्वपुकौ तां सिंहः प्रेरयतीति । द्वितीये णौ तु स्मिप्रकृतिकण्यन्तत्वाभावेनात्मनेपदाभावे "सिंहो मनुष्यवाचा विस्मापयति राजानमिति रूपं जायते, ततः शतृप्रत्ययो बोध्यः । इति ।

(ख) इयमत्राशङ्का । ननु दिवादिगणे रूपधातोः सत्त्वाद् भ्वादौ च रुहधातोर्विद्यमानत्वात्कथं 'रुहेर्णौ पो वा' इति सूत्रारम्भः । न च रुपधातोर्विमोहनार्थत्वात् प्रादुर्भावार्थत्वं दुर्घटमिति वाच्यम्, धातोरनेकार्थत्वादिति चेन्न, अत्र सूत्रारम्भस्य स्पष्टार्थत्वादिति समाधानम् ।

(छ०) इङ्क्रीजीनामात्वं णौ ॥ इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये । जि जये॥ अङ्सपरे णौ इङो गा वा ॥ अध्यजीगपत् । पक्षे स्वरादेः पर इति पिशब्दस्य द्वित्वे अध्यापिपत् ॥ अचिक्रपत् । अजीजपत् ॥ १७ ॥ १८ ॥

(त०) इङ्क्रीजीनाम् ॥ इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये । जि जये ॥१७॥

(ह्रीब्लीरीक्नूयीक्ष्मायीणां णौ पुक्) ह्रेपयति । अजिह्रिपत् ॥ ब्लेपयति । अबिब्लिपत् ॥ रेपयति । अरीरिपत् ॥ १९ ॥

( सु० ह्रीब्लीरीक्नूयीक्ष्मायीणां णौ पुक् ॥ एषां पुक् णौ । ह्री लज्जायाम् । ब्ली वरणे । रीङ् क्षये । क्नूयी शब्दे उन्दे च । क्ष्मायी विधूनने ॥ १६ ॥

( त० ) ह्रेपयतीति ॥ उपधाया लघोरित्यत्रोपधाया इत्यस्य योगविभागाद्धातो-रुपधाया नामिनो गुणो भवति । तेन गुरोरपि भवति (क) ॥ १९ ॥

( यवयोर्वसे हकारे च लोपः ) क्नोपयति (ख) । अचुक्नुपत् ॥ क्ष्मापयति । अचिक्ष्मपत् ॥ २० ॥

( सु० ) यवयोर्वसे हकारे च लोपः ॥ यकारवकारयोर्लोपः स्यात् वसप्रत्या-हारे हकारे च परे ॥ २० ॥

( दुषेर्णौ दीर्घो वा चित्तविरागे ) चित्तं दूषयति—दोषयति वा कामः । अदूदुषत् ॥ २१ ॥

( सु० )दुषेर्णौ दीर्घः ॥ दुष्यतेरुपधाया ऊत्स्यात् णौ । दूषयति । दुष वैकृत्ये-दिवादिः । णौ किम् दोषः । वा चित्तविरागे (ग) । चिति संज्ञाने इत्यस्मात् क्तः । चित्तम् । विरागोऽप्रीतता । दूषयति-दोषयति वा चित्तं कामः । चित्तं दूष्यति । स्नान-संध्यादौ विरक्तं भवति । तत् प्रयुङ्क्ते इत्यर्थः ॥ २१ ॥

( त० ) दुषेर्णौ दीर्घः ॥ वाक्यभेदेन व्याख्येयम् । दुषेर्दीर्घो णौ । दूषयति । ततश्चित्तविरागे वा । चित्तविरागोऽप्रीतता ॥ २१ ॥

( स्फायो वः ) णौ ॥ स्फावयति । अपिस्फवत् ॥ अड्ड उद्यमे । अड्डयति । आड्डिडत् ॥ अर्च पूजायाम् ।अर्चयति ।आर्चिचत् ॥ उन्दी क्लेदने । उन्दयति । औन्दिदत् ॥ उब्ज आर्जवे । उब्जयति । औब्जि-जत् ॥ द्रा कुत्सायाम् । द्रापयति । अदिद्रपत् ॥ २२ ॥

( सु० ) स्फायो वः ॥ स्फायो वत्वं स्यात् णौ परे ॥ अड्ड उद्यमे । स्वरादेः पर इति डिशब्दस्य द्वित्वे आड्डिडत् । अर्च पूजायाम् । आर्चिचत् ॥ एध वृद्धौ । उपधा-ह्रस्वो द्वित्वात्प्रागेव भवति ततो धिशब्दस्य द्वित्वे मा भवानिदिधत् ॥ उन्दी क्लेदने ।

---

( क ) गुरोरपि भवतीति । दीर्घस्यापि गुणो भवतीत्यर्थः, तेन ह्रेपयतीति सिद्धम् ।

( ख ) क्नोपयतीति । क्नूयीति धातोरीकार इत् , णौ परे पुगागमः, 'यवयोः' अनेन यकारस्य लोपः, गुणश्च । ( ग ) वेति । चित्तविरागे दीर्घो वा भवतीत्यर्थः, वाक्यभेदेन व्याख्यानं प्रस्तौति ।

दिशब्दस्य द्वित्वे औन्दिदत् ॥ उब्ज आर्जवे । उपदेशे दकारोपधोऽयम्(क) ॥ द्वित्वविषये स्वरात्परः इति निषेधात् जिशब्दस्य द्वित्वे कृते ततो निपातनाद्दस्य वः ॥ द्रा कुत्सायाम् । पूर्वमुपधाह्रस्वः ततो द्वित्वे इत्वे च अदिद्रपत् ॥ २२ ॥

**( रभिलभोः स्वरे नुम् न त्वङिलटोः )** रम्भयति । अररम्भत् ॥ डुलभष् प्राप्तौ । लम्भयति । लम्भयते । अललम्भत् । हाययति । हाययते । अजीहयत् ॥ स्मारयति । स्मारयते । अससमरत् ॥ दारयति । दारयते । अददरत् ॥ २३ ॥

( सु० ) **रभिलभोः स्वरे नुम् न त्वङिलटोः ॥** स्वरे किम् । आरब्धम् । अङिलटोः किम् । रभते । रेभे । रभ राभस्ये । डुलभष् प्राप्तौ । आररम्भत् । अललम्भत् ॥ हि गतौ वृद्धौ च । पूर्वाद्धिनोतेरिति सूत्रे न त्वङीत्युक्ते षत्वं न । अजीहयत् ॥ स्मृ चिन्तायाम् । अङि लघाविति ह्रस्वः । स्मृदृत्वरेति पूर्वस्यात् । अस्मरत् ॥ दृ विदारणे । अत्रापि पूर्वस्यात् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः (ख) ॥ २३ ॥

**( वेष्टिचेष्ट्योः पूर्वस्यात्वं वाङि )** अविवेष्टत् ॥ अववेष्टत् ॥ अचिचेष्टत्–अचचेष्टत् । **भ्राजृ दीप्तौ ।** भ्राजयति । भ्राजयते । अबिभ्रजत्–अबभ्राजत् ॥ २४ ॥

( सु० ) **वेष्टिचेष्ट्योः पूर्वस्यात्वं वाङि ॥** अनयोः पूर्वरूपस्यात्वं वा स्याद्ङ्प्रत्यये परे । वेष्ट वेष्टने । चेष्ट चेष्टायाम् । भ्राजृ दीप्तौ । भ्राजभासेत्यादिना वा उपधाह्रस्वः । अबिभ्रजत्–अबभ्राजत् ॥ २४ ॥

**( कणरणभणश्रणलुपहेठिह्वेञ्वाणिलोटिलोठिलोपीनां वा ह्रस्वोऽङि )** (ग) अचीकणत्–अचकाणत् ॥ व्यशिश्रणत्–व्यशश्राणत् ॥ अलूलुपत्–अलुलोपत् ॥ अजीहिठत्–अजिहेठत् ॥ अजूहवत्–अजुहावत् ॥ अबीबणत्–अबबाणत् ॥ अलूलुटत्–अलुलोटत् ॥ अलूलुठत्–अलुलोठत् ॥ २५ ॥

( सु० ) **कणरणभणश्रणलुपहेठिह्वेञ्वाणिलोटिलोठिलोपीनां वा ह्रस्वोऽङि ॥** कण निमीलने । रण शब्दे । भण शब्दे । श्रण दाने । लुपॢ छेदने । हेठ विबाधायाम् । ह्वेञ् स्पर्धायां शब्दे च । बाणिर्ण्यन्तः शब्दे । लुट प्रातिघाते । लुठ छेदने । लोपीतिण्यन्तनिर्देशः । लापोति पाठान्तरम् । लप व्यक्तायां वाचि । अचीकणत्–अचकाणत् । अरीरणत्–अरराणत् । अबीभणत्–अबभाणत् । अशिश्रणत्–अशश्राणत् । अलूलुपत्–अलुलोपत् । अजीहिठत्–अजिहेठत् ॥ २६ ॥

---

( क ) उपदेशे इति । धातूपदेशे इत्यर्थः ।

( ख ) तपरत्वसामर्थ्यादिति । स्मृदृत्वरेति सूत्रेण अदिति तपरकरणादित्यर्थः ।

( ग ) कण रण भण श्रण लुप हेठाः षडेते भाष्ये उक्ताः । ह्वेञ् वाणि लोटि लोपयश्चत्वारोऽधिका न्यासे । वाणि लोपि अप्यन्यत्र । इत्थं द्वादशः । सर्वमालोच्याभाह—कणरेत्यादि ।

**( स्वापेः संप्रसारणमङि )** अशूषुपत् ॥ २६ ॥

(सु०) **स्वापेः संप्रसारणमङि** ॥ञिष्वप् शये। ण्यन्तस्यास्य संप्रसारणं स्यादङि। इह संप्रसारणोत्तरं द्वित्वम्। असूषुपत् ॥ २६ ॥

**(श्वयतेर्ण्यन्तस्य संप्रसारणं वाङ्सयोः)** अशिश्वयत्–अशूशवत् ॥

(सु०) **श्वयतेर्ण्यन्तस्य संप्रसारणं वाङ्सयोः** ॥ संप्रसारणं तदाश्रयं च कार्यं बलवदिति वचनाद्वृद्धेः पूर्वं संप्रसारणम् (क)। अलघुत्वान्नदीर्घः। अशिश्वयत् अशूशवत् ॥२७॥

**( जिघ्रतेरुपधाया इद्वाङि )** अजिघ्रिपत्–अजिघ्रपत् ॥ २८ ॥

(सु०) **जिघ्रतेरुपधाया इद्वाङि** ॥ घ्रापीत्यस्यात इत्वं वा स्यादङि परे। ततो द्वित्वादि ॥ २८ ॥

**( सिध्यतेरैहलौकिकेऽर्थे स्वरस्यात्वं णौ )** अन्नं साधयति। असीषधत्। अन्यत्र तपः सेधयति। असीषिधत् ॥ २९ ॥

(सु०) **सिध्यतेरैहलौकिकेऽर्थे स्वरस्यात्वं णौ** ॥ इहलोके भवः ऐहलौकिकः तस्मिन् ऐहलौकिकेऽर्थे सिध्यतेः स्वरस्यात्वं णौ। अन्नं साधयति निष्पादयतीत्यर्थः। सिध्यतेरिति श्यनिर्देशाद्भौवादिकस्याग्रहणम् (ख)। ऐहलौकिके किम्। तापसः सिध्यति तत्त्वं निश्चिनोति। तत्त्वनिश्चयश्चात्मविषयकः स च परलोके उपयुज्यते। तं प्रेरयति तापसं तपः लुङि असीषधत्। आत्वाभावे असीषिधत् ॥ २९ ॥

(त०) **सिध्यतेरैहलौकिके इति** ॥ इह लोके भव ऐहलौकिकस्तस्मिन्नित्यर्थः ॥ **अन्नं साधयतीति** ॥ निष्पादयतीत्यर्थः अन्यत्र। पारलौकिके इत्यर्थः। सेधयति। तापसः सिद्ध्यति। हेयमुपादेयं च तत्त्वतो ज्ञातुकामः प्रवर्तते। तमपरः प्रयुक्तं ज्ञानविशेषवन्तं करोतीत्यर्थः ॥ २९ ॥

**( प्रजने वीयतेरात्वं वा णौ )** वापयति–वाययति वा गाः पुरो वातः गर्भं ग्राहयतीत्यर्थः ॥ ३० ॥

(सु०) **प्रजने वीयतेरात्वं वा णौ** ॥ वी गतिप्रजनादौ। आदादिकस्य यका निर्देशः। अत्र केचिदुत्प्रेक्षयन्ति। वेत्तेरिति वक्तव्ये यका निर्देशाद्व्येञोऽपि ग्रहणम्। तस्यापि यकि संप्रसारणे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेऽर्थे अत्वं वा स्यात्। तत्रात्वे तदभावे च यद्यपि व्येञो व्याययतीति रूपं तुल्यम्। पादेर्युगिति पुकोऽपवादतया युग्विधानात्। तथापि अन्तात् क्विपि–व्याः, व्यौ, व्याः। आत्वाभावपक्षे–व्यैः, व्यायौ, व्यायः। इत्यस्ति विशेषः। सूत्रे विभाषाविधानसामर्थ्यात्पक्षेऽपि संध्यक्षराणामित्यात्वं न प्रवर्तते। रातो णौ पुगिति पुक् वापयति। आत्वाभावे वापयति गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः ॥ ३० ॥

(त०) **प्रजने वीयतेरिति** ॥ वीगतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्य यकानिर्देशः। अन्यथादादिकत्वेन यकारासंभवः। प्रजनो गर्भग्रहणं तत्रेत्यर्थः **वापयतीति**।

---

( क ) नन्वन्तरङ्गत्वाद् वृद्धौ कृतायां सत्यां पश्चात्सम्प्रसारणेऽपि अशूशवन्न स्यादत आह—**सम्प्रसारणं तदाश्रयं चेति**। ( ख ) **अग्रहणमिति**। किन्तु दैवादिकस्य ग्रहणमिति भावः।

गर्भं ग्राहयतीत्यर्थः। वातेरनेकार्थत्वाद्यदि प्रजनोऽप्यर्थ उच्यते तदा वापयति वेतेस्तु वाययतीति सिद्धौ कृतमेतेन ॥ ३० ॥

( **इणो णौ वा गमिरबोधने** ) (क)गमयति। अजीगमत् । आययति। आयियत् ॥ घटादयो मितः। **घट चेष्टायाम्**। मितां ह्रस्वः घटयति ॥ व्यथयति। अविव्यथत् ॥ प्रथयति। अपप्रथत्। **प्रस विस्तारे**। प्रसयति ॥ **म्रद मर्दने**। म्रदयति। अमम्रदत् ॥ **स्खद विद्रावणे**। स्खदयति। अचिस्खदत् ॥ त्वरयति। अतत्वरत् ॥ **ज्वर रोगे**। ज्वरयति ॥ **नट नृत्तौ**। नटयति। अनीनटत्। **चक तृप्तौ**। चकयति। **लगे संगे**। लगयति ॥ **ज्वल दीप्तौ**। प्रज्वलयति। **स्मृ आध्याने**। स्मरयति। असस्मरत् ॥ **दॄ भये**। दरयति। अददरत् ॥ **नॄ नये**। नरयति। अनीनरत्। **श्रा पाके**। श्रपयति। अशिश्रपत् ॥ ३१ ॥

(सु०) **इणो णौ वा गमिरबोधने** ॥ इणो गमिः स्याद्वा णौ अबोधनेऽर्थे ॥ अजीगमत्। बोधने तु प्रत्याययति। प्रतिपूर्वस्येणो ज्ञानार्थता। स्वरादेः पर इति णिसहितस्य द्वित्वम्। प्रत्यायियत् ॥ घटादयो मितः। घट चेष्टायाम्। तत्फलं तु मितां ह्रस्व इति ह्रस्वत्वम्। मितां ण्यन्तानामिति णमि च वा दीर्घ इति च। त्वरत्यन्ता घटादयः षितश्च। षित्प्रयोजनं तु षिद्भिदादिभ्योऽङित्यङ्। आबतः स्त्रियामित्याप्। तेन घटा व्यथेत्यादिरूपसिद्धिः। विघटयति। कथं तर्हि 'कमलवनोद्घाटनं कुर्वते ये इत्यादि। शृणु। घट संघात इति चौरादिकस्येदम् ॥ व्यथ दुःखसंचलनयोः। अविव्यथत् ॥ प्रथ प्रख्याने। अपप्रथत्। स्मृदॄत्वरेति पूर्वस्यात् ॥ प्रस विस्तारे। अपिप्रसत्। अलघुत्वान्न दीर्घः ॥ म्रद मर्दने। अमम्रदत्। स्मृदॄत्वरेति पूर्वस्यात् ॥ स्खद विद्रावणे अचिस्खदत् ॥ ञित्वरा संभ्रमे। अतत्वरत्। स्मृदॄत्वरेपि पूर्वस्यात् ॥ घटादयः षितः षित्वादङ्। त्वरा ॥ ज्वर रोगे। अजिज्वरत। इणप्रत्यये—अज्वरि—अज्वारि। णमूप्रत्यये—ज्वरंज्वरं—ज्वारंज्वारम् ॥ नट नृत्तौ। गात्रविक्षेपमात्रं वृत्तिः। अनीनटत् ॥ चक तृप्तौ। अस्य तृप्तिमात्रे मित्त्वम् परस्मैपदं च। अचीचकत् ॥ लगे संगे। अलीलगत् ॥ ज्वल दीप्तौ। अजिज्वलत्। ज्वलादेर्ण इति णप्रत्यये—ज्वालः ॥ स्मृ आध्याने उत्कण्ठापूर्वकं स्मरणमाध्यानम् ॥ दॄ भये। दॄणान्तं प्रेरयति दरयति। भयादन्यत्र दारयति। केचित्तु घटादौ स्मृदॄत्वरेति सूत्रे च दॄ इति दीर्घस्थाने ह्रस्वं पठन्ति तन्नेति माधवः। यद्ययं ह्रस्वान्तो भवेत्तर्हि श्रदॄप्रां ह्रस्वो वेति सूत्रे ह्रस्वविकल्पविधायके दॄग्रहणमनर्थकं स्यात्। नॄ नये। नयादन्यत्र नारयति। श्रा पाके। श्रपयति। विक्लेदयतीत्यर्थः। पाकादन्यत्र श्रापयति। स्वेदयतीत्यर्थः ॥ ३१ ॥

(त०) **मितः** ॥ के के पुनर्मित इत्याह—**घटादयः** इति ॥ ३१ ॥

( **मारणतोषणनिशामनेषु ज्ञा** ) ज्ञपयति ॥ **३२** ॥

---

( क ) **इणो णौ वा गमिरबोधने**। णाविति विषये सप्तमी। **बोधनं** शब्दज्ञानम्।

**(कम्पने चलिः)** चलयति शाखां वायुः । अन्यत्र शीलं चालयति ॥ ३३ ॥

**(मदी हर्षदैन्ययोः)** मदयति । हर्षदैन्ययोः किम् । मादयति ॥ ३४ ॥

**( ध्वन शब्दे )** ध्वनयति । अदिध्वनत् ॥ ३५ ॥

( सु० ) **मारणतोषणनिशामनेषु ज्ञा** ॥ एष्वेवार्थेषु जानातिर्मित् । शम आलोचन इत्यस्मान्निष्पन्नत्वान्निशामनं चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये । निशानेष्विति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । पशुं संज्ञपयति मारयतीत्यर्थः । विष्णुं विज्ञपयति । संतोषयतीत्यर्थः । संज्ञपयति रूपम् । माधवमते दर्शयतीत्यर्थः मतान्तरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरम् । तीक्ष्णं करोतीत्यर्थः । कथं तर्हि 'विज्ञापना भर्तृषु सिद्धिमेति' इति 'तज्ज्ञापयत्याचार्यः' इति च । अत्र ज्ञाधातोर्णौ मित्त्वाद्ध्रस्वेन भवितव्यमिति । शृणु । माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् । ज्ञापनमात्रे मित्त्वमिति मते तु 'ज्ञा नियोगे' इति चौरादिकस्य धातूनामनेकार्थत्वाद्बोध्यम् ॥ **कम्पने चलिः** । चलयति शाखाम् । कम्पनादन्यत्र तु शीलं चालयति । अन्यथा करोतीत्यर्थः ॥ हरतीत्यर्थ इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः ॥ **मदी हर्षदैन्ययोः** ॥ मदयति हर्षयति, ग्लेपयति वा । दैन्यं करोतीत्यर्थः । अन्यत्र मादयति । चित्तविकारमुत्पादयतीत्यर्थः ॥ **ध्वन शब्दे** ॥ ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥ ३२–३५ ॥

( त० ) **मारणेति** ॥ मारणं आहननम् । निशामनं चाक्षुषज्ञानम् । 'तज्ज्ञापयत्याचार्यः' 'विज्ञापना भर्तृषु सिद्धिमेति' इत्यादौ ज्ञापनसामान्ये मित्वाभावान्न ह्रस्वः ॥ **कम्पने चलिः** ॥ चलयतीति शाखामिति शेषः अन्यत्र शीलं चालयति । अन्यथा करोतीत्यर्थः ॥ **मदयतीति** ॥ अन्यत्र मादयति चित्तविरागमुत्पादयतीत्यर्थः ॥ **ध्वनयतीति** ॥ घण्टामिति शेषः । अन्यत्र ध्वानयति अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥ ३२–३५ ॥

**( जनीजॄष्क्नसुरञ्जोऽमन्ताश्च )** जनयति । जरयति **क्नसु** कौटिल्ये दीप्तौ च क्नसयति ॥ ३६ ॥

( सु० ) **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** ॥ जनी प्रादुर्भावे । जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । त्रयोऽपि दिवादयः । रञ्ज रागे । दैवादिको भौवादिकश्च । अमन्ताः कमिगम्यादयः । जषिति षिन्निर्देशाज्जीर्यतेर्ग्रहणम् । जृणातेस्तु जारयति ॥ ३६ ॥

( त० ) **अमन्ताश्च** अम् अन्ते येषां ते । शमादय इत्यर्थः ॥ ३६ ॥

**( रञ्जेर्णौ मृगरमणे नलोपः )** रजयति मृगान् । अरीरजत् । अन्यत्र वस्त्रं रञ्जयति । अररञ्जत् ॥ शमयति ॥ दमयति ॥ ३७ ॥

(सु० ) **रञ्जेर्णौ मृगरमणे नलोपः** ॥ रञ्जेर्नस्य लोपः स्यात् णौ परे आखेटेऽर्थे । रजयति मृगान् । मृगेति किम् । रञ्जयति पक्षिणः । रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन ॥ शमु दमु उपशमे । दैवादिकौ । अशीशमत् ॥ अदीदमत् ॥ ३७ ॥

( त० ) **रञ्जेर्णावित्यादि** ॥ मृगरमणामाखेटः । (क) मृगेति किम् । रञ्जयति

---

( क ) आखेट इति । 'मृगरमण इति किमर्थम् ? रजयति वस्त्राणि' इति भाष्यालोचने तु यथाश्रुतमेव मृगरमणम् । तथाच 'रजयांचकार विरजाः स मृगान्' इति भारविप्रयोगः साधुत्वमायाति।

पक्षिणः । रमणे किम् । रञ्जयति मृगान् तृणदानेन ॥ ३७ ॥

( **ज्वलह्वलह्मलनमामनुपसर्गाद्वा** ) ज्वलयति–ज्वालयति । **ह्वल ह्मल** चलने । ह्वलयति–ह्वालयति । ह्मलयति–ह्मालयति । नमयति–नामयति । उपसर्गे तु । प्रह्वलयति ॥ ३८ ॥

(सु०) **ज्वलह्वलह्मलनमामनुपसर्गाद्वा** ॥ ज्वल दीप्तौ, ह्वल ह्मल संचलने इति त्रयाणां पूर्वं घटादौ पठितत्वान्नमेरमन्तत्वान्मित्वे प्राप्ते विभाषेयम् । उपसर्गे तु नित्यं मित्त्वम् । प्रज्वलयति । कथं तर्हि प्रज्वालयति, उन्नामयतीति । घञन्तात् 'नाम्नो णि-ङित्करणे' इति णौ बोध्यम् । कथं संक्रामयति, विश्रामयतीति च मान्तस्य सेटो न वृद्धि-रिति वृद्धिनिषेधात् । घञि क्रमः श्रम इत्येव भवति न तु क्रामः श्राम इति । पूर्वोक्तस-माधानस्यात्रासंभवात् पृथक् प्रश्नः । शृणु । घञन्ताभ्यां क्रमश्रमाभ्यां स्वार्थेऽणि क्राम-श्रामशब्दौ स्वीकृत्य ताभ्यां णिङिदिति णिप्रत्यये संक्रामयति विश्रामयतीति सिद्धम्॥३८॥

(त०) **अनुपसर्गाद्वेति** ॥ तेनोपसृष्टानां मित्वमेव । प्रज्वालयत्युन्नामयतीति तु घञन्तात्तत्करोतीति णौ । संक्रामयतीति तु वा चित्तविराग इत्यतो वेत्यनुवृत्तेर्व्यवस्थया बोध्यम् ॥ ३८ ॥

( **ग्लास्नावनुवमां च** ) ग्लापयति–ग्लपयति । स्नापयति–स्नपयति ॥ वानयति–वनयति । वामयति–वमयति ॥ ३९ ॥

(सु०) **ग्लास्नावनुवमां च** ॥ अनुपसर्गादेषां मित्त्वं वा आद्ययोरप्राप्ते वनेर्घटा-दित्वात्प्राप्ते वमेरमन्तत्वाच्च प्राप्ते विभाषा । ग्लापयति-ग्लपयति। स्नापयति-स्नपयति । वानयति–वनयति । वामयति-वमयति ॥ ३९ ॥

(**न कम्यमिचमाम्** ) कामयति ॥ **अम गत्याम्** । आमयति । आमिमत् ॥ चामयति ॥ ४० ॥

(सु०) **न कम्यमिचमाम्** ॥ अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात् ॥ ४० ॥

( **शाम्यतिर्दर्शने मिन्न** ) निशामयति रूपम् ॥ ४१ ॥

(सु०) **शाम्यतिर्दर्शने मिन्न** । निशामयति रूपम् । अन्यत्र 'प्रणयिनो निशमय्य वधूः कथाः कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद्गदतो मम' इति । शृणु । शम आ-लोचने इति चौरादिकस्यैव । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः । यथा शाम्यति निशाम-यतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीति ॥ ४१ ॥

(त०) **दर्शने मिन्नेति** ॥ निशामय तदुत्पत्तिमित्यादि तु शम (लक्ष) आलोचन इत्यस्य, धातूनामनेकार्थत्वाच्छ्रवणार्थतापि ॥ ४१ ॥

( **यच्छतिर्भोजनतोऽन्यत्र मिन्न** ) आयामयति । भोजने तु यमयति विप्रान् ॥ **४२** ॥

(सु०) **यच्छतिर्भोजनतोऽन्यत्र मिन्न** । यम उपरमे इत्ययं धातुर्भोजने मित् ।

अन्यत्र तु न। आयामयति द्राघयति व्यापारयति वेत्यर्थः। भोजने तु यमयति ब्राह्मणान्। भोजयतीत्यर्थः ॥ ४२ ॥

(त०) **आयामयतीति** ॥ द्राघयति व्यापारयति वेत्यर्थः। भोजने तु यमयति विप्रं भोजयतीत्यर्थः ॥ ४२ ॥

( **स्वदिरवपरिभ्यां मिन्न** ) अवस्वादयति परिस्वादयति ॥ ईर्ष्य अक्षान्तौ। ईर्ष्ययति ॥ ४३ ॥

(छ०) **स्वदिरवपरिभ्यां मिन्न** ॥ घटादित्वात्प्राप्तं मित्त्वं न। अवाचिस्वदत्॥४३॥

( **ईर्ष्यतेस्तृतीयोद्विस्तृतीयो हस एकस्वरो वा** ) ऐर्ष्ष्यियत्। आङ् तु। स्वरादेः परः। ऐर्ष्यिष्यत्। द्वितीयपक्षे सान्ते। ईर्ष्यिषिषति। तृतीय एकस्वरपक्षे सान्ते प्रवर्तते। ञ्यन्ते तु तृतीय एकस्वराभावादित्यर्थः ॥

इति ञ्यन्तप्रक्रिया ॥ ४४ ॥

(सु०) **ईर्ष्यतेस्तृतीयो द्विरिति** ॥ तृतीयव्यञ्जनस्येति पक्षे सस्वरस्य यकारस्य द्वित्वम्। ऐर्ष्यियत्। तृतीयैकस्वरस्येति पक्षे तृतीयाभावेन प्रकृतिवार्तिकाप्रवृत्तेः (क)। स्वरादेः पर इति द्वित्वे पकार एव पूर्वं श्रूयते हसादिः शेषात्। ऐर्पिष्यत्। तृतीयहसपक्षे षस्य द्वित्वं वारयितुमिदम्। तृतीयैकस्वरस्येति पक्षे तु स्वरादेः पर इत्यस्यापवादत्वेन-सान्ते प्रवर्तते ॥ इति सुबोधिन्यां ञ्यन्तप्रक्रिया ॥ ४४ ॥

(त०) **ईर्ष्यतेरिति** ॥ तृतीयः क इत्याकाङ्क्षायां मतभेदेन व्याचष्टे—**तृतीयो हस इति** ॥ हसापेक्षया तृतीयो हसः। स्वरसहित इत्यर्थः ॥ अस्मिन्पक्षे षस्य न द्वित्वम्। मतान्तरमाह-**एकस्वरो वेति** ॥ तृतीय इत्येव। ईर्ष्यतेर्यस्तृतीय एकस्वरः स द्विर्वाच्य इत्यर्थः। अत्र पक्षे सान्ते ईर्ष्यिषिषतीति सस्य द्वित्वम्। आद्यपक्षे ईर्ष्यियिषतीति सान्तेऽपि रूपद्वयम्। ईर्ष्यतेः सेऽपि सपोर्वा द्वित्वमिति। द्वितीयव्याख्यायां ञ्यन्तादङि द्वितीयस्य द्वित्वे हसादिशेषेण पूर्वत्र षस्यैव श्रवणात्तृतीयाभावेनैतद्वार्तिकाप्राप्तौ ऐर्ष्यियदिति प्रथमपक्षे। ऐर्षिष्यदिति तु द्वितीयपक्षे। एतद्बीजं तूक्तमेव। अत्र पण्डिताः। कचित्तु ऐर्ष्यिष्यदिति षकारादेरपि द्वित्वमुदाह्रियते। तद्भ्रान्तप्रक्षिप्तत्वादुपेक्ष्यम्। तस्मादैर्ष्यियदित्येकमेवात्र रूपं साधनीयं न त्वैर्षिष्यदिति, ञ्यन्ते तृतीयस्यैकाचोऽसंभवादित्याहुः। तत्स्वमतिभ्रमोद्भावनायेति मन्यामहे। तथाहि। ञ्यन्ते द्वितीयव्याख्यायां तृतीयस्यैकाचोऽसंभवात् द्वितीयद्वित्वं केन निवार्यमिति स्वयमेवोहनीयमिति दिक्। निवृत्तप्रेरणात् धातोर्ञौ केवलेन तुल्योऽर्थः। तेन 'प्रार्थयन्ति शयनोत्थितम्' इत्यादि सिद्धम् ॥४४॥

कृतायामिह टीकायां लोकेशकरशर्मणा। बाधनं दुष्टबुद्धीनामगमज्ञ्यन्तसाधनम् ॥ १ ॥

इति तत्त्वदीपिकायां ञ्यन्तप्रक्रिया ॥ ११ ॥

( क ) **तृतीयाभावेनेति**। इहोपन्यासस्तु आद्यव्याख्यानमादाय प्रकृतोपयोगात्, इति भावः।

इति टिप्पण्यां ञ्यन्तप्रक्रिया समाप्ता।

# अथ सान्तप्रक्रिया ॥ १२ ॥

**इच्छायामात्मनः सः** ॥ धातोरात्मन इच्छायामर्थे सप्रत्ययो भवति ॥१॥

(**द्विश्च**) आत्मनः भवितुमिच्छति बुभूषति(क)। बुभूषांचकार। अबुभूषीत् ॥२॥

( सु० ) **इच्छायामात्मनः सः** ॥ इच्छायाः क्रियारूपत्वेन कर्तरि विनाऽनुपपन्नत्वात् कर्तुराक्षेपात् इच्छा कर्ता इष्यमाणं वस्तु यदि स्वसंबन्धित्वेनैव इच्छति तदा धातोः सप्रत्यय इत्यर्थः। तेन शिष्याणां पठनमिच्छतीति गुरुरित्यादौ सो न॥ द्विश्च ॥ सप्रत्ययान्तस्य धातोर्द्वित्वं स्यात् ॥ भवितुमिच्छतीति कर्मनियतत्वादिपु कर्मत्वं लब्धम्। धातोः प्रत्ययविधानात् तदर्थत्वं लब्धम्। तेन इषिकर्मार्थवाचकाद्धातोरिच्छायां सप्रत्ययः स्यात्। तुम् तु स्वार्थिकः। साध्यावस्थां क्रियामाह। स च लौकिके वाक्ये प्रयुज्यते। केवलस्य धातोः प्रयोगानर्हत्वात्। अलौकिके तु धातुमात्रं प्रयुज्यतेऽतः तुमः कथं लोप इति नो शङ्क्यम्। अत्रात्मशब्दस्तु स्वशब्दस्य पर्यायः। संबन्धसामान्ये षष्ठी। आत्मनः स्वस्येत्यर्थः। स्वशब्देन हि इषिकर्तैव गृह्यते ॥ १-२ ॥

( त० ) **इच्छायामात्मनः सः** ॥ धातोरित्यधिकारात्। इष्टिरिच्छा इषेरिच्छेरित्यत एव निपातनात्। आत्मशब्दोऽत्र स्ववाची न तु चेतनद्रव्यवाची आत्मन इत्यस्य व्यर्थतापातात्। इच्छायामात्मकर्तृकत्वाव्यभिचारात्। तच्चेदिष्यमाणमिच्छाकर्तृसम्बन्धि भवति। आद्भुवि कर्मणीत्यतः कर्मणीत्यनुवर्त्य पञ्चम्या विपरिणम्य कर्मणो धातोरिति सामानाधिकरण्येन व्याख्येयम् ॥ इच्छायां किम्। कर्तुं याति ॥ आत्मनः किम्। शिष्याणां पठनमिच्छति गुरुः ॥ स्वसंबन्धित्वं चेच्छायाः साक्षादेव, तेन शिष्याणां स्वसंबन्धित्वेऽपि न ॥ धातोः किम्। प्रतिष्ठासते इत्यत्र प्रसहितस्थाधातोर्मा भूत्। तथा सत्यङ्द्वित्वयोर्वैषम्यं स्यात्। कर्मणः किम्। गमनेनेच्छतीति करणान्मा भूत्। यत्तु वासुदेवेन व्याख्यातम्—इच्छा चेत्स्वसंबन्धिनीति। तन्न। शिष्याणां पठनमिच्छति गुरुरित्यत्रातिव्याप्तेरनिवारणात्। तथाहि। अत्र पठनस्य धात्वर्थत्वेन तत्संबन्धिन्या इच्छायाः सत्त्वात् ॥ **भवितुमिच्छतीति** ॥ साध्यावस्थायाः क्रियाया वाचकस्य तुमः स्वार्थकत्वेन लौकिक एव वाक्यप्रयोगः। केवलस्य धातोः प्रयोगानर्हत्वात्। न त्वलौकिकेऽपि। तेन तुमः कथं लोप इति नाशङ्कनीयम्। द्विश्चेत्यतो द्विरित्यनुवृत्तं भिन्नं वाक्यम्। तेन सप्रत्ययप्रकृतिभूतस्य धातोर्न द्वित्वं किंतु सान्तस्य। तथा च प्रतीपिपतीत्यादि सिद्धम् ॥ १-२ ॥

**वुः से** ॥ (ख)उवर्णान्तादृवर्णान्तात्ग्रहिगुहिभ्यां च परस्य सस्य नेट् ॥३॥

( सु० ) **वुः से** ॥ उश्च ऋ चेति वृ तस्मात् वुः। सौत्रं पुंस्त्वम्। ऋवर्णोवर्णान्ताभ्यां ग्रहिगुहिभ्यां च परस्य सस्य नेट् ॥ ग्रहेर्नित्यं प्राप्ते गृहेर्विकल्पेन प्राप्ते निषेधोऽयम् ॥ भू सत्तायाम्। सप्रत्यये द्वित्वे च ह्रस्वे षत्वे च बिभूषति ॥ ३ ॥

---

( क ) **बुभूषतीति**। सधातुरिति धातुत्वादपतिबादि। 'अदे'इति अलोपः।

( ख ) **वुःसे**। अत्र वुरिति उवर्णऋवर्णयोर्ग्रहणमित्याह—**उवर्णान्तादृवर्णान्तादिति**। वुरिति किम्, शिशयिषते।

( त० ) वुः से ॥ उश्च आ च वृ तस्मात् । सौत्रं पुंस्त्वम् ॥ ३ ॥

**नाऽनिटि से** ॥ इड्वर्जित सप्रत्यये गुणो न (क) । ऋत इर् । तितीर्षति ॥ जुघुक्षति ॥ ४ ॥

**से दीर्घः** ॥ स्वरान्तस्य धातोर्दीर्घः स्यात् सप्रत्यये परे (ख) ॥ चिकीर्षति ॥ चिचीषति–चिकीषति ॥ जिगीषति ॥ पुपूषति ॥ यः से । पिपक्षति ॥ पिपासति ॥ मुमूर्षति ॥ ५ ॥

( सु० )**नाऽनिटि से** ॥ न इट् यस्य सोऽनिट् तस्मिन् से इत्यस्य विशेषणम् ॥ बुभूषेत् । बुभूषतु । अबुभूषत्।कासादिप्रत्ययादित्याम्। बुभूषांचकार । बुभूष्यात्(ग) सिसतासीस्यपामितीट् । बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । अबुभूषीत् ॥ तॄ प्लवनतरणयोः ॥ ऋत इर् इतीर् । य्योर्वि हसे इति दीर्घः । तरितुमिच्छति तितीर्षति ॥ गुहू संवरणे । सप्रत्यये द्वित्वे च हो ढ इति ढत्वम् । आदिजबानामिति घत्वम् । 'षढोः कः से' इति कत्वम् । क्विलात्पः स इति षत्वम् । जुघुक्षति ॥ से दीर्घः । स्वरान्तस्य धातोर्दीर्घः स्यात् सप्रत्यये ॥ आदौ दीर्घस्तत इर् । चिकीर्षति ॥ चिनोतेः षणादौ किर्वेति किः किकीषति-चिचीषति ॥ सपरोक्षयोर्जेर्गिरिति गिः । से दीर्घ इति दीर्घः । जिगीषति ॥ पूञ् पवने । पुपूषति ॥ वुः से इतीड् न ॥ डुपचष् पाके । पक्तुमिच्छति पिपक्षति । यः से इति पूर्वस्येकारः ॥ पा पाने । पातुमिच्छति पिपासति ॥ मृ हिंसायाम् । पोरुरित्युर् । य्योर्विहसे इति दीर्घः । मुमूर्षति ॥ पॄ पालनादौ । पुपूर्षति ॥ भृ भर्त्सनभरणयोः । बुभूर्षति ॥ ४ ॥ ६ ॥

( त० ) **नानिटि से** ॥ न इट् यस्मिन् स तथा तस्मिन् । से इत्यस्य विशेषणम् । अपित्तादिर्ङिदित्यनेन ङित्वे सिद्धे नियमार्थमिदम् । अनिट् एव ङित्वं यथा स्यात् ॥ **चिकीर्षतीति** ॥ आदौ दीर्घस्तत इर् ॥ ४ ॥

( **रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः सः कित्** ) रुरुदिषति ।

---

(क) अनिडिति सस्य विशेषणमित्याह—**इड्वर्जित इति** । अविशेषादन्त्योपधालक्षणो द्वितीयोपि निषिध्यते, अतएव बूभूषतिर्बिभित्सतीत्युभयत्र गुणाभावः । अनिटीति किम्, शिशयिषते । ननु नाप्राप्ते गुण आरभ्यमाणबाधेननाप्राप्तिन्यायेन गुणं दीर्घ एव बाधिष्यते, इति किं निषेधेन । कृते तु दीर्घे तद्विधिसामर्थ्यान्न गुणः प्राप्नोति, दीर्घस्तु दीर्घान्तेष्वपि गुणबाधाय प्रवर्त्तत इति लुलूषतीत्यादौ अपि गुणो न भविष्यति । सिंहावलोकितन्यायेन,'य्वोर्विहस' इति हसग्रहणस्येहापि संबधाद्दीर्घविधौ द्विसकारनिर्देशाद्वा हसादौ सकारादौ वा ।

(ख) से दीर्घः । शिश्रयिषतीत्यादौ न गुणो बाध्यते, दीर्घाश्रयत्वाच्च चिकीर्षति तितीर्षति, इत्यादौ ऋत इरपि न बाध्यते ॥ तदेवं गुणवज्झीप्सतीत्यादौ भिलोपे माबाधीति गुणनिषेध आरभ्यते, **सप्रत्ययपरे इति** । हसादावित्यर्थः । एतच्च पूर्वसूत्र एवोपपादितम् । से इत्यकारस्तंत्रं तेन चकृष इति न दीर्घः । सानुबन्धकत्वाच्चहसषान्तात्सकोप्यग्रहणम् । उणादौ 'कषेः सः' कंसः इत्यत्र तु 'सदोणादयः इति सदाशब्दस्य बहुलार्थत्वादग्रहणम्, अथवा इच्छायामित्यनुवृत्तेरनिष्टार्थत्वादिह न भवति । अत एव च जुगुप्सत इत्यादौ स्वार्थे सेऽपि न भवति, एवमप्यसादेर्भ्रादिरित्यदो घसोजिघत्सति संजिगंसते च वत्सोमात्र इत्यादौ क्त्वोवेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेर्न दीर्घः । (ग) **बुभूष्यादिति** । यत इत्यलोपः ।

विविदिषति । मुमुषिषति । **ग्रह उपादाने** । हो ढः । आदिजबानामिति । षढोः कः से । ग्रहीतुमिच्छति जिघृक्षति । सुषुप्सति ॥ ६ ॥

( सु० ) **रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः सः कित्** ॥ रुदसाहचर्याद्विदेरेव ग्रहणं रुदविदमुषाणां त्रयाणामिवर्णोपधादिति विकल्पे प्राप्ते ग्रहिस्वपिप्रच्छीनां तु सस्य कित्वाप्राप्तौ वचनम् । अत्र गुणाभावः संप्रसारणं च । कित्त्वस्य फलम् । ग्रहामिति सम्प्रसारणम् । ग्रहीतुमिच्छति जिघृक्षति ॥ ञिष्वप् शये । यजां यवराणामिति सम्प्रसारणम् । सुषुप्सति ॥ ६ ॥

(**कॄगृदृधृप्रच्छिभ्यः सस्येट्** ) चिकरिषति । जिगरिषति । जिगलिषति । दिदरिषते । दिधरिषते । पिपृच्छिषति ॥ अत्तुमिच्छति जिघत्सति ॥७॥

( सु० ) **कॄगृदृधृप्रच्छिभ्यः सस्येट्** ॥ कॄ हिंसायाम् । गॄ निगरणे । दृङ् आदरे । धृङ् अवस्थाने । एतौ तुदादी । प्रच्छ ज्ञीप्सायाम् । एभ्यः सप्रत्ययस्येट् । चिकरिषति । 'वुः से' इति निषेधे प्राप्ते विधानम् । इह वृङ्वृञॄदन्तानामितीटो दीर्घो नेष्टो भाष्यकारेणानुक्तत्वात् । जिगरिषति । जिगलिषति । गिरतेः स्वरे रस्य लो वेति वा लः । आदनुदात्तेत्यात्मनेपदम् । दिदरिषते । दिधरिषते । कथम्, 'उदूदिधीर्षुः' इति भौवादिकयोर्धृङ्धृञोरि गृहाण । से दीर्घ इति दीर्घे ऋत इरितीट् । य्वोर्वि हसे इति दीर्घे उद्दिधीर्षुः ॥ ग्रहामिति संप्रसारणम् । रुदविदेति सस्य कित्त्वात्पिपृच्छिषति ॥ अद भक्षणे । सिसयोरदेर्घस्लृ लिटि तु वेति घस् । नैकस्वरादनुदात्तादिति नेट् । सस्तोऽनपीति सस्य तकारः । अत्तुमिच्छति जिघत्सति ॥ ७ ॥

( **हनिङोः से दीर्घः** ) जिघांसति (क) ॥ ८ ॥

( सु० ) **हनिङोः से दीर्घः** ॥ पूर्वाद्धन्तेर्हस्य घ इति घत्वम् । जिघांसति । सूत्रे स्वरादेशस्य गमेर्दीर्घ इति वक्तव्यम् । तेन गच्छतेर्न दीर्घः । जिगंस्यते । समो गम्यृच्छीत्यात् । संजिगंसते । तेन इणिकङां स्थाने यो गमिस्तस्य दीर्घः स्यात् । इणिकोस्तु कर्मोक्तौ जिगांस्यते । अधिजिगांस्यते । इत्यादि । अत इङ्स्थाने इति व्याख्येयम् ॥८॥

( **इङः से गम्** ) ॥ ९ ॥

( सु० ) **इङः से गम्** ॥ इङो गमिः स्यात्सप्रत्यये ॥ इङ् अध्ययने ॥ ९ ॥

( **सान्तात्पूर्ववत** ) अधिजिगांसते ॥ १० ॥

( सु० ) **सान्तात्पूर्ववत्** ॥ सप्रत्ययात्पूर्वो यो धातुस्तेन तुल्यं सन्तादपि स्यात् ॥ तेन ङित्त्वादात्मनेपदम् । हनिङोरिति दीर्घः अधिजिगांसते ॥ १० ॥

( **गमेः सस्येड् नाति** ) जिगमिषति ॥ ११ ॥

( सु० ) **गमेः सस्येड् नाति** ॥ आति किम् । इण् गतौ । जिगांस्यते । कर्मण्यात् । 'यः से' इति पूर्वस्यात इत् । षत्वम् । जिगमिषति ॥ ११ ॥

---

(क) जिघांसतीति । हनसर्हिसागत्योः । पूर्वाद्धन्तेर्हस्य घः । यः से । नश्चापदान्ते झसे । अपूकर्तरि । अदे । इत्यादिना सिद्धयति ।

**इः से ॥** अपिद्वाधारभलभशकपतपदमिमीमाङ्मेङां स्वरस्येस् अनिटि स परे पूर्वस्य च लोपः ॥ दित्सति । धित्सति । **रभ राभस्ये ।** स्कोरा-द्योश्च । खसे चपा झसानाम् । रिप्सते । लिप्सते । शिक्षति । पित्सते ॥१॥

( सु० ) **इः से ॥** अपिद्वाधारभलभशकपतपदमिमीमाङ्मेङाम् एषां स्वरस्येस् स्यात् पूर्वस्य च लोपः अनिटि से ॥ दैप् शोधने । दाप् लवने । अभ्यां विना दाण् दाने भ्वादौ पम् । देङ् पालने भ्वादावात् । डुदाञ् दाने ह्वादावात्पे । दो अवखण्डने दिवादौ पम् । एषां दारूपत्वम् । धेट् पाने भ्वादौ पम् । डुधाञ् धारणे ह्वादावात्पे । अनयोर्धा-रूपत्वम् । रभ राभस्ये । डुलभष् प्राप्तौ । शक्लृ शक्तौ स्वादौ पम् । शक मर्षणे । दिवा-दावात्पे । पत्लृ पतने । पद गतौ । डुमिञ् प्रक्षेपणे । मिङ् प्राणवियोगे दिवादावात् । मीञ् हिंसायाम्, क्र्यादावात्पे । मा माने अदादौ पम् । माङ् माने ह्वादौ दिवादौ चात । मेङ् प्रणिदाने भ्वादावात । दोदाणोः सस्तोऽनपीति सस्य तः दित्सति ॥ देङ् दित्सते । दाञ् दित्सति–दित्सते । धेट् धित्सति । धाञ् धित्सति–धित्सते । रभ । स्कोरिति स-लोपः । खसे चपा इति भस्य पत्वम् । रिप्सते ॥ शक्लृ स्कोरिति सलोपः पत्वं शिक्षति । शक् । शिक्षति । पित्सते । पत्लृ पतने ॥ १२ ॥

( त० ) **शिक्षतीति** ॥ शक्तुमिच्छतीति वाक्ये स्वरस्येसादेशपूर्वलोपसलोपत्वानि॥

**(पततनदरिद्राभ्यः सस्येड्वा)** पिपतिषति–पित्सति । **डुमिञ् प्रक्षेपणे ।** मित्सति । मित्सते । **मीञ् हिंसायाम् ।** मित्सति । मित्सते । **मा माने ।** मित्सति । **मेङ् प्रणिदाने ।** माङमेङोः मित्सते ॥१३॥

( सु० ) **पतनदरिद्राभ्यः सस्येड् वा ॥** एभ्यः परस्य सप्रत्ययस्य वा इड् भवति ॥ इट्पक्षे 'यः से' इति पूर्वस्येत् । पिपतिपति । स्कोरिति सलोपः । पित्सति ॥ डुमिञ्मीञोः सस्तोऽनपीति सस्य तः । मित्सति । मित्सते ॥ माङ्मेङोर्मित्सते ॥ मा मित्सति ॥ १३ ॥

**आप्नोतेरीः ॥** आप्नोतेरात ईस्से पूर्वलोपश्च ॥ ईप्सति ॥१४॥

( सु० ) **अप्नोतेरात ईः ॥** आपेरात् ईत्वं पूर्वलोपश्च स्यात् सप्रत्यये ॥ आप्लृ व्याप्तौ । आप्तुमिच्छति ईप्सति ॥ १४ ॥

**अशेरनायो वा ॥** अशेरिच्छायां वानायप्रत्ययः ॥ अशनायति–अशिशिषति ॥ तितनिषति ॥ १५ ॥

**(तनेः सादौ से वा दीर्घः)** तितांसति–तितंसति ॥ दिदरिद्रिषति–दिदरिद्रासति ॥ १६ ॥

(सु०) अश भोजने ॥ **अशेरनायो वा ॥** सस्यापवादः ॥ पक्षे सस्येट् । स्व-रादेः पर इति शिस् शब्दस्य द्वित्वम् । इस् इति सप्रत्ययस्यावयवः । पूर्वस्य हसादिः शे-षः । अशिशिषति ॥ तनु विस्तारे पततनेति सस्य वेट् । तितनिषति । पक्षे तनेः सादौ

से वा दीर्घः । अनिटि से तितांसति ॥ दरिद्रा दुर्गतौ पततनेति वेट् । दरिद्रातेरनप्या-लोपः सौ वेत्यालोपे षत्वे च दिदरिद्रिषति ॥ १९ ॥ १६ ॥

( **दम्भिज्ञपिभ्यां सस्य वेट्** ) दम्भु दम्भे । दिदंभिषति । जिज्ञपयिषति ॥ १७ ॥

( **ज्ञपेः स्वरस्य सादौ से ईत्पूर्वलोपश्च** ) ज्ञीप्सति ॥ १८ ॥

(सु०) **दम्भिज्ञपिभ्यां सस्य वेट्** ॥ 'यः से' इति पूर्वस्येत् । दिदम्भिषति । इडभावे ॥ १७ ॥ १८ ॥

( **दम्भेरिच्च** ) धिप्सति–धीप्सति ॥ १९ ॥

(सु०) **दम्भेरिच्च** ॥ स्वरस्य ईम् स्यात् इच्च पूर्वस्य लोपश्च ॥ अनिटि से उपधा-नस्य लोप इति नलोपः । आदिजबानामिति धत्वम् । धिप्सति-धीप्सति । पुगन्तो मित्संज्ञको ण्यन्तो जानातेर्ज्ञपिः पकारान्तश्चौरादिको वा । दम्भिज्ञपिभ्यामिति वेट् । जिज्ञपयिषति । इडभावे 'नानिटि से' इति न गुणः । सेदीर्घ इति दीर्घस्तु परत्वात् ञेरिति ञिलोपेन बाध्यते । ज्ञपेः स्वरस्य सादौ से ईत् पूर्वस्य लोपश्च । अनिटि से ज्ञीप्सति ॥१९॥

( **इवन्तऋधभ्रस्जश्रिस्वृयूर्णुभृसनिभ्यः सस्येड्वा** ) दिदेविषति २०

(सु०) **इवन्तऋधभ्रस्जश्रिस्वृयूर्णुभृसनिभ्यः सस्येड्वा** ॥ इवन्तेभ्यः ऋधादिभ्यश्च सस्येड् वा स्यात् ॥ दिवु क्रीडादौ । सिसतासिस्यपामितीट् । दिदेविषति । इडभावे 'नानिटि से' इति न गुणः ॥ २० ॥

( **वस्यानिटि से उः** ) दुद्यूषति । अर्दिधिषति ॥ २१ ॥

(सु०) **वस्यानिटि से उः** ॥ धातोर्वस्य उत्वं स्यात् अनिटि से ॥ यत्वं द्वित्वं च । दुद्यूषति ॥ ऋध वृद्धौ । अर्धितुमिच्छति स्वरादेः पर इति धिस्शब्दस्य द्वित्वे अर्दिधिषति । इडभावे ॥ २१ ॥

( **ऋधेरनिटि से स्वरस्य इर्द्वित्वलोपश्च** ) इर्त्सति । बिभ्राजिषति–बिभर्जिषति–बिभ्रक्षति–बिभर्क्षति । शिश्रयिषति । शिश्रीषति । सिस्वरिषति–सुस्वूर्षति । यियविषति–युयूषति । ऊर्णुनुविषति–ऊर्णुनविषति–ऊर्णुनूषति । बिभरिषति–बुभूर्षति ॥ २२ ॥

(सु०) **ऋधेरनिटि से स्वरस्य इर्द्वित्वलोपश्च** ॥ ऋकारस्य इर् 'र्वोर्विहसे' इति दीर्घः । खसे चपा झसानामिति तः ईर्त्सति ॥ भ्रस्ज पाके । इट् । पक्षे भ्रस्जोरसोरिति अर् । रहाद्यपो द्विरिति द्वित्वम् । बिभर्ज्जिषति । अरभावे श्चुत्वम् । झभे जबा इति शस्य जः । बिभ्रजिषति । इडभावे स्कोरिति सलोपः । छशषेति षत्वम् । 'षढोः कः से' इति कत्वम् । बिभ्रक्षति-बिभर्क्षति ॥ श्रिञ् सेवायाम् । शिश्रयिषति । इडभावे से दीर्घः इति दीर्घः । शिश्रीषति ॥ स्वृ शब्दोपतापयोः । सिस्वरिषति । इडभावे से दीर्घ इति इति दीर्घे 'पोरुर्' इत्युर् । द्वित्वम् । सुस्वूर्षति ॥ यु मिश्रणे । अड्सयोरिति पूर्वोकारस्येत् । यियविषति । इडभावे से दीर्घ इति दीर्घे युयूषति ॥ उर्णुञ् आच्छादने । उर्णो-

तेरिडादिप्रत्ययो वा ङिदिति ङित्त्वाद्गुणाभावे नुधातोरित्युव्। ऊर्णुनुविषति। ङित्वाभावे ऊर्णुनविषति। अतः पूर्वं द्वित्वं पश्चाद्गुणावादेशौ। इडभावे से दीर्घ इति दीर्घः ऊर्णुनूषति॥ भृ भर्त्सनभरणयोः। बिभरिषति। इडभावे पोरुरित्युर्। 'य्वोर्वि हसे' इति दीर्घे द्वित्वे च बुभूर्षति॥ २२॥

**(स्तौतिञ्यन्तयोरेव षे पूर्वात् सस्य षः)** तुष्टूषति॥ साधयितुमिच्छति सिषाधयिषति–सिषेधयिषति॥ सुष्वापयिषति॥ स्तौतिञ्यन्तयोरिति किम्? सिसनिषति॥ षे इति किम्। सिषासति। तिष्ठासति॥२३॥

( सु० ) **स्तौतिञ्यन्तयोरेव षे पूर्वात्सस्य षः॥** पूर्वादिलात्परस्य स्तौतिञ्यन्तयोरेव सस्य षः स्यात्षभूते से नान्यस्य॥ ष्टुञ् स्तुतौ। षत्वे से दीर्घ इति दीर्घं च तुष्टूषति। 'वुः से' इति नेट्॥ साध संसिद्धौ। ञ्यन्तः। द्वित्वे 'यः से' इति पूर्वस्येत्वे षत्वे च। सिषाधयिषति॥ स्तौतिञ्यन्तयोः किम्। षिच क्षरणे। सिसिक्षति। उपसर्गात्तु प्रादेश्च तथा तौ सुनमामिति अड्द्विन्वव्यवधानेऽपीति च षत्वम्। परिषिषिक्षति। वन् षन् संभक्तौ। इडभावे जनसनखनामित्यात्वं वा। सिसनिषति–सिषासति। क्विलादिति षत्वम्॥ २३॥

( त० ) **स्तौतिञ्यन्तयोरेव षे॥** षे इति कृतषत्वनिर्देशात्से स्तौतिञ्यन्तस्यापि पूर्वात्षत्वम्॥ **सिषासती**ति॥ जनसनेत्यात्त्वविकल्पः। षे इति निर्देशादत्र न षत्वनिषेधः॥

**( अनिटि से उपधानस्य लोपः ) तृंहू हिंसायाम्।** तितृक्षति। तितृंहिषति॥२४॥

( सु० ) **अनिटि से उपधानस्य लोपः॥** धातोरुपधाभूतस्य नस्य लोपः स्यात् अनिटि सप्रत्यये॥ तृहू स्तृहू तृंहू हिंसार्थास्तुदादौ। ऊदितो वेति वेट्। इडभावे नलोपः। ढत्वे कत्वे षत्वे च। तितृक्षति। तितृंहिषति॥ २४॥

**(त०) अनिटि से उपधानस्येति॥** णादिः किदित्यतः किदित्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। तेन लक्ष्यानुसारेण सस्य कित्त्वाकित्त्वे बोध्ये। अतो गुणाभावसंप्रसारणमलोपाः सिद्धाः। विवृत्सति। वृताद्भ्यः स्यसयोर्वा पमिति परस्मैपदम्। षेऽनिट्त्वं चेति इडभावः॥ २४॥

**( इणः से गमबोधने )** एतुमिच्छति जिगमिषति। बोधने तु प्रतीषिषति॥ इण्वदिकः। अधिजिगमिषति। बोधने तु अधीषिषति॥२५॥

(सु०) **इणः से गमबोधने॥** इणेर्गम् स्यात् सप्रत्यये परे बोधनेऽर्थे तु न॥ एतुमिच्छति गमेः सस्येडितीट्। जिगमिषति। बोधने तु 'यः से'इति सरूपस्य पूर्वस्येत्वम्। प्रतीषिषति॥ इण्वदिकः। इक् स्मरणे। गमेः सस्येतीट्। अधिजिगमिषति॥ २५॥

**(इवर्णोवर्णोपधाद्धसादेरसान्ताद्धान्ताच्च क्त्वासौ सेटौ वा कितौ)** दिद्युतिषते–दिद्योतिषते। रुरुचिषते–रुरोचिषते। लिलिखिषति–लिलेखिषति। सिस्निहिषति–सिस्निक्षति-सिस्नेहिषति॥ २६॥

( **राधोर्हिंसायामिस् से द्वित्वलोपश्च** ) रित्सति । अन्यत्र आरिरात्सति गुरुम् ॥ २७ ॥

(सु०) **इवर्णोवर्णोपधाद्धसादेरसान्ताद्धान्ताच्च क्त्वासौ सेटौ वा कितौ ।** द्युत दीप्तौ । द्युतेः पूर्वस्येति संप्रसारणम् । कित्वाद् गुणो न । दिद्युतिषते, दिद्योतिषते ॥ एवं रुच दीप्तौ । लिख अक्षरविन्यासे । ष्णिह प्रीतौ । राधो हिंसायामिस् से द्वित्वलोपश्च । राधस्वरस्येत्यर्थः । राध संसिद्धौ । स्कोरिति सलोपे 'खसे चपा०', इति धस्य तः । रित्सति ॥ हिंसायां किम् । देवमारिरात्सति । 'यः से' इति पूर्वस्येत् । 'खसे चपा' इति धस्य तः ॥ २६ ॥ २७ ॥

( **मुचोऽकर्मकस्य गुणो वा से द्वित्वलोपश्च** ) मोक्षते-मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्येति किम् । मुमुक्षति वत्सं कृष्णः ॥ विवर्तिषते । विवृत्सति ॥ निनर्तिषति-निनृत्सति ॥ वृङ्वृञ्ऋदन्तात्सस्येड्वा । तितरिषति–तितरीषति–तितीर्षति । विवरिषते विवरीषते वुवूर्षते । विवरिषति–विवरीषति–वुवूर्षति ॥ **ध्वृ कौटिल्ये** । दुध्वूर्षति ॥ २८ ॥

(सु०) **मुचोऽकर्मकस्य गुणो वा से द्वित्वलोपश्च** ॥ मुच्लृ मोक्षणे । चोः कुरिति कः । मोक्षते–मुमुक्षते ॥ अकर्मकस्य किम् । मुमुक्षति । 'नानिटि से' इति गुणाभावः ॥ वृतु वर्तने । वृतादिभ्यः स्यसयोरिति वा पम् । पेऽनिट्त्वं च । 'नाऽनिटि से' इति न गुणः । विवृत्सति—विवर्तिषते ॥ नृती गात्रविक्षेपे । नृततृदेति वेट् । 'नाऽनिटि से' इति न गुणः । निनृत्सति–नर्तिषति । वृङ्वृञ्ऋदन्तात्सस्येड् वा ॥ तॄ प्लवनतरणयोः वृङ्वृञिति वेटो दीर्घः । तितरिषति-तितरीषति । इडभावे ऋत इरितोर् । 'य्वोर्विहसे' इति दीर्घः । तितीर्षति ॥ वृङ् वरणे । वृङ्वृञ् इति वेटो दीर्घः । विवरिषति–विवरीषति । इडभावे पोरुरित्युर् । वुवूर्षति ॥ एवं वृञ् संभक्तौ विवरिषते–विवरीषते–वुवूर्षते ॥ ध्वृ कौटिल्ये । दुध्वूर्षति ॥ २८ ॥

(त०) दुध्वूर्षतीति ॥ प्रथमं दीर्घस्ततः 'पोरुर्' ततो 'य्वोर्वि हसे' इति दीर्घः ॥ २८ ॥

( **स्मिङ्पूङ्रञ्ज्वशिभ्यः सस्येट्** ) सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते । उचिच्छिषति । अधिजिगापयिषति । अध्यापिपयिषति । शिश्वाययिषति–शुशावयिषति । जुहावयिषति । पुस्फारयिषति–पुस्फोरयिषति । पिपावयिषति । बिभावयिषति यियावयिषति । रिरावयिषति । लिलावयिषति । सिस्रावयिषति-सुस्रावयिषति ॥ २९ ॥

( सु० ) **स्मिङ्पूङ्रञ्ज्वशिभ्यः सस्येट्** ॥ स्मिङ् ईषद्धसने । अस्यानिट्त्वादिडागमस्याप्राप्तिः । स्तौतिण्यन्तयोरेवेति नियमान्न षः । सिस्मयिषते ॥ पूङ् पवने । 'वुः से' इति निषेधे प्राप्ते अड्सयोरिति पूर्वोवर्णस्येत् । पिपविषते ॥ ऋ गतौ अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः । सस्य इटि गुणे च कृते अरि स इति स्थिते स्वरादेः पर इति

रिस्शब्दस्य द्वित्वे अरिरिषति । अञ्जू व्यक्तिम्रक्षगादौ ॥ अशूङ् व्याप्तौ । अनयोरूदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । अश् भोजने इति क्र्यादिस्तु नित्यं सेडेव । अञ्जिजिषति । अशिशिषते । उछ उञ्छे । अत्र छ इति चस्य द्वित्वे खसे चपा झसानामिति चकारे कृते च्छसहितस्येटो द्वित्वे हसादिशेषे च उचिच्छिषति ॥ इङ् अध्ययने । अध्यापयितुमिच्छति अङ्सपरे ञौ इङो गा वेति वा गा । रातो ञौ पुगिति पुक् । अधिजिगापयिषति । पक्षे इङ्क्रीजीनामित्यात्वं स्वरादेः पर इति पि शब्दस्य द्वित्वे अध्यापिपयिषति ॥ टुवोश्विइर् गतिवृद्ध्योः । श्वयतेर्ञ्यन्तस्येति वा संप्रसारणम् । शिश्वाययिषति-शुशावयिषति ॥ ह्वेञ्स्पर्द्धायाम् । ह्वयतेरङ्सपरे इति संप्रसारणे युगभावे च कृते जुहावयिषते ॥ स्फुरविकसने ञौ चिस्फुरोरित्यात्वे कृते ञिनमित्तः स्वरादेश इति वचनेन तस्य स्थानिवद्भावादुकारविशिष्टस्य द्वित्वम् । पुस्फारयिषति आत्वाभावे पुस्फोरयिषति । टुक्षु शब्दे । चुक्षावयिषति ॥ पुङ् पवने अङ्सपोरिति पूर्वावर्णस्येत्वम् । पिपावयिषति । भू सत्तायाम् भावयितुमिच्छति । पूर्वस्येत्वम् । बिभावयिषति ॥ यु मिश्रणे । अत्रापीत्वम् । यियावयिषति ॥ रु शब्दे । पूर्वस्येत्वम् । रिरावयिषति ॥ लुञ् छेदने लिलावयिषति । स्रु गतौ । स्रवतिशृणोतिद्रवतीतीत्वं वा । सिस्रावयिषति-सुस्रावयिषति ॥ २९ ॥

( त० ) **स्मिङ्पूङ्** ॥ स्मिङ् ईषद्धसने । पुङ् पवने । ऋ गतौ । ऋ गतिप्रापणयोश्च । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अशूङ् व्याप्तौ । रञ्ज रागे । वश कान्तावित्येतयोर्भ्रमो न कार्यः । स्मिङोऽनिट्त्वादप्राप्ते ऋपुङोस्तु 'वुःसे' इति निषेधे अञ्ज्यशो रूदित्त्वाद्विकल्पे प्राप्ते वचनम् । ऋइत्यादिनां ग्रहणादृकारान्ता न ग्राह्याः । **सिस्मयिषत** इति ॥ ञ्यन्तयोरेवेति नियमान्न षः । ङानुबन्धग्रहणात्तु पूञः पुपूर्षतीत्येव ॥ **अरिरिषतीति** ॥ ऋ इ स इति स्थिते गुणे अरि सइति स्थिते । स्वरादेः परइति रिशब्दस्य द्वित्वम् ॥ **पिपावयिषतीत्यादि** । ञ्यन्तात्से अङ्सयोः पूर्वस्येति इकारः । नदी वृक्षमुन्मूलयिषति । वृष्टी राजिमभिषिषिक्षतीत्याद्ये तु चेतनत्वारोपात्सः । पाषाणादीनां संबोधनवत् ॥२९॥

## (सान्तात्सो न स्वार्थसान्तात्तु स्यादेव) जुगुप्सिषते ॥३०॥

### इति सान्तप्रक्रिया ॥ १२ ॥

(छ०) **सान्तात्सोन स्वार्थसान्तात्तु स्यादेव** ॥ "शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः सरूपः प्रत्ययो नेष्टः सन्नन्तान्नसनिष्यते (क) ॥१॥" शैषिकाच्छैषिकः सरूपः प्रत्ययो नेष्टः । शालीये भव इति वाक्यमेव । न तु ईयान्तात् पुनरीयः ॥ सरूपः किम् । आहिच्छत्रे भवः आहिच्छत्रीयः । अण्णन्तादीयः ॥ तथा मत्वर्थीयात् मतुबर्थिकः सरूपः प्रत्ययो न भवति । धनवानस्यास्ति । वत्वन्तात् न वतुः । विरूपस्तु स्यादेव । दण्डिमती शाला । सरूप इत्यनुसंवध्यते । सरूपः सादृश्यं तत्तु अर्थद्वारा । तेनेच्छासान्तादिच्छा सो न भवति । स्वार्थसान्तात्तु स्यादेव । गुब्भ्य इति स्वार्थे सप्रत्ययः । तदन्तादिच्छासः । जुगुप्सिषते । 'यः से' इतीत्वे मानादीनामिति दीर्घे च । मीमां-

---

( क.) **शैषिकादिति** । एतच्च श्लोकवार्त्तिकमिति केचित् । भाष्यमिति बहवः ।

इति टिप्पण्यां सान्तप्रक्रिया ॥ १२ ॥

सिषते । गुप् गोपने ॥ मान विचारणे ॥ ३० ॥ इति सुबोधिन्यां सान्तप्रक्रिया ॥ १२ ॥

(त०) सान्तात्सो नेति ॥ अतिशये हसादेर्यङ् द्विश्चेत्यतश्चकारानुवृत्तेरेतद्बोध्यम् ॥ कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगमत्सान्तसाधनम् ॥ ३० ॥

इति तत्त्वदीपिकायां सान्तप्रक्रिया ॥ १२ ॥

---

# अथ यङन्तप्रक्रिया ॥ १३ ॥

**अतिशये हसादेर्यङ् द्विश्च** ॥ हसादेरेकस्वराद्धातोर्भृशार्थे पौनःपुन्ये च यङ् प्रत्ययो भवति द्वित्वं च ॥ १ ॥

(सु०) **अतिशये हसादेर्यङ् द्विश्च** ॥ हस आदिर्यस्य स हसादिस्तस्मादेकस्वराद्धातोर्यङ् स्यात् । यङन्तस्य धातोर्द्वित्वं च अतिशयेऽर्थे । अतिपूर्वात् शीङो भावे स्वराद इत्यः । अतिशयो द्विविधः । पौनः पुन्यम्, भृशार्थश्च ॥ अतिशये किम् । पठति ॥ एकस्वरात्किम् । पुनः पुनर्जागर्ति ॥ हसादेः किम् । भृशमीक्षते । भृशं शोभते । भृशं रोचते । इत्यादौ यङ् नेति भाष्यम् ॥ पौनःपुन्ये तु स्यादेव रोरुच्यते शोशुभ्यते ॥ १ ॥

(त०) **अतिशये हसादेर्यङ् द्विश्च** ॥ अतिशयनमतिशयः । अतिपूर्वात् शीङो भावे स्वराद्य इत्यप्रत्ययः स च द्विविधः पौनः पुन्यं भृशार्थश्च । स चार्थो यङो द्योत्य एव । हस आदिर्यस्य स तथा तस्मात् द्विरित्यपरं वाक्यं धातोर्द्विर्वचनम् । धातुश्च यङन्त एव न तु यङः प्रकृतिभूतः । अटाट्यत इत्याद्यसिद्धेः ॥ १ ॥

**यङि** ॥ यङि यङ्लुकि च पूर्वस्य नामिनो गुणः ॥ सधातुः । ङित्त्वादात् । भृशं पुनः पुनर्वा भवति बोभूयते (क) । बोभूयांचक्रे । बोभूयिषीष्ट । अबोभूयिष्ट ॥ बोभुज्यते (ख) ॥ २ ॥

(सु०) **यङि** ॥ यङ्प्रत्यये लुकि च पूर्वस्येत्यनुवृत्तम् ॥ भू सत्तायाम् । धातुरिति धातुत्वाल्लडादयः ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयेत । बोभूयताम् । अबोभूयत । कासादिप्रत्ययादित्याम् । यत इत्यलोपः । बोभूयांचक्रे । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते । अबोभूयिष्यत । अबोभूयिष्ट ॥ भुज पालनादौ । अतिशयेन भुनक्ति बोभुज्यते ॥ २ ॥

(त०) **यङीति** ॥ **यङो ङित्त्वादात्** ॥ अत्र केचित् । कथं यङन्तादात्, ङितो धातोरात्विधानात् । अत्र च यो ङित् स न धातुः यो धातुः स च न ङित् ॥ किं च

---

(क) बोभूयते । बोभूयेते । बोभूयन्ते । **विधिलिङि** । बोभूयेत, बोभूयेताम्, बोभूयेरन् । **लोटि** । बोभूयताम्, बोभूयेताम् । **लङि** । अबोभूयत, अबोभूयेताम्, अबोभूयन्त । **लिटि** । बोभूयांचक्रे, बोभूयांचक्राते, बोभूयाञ्चक्रिरे । **लुङि** । अबोभूयिष्ट, अबोभूयिषाताम्, अबोभूयिषत । इत्यादिरूपम् ।

(ख) भुजो यङन्तस्य **लटि** । बोभुज्यते । **विधिलिङि** । बोभुज्येत । **लोटि** । बोभुज्यताम् । **लङि** । अबोभुज्यत । **लिटि** । बोभुजाञ्चक्रे । **आशीर्लिङि** । बोभुजिषीष्ट । लुटि । बोभुजिता । **लृटि** । बोभुजिष्यते । **लृङि** । अबोभुजिष्यत । **लुङि** । अबोभुजिष्ट, अबोभुजिषाताम्, अबोभुजिषत । इत्यादि ।

ङस्य गुणनिषेधादिप्रयोजकत्वेन चरितार्थत्वादात्मनेपदप्रयोजकत्वासम्भवः । अवयवे कृतं लिङ्गमचरितार्थं समुदायविशेषकं भवतीत्युक्तेः । अत्रोच्यते । सधातुरित्यनेन यङन्तस्य धातुत्वेन धातोर्ङित्त्वसत्त्वात् । गुणनिषेधार्थं च ङकारप्रश्लेषस्य कर्तव्यत्वात् ॥ बोभूयत इति ॥ भवनानुकूल एकाभिन्नाश्रयको वर्तमानोऽतिशयविशिष्टो व्यापारः ॥ २ ॥

**अनपि च हसात्** ॥ हसादुत्तरस्य यस्य लोपो भवत्यनपि विषये ॥ बोभुजांचक्रे । बोभुजिता ॥ मोमुह्यते (क) । मोमुहांचक्रे ॥ लेलिह्यते ॥ जोहूयते (ख) ॥ वेविद्यते (ग) ॥ ३ ॥

( सु० ) **अनपि च हसात्** ॥ हसात्परस्य यशब्दस्य लोपोऽनपि ॥ हसात्किम् । लोलूयिता ॥ योयूयिता । आदेः परस्य ॥ परस्य यद्विहितं तत्तस्यादेर्बोध्यमिति यलोपः । यत इत्यलोपः । बोभुजांचक्रे । बोभुजिषीष्ट । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः ॥ एवं मुह वैचित्ये । लिह आस्वादने । हु दानादनयोः । ये इति दीर्घः । जोहूयते । विद्ज्ञानादौ । वेविद्यते । डुपचष् पाके ॥ ३ ॥

**आतः** ॥ यङि यङ्लुकि च पूर्वस्यात आकारः ॥ पापच्यते (घ) । पापठ्यते ॥ ४ ॥

( सु० ) **आतः** ॥ आ अत इति च्छेदः । पूर्वस्येत्यनुवृत्तम् । पापच्यते ॥ पठ व्यक्तायां वाचि पापठ्यते ॥ ४ ॥

( त० ) **आत इति** ॥ आ आ अत इति च्छेदः । द्वितीयाकारस्य वैयर्थ्यानुपपत्त्या किञ्चिदिष्टं ज्ञाप्यते किं तदिष्टम् अकित्पूर्वस्याकारस्याकार इति तेन नरीनृत्यत इति सिद्धम् ॥ ४ ॥

( **सिचो यङि न षः** ) सेसिच्यते ॥ ५ ॥

( सु० ) **सिचो यङि न षः** ॥ सिचेः सस्य षत्वं न स्यात् यङ्प्रत्यये परे ॥ षिच क्षरणे । सेसिच्यते ॥ ५ ॥

( **सूचिसूत्रिमूत्र्यट्यत्यर्शूर्णोतिभ्यो यङ्** ) सोसूच्यते (ङ) सोसूत्र्यते । मोमूत्र्यते ॥ ६ ॥

( सु० ) **सूचिसूत्रिमूत्र्यट्यत्यर्शूर्णोतिभ्यो यङ्** ॥ सूत्र पैशुन्ये । सूत्र वेष्टने । मूत्र प्रस्रवणे । एते त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते ॥ अट गतौ ।

( क ) यङन्तस्य मुहेर्लटि । मोमुह्यत । विधिलिङि । मोमुह्येत । **लोटि** । मोमुह्यताम् । **लङि** । अमोमुह्यत । **लिटि** । 'कासादिः' अनेनाम् । 'अनपि च हसात्' अनेन यस्य लोपः । मोमुहाञ्चक्रे । **आशीर्लिङि** । 'सिसता' अनेनेट्, मोमुहिषीष्ट । **लुटि** । मोमुहिता । **लृटि** । मोमुहिष्यते । **लृङि** । अमोमुहिष्यत । **लुङि** । अमोमुहिष्ट ।

( ख ) **जुहोतेर्यङि लटि** । ये इति दीर्घः, जोहूयते । **लिटि** । जोहूयाञ्चक्रे । **आशीर्लिङि** । जोहूयिषीष्ट । **लुङि** । अजोहूयिष्ट ।

( ग ) **विदेर्लिटि** । वेविदाञ्चक्रे । **लुङि** । अवेविदिष्ट । ( घ ) **लुङि** । अपापचिष्ट ।

( ङ ) **लिटि** । सोसूचाञ्चक्रे । **लुङि** । असोसूचिष्ट ।

गौः कुटिलमटति । इह व्यशब्दस्य द्वित्वम् । आत इत्यात्वम् । अटाट्यते । ऋ गतौ । कुटिलमृच्छति गुणार्त्तिसंयोगाद्योरिति गुणः ॥ ६ ॥

( त० ) सूचिसूत्रि ॥ सूच पैशुन्ये । सूत्र वेष्टने । मूत्र प्रस्रवणे । अट गतौ । ऋ गतौ । अश भोजने । अशूङ् व्याप्तौ । उर्णुञ् आच्छादने । तत्राद्यानां त्रयाणां चुरादिण्यन्तत्वेनानेकस्वरत्वादट्यादीनां च हसादित्वादप्राप्ते वचनम् ॥ ६ ॥

**( यकारपररेफस्य न द्वित्वनिषेधः )** अरार्यते । अरारांचक्रे (क) । अशाश्यते (ख) । ऊर्णोनूयते (ग) ॥ ७ ॥

( सु० ) **यकारपररेफस्य न द्वित्वनिषेधः** ॥ यकारः परो यस्मात् स यकारपरः यकारपरश्चासौ रेफश्च यकारपररेफस्तस्य । ततो यंशब्दस्य द्वित्वे हसादिशेषे आत इति दीर्घे च अरार्यते इति भाष्योदाहरणात् । लिटि अनपि च हसादिति यलोपः । यत इत्यलोपः । अरारांचक्रे । लुटि । अरारिता ॥ अशूङ् व्याप्तौ । अशाश्यते ॥ ऊर्णुञ् आच्छादने । 'ये' इति दीर्घः । ऊर्णोनूयते ॥ ७ ॥

( त० ॥ **अरार्यत** इति ॥ ऋ य इति स्थिते गुणे कृते यशब्दस्य द्वित्वे हसादिशेषे आत इति दीर्घः ॥ **ऊर्णोनूयत** इति ॥ णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वम् ॥ ७ ॥

**(गत्यर्थात्कौटिल्ये एव यङ् )** कुटिलमटति अटाट्यते(घ) ॥ कुटिलं व्रजति वाव्रज्यते ॥ ८ ॥

(सु०) **गत्यर्थात्कौटिल्ये एव यङ्** ॥ कुटिलस्य भावः कौटिल्यम् ॥ व्रज गतौ । कुटिलं व्रजति आत इति पूर्वस्यात्वम् । वाव्रज्यते ॥ ८ ॥

(त०) **अटाट्यत इति** ॥ एकभिन्नाश्रयको वक्रगत्यनुकूलो वर्तमानकालिको व्यापार इति । कौटिल्यस्य फलविशेषणत्वे व्यापारविशेषणत्वे तु वक्रो गत्यनुकूलो व्यापार इति शेषः ८

**( लुपसदचरजपजभदहदंशगॄभ्यो धात्वर्थगर्हायामेव यङ् )** गर्हितं लुम्पति लोलुप्यते । सासद्यते (ङ) ॥ ९ ॥

(सु०) **लुपसदचरजपजभदहदंशगॄभ्यो धात्वर्थगर्हायामेव यङ्** ॥ लुप्लृ छेदने । गर्हितं लुम्पति लोलुप्यते । षद्लृ विशरणादौ । आत इति पूर्वस्यात्वम् गर्हितं सीदति सासद्यते ॥ ९ ॥

(त०) **धात्वर्थगर्हायामेवेति** ॥ गर्हापि फलस्य व्यापारस्य वा विशेषणम् । लोलुप्यते वनं चैत्रः । चैत्राभिन्नाश्रयो वनाभिन्नाश्रितकुत्सितच्छेदनानुकूलो वर्तमानकालि-

( क ) लुङि—'स्वरादेः' अरारिष्ट ।

(ख) **यङन्तस्याशेर्लिटि** । अतिशयेनाश्नातीति, यङ्, द्वित्वम्, आतः, अशाश्यते । **लुङि** । अशाशिष्ट ।

( ग ) अतिशयेन ऊर्णोतीति यङ् । 'स्वरादेः परः' 'स्वरात्पराः संयोगादयो नदराः' 'गुणः' 'ये' ऊर्णो नूयते । **लिटि** । ऊर्णोनूयाञ्चक्रे । औणानूयिष्ट, अत्र 'स्वरादेः, अनेन द्वितीयोऽडागमः ।

( घ ) **अटगताविति धातोर्लटि** । कुटिलम् अटतीति विग्रहे सति यङ्सहितस्य द्वित्वम् । अट्य ट्य इति स्थिते 'पूर्वस्य हसादिः शेषः' 'आतः' इति पूर्वस्यात्वम् । अटाट्यते । **लिटि** । अटाटाञ्चक्रे । **लुङि** । अटाटिष्ट । (ङ) **लिटि**—सासद्याञ्चक्रे । **लुङि** । असासदिष्ट ।

को व्यापारः । वनाभिन्नाश्रयः छेदनानुकूलः कुत्सितो व्यापार इति वा ॥ ९ ॥

**अमजपां नुक्** ॥ अमान्तस्य जपजभदहदंशभञ्जपसचरफलां च । पूर्वस्यादन्तस्य नुग् यङ्लुकोः ॥ १० ॥

(सु०) **अमजपां नुक्** ॥ जप व्यक्तायां वाचि । जभी गात्रविनामे । दह भस्मीकरणे । दंश दशने । भञ्जो आमर्दने । पस धातुर्दन्त्यान्तः सौत्रो गत्यर्थः । तालव्यान्त इति माधवः । चर गत्यादौ । ञिफला विशरणे । फलनिष्पत्तौ वा । एषां अमप्रत्याहारान्तस्य च नुक् यङ्लुकोः ॥ १० ॥

**(चरफलोः पूर्वात्परस्यात उद्यङ्लुकोः)** चञ्चूर्यते-चंचूर्यते । चञ्चुराचक्रे(क) ॥ पम्फुल्यते ॥ नुगित्यनेनानुस्वारो लक्ष्यते । स च पदान्तवत् ॥ जञ्जप्यते–जंजप्यते (ख) ॥ ११ ॥

(सु०) **चरफलोः पूर्वात्परस्यात उद्यङ्लुकोः** ॥ पूर्वाद् द्वित्वरूपादुत्तररूपस्यात उत्वमित्यर्थः । नुगित्यनेनानुस्वारो लक्ष्यते स च पदान्तवत् ॥ अमजपामिति नुमागमोऽनुस्वारं बोधयति । सोऽनुस्वारः पदान्तकार्यं लभत इत्यर्थः । तेन वा पदान्तस्येत्यनेन वा परसवर्णः । चञ्चूर्यते-चंचूर्यते ॥ ११ ॥

(त०) **स च पदान्तवदिति** ॥ तेन वेति यथा स्यात् ॥ ११ ॥

**( गिरते रेफस्य लत्वं यङि )** जेगिल्यते ॥ यय्यँम्यते–यंयम्यते ॥ दीङ् क्षये । देदीयते ॥ ओप्यायी वृद्धौ । पेपीयते ॥ चञ्चम्यते-चंचम्यते ॥ चाखायते–चङ्खन्यते- चंखन्यते ॥ चङ्कण्यते–चंकण्यते ॥ तन्तन्यते–तंतन्यते ॥ जञ्जभ्यते–जंजभ्यते ॥ दन्दह्यते–दंदह्यते ॥ दन्दश्यते-दंदश्यते ॥ बम्भज्यते–बंभज्यते ॥ पस बाधनग्रन्थनयोः ॥ पम्पस्यते–पंपस्यते ॥ १२ ॥

(सु०) **गिरते रेफस्य लत्वं यङि** ॥ गॄ निगरणे इत्यस्य रेफस्य लत्वं स्यात् यङि ॥ गर्हितं गिलति जेगिल्यते ॥ यम उपरमे । कण निमिलने । तनु विस्तारे । यमान्तत्वादेषां पूर्वस्य नुक् । यय्यँम्यते-यंयम्यते ॥ चङ्कण्यते-चंकण्यते ॥ तन्तन्यते-तंतन्यते ॥ १२ ॥

( त० ) **जेगिल्यत इति** ॥ गिलनस्य च गर्हितत्वं विवृतास्यचेष्टादिकृतम् ॥ १२ ॥

**रीगृदुपधस्य** ॥ ऋत्वतो धातोर्यङि परे पूर्वस्य रीक् ॥ नरीनृत्यते(ग)॥ वरीवृत्यते ॥ जरीगृह्यते ॥ वरीवृश्च्यते ॥ परीपृच्छ्यते ॥ चलीक्लृप्यते(घ)॥ १३ ॥

(सु०) **रीगृदुपधस्य** ॥ ऋदुपधस्य धातोः पूर्वस्य रीग्यङि ॥ ऋदुपधस्येति किम् ।

---

(क) **लिटि**—चञ्चूराञ्चक्रे। **लुङि**। अचञ्चूरिष्ट । (ख) **लिटि**—जञ्जपाञ्चक्रे । **लुङि**-अजञ्जपिष्ट ।

(ग) अतिशयेन नृत्यतीति, यङ् । द्वित्वम् । 'रः' कित्वाभावादाकाराभावः । नरीनृत्यते । अत्र क्षुभ्नादिगणपाठसामर्थ्यान्न णत्वम् । **लिटि**—नरीनृताञ्चक्रे । **लुङि**—अनरीनृतिष्ट ।

(घ) **लिटि**—चरीक्लृपाञ्चक्रे । **लुङि**—अचरीक्लृपिष्ट । चरीक्लृप्यते—इति पाठः कुत्रापि दृश्यते। सारस्वते त्वेवं प्रतिपन्नम् ।

चेकीर्त्यते ॥ अरभावपक्षे एकस्वरत्वाद्यन् ॥ नृती गात्रविक्षेपे । क्षुभ्नादित्वान्न णत्वम् । नरीनृत्यते ॥ वृतु वर्तने । अतिशयेन वर्तते वरीवृत्यते । ग्रह उपादाने । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । ग्रहामिति संप्रसारणम् । जरीगृह्यते ॥ वरीवृश्च्यते । परीपृच्छ्यते । रीगिति योगविभागादुभयत्र रीक् ॥ कृपू सामर्थ्ये । उभयत्र लत्वम् । चलीक्लृप्यते ॥ १३ ॥

( **वशोर्यङि न संप्रसारणम्** ) वावश्यते (क) ॥ १४ ॥

( **श्वयतेर्वा** ) शोशूयते–शेश्वीयते ॥ सास्मर्यते ॥ १५ ॥

(सु०) **वशोर्यङि न संप्रसारणम्** ॥ ग्रहामिति प्राप्ते निषेधः । वश कान्तौ । आत इति पूर्वस्यात्वम् ॥ अतिशयेन वष्टि वावश्यते । टुओश्वि इर् गतिवृद्ध्योः ॥ श्वयतेर्वेति विकल्पेन संप्रसारणम्, यङि । 'ये' इति दीर्घः । शोशूयते–शेश्वीयते ॥ स्मृ चिन्तायाम् ॥ गुणोऽर्तिसंयोगाद्योरिति गुणः । आत इति पूर्वस्यात्वम् ॥ सास्मर्यते ॥ १४–१५ ॥

( **कवतेः पूर्वस्य न चुत्वं यङि** ) कोकूयते ॥ १६ ॥

(सु०) **कवतेः पूर्वस्य न चुत्वं यङि** ॥ कवतेरित्यपा निर्देशात् 'कुङ् शब्दे' इति भ्वादिरेव गृह्यते न तु कुशब्दे इत्यादादिकः । 'कुङ् शब्दे' इति तौदादिकश्च (ख) । 'ये' इति दीर्घः कोकूयते ॥ १६ ॥

( **वञ्चुस्रंसुभ्रंसुध्वंसुकसपतपदस्कन्दां यङि यङ्लुकि च पूर्वस्य नीक्** ) वनीवच्यते (ग) ॥ सनीस्रस्यते ॥ दनीध्वस्यते ॥ बनीभ्रस्यते (घ) चनीकस्यते ॥ पनीपत्यते ॥ पनीपद्यते ॥ चनीस्कद्यते ॥ १७ ॥

( सु० ) **वञ्चुस्रंसुभ्रंसुध्वंसुकसपतपदस्कन्दां यङि यङ्लुकि च पूर्वस्य नीक्** ॥ वञ्चु वंचने ॥ स्रंसु ध्वंसु भ्रंसु अवःपतने । कस गतौ । पत्लृ पतने । पद गतौ । स्कन्दिर् गतिशोषणयोः । आत इत्यस्यापवादः । नो लोप इति नलोपः । वनीवच्यते १७

( त० ) वञ्चु वनीवच्यत इति । नो लोपः । दीर्घोच्चारणसामर्थ्याद्ध्रस्वगुणौ न ॥ १७ ॥

**ऋतो रिङ्** ॥ येऽनपि ॥ चेक्रीयते (ङ) ॥ जेह्रीयते ॥ वेव्रीयते ॥ १८ ॥

( सु० ) **ऋतो रिङ्** ॥ यप्रत्ययेऽनपि । 'ये' इति दीर्घः । परत्वाद् रिआदेशे कृते द्वित्वम् । डुकृञ् करणे । चेक्रीयते ॥ हृञ् हरणे । जेह्रीयते ॥ वृङ्वृञोः वेव्रीयते ॥ १८ ॥

**दार्दरिः** ॥ अपिद्दाधामागैहाकूपिबतिसोस्थामिकारः क्ङिति ह्रसे । अन-

---

(क) लिटि—वावशाञ्चक्रे । लुङि—अवावशिष्ट ।

(ख) आदादिकतौदादिकयोः **'चोकूयते'** इति । ननु **'कवतेः'** इत्यत्र सूत्रे कोरित्युक्तेऽपि कुङः प्रसङ्गो नास्ति दीर्घान्तत्वात्, लुग्विकरणपरिभाषया च आदादिककौतेरपि प्रसङ्गो नास्तीति चेन्न । अत्राहुः— कौरित्युक्ते तु निरनुबन्धपरिभाषाया अपि जागरूकत्वादुभयोर्ग्रहणं स्यादिति कौतिव्यावृत्त्यर्थमपा निर्देशः कर्त्तव्यः । कृते च तस्मिन् कुवतिमपि व्यावर्त्तयतीत्यत्र तात्पर्यमिति कुङ् इत्येवात्र सुवचम् । कुङ्शब्द इति ह्रस्वान्तपाठो न्यासकारमते । दीर्घान्तपाठः कैयटादिमते ।

(ग) **लिटि—**वनीवचाञ्चक्रे । **लुङि—**अवनीवचिष्ट ।

(घ) **लिटि**-बनीभ्रसाञ्चक्रे । **आशीर्लिङि**-बनीभ्रसिषीष्ट । **लुटि**-बनीभ्रसिता । **लुङि**-अबनीभ्रसिष्ट ।

(ङ) **लिटि**—चेक्रीयाञ्चक्रे । **लुङि**—अचेक्रीयिष्ट ।

पि ॥ देदीयते (क) ॥ देधीयते ॥ मेमीयते ॥ जेगीयते ॥ जेहीयते ॥ पेपीयते ॥ सेषीयते ॥ तेष्ठीयते ॥ १९ ॥

( सु० ) दादेरिः ॥ डुदाञ् दाने ॥ दो अवखण्डने ॥ देङ् पालने । अनयोः सन्ध्यक्षराणामित्यात्वे दारूपम्, दाप्दैपौ विना ॥ डुधाञ् धारणादौ ॥ मा माने ॥ माङ् माने । मेङ् प्रणिदाने ॥ गै शब्दे ॥ ओहाक् त्यागे । पा पाने ॥ षो अन्तकर्मणि ॥ ष्ठा गतिनिवृत्तौ ॥ एषामिकारः स्यात् क्ङिति हसेऽनपि । अनेनेत्वे द्वित्वम् । यङीति गुणः । देदीयते । इत्यादि ॥

**( घ्राध्मोरीर्यङि )** जेघ्रीयते ॥ देध्मीयते ॥ २० ॥

( सु० ) घ्राध्मोरीर्यङि ॥ दीर्घोच्चारणं यङ्लुगर्थम् । घ्रा गन्धोपादाने ॥ ध्मा शब्दाग्निसंयोगयोः । जेघ्रीयते । देध्मीयते ॥ २० ॥

**( हन्तेर्हिसायां घ्नीभावः )** जेघ्नीयते । हिंसायां किम् । जङ्घन्यते (ख) ॥ २१ ॥

( सु० ) हन्तेर्हिसायां घ्नीभावः ॥ यङि घ्नीभावे सति द्वित्वम् । जेघ्नीयते । हिंसायां किम् । जङ्घन्यते । पूर्वाद्धन्तेरिति घः ॥ २१ ॥

( त० ) जेघ्नीयत इति ॥ घ्नीभावेन न द्वित्वबाधः विषयभेदात् । ह्रस्वेन सिद्धेऽपि प्रक्रियालाघवाय घ्नीः । एवमन्यत्रापि ॥ २१ ॥

**(स्वपिस्यमिव्येञां यङि संप्रसारणम्)** सोषुप्यते ॥ सेसिम्यते ॥ (ग) ॥ वेवीयते ॥ २२ ॥

( सु० ) स्वपिस्यमिव्येञां यङि संप्रसारणम् ॥ ञिष्वप् शये ॥ स्यमु शब्दे ॥ व्येञ् संवरणे । षत्वम्, सोषुप्यते इत्यादि ॥ २२ ॥

**(चायः कीर्यङि )** चेकीयते ॥ जाजायते—जञ्जन्यते ॥ शीङोऽयङ् ये क्ङिति ॥ शाशय्यते ॥ डोढौक्यते ॥ तोत्रौक्यते ॥२३॥ इति यङन्तप्रक्रिया ॥

( सु० ) चायः कीर्यङि ॥ यङि परे चायः कीः स्यात् ॥ दीर्घोच्चारणं यङ् लुगर्थम् । चायृ पूजानिशामनयोः । चेकीयते ॥ जनी प्रादुर्भावे । जनसनखनामित्यात्वम् । जाजायते । पक्षे यमजपामिति पूर्वस्य नुक् । जञ्जन्यते जंजन्यते । शीङोऽयङ् ये क्ङिति । ङित्वादन्तादेशः परत्वादन्तरङ्गत्वाच्चायङादेशे कृते द्वित्वम् । आत इति पूर्वस्यात्वम् । यत इत्यल्लोपः । शाशय्यते ॥ ढौकृ त्रौकृ गतौ । ह्रस्व इति पूर्वस्य ह्रस्वे ततो यङीति गुणः । डोढौक्यते ॥ तोत्रौक्यते ॥ २३ ॥ इति सुबोधिन्यां यङन्तप्रक्रिया ॥ १३ ॥

( त० ) कृतायामिह टीकायां लोकेशकरशर्मणा । मता भाष्यकृतो भव्या यङन्तप्रक्रिया गता ॥

इति तत्त्वदीपिकायां यङन्तप्रक्रिया ॥ १३ ॥

---

(क) लिटि—देदीयाञ्चक्रे । लुङि—अदेदीयिष्ट ।

(ख) लिटि—जेघ्रीयाञ्चक्रे । अजेघ्रीयिष्ट । घ्नी अभावपक्षे । लिटि—जङ्घनाञ्चक्रे । लुङि—अजङ्घनिष्ट ।

(ग) सेसिम्यत इति । स्यमु शब्दे दन्त्याजन्तसादित्वाभावेनाषोपदेशत्वान्न षः ।

इति टिप्पण्यां यङन्तप्रक्रिया ॥ १३ ॥

# अथ यङ्लुगन्तप्रक्रिया ॥ १४ ॥

**वान्यत्र** ॥ उकप्रत्ययसंयोगं विना यङो वा लुक् ॥ यङ्लुगन्तात्पम् । यङ्लुगन्तमदादौ बोध्यम् (क) । अदादित्वादपो लुक् । यङ् लुकि सति ॥१॥

( सु० ) **वान्यत्र** ॥ लुगिति सूत्रमनुवृत्तम् । उकप्रत्यये यङो लुग् विधीयते दंदशूक इत्यादौ । अन्यत्र उकप्रत्ययाभावे यङ्प्रत्ययस्य वा लुग् भवति । लुगभावे यङ्प्रत्ययान्तं भवतीत्यर्थः । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वादि । धातुत्वाल्लडादयः । परतोऽन्यदिति परस्मैपदम् । आदनुदात्त ङित इत्यनेनात्मनेपदं तु न भवति । येऽपि स्पर्द्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न अनुबन्धनिर्दिष्टत्वात् । उक्तं च "श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चतानि न यङ्लुकि ॥१॥" इति निषेधात् एतानि पञ्च कार्याणि यङ्लुकि न प्रवर्तन्ते । तान्याह । श्तिप्प्रत्ययनिर्दिष्टं कार्यम् इक्श्तिपाविति श्तिप् । शपा अप्प्रत्ययेन निर्दिष्टम् अप् कर्तरीत्यप् । अनुबन्धनिर्दिष्टं यङो ङित्त्वादि । गणनिर्दिष्टं दिवादयं इत्यादि । एकस्वरनिर्दिष्टं नैकस्वरादनुदात्तादित्यादि । यथा । गदनेति सूत्रे श्तिपा शपा च निर्दिष्टत्वाद्यङ्लुकि णत्वं न प्रणिजङ्घन्ति । प्रनिजागर्द्मीति ॥ लिटपुपादेरित्यत्रानुबन्धेन गणेन च निदिष्टत्वाद् ङो न । अजङ्गमीत् । अववर्तीत् । नैकस्वरादित्यत्रैकस्वरनिर्दिष्टत्वादिण्निषेधो न । बेभेदिता । चेच्छेदितेति ॥ अत एव याद्यो न, गणेन निर्दिष्टत्वात् किं तु अत्रेत्र ॥ यङ्लुगन्तमदादौ बोध्यम् । अदादित्वादपो लुक् । भू सत्तायाम् । यङि लुकि सति ॥१॥

( त० ) **वान्यत्र** ॥ लुक इति सूत्रमात्रमनुवर्तते । तेनोकप्रत्यये यङो लुग्विधीयते ॥ दंदशूक इत्यादौ । अन्यत्रेति व्याचष्टे उकप्रत्ययसंयोगं विनेति । एवं व्यवस्थायामन्यत्र यङो लुगित्यर्थः ॥ **यङ्लुगन्तात्पमिति** ॥ अत्र दीक्षिताः । प्रत्ययलक्षणेन ङित्त्वमाश्रित्यात्मनेपदत्वस्य न ङित्वस्य प्रत्ययाप्रत्यये साधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत् । इत्याहुः तत्रेति पण्डिताः । तथाहि । तेतिक्ते इति किं निपात्यते । तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते । नैतदस्ति प्रयोजनं सिद्धमत्रात्मनेपदमनुदात्तङित आत्मनेपदमिति । नियमार्थं तर्हि भविष्यति । अत्रैव यङ्लुगन्तस्यात्मनेपदमन्यत्र न भवतीत्यत्रैतदेव ज्ञापकमिति भाष्यकारादिमतोद्भावनेन तदाकरविरुद्धमित्युक्तवन्तः । **अदादित्वादि** ॥ प्राञ्चस्तु ह्वादित्वं मत्वा द्वित्वमाहुस्तदपाणिनीयमित्युपेक्षितम् ॥ **द्वः स्वरेपि** ॥ अपिशब्दाद्धावन्तलोपे गुणवृद्धी न तेन बेभिदिता मरीमृजितेत्यादि सिद्धम् ॥ प्रक्रियाक्रममाह । **यङ्लुकि सतीति** ॥ १ ॥

(**पितः स्वमाचट्**) बोभवीतु—बोभोतु । अबोभवीत्—अबोभोत् , अबोभूताम् , अबोभवुः । बोभवांचकार । गुणं बाधित्वा नित्यत्वादुक् ॥ अबोभूवीत्—अबोभोत् , अबोभूवुः । अबोभूवीः—अबोभोः । अबोभूवम् (ख) ॥

---

(क) यङ्लुगन्तं ह्वादिवत्साध्यमिति अनुभूतिस्वरूपाचार्याः ।

(ख) **भू सत्तायामिति धातोर्यङ्लुकि लङि**—भू इत्यस्य अतिशयेऽर्थे विहितस्य यङः 'वान्यत्र' अनेन लोपः । अदादित्वाद'पकर्त्तरि' अनेन सूत्रेण विहितस्यापो लुक् । धातोः द्वित्वम् । 'यङि' अनेन

पापचीति—पापक्ति, पापक्तः, पापचति। अपापचीत्—अपापक्—अपापग्, अपापचुः। पापचांचकार। पापचिता। अपापाचीत्—अपापचीत् (क)। द्वेः स्वरेऽपि नोपधाया गुणः। बोभुजीति-बोभोक्ति, बोभुक्तः, बोभुजति। अबोभुजीत्—अबोभोक्। बोभोजिता। अबोभोजीत् (ख)॥ वावदीति—वावत्ति। वावदीतु—वावत्तु। वावाद्धि। वावद्यात् (ग)॥ जाघटीति—जाघट्टि। जाघटीषि—ष्टुभिः ष्टुः जाघट्षि। अजाघटीत्। स्पर्ध संघर्षे। पास्पर्द्धीति-पास्पर्द्धि, पास्पर्द्धः, पास्पर्धति।

गुणः। 'झपानां' अनेन भस्य बः। 'पितः स्स्मोः' अनेन ईट्। 'गुणः' अनेन न गुणः। 'ओ अव्'बोभवीति। यदा इट् न भवति, तदा गुणो भवति। बोभोति। बोभूतः। 'नु धातोः' अनेनोव्, बोभुवति। बोभवीषि—बोभोषि। बोभूथः। बोभूथ। बोभवीमि—बोभोमि। बोभूवः। बोभूवः। **विधिलिङि—** बोभूयात्, बोभूयाताम्, बोभूयुः। **लोटि**-बोभवीतु-बोभोतु, बोभूतात्, बोभूताम्, बोभुवतु। बोभूहि-बोभूतात्, बोभूतम्, बोभूत। बोभवानि, बोभवाव, बोभवाम। **लङि**-अबोभवीत् अबोभोत्। अबोभूताम्। 'अन उस्' उसि परे गुणः अबोभवुः। अबोभवीः—अबोभोः। अबोभूतम्। अबोभूत। अबोभवम्। अबोभूव। अबोभूम। **लिटि**-'कासादि' अनेनाम्। गुणः। बोभवाञ्चकार। बोभवामास। बोभवांबभूव। आशीर्लिङि-बोभूयात्। बोभूयास्ताम्। **लुटि**-बोभविता। **लृटि**-बोभविष्यति। **लृङि—** अबोभविष्यत्। **लुङि**-'दादेः पै' अनेन सेर्लोपः। गुणं बाधित्वा नित्यत्वाद् वुक्। अबोभूवीत्। इडभावे गुणः। अबोभोत्। अबोभूताम्। 'अन उस्' अबोभूवुः। अबोभवीः—अबोभोः। अबोभूतम्। अबोभूत। अबोभूवम्। अबोभूव। अबोभूम।

(क) पच्धातोर्यङि लुकि सति साधनं तु पूर्ववत्। 'आतः' अनेन सूत्रेण पूर्वस्याकारस्याकारः। 'पितः' अनेन वेट्। पापचीति। ईडभावे 'चोःकुः' पापक्ति। पापक्तः। पापचति। अन्यानि सुगमानि। **विधिलिङि**-पापच्यात्। **लोटि—**पापचीतु—पापक्तु—पापक्तात्। पापक्ताम। पापचतु। हौ परे 'झसाद्धिर्हे' 'चोःकुः' 'झभे जबाः' पापग्धि। अन्यानि सुगमानि। **लङि**-अपापचीत्। ईडभावे 'चोःकुः' 'दिस्योर्हसात्' अपापक्। अपापक्ताम्। अपापचुः। अन्यानि सुगमानि। **लिटि—**कासा···: पापचांचकार। **आशीर्लिङि**-पापच्यात्। अनिडपि धातुः प्रत्ययान्तः सन् सेड्भवति। अतो **लुटि**-पापचिता। **लृटि** पापचिष्यति। **लृङि**-अपापचिष्यत्। **लुङि**-द्वाविटौ। सेर्लोपः। अपापचीत् अपापचिष्टाम्। अपापचिषुः इत्यादीनि।

(ख) भुज्धातोर्यङि लुकि सति, अन्यत् साधनं पूर्ववत्। 'उपधाया लघोः—अनेन गुणे प्राप्ते 'द्वेः स्वरेऽपि' अनेन गुणनिषेधः। बोभुजीति। ईडभावे 'चोःकुः' 'खसे' 'उपधाया लघोः' बोभोक्ति। बोभुक्तः। बोभुजति। **विधिलिङि**—बोभुज्यात्। **लोटि**—बोभुजीतु—बोभोक्तु। हौ परे। 'झसाद्धिर्हे:' 'चोःकुः' 'झवे जबाः' बोभुग्धि। अन्यानि सुगमानि। **लङि—**अबोभुजीत् ईडभावे। 'चोःकुः' दिस्योर्हसात्' वावसाने अबोभोक्। अबोभुक्ताम्। अबोभुजुः। **लिटि**—कासादि···बोभोजांचकार। इत्यादीनि। **लिङि आशिषि**-बोभुज्यात्। **लुटि**—बोभोजिता। **लृटि**-बोभोजिष्यति। **लृङि**-अबोभोजिष्यत्। **लुङि**-अबोभोजीत्।

(ग) वद् व्यक्तायां वाचि। **लटि**-यङो लुक्। 'आतः' अनेन पूर्वस्याकारः। पितः स्स्मोः' अनेन ईट्। वावदीति। ईडभावे। 'खसे···' वावत्ति। वावत्तः। वावदति। इत्यादीनि। **विधिलिङि** वावद्यात्। **लोटि**-वावदीतु—वावत्तु। हौपरे—झसाद्धिर्हे:' वावद्धि। **लङि**-अवावदीत्, ईडभावे अवावत्। अवावत्ताम्। अवावदुः। इत्यादीनि। **लिटि**-वावदांचकार। **आशीर्लिङि**-वावद्यात्। **लुटि**-वावदिता। **लृटि**-वावदिष्यति। **लृङि**-अवावदिष्यत्। **लुङि**-अवावदीत्। अवावदिष्टाम्। अवावादिषुः।

द्धौ पास्पर्द्धि । अपास्पर्द्धीत्–अपास्पर्त्–अपास्पर्द् । सिपि अपास्पर्द्धीः–अपास्पाः ॥ अपास्पर्त्–अपास्पर्द् ॥ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । जागाधीति–जागाद्धि, जागाद्धः । आदिजबानामिति घः जाघात्सि । अजागाधीत्–अजाघात् । सिपि अजाघाः । अजाघात् ॥ नाथृ । नानाथीति–नानात्ति, नानात्तः, नानाथति ॥ दध । दादधीति–दादद्धि । दाधत्सि । अदादधीत्, अदादद्धाम् अदादधुः । अदाधः–अदादधीः । दादधिता । अदादाधीत्–अदादधीत् ॥ मुद । मोमुदीति–मोमोत्ति ॥ कुर्द खुर्द गुर्द गुद क्रीडायामेव । चोकूर्दीति–चोकूर्ति, चोकूर्त्तः । अचोकूर्त् । सिपि अचोकूः ॥ २ ॥

( **ऋदन्तानामृदुपधानां च यङ्लुकि पूर्वस्य रुक्रिक्रीकः** ) चर्करीति–चरिकरीति–चरीकरीति–, चर्कर्ति–चरिकर्ति–चरीकर्ति, चर्कृतः–चरिकृतः–चरीकृतः, चर्क्रति–चरिक्रति–चरीक्रति । अचर्करीत्–अचरिकरीत्–अचरीकरीत् । अचर्कः–अचरिकः–अचरीकः । चर्करिता (क) ॥ वर्वृतीति–वरिवृतीति–वरीवृतीति । वर्वर्त्ति–वरिवर्त्ति–वरीवर्त्ति । वंर्वर्तामास

(क) डुकृञ् करणे यङ्लुकि सति, लटि-द्वित्वम् । 'रः' 'कुहोश्चुः' 'ऋदन्तानामृद' कित्त्वादन्ते । रुक् इत्यत्र उकार उच्चारणार्थः ककारः कित्कार्य्यार्थः । अतो र् इत्यागमः । रिक्रीकौ तु यथा स्थितौ । तत्र ककारः कित्कार्यार्थः । 'पितः स्स्मा' अनेनेडागमो वा भवति । रुगागमे कृते ईडागमे कृते । चर्करीति । अत्र-गुणो भवति । रिगागमे कृते । चरिकरीति । रीगागमे कृते । चरीकरीति । ईडभावेपि त एवागमा भवन्ति । चर्कर्त्ति-चरिकर्त्ति-चरीकर्त्ति । द्वित्वबहुत्वयोस्तु रुक्रिक्रीगागमेषु कृतेषु सत्सु प्रत्येकं त्रीणि रूपाणि भवन्ति । चर्कृतः-चरिकृतः चरीकृतः । अन्त अत् । (ऋ रम्) पूर्वोक्ता आगमा भवन्ति । चर्क्रति चरिक्रति-चरीक्रति । एवं प्रथमपुरुषे द्वादश रूपाणि भवन्ति । मध्यमपुरुषेऽपि द्वादश रूपाणि भवन्ति । चर्करीषि । अत्र षत्वं च भवति चरिकरीषि–चरीकरीषि । ईडभावे । चर्कर्षि-चरिकर्षि–चरीकर्षि । चर्कृथः–चरिकृथः-चरीकृथः । चर्कृथ–चरिकृथ-चरीकृथ । उत्तमपुरुषेऽपि द्वादश ईड् वा भवति । चर्करीमि–चरिकरीमि-चरीकरीमि । चर्कृवः–चरिकृवः चरीकृवः । चर्कृमः–चरिकृमः–चरीकृमः । एवं षट्त्रिंशद्रूपाणि वर्त्तमाने स्युः । (विधिसम्भावनयोः) एत आगमा भवन्ति । चर्कृयात्–चरिकृयात्–चरीकृयात् । चर्कृयाताम्-चरिकृयाताम्–चरीकृयाताम् । चर्कृयुः–चरिकृयुः–चरीकृयुः । चर्कृयाः–चरिकृयाः–चरीकृयाः । चर्कृयातम्-चरिकृयातम् । चरीकृयातम् । चर्कृयात-चरिकृयात-चरीकृयात । चर्कृयाम्-चरिकृयाम्-चरीकृयाम् । चर्कृयाव–चरिकृयाव–चरीकृयाव । कर्कृयाम–चरिकृयाम–चरीकृयाम । लोट्लकारे । ईडागमे । त्रीणि रूपाणि । तदभावे त्रीणि रूपाणि भवन्ति । अन्यत्र यथासंभवम् । चर्करीतु-चरिकरीतु-चरीकरीतु । इडभावे । चर्कर्त्तु-चरिकर्त्तु–चरीकर्त्तु । तातङादेशे कृते । चर्कृतात्–चरीकृतात्–चरीकृतात् । एवं तुपि नव रूपाणि । द्विवचनेऽपि त्रीणि रूपाणि । चर्कृताम्–चरिकृताम्–चरीकृताम् । बहुवचने त्रीणि रूपाणि (द्वेः, अनेन अन्त अत् । (ऋ-रम्) चर्क्रतु–चरिक्रतु–चरीक्रतु । मध्यमपुरुषे । चर्कृहि–चरिकृहि–चरीकृहि । तातङादेशे । चर्कृतात्–चरिकृतात्–चरीकृतात् । चर्कृतम् । चरिकृतम्–चरीकृतम् । चर्कृत–चरिकृत–चरीकृत । उत्तमपुरुषे पित्त्वात् गुणः । णत्वम् । चर्कराणि-चरिकराणि-चरीकराणि ॥ चर्कराव–चरिकराव–चरीकराव । चर्कराम-चरिकराम-चरीकराम । एवमाशीःप्रेरणयोः षट्त्रिंशद्रूपाणि । लङ् । त्रिष्विमागमः । (दिवादावट्) अचर्करीत्–अचरिकरीत्–अचरीकरीत् । इडभावे दिस्योर्ह्रसात् । (खर्विसर्गः) अचर्कः–अचरिकः–अचरीकः । अचर्कृताम्–

वर्वर्तिता । वर्वर्तिष्यति । अवर्वर्तिष्यत् (क) ॥ वनीवञ्चीषि—वनीवङ्क्षि । वनीवच्यात् । वनीवञ्चीतु—वनीवङ्क्तु, वनीवञ्चाम् । अवनीवञ्चीत् । संयोगान्तस्य लोपः । अवनीवन् (ख) ॥ जङ्गमीति—जङ्गन्ति । लोपस्त्वनुदात्ततनाम् । जङ्गतः । गमां स्वरे । जङ्गमति । जङ्गमीमि, जङ्गन्वः, जगन्मः जङ्गमीतु—जङ्गन्तु । हौ जङ्गहि । अजङ्गमीत्—अजङ्गन् , अजङ्गताम् , गमां स्वरे । अजङ्ग्मुः जङ्गमिता । अजङ्गमीत् (ग) । हिंसायां तु जेघ्नयीति—जेघ्नेति, जङ्घनीति—

---

अचरिकृताम्—अचरीकृताम् । (अन उस) गुणः । अचर्करुः—अचरिकरुः । अचरीकरुः । अचर्करीः—अचरिकरीः—अचरीकर्रीः । ईडभावे । (दिस्योर्हसात । स्वार्विसर्गः) अचर्कः—अचरिकः—अचरीकः । अचर्कृतम्—अचरिकृतम्—अचरीकृतम् । अचर्कृत—अचरिकृत—अचरीकृत । अचर्करम्—अचरिकरम्—अचरीकरम् । अचर्कृव—अचरिकृव—अचरीकृव । अचर्कृम—अचरिकृम—अचरीकृम । लिट् । (कासादि०) चर्कराञ्चकार । चरिकराञ्चकार । चरीकराञ्चकार इत्यादीनि । चर्करामास—चरिकरामास—चरीकरामास । चर्कराम्बभूव-चरिकराम्बभूव—चरीकराम्बभूव । इत्यादीनि रूपाणि भवन्ति । चर्क्रियात्—चरिक्रियात्—चरीक्रियात् । ( सिसता० ) अनेन इट् । चर्करिता—चरिकरिता चरीकरिता । इत्यादीनि । चर्करिष्यति—चरिकरिष्यति—चरीकरिष्यति । अचर्करिष्यत्-अचरिकरिष्यत्— अचरीकरिष्यत् । लुङ् । द्वाविटौ । सेर्लोपः । अचर्कारीत्—अचरिकारीत् । अचरीकारीत् इत्यादि ।

( क ) वृतु वर्त्तने । यङ्लुकि कृते साधनं तु पूर्ववत् । अयं धातुऋदुपधोऽस्ति तस्मात् पूर्वोक्ता आगमा भवन्ति लुकि सति । अनेन ईडागमः । वर्वृतीति—वरिवृतीति—वरीवृतीति । ईडभावे । वर्वर्ति—वरिवर्ति । वरीवर्ति । इत्यादीनि । लिङ् । वर्वृत्यात्—वरिवृत्यात्—वरीवृत्यात् । इत्यादीनि । लोट् । वर्वृतीतु—वरिवृतीतु—वरीवृतीतु । तातङादेशे । वर्वृतात्—वरिवृतात्—वरीवृतात् । इत्यादीनि । लुङ् । (द्वेःस्वरे) अनेन गुणनिषेधः । अवर्वृतीत्—अवरिवृतीत्—अवरीवृतीत् । ईडभावे । ( संयोगान्तस्य ) अनेन सकारस्य लोपे प्राप्ते । (सभिन्नस्य) अनेन तन्निषेधः । अवर्वर्त् । अत्र (दिस्यो०) अनेन लोपे । अवरिवर्त्—अवरीवर्त् । अवर्वृताम्—अवरिवृताम् अवरीवृताम् । इत्यादीनि । लिट् । (कासादि०) वर्वर्त्ताञ्चकार—वरिवर्त्ताञ्चकार—वरीवर्त्ताञ्चकार । वर्वर्त्तामास-वरिवर्त्तामास-वरीवर्त्तामास । वर्वर्त्ताम्बभूव-वरिवर्त्ताम्बभूव । वरीवर्त्ताम्बभूव । वर्वृत्यात्—वरिवृत्यात्—वरीवृत्यात् । (सिसता०) वर्वर्तिता—वरिवर्तिता-वरीवर्तिता । वर्वर्तिष्यति-वरिवर्तिष्यति-वरीवर्तिष्यति । अवर्वर्तिष्यत्-अवरिवर्तिष्यत्-अवरीवर्तिष्यत् । लुङ् । अवर्वर्त्तीत्-अवरिवर्त्तीत्-अवरीवर्त्तीत् ।

( ख ) वञ्चु वञ्चने । यङ्लुकि कृते पूर्ववत् साधनम् । नीगागमः । लुकि सति । अनेन ईट् । वनीवञ्चीति । इडभावे । ( चोः कुः ) वनीवङ्क्ति । (नो लोपः) वनीवक्तः । ( द्वेः ) वनीवचति । इत्यादीनि । वनीवच्यात् । वनीवञ्चीतु—वनीवङ्क्तु । अवनीवञ्चीत्—अवनीवक् । इत्यादीनि । लिट् । वनीवञ्चांचकार । वनीवञ्चामास । वनीवञ्चांबभूव । ( नो लोपः) वनीवच्यात् । (सिसता०) वनीवञ्चिता । वनीवञ्चिष्यति । अवनीवञ्चिष्यत् । अवनीवञ्चीत् । अवनीवञ्चिष्टाम् । अवनीवञ्चिषुः ।

( ग ) गम्लृ गतौ । यङ्लुकि कृते द्वित्वादिकं कार्यम् । (कुहोश्चुः) अनेन गस्य जः । (अमजपां०) अनेन पूर्वस्य नुक् । (नश्चा०) । लुकि सति अनेन वेट् । जंगमीति । इडभावे (नश्चा०) जंगंति (लोपस्त्वनुदात्ततनां० ) अनेन नकारस्य लोपः । जंगतः । ( गमां स्वरे ) अनेनोपधालोपः । जंग्मति । इत्यादीनि । धातुग्रहणोक्तं यङ्लुकि वा भवति । इति केचिदाचार्या वदन्ति । तेन वा नोपधालोपः । जंगमति । जंगम्यात् । जंगमीतु । जंगंतु । अजंगमीत् । ईडभावे (दिस्योः) (मो नो धातोः) अजंगन् । इत्यादीनि रूपाणि सुगमानि । अनेनैव प्रकारेण साध्यानि । लिट्लकारे । ( कासादि० ) अनेनाम् । जङ्गमाञ्चकार । जङ्गमामास । जङ्गमाबभूव इत्यादीनि । जङ्गम्यात् । ( सिसता० ) जङ्गमिता । जङ्गमिष्यति । अजङ्गमिष्यत् । लुङ्लकारे । अजङ्गमीत् । अजङ्गमिष्टाम् । अजङ्गमिषुः ॥

जङ्घन्ति, लोपस्त्वनुदात्ततनाम् ॥ जङ्घतः, जङ्घ्नति । अजङ्घनीत्–अजङ्घन् । आशिषि वध्यात् । अवधिष्ट (क) ॥ चञ्चुरीति–चञ्चूर्ति, चञ्चूर्तः, चञ्चुरति । चञ्चूर्यात् । चञ्चुरीतु–चञ्चूर्तु–चञ्चूर्तात् , अचञ्चूर्ताम् । चञ्चूर्हि । अचञ्चुरीत् , अचञ्चुः ॥ चोस्कुन्दीति–चोस्कुन्ति, चोस्कुन्तः । चोस्कुन्दति । चोस्कुन्द्यात् ॥ चोस्कुन्दीतु–चोस्कुन्तु, चोस्कुन्ताम् । अचोस्कुन्दीत्–अचोस्कुन् ॥ अचोस्कुन्ताम् , अचोस्कुन्दुः । सिपि । अचोस्कुन्दीः–अचोस्कुन् ॥ चङ्खनीति–चङ्खन्ति, चङ्खातः, चङ्ख्नति । चङ्खनीषि–चङ्खसि, चङ्खाथः । चङ्खनीमि–चङ्खन्मि, चङ्खन्वः, चङ्खन्मः । चङ्खायात्– चङ्खन्यात् । चङ्खनीतु–चङ्खन्तु–चङ्खतात् , चङ्खाताम् , चङ्ख्नतु । चङ्खाहि । अचङ्खनीत्-अचङ्खानीत् , अचङ्खानिष्टाम् ॥ योयवीति–योयोति, योयुतः । योयुयात् । योयवीतु–योयोतु । अयोयवीत् ॥ नोनवीति, नोनोति, नोनुतः । नोनुयात् । नोनवीतु-नोनोतु । अनोनवीत्–अनोनोत् । सिपि । अनोनवीः–अनोनोः ॥ जाहेति–जाहाति । द्वे स्तौ । जाहीतः । जाहीयात् । जाहेतु- जाहातु–जाहीतात् , जाहीताम् । अजाहेत्- अजाहात , अजाहीताम्, अजाहुः । जाहीयात । जाहिता । अतोऽनपि । अजाहासीत्, अजाहासिष्टाम् (ख) ॥ दादेति–दादाति, दात्तः, दादति । दादेषि–दादासि, दात्थः । दात्थ । दाद्वः, दाद्मः । दां हौ, देहि । दादेयात् । अतोऽनपि । दादिता । दादेः पे । अदादेत्–अदादात् , अदादाताम् (ग) ॥ एवं घेट् । दाधेति–दाधाति, दात्तः, दाधति । दाध्यात् । घेहि । दाधेयात् । अदाधासीत्–अदाधेत्- अदाधात्–अदाधत् ,

(क) हन् हिंसागत्योः । यङ्लुकि कृते द्वित्वादिकं सर्वं भवति । (कुहोश्चुः । झपानाम्०) (द्विरुक्तस्य । जमजपाम्० । नश्चा०) लुकि सति । जङ्घनीति । इडभावे । (नश्चा०) जङ्घति । (लोपस्त्वनु० गमां स्वरे) जघ्नति । जङ्घन्यात् । जङ्घनीतु । जङ्घतु । इत्यादीनि । अजङ्घनीत् । इडभावे । अजङ्घत् । अजङ्घताम् । अजंघ्नुः । जङ्घनाञ्चकार । जङ्घनामास । जङ्घनांबभूव । वधादेशः । आशिषि । बध्यात् । जङ्घनिता । जङ्घनिष्यति । अजङ्घनिष्यत् । वृद्धिनिषेधः । अवधीत् । इत्यादीनि ॥

(ख) ओहाक् त्यागे । यङ्लुकि कृते । दित्वादिकम् । (कुहोश्चुः ह्रस्वः । झपानाम्० । आतः लुकि सति 'पितः' अनेन ईट् । (अ इ ए) जाहेति । इडभावे । जाहाति (द्वे स्तौ) अनेनाकारस्य ईकारः । जाहीतः । जाहति । जाहीयात् । जाहेतु–जाहातु । अजाहेत्–अजाहात् । जाहाञ्चकार । जाहायात् (सिसता०) जाहिता । जाहिष्यति । अजाहिष्यत् (आदन्तानां०) अजाहासीत् । जहातेर्धातोः पूर्वस्य दीर्घो वा भवति । इति केचिदाचार्या वदन्ति । तन्मते । जहाति । इत्यादीनि रूपाणि भवन्ति ।

(ग) दा दाने । यङ्लुकि कृते । दित्वादिकम् (ह्रस्वः । आतः) लुकि सति । दादेति । दादाति । (दादेः) दात्तः दादति । दाद्यात् । दादेतु । अदादेत् । अदादात् । दादाञ्चकार । दादायात् । दादिता । दादिष्यति । अदादिष्यत् । अदादासीत् (दादेः पे) अदादात् ।

अदाघताम्, अदाघन् ॥ डुधाञ् । दाधेति-दाधाति, धात्तः । धात्थः । दादेः । दाध्वः । दाध्मः । लङि अदाधात्—अदाधेत् ॥ पितोस्तु दैप् शोधने । दाप् लवने । दादेति-दादाति, दादीतः, दादति । दादीयात् । दादेतु—दादातु दादीतात् । दादीहि । अदादेत्-अदादात्, अदादीताम् । दादायात् । अदादासीत् ॥ सास्वपीति-सास्वपि, सास्वप्तः, सास्वपति । हौ सास्वब्धि । असास्वपीत्--असास्वत् । सासुप्यात् । असास्वापीत्--असास्वपीत् ॥ कॄ विक्षेपे । चाकरीति--चाकर्ति, चाकीर्तः, चाकिरति । चाकरिता । चाकरीता ॥ तातरीति--तातीर्ति, तातर्ति । तातिरति । तातरीतु--तातर्तु । ॠत इर् । तातीर्तात् । तातीर्हि । अतातरीत्-अतार्तः । अतातारीत्, अतातारिष्टाम् । अर्तेर्युङ्लुकि द्वित्वे पूर्वस्य र इत्यत्वम् । रुक् । रिग्रीकोस्तु पूर्वस्यासवर्ण इय् । अररीति--अरियरीति--अरियरीति, अरर्ति--अरियर्ति--अरियर्ति, अर्ऋतः--अरियृतः-अरियृतः, रुको रिलोप इति लोपः । आरति--अरियृति- अरियृति । अर्ऋयात्--अरियृयात्-अरियृयात् । अररीतु--अरियरीतु--अरियरीतु, अरर्तु-अरियर्तु--अरियर्तु, आरतु--अरियृतु- अरियृतु । आररीत्--आरियरीत् आरियरीत् । आरः-आरियः--आरियः । आररुः-आरियरुः-आरियरुः । सिपि आररीः--आरियरीः--आरियरीः । आरः--आरियः--आरियः । अरराञ्चकार--अरियराञ्चकार । लिङि यादादाविति रिङ् । आरियात्--आरियृरियात् २ । अररिता--अरियरिता--अरियरीता । लुङि आरारीत्--आरियारीत् । गृहू । जर्गृहीति--जरिगृहति--जरीगृहीति, जर्गर्ढि, जर्गृढः, जर्गृहति । जर्गृहीतु--जर्गर्ढु- जर्गृढात् । हौ जर्गृढि । अजर्गृहीत् अजर्घर्ट्-अजर्घर्ड् ॥ ग्रह । जाग्रहीति--जाग्राढि । तस्मादौ ङिन्निमित्तं संप्रसारणम् । तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः । जागृढः, जागृहति । जाग्रहीषि--जाग्रक्षि । जागृढि । जाग्रहिता । गृधु । जर्गृधीति--जर्गर्धि, जर्गृद्धः, जर्गृधति । जर्गृधीषि--जर्घर्त्सि । अजर्गृधीत्--अजर्घर्त् । सिपि अजर्गृधीः-अजर्घाः । अजर्गर्धीत्, अजर्गर्धिष्टाम् । पाप्रच्छीति--पाप्रष्टि । तस्मादौ न संप्रसारणम् । श्तिपा निर्देशात् ॥ २ ॥

(सु०) पितः स्त्मो वेट् ॥ यङन्तात्परेषां हसादीनां पितां तकारसकारमकाराणामाड्वा स्यात् ॥ यङो लुक्यपि प्रत्ययलक्षणेनात्र यङन्तत्वम् (क) । बोभवीति बोभोति, बोभूतः द्वेरित्यतोऽत् हुन्वोरेवापीति नियमात् । नुधातोरित्युव् । बोभुवति । बोभूयात् ।

(क) प्रत्ययलक्षणेनेति । प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेनेति भावः ।)

लोटि बोभवीतु-बोभोतु-बोभूतात् । लङि अबोभवीत्-अबोभोत्-अबोभूताम् । अन उस् इत्यन उस् । उसि गुण इति गुणे अबोभवुः । कासादिप्रत्ययादित्याम् । बोभवांचकार । बोभूयात् । सिसतासीस्यपामितीट् ॥ बोभविता । बोभविष्यति । अबोभविष्यत् । लुङि दादेः पे इति सेर्लुक् । यङ्लुकि सतीतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्भुवः सि लोपे स्वरे इति वुक् अबोभूवीत् । भुवः सिलोपेऽयङ्लुकि गुणो नेत्यनिषेधाद्गुणः अबोभोत् , अबोभूताम् , अन उस् इत्यन उस् । नित्यत्वाद्वुक् अबोभूवुः ॥ डुपचष् पाके । आत इति पूर्वस्यात्वम् । पापचीति-पापक्ति । पापच्यात् । पापक्तु-पापचीतु-पापक्तात् । अपापचीत्-चोःकुरिति कः । दिस्योर्हसादिति दिप्सिपोर्लोपः । अपापक् । पापचांचकार । पापच्यात् । पापचिता । पापचिष्यति । अपापचिष्यत् । अतोहसादेरिति वा वृद्धिः । अपापाचीत्-अपापचीत् ॥ भुज पालनाभ्यवहारयोः । ह्रेः स्वरेऽपि नोपधाया इत्यनेन चतुर्षु गुणो न । यङीति पूर्वस्य गुणः । बोभुजीति-चोःकुरिति गः । खसे चपा इति गस्य कः । बोभोक्ति । बोभुज्यात् । बोभुजीतु-बोभोक्तु । अबोभुजीत् । दिस्योरिति दिप्सिपोर्लोपः अबोभोक् । बोभोजांचकार । बोभुज्यात् । बोभोजिता । बोभोजिष्यति । अबोभोजिष्यत् । अबोभोजीत् । वद व्यक्तायां वाचि । आत इति पूर्वस्यात्वम् । वावदीति-खसे चपा इति तः । वावत्ति । वावद्यात् । वावदीतु-वावत्तु-वावत्तात् । अवावदीत्-अवावत् । वावदांचकार । वावद्यात् । वावदिता । वावदिष्यति । अवावदिष्यत् । अवावादीत् ॥ घट चेष्टायाम् । आत इति पूर्वस्यात्वम् । जाघटीति-ष्टुभिः ष्टुरिति टः । जाघट्टि । जाघट्यात् । जाघटीतु-जाघट्टु । जाघट्टात् । अजाघटीत्-दिस्योरिति दिप्सिपोर्लोपः । अजाघट् । जाघटांचकार । जाघट्यात् । जाघटिता । जाघटिष्यति । अजाघटिष्यत् । अजाघाटीत्-अजाघटीत् । अतो हसादेर्लघोरिति वा वृद्धिः । स्पर्द्ध संघर्षे । संघर्षः पराभिभवेच्छा । आत इति पूर्वस्यात्वम् । यङ्लुकीतीट् । पास्पर्द्धीति—ईडभावे तथोर्द्ध इति धत्वम् । हसात्परस्य झसस्येति धलोपे । पास्पर्धि-धलोपाभावे झबे जबा इति दत्वम् । पास्पर्द्धि । सिपि दलोपे खसे चपा इति तः । पास्पर्त्सि-पक्षे पास्पर्त्सि । पास्पर्ध्यात् । पास्पर्द्धीतु-पास्पर्धु । तुह्योरिति तातङ् । पास्पर्द्धात् । हौ झसाद्धिर्हेरिति धत्वे हसादिति धलोपे पास्पर्धि-लोपाभावे दत्वम् । पास्पर्द्धि । लङि अपास्पर्धीत्-ईडभावे दिस्योर्हसादिति दिप्सिपोर्लोपः । संयोगान्तस्येति धलोपः । वावसाने इति वा तः । अपास्पर्द्-अपास्पर्त् । सिपि तु अपास्पर्द्धीः-पक्षे दः इति दस्य रः । रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ । अपास्पाः । पास्पर्द्धांचकार । पास्पर्ध्यात् । पास्पर्धिता । पास्पर्द्धिष्यति । अपास्पर्द्धिष्यत् । लुङि सिसतासीस्यपामितीट् । सेरितीट् । इट ईटीति सिलोपः । अपास्पर्धीत् । गाधृ प्रतिष्ठादौ । तथोर्ध इति धः । झबे जबा इति दः । जागाद्धि-सेट्पक्षे जगाधीति । सिपि आदिजबानामिति घः । खसे चपा इति धस्य तः । जाघात्सि । जागाध्यात् । जागाधीतु-जागात् । हौ झसादिति हेर्धिः । जागाद्धि । अजागाधीत्-आदिजबानामिति घः । अजाघात् । सिपि अजागाधीः । ईडभावे दिस्योरिति सिलोपः । वावसाने वा दः । द इति दस्य रः । आदिजबानामिति घः । अजाघाः-अजाघात् । लुङि अजागाधीत , अजागाधिष्टाम् । नाथृ नाधृ याच्ञादौ । आत इति पूर्वस्यात्वम् । नानाथीति-खसे चपा इति थस्य तः । नानात्ति-नानाथ्यात् ।

नानाथीतु-नानातु-नानात्तात्। अनानाथीद्। अनानात्। लुङि अनानाथीत्, अनानाथिष्टाम्॥ दध धारणे। ईट्पक्षे दादधीति-पक्षे तथोर्ध इति धः। झबे जबा इति दः। दादद्धि। सिपि आदिजबानामिति धः। दाधत्सि। दादध्यात्। दादधीतु। दादद्धु-दादद्धात्। हौ झसाद्धिर्हेरिति धिः। दादद्धि। लङि अदादधीत्। ईडभावे आदिजबानामिति धः। अदाधत्। सिपि द इति दस्य रः। अदाधः-अदाधत्-अदादधीः। लुङि अतो हसादेर्लघोरिति वा वृद्धिः। अदादाधीत्-अदादधीत्॥ स्कुदि आप्रवणे। इदितो नुमिति नुम्। चोस्कुन्दीति-ईडभावे चोस्कुन्ति। चोस्कुन्द्यात्। चोस्कुन्दीतु-चोस्कुन्तु-चोस्कुन्तात्। अचोस्कुन्दीत्। दिस्योर्हसादिति दिप् सिपोर्लोपः संयोगान्तस्येति दलोपः अचोस्कुन्। लङि अचोस्कुन्दीत्॥ मुद हर्षे। मोमुदीति। ह्वेः स्वरेऽपि न गुणः। मोमोत्ति। मोमुद्यात्। मोमुदीतु-मोमोत्तु-मोमुतात्। अमोमुदीत्-अमोमोत्। सिपि द इति दस्य रः। अमोमोः-अमोमोत्। लुङि अमोमोदीत्॥ कुर्द खुर्द गुर्द गुद क्रीडायाम्। य्वोर्विहसे इति दीर्घः। खसे चपा इति दस्य तः। चोकूर्ति-इट्पक्षे चोकूर्दीति। चोकूर्द्यात्। चोकूर्दीतु-चोकूर्तु-चोकूर्त्तात्। हौ झसाद्धिर्हेरिति धिः। चोकूर्द्धि। अचोकूर्दीत्-अचोकूर्त्। रात्सस्येति तलोपो न। सिपि द इति दस्य रः। रात्सस्येति सलोपः। य्वोर्वि हसे इति दीर्घः। अचोकूः-अचोकूर्दीः। लुङि अचोकूर्दीत्। डुकृञ् करणे। **ऋृदन्तानामृदुपधानां च यङ्लुकि पूर्वस्य रुक्रिक्रीकः॥** अतिशयेन करोति चर्करीति-ईडभावे चर्कर्ति। ह्वेरित्यन्तोऽत्। रत्वम्। चर्क्रति। विधिलिङि चर्कृयात्। लोटि चर्करीतु—चर्कर्तु-चर्कृतात्। लङि अचर्करीत्। ईडभावे दिस्योर्हसादिति दिप्सिपोर्लोपः। अचर्कः। आशिषि लिङि यादादाविति रिङ्। चर्क्रियात्। लुङि णित्पे इति णित्त्वात् धातोर्नामिन इति वृद्धिः। अचर्कारीत्। वृतुः वर्त्तने। लटि ईट्पक्षे ह्वेः स्वरेऽपीति न गुणः। वर्वृतीति-ईडभावे वर्वर्ति। विधिलिङि वर्वृत्यात्। लोटि इटि वर्वृतीतु-ईडभावे वर्वर्तु-वर्वृतात्। हौ झसाद्धिर्हेरिति धिः। वर्वृद्धि। लङि अवर्वृतीत्। ईडभावे रात्सस्येति तलोपो न। अवर्वर्त्। दिस्योर्हसादिति दिप्सिपोर्लोपः। सिपि पक्षे वावसाने इति दः। द इति दस्य रः। रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ। अवर्वाः-अवर्वत्। ईटि अवर्वृतीः लिटि वर्वर्त्तामास। वर्वृत्यात्। वर्वर्तिता। लृटि गणनिर्दिष्टत्वात् वृतादिभ्यः स्यसयोरिति न। वर्वर्तिष्यति। अवर्वर्तिष्यत्। लुङि गणनिर्दिष्टत्वात् लित्पुषादेरिति ङो न। अवर्वर्तीत्॥ वञ्चु गतौ। गत्यर्थात्कौटिल्ये इति यङ्। वञ्चु स्रंसु इति पूर्वस्य नीगागमः। लुकि न तन्निमित्तमिति यङो लुका लुप्तत्वात्तदाश्रितो नलोपो न। वनीवञ्चीति—ईडभावे वनीवङ्क्ति, तसो ङित्त्वादिह स्यादेव नो लोप इति नलोपः। वनीवक्तः। ह्वेरित्यन्तोऽत वनीवञ्चति। वनीवच्यात्। वनीवञ्चीतु-वनीवङ्क्तु—वनीवक्तात्। हौ झसादिति हेर्धिः। वनीवग्धि। अवनीवञ्चीत्—इडभावे संयोगान्तस्येति च लोपः। अवनीवन् लुङि अवनिवञ्चीत्॥ गम्लृ गतौ। जमजपामिति पूर्वस्य नुक् जङ्गमीति—ईडभावे जङ्गन्ति, लोपस्त्वनुदात्ततनामिति मलोपः। जङ्गतः गमां स्वरे इत्युपधालोपः। जङ्ग्मति। मो नो धातोरिति नः। जङ्गन्मि। जङ्गम्यात्। जङ्गमीतु-जङ्गन्तु—जङ्गतात्। हौ लोपस्त्वनुदात्ततनामिति मलोपस्यासिद्धत्वा-

दत इति न हेर्लुक् । जङ्गहि । अजङ्गमीत् । ईडभावे दिस्योरिति दिप्सिपोर्लोपः । मो नो धातोरिति नः । अजङ्गन् । अनुबन्धनिर्दिष्टत्वात् लित्पुषादेरिति न ङः(क) । ह्म्यन्तेति न वृद्धिः । अजङ्गमीत् ॥ हन हिंसागत्योः । पूर्वाद्धन्तेरिति हस्य घः । यद्यपि हन्तेरिति श्तिपा निर्देशस्तस्थापि यङ्लुकि भवत्येवेति न्यासकारः । श्तिपा शपेति निषेधस्यानित्यत्वात् । जमजपामिति पूर्वस्य नुक् । जङ्घनीति–इडभावे जङ्घन्ति, तसि लोपस्त्वनुदात्ततनामिति नलोपः । जङ्घतः । गमां स्वरे इत्युपधालोपः । द्वेरित्यन्तोऽत् । जङ्घनति । जङ्घन्यात् । जङ्घनीतु-जङ्घन्तु-जङ्घतात् । जद्येश्विशाधीति सूत्रे अयङ्लुकीति वक्तव्यम् । तेन जङ्घहि । अजङ्घनीत् । ईडभावे अजङ्घन् । जङ्घनांचकार । हनो लुङ्लिङोर्वध इति वधादेशः । द्वित्वविशिष्टस्य हनो वधादेशाद्वधादेशस्य पुनर्द्वित्वं न । (ख) वध्यात । अवधीत् । आङ्पूर्वात्तु आङो यमहन इत्यात्मने पदम् । अजंघते । इत्यादि । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमित्युक्तत्वात् (ग) ॥ चर गतौ भक्षणे च । लुपसदेति गर्हायां यङ् । यङो लुक् । जमजपामिति नुक् । चरफलोरित्युत्वम् । उतस्तपरत्वान्न गुणः। य्वोर्वि हसे इति दीर्घस्तु स्यादेव । चञ्चूर्ति–ईट्पक्षे चञ्चुरीति । चञ्चूर्यात् । चञ्चरीतु–चञ्चर्तु–चञ्चूर्तात् । अचञ्चूः । पदान्तविषयत्वात् य्वोर्वि हसे इति दीर्घः । अचञ्चुरीत् ॥ खनु अवदारणे । जमजपामिति नुक् । चङ्खनीति–चङ्खन्ति, जनसनेत्यात्वम् । चङ्खातः । जनसनेत्यत्र हकारे चेति वाच्यम् । तेन हावप्यात्वम् । चङ्खाहि । अचङ्खनीत्–अचङ्खन् । आशीर्लिङि जनसनेति वात्वम् । चङ्खायात् – चङ्खन्यात् । लुङि अतो हसादेरिति वा वृद्धिः । अचंखनीत्—अचंखानीत् ॥ यु मिश्रणेऽमिश्रणे च । 'ओरौ' इति सूत्रेऽद्विरुक्तस्येत्युक्तत्वादुत औत्वं न । यङीति पूर्वस्य गुणः योयोति । ईट्पक्षे योयवीति । नुधातोरित्युव् । योयुवति । योयुयात् । योयवीतु—योयोतु—अयोयोत्—अयोयवीत् । आशिषि ये इति दीर्घः । योयूयात् । लुङि णित्वे इति णित्वाद् धातोर्नामिन इति वृद्धिः । अयोयावीत् ॥ णुम्तुतौ । नोनवीति—नोनोति । नोनुयात् । नोनवीतु–नोनोतु—नोनुतात् । अनोनवीत्—अनोनोत् । उसि गुण इति गुणे । अनोनवुः । लुङि अनोनावीत् । ओहाक् त्यागे । ओहाङ् गतौ । अनयोस्तुल्यानि रूपाणि। ङित्त्वप्रयुक्तस्यात्मनेपदस्य यङ्लुक्यप्रवृत्तेः (घ) । भृञां लुकीतात्वस्य लुङ्निमित्ते द्वित्व एव विहितत्वाच्च आत इति पूर्वस्यात्वम् । ईट्पक्षे जाहेति—जाहाति, द्वेस्तावितीत्वम् । जाहीतः । इह ङितिहसे ओहाको रिट्वेतीत्वं न । अनुबन्धनिर्दिष्टत्वात् । द्वेरित्यन्तोऽत् । द्वेस्तावित्यालोपः । जाहति । जाहेषि—जाहासि, जाहीथः, जाहीथ । जाहेमि—जाहीमि, जाहीवः । जाहीमः । द्वेस्तावितीत्वम् । जाहीयात् । इह हाको यादादावालोप इत्यालोपो न अनुबन्धनिर्दिष्टत्वात् । जाहेतु—जाहातु—जाहीतात् । हौ द्वेस्तावितीत्वम् । जाहीहि । इह

(क) **अनुबन्धनिर्दिष्टत्वादिति** । गम्लगतावित्यत्र लृकारानुबन्धः ।

(ख) **वध्यात् अवधीत्** । इत्यत्र पुनर्द्वित्वं न, तत्र हेतुमाह–**द्वित्वविशिष्टस्येति** । हनः स्थानिवत्त्वात्, द्विरुक्तस्य न द्विरुक्तिरिति निषेधादिति भावः ।

(ग) **इत्युक्तत्वादिति** । प्रकृतेस्तु—प्रकृतिग्रहणे 'आङो यमहन' इत्यादिना आङ्–उपसर्गाद्धन्धातोरात्मनेपदग्रहणे यङ्लुगन्तस्य आङुपसर्गविशिष्टस्य हन आत्मनेपदं ग्रहणमिति फलितोऽर्थः ।

(घ) यङ्लुगन्तं परस्मैपदमित्युक्तत्वादात्मनेपदाप्रवृत्तिः ।

इर्वा हाविति ह्रस्वदीर्घविकल्पे रूपत्रयं न। जहातेरिति श्तिपा निर्दिष्टत्वात्। अजाहेत्—ईडभावे अजाहात्। आषिशि जाहायात्। इह दादेरे इत्येवं दादेरिति इत्वं च न। हागित्युभयत्रानुबन्धनिर्दिष्टत्वात्॥ जाहेता। लुङि यमिरमिनमातामितीट्सकौ। अजाहासीत्, अजाहासिष्टाम्, अजाहासिषुः॥ डुदाञ् दाने। आत इति पूर्वस्यात्वम्। दादाति–ईट्पक्षे दादेति, दादेरित्यालोपः। दात्तः, ह्रेरित्यन्तोऽत्। ददति। दादासि—दादेषि। दाद्यात्। दादेतु—दादातु—दात्तात्। हौ दां हावित्येत्वपूर्वलोपौ। देहि—दात्तात्। आदादात्—अदादेत्। दादाञ्चकार। दादेर इत्येत्वम्। दादेयात्। दादेता। दादेष्यति। आदादेष्यत्। 'दादेः पे' इति सिलोपः। अदादात्॥ धेट् पाने। दाधाति—दाधेति, दादेरित्यालोपः। खसे चपा झसानामिति तः। दात्तः, तथार्धइति धत्वं न दादेरित्यालोपस्य स्थानिवत्त्वेन झसान्तत्वाभावात्। तत्र सूत्रे व्यवस्थितार्थकवानुवृत्तेर्वा। दाधति। दाध्यात्। दाधातु—दाधेतु—दात्तात्। दाधतु। हौ दां हावित्येत्वपूर्वलोपौ। धेहि। अदाधात्—अदाधेत्। दाधांचकार। दादेरे इत्येत्वम्। दाधेयात्। दाधेता। दाधेष्यति। अदाधेष्यत्। शाछासाघ्राधेटामिति वा सिलोपः। अदाधात्–पक्षे यमिरमिनमातामितीट्सकौ। अदाधासीत्—धेटो भूतमात्रे दिवादिपरो ङो वेति ङः। अदाधात्॥ डुधाञ् धारणादौ। दाधाति—दाधेति, पूर्वस्य क्ङिति झसे ध इति धः, खस चपा इति तः। धात्तः, दाधति। दाध्यात्। दाधातु—दाधेतु—धात्तात्। हौ दां हावित्येत्वपूर्वलोपौ धेहि। अदात्–अदाधेत्। दाधांचकार। दादेरे इत्येत्वम्। दाधेयात्। दाधेता। दाधेष्यति। अदाधेष्यत्। 'दादेः पे' इति सिलोपः अदाधात्॥ दाप् लवने। दैप् शोधने। आदादिकभौवादिकयोरनयोर्दादित्वम्। दादाति—दादेति, ह्रेस्तावितीत्वम्। दादीतः। ह्रेरित्यन्तोऽत्। ह्रेस्तावित्यालोपः ददति। दादीयात्। दादातु। दादेतु। दादीतात्। हौ दादीहि। अदादात्—अदादेत्। दादांचकार। दादायात्। दादेता। दादेष्यति। अदादेष्यत्। यमिरमिनमातामितीट्सकौ। अदादासीत्॥ ञिष्वप् शये। सर्वविधिभ्यो लुग्विधिर्बलीयान् इति यङो लुक्। लुका लुप्ते प्रत्ययलक्षणत्वाभावात् स्वपिस्वमिव्येञां यङीति विधीयमानं यत्संप्रसारणं तन्न भवति (क)। रुदादेश्चतुर्णां हसादेरिति गणनिर्दिष्टत्वादिण। आत इति पूर्वस्यात्वम्। ईट्पक्षे सास्वपीति–ईडभावे सास्वप्ति, सास्वप्तः, सास्वपति। सास्वप्यात्। सास्वपीतु—सास्वप्तु—सास्वप्तात्। हौ झसाद्धिरिति धिः। झबे जबा इति बः। सास्वब्धि। रुधादिगणनिर्दिष्टत्वाद्दिस्योरीडटौ न। असास्वपीत्—असास्वप। सास्वपांचकार। आशिषि यजामिति संप्रसारणम्। सासुप्यात्। सास्वपिता। सास्वपिष्यति। असास्वपिष्यत्। अतो हसादेरिति वा वृद्धिः। असास्वापीत्–असास्वपीत्॥ कॄ विक्षेपे। आत इति पूर्वस्यात्वम्। ऋदन्तानामिति तपरत्वाद् रुक्रिक्रीको न भवन्ति ईट् पक्षे चाकरीति–ईडभावे चाकर्ति, ऋत इरितीर्। य्वोर्वि हसे इति दीर्घः। चाकीर्त्तः, ह्रेरित्यन्तोऽत्। चाकिरति। चाकीर्यात्। चाकरीतु—चाकर्तु—चाकीर्तात्। चाकीर्हि। अचाकरीत्–ईडभावे दिस्योर्हसादिति दिप्सिपोर्लोपः। अचाकः।

---

(क) प्रत्ययलोपे प्रत्ययलक्षणमित्युक्तेऽपि लुकि न तन्निमित्तमित्युक्तत्वात्प्रत्ययलक्षणाभाव इति बोध्यम्।

उसि गुणः। अचाकरुः। चाकरांचकार। चाकीर्यात्। चाकरिता। चाकरिष्यति। अचाकरिष्यत्। लुङि 'ञित्पे' इति ञित्त्वात् धातोर्नामिन इति वृद्धिः। अचाकारीत्॥ तॄ प्लवनतरणयोः। तातरीति—तातर्ति। तातीर्यात्। तातरीतु-तातर्तु—तातीर्त्तात्। अतातरीत्—अतातः। तातरांचकार। तातीर्यात्। तातरिता। तातरिष्यति। अतातरिष्यत्। अतातारीत्। अतातारिष्टाम्॥ ऋ गतौ। भौवादिकजौहोत्यादिकयोर्ग्रहणम्। अस्मात् सूचिसूत्रिमूत्रीति यङ् द्वित्वं च। केचित्तु यङीति पूर्वस्य गुणमाहुः। अन्ये तु र इति पूर्वस्यात्वमित्याहुः फले तु न विशेषः। ऋदन्तानामिति पूर्वस्य रुग्रिग्रीगागमाः। अरर्ति—रिग्रीकोस्तु तुल्यं रूपम्। असवर्णे स्वरे पूर्वस्येतीय्। अरियर्ति२—'ईट्पक्षे अररीति-अरियरीति२, तसि अर्र्रतः-अरियृतः२, द्वेरित्यन्तोऽत्। ऋ रमिति रः॥ रि लोपो दीर्घश्चेति रलोपपूर्वदीर्घो। आरति-परत्वात्पूर्वमिय ततो रत्वम्। अरियूति। मध्यमपुरुषे तु अरर्षि—अरियर्षि-ईट्पक्षे-अररीषि, अरियरीषि रिग्रीकोस्तुल्यं रूपम्। अर्र्रथः-अरियृथः, उत्तमपुरुषे तु अरमि—अरियर्मि, ईट्पक्षे अररीमि-अरियरीमि, अर्र्रवः—अरियृवः। लिङि अर्र्रयात्-अरियृयात्। लोटि अरर्तु-अरियर्तु-ईट्पक्षे अररीतु—अरियरीतु। अर्र्रतात्—अरियृतात्, अर्र्रताम् अरियृताम्। आरतु—अरियतु। अर्र्रहि—अरियृहि। उत्तमे तु अरराणि-अरियराणि। अरराव—अरियराव। लङि दिस्योर्हसादिति दिप्सिपोर्लोपः। आरः— आरियः। पक्षे आररीः—आरियरीः २ उत्तमे तु आररम्—आरियरम्, आर्र्रव-अरियृव। लिटि अररांचकार-अरियरांचकार २। आशिषि लिङि श्तिपानिर्दिष्टत्वाद्गुणोऽर्ति संयोगाद्योरिति गुणो न। 'यादादौ' इति रिङ्। रि लोपो दीर्घश्चेति रलोपपूर्वदीर्घो। आरियात्—आरिरियात् २। लुटि अररिता-अरियरिता। लृटि अररिष्यति-अरियरिष्यति। लृङि आररिष्यत्—आरियरिष्यत्। लुङि ञित्त्वात् धातोर्नामिन इति वृद्धिः। आरारीत्—आरियारीत्। गृहू ग्रहणे। द्वेः स्वरेऽपीति गुणनिषेधे ऋदन्तानामृदुपधानां चेति रुग्रिग्रीकः। ईट्पक्षे जर्गृहीति-ईडभावे हो ढ इति ढत्वं तथोर्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपः। जर्गढि। जर्गृढ इत्यत्र ढि ढ इति ढलोपे पूर्वस्य दीर्घो न अनृत इत्युक्तत्वात्। जर्घर्क्षि। उत्तमे जर्गृहीमि—जर्गर्ह्मि। जर्गृह्यात्। जर्गृहितु-जर्गढु-जर्गृढात्, जर्गृढाम्, जर्गृहतु। झसाद्धिर्हेरिति धिः। जर्गृढि। उत्तमे तु द्वेः स्वरेऽपीति गुणो न। जर्गृहाणि। लङि अजर्गृहीत्। इडभावे आदिजबानामिति घः। अजर्घर्ट्, अजर्गृढाम्, अजर्गृहुः। अजर्गृहीः -अजर्घर्ट्, अजर्गृढम्, अजर्गृढ। द्वेः स्वरेऽपीति न गुणः। अजर्गृहम्, अजर्गृह्व, अजर्गृह्म। जर्गर्हाञ्चकार। जर्गृह्यात्। लुटि अनुबन्धनिर्दिष्टत्वाद् ऊदितो वेतीड्विकल्पो न। जर्गृहिता। जर्गहिष्यति। अजर्गहिष्यत्। अजर्गर्हीत्, अजर्गर्हिष्टाम्॥ ग्रह उपादाने। यङो लुका लुप्तत्वात्तन्निमित्तं ग्रहां ङिति चेति संप्रसारणमिह न भवति आत इति पूर्वस्यात्वम्। जाग्रहीति। ईडभावे हो ढ इति ढत्वम्। तथोर्ध इति धत्वं ष्टुत्वं च। ढि ढो लोपो दीर्घश्चेति ढलोपपूर्वदीर्घो। जाग्राढि। तसादौ प्रत्यये ङित्त्वाद् ग्रहां ङिति चेति संप्रसारणम्। तस्य संप्रसारणस्यासिद्धं बहिरङ्गमन्तरङ्गे इत्यसिद्धत्वाद् रुग्रिग्रीगागमा न भवन्ति। जागृढः। सिपि जाग्रहीषि। ईडभावे हो ढ इति ढत्वम्। षढोः कः से इति कत्वम्। आदिजबानामिति घः। जाघ्रक्षि

जाग्रह्यात् । जाग्रहीतु–जाग्राढु–जाढ्ढाढ् । अजाग्रहीत्–अजाग्रट् । जाग्रहांचकार । जागृ-ह्यात् । लुटि ईटो ग्रहामिति सूत्रे एकस्वरस्य ग्रहेरित्युक्तत्वात् । यङ्लुकि दीर्घो न । माधवस्तु दीर्घमाह तद्भाष्यादिविरुद्धम् (क) । जाग्रहिता । जाग्रहिष्यति । अजाग्रहिष्य-त् । अजाग्रहीत् ॥ ह्म्यन्तेति न वृद्धिः । गृधु अभिकाङ्क्षायाम् । ढ्वेः स्वरेऽपीति गुणनि-षेधः । ऋदन्तानामृदुपधानां चेति रुग्रिग्रीगागमाः । जर्गृधीति । ईडभावे तथोर्ध इति धः । झबे जबा इति दः । जर्गद्धि । सिपि जर्गृधीषि । ईडभावे आदिजबानामिति घः । खसे चपा इति तः । जर्गर्त्सि । जर्गृध्यात् । जर्गृधीतु–जर्गर्द्धु–जर्गृद्धात् । अजर्गृधीत् । ईडभावे उपधाया लघोरिति गुणः । दिस्योरिति दिप्सिपोर्लोपः । आदिजबानामिति घः । अजर्धत्, अजर्गृद्धाम्, अजर्गृधुः । सिपि द इति दस्य रः । रि लोपोदीर्घश्चेति रलोपपूर्व-दीर्घौ । अजर्घाः–अजर्घर्त् । जर्गृद्धांचकार । जर्गृध्यात् । गर्जर्धिता जर्गर्धिष्यति । अज-र्गर्धिष्यत् । अजर्गर्धीत् ॥ प्रच्छ ज्ञीप्सायाम् । आत इति पूर्वस्यात्वम् । पाप्रच्छीति । ईडभावे छशषेति षत्वं ष्टुत्वम् । पाप्रष्टि । तसादौ प्रत्यये ग्रहां क्ङिति चेति संप्रसारणं न श्तिपा निर्दिष्टत्वात् ॥ २-३ ॥

( त० ) पितः स्स्मो वेट् ॥ स्स्म इत्यत्रापि द्वितकारको निर्देशः । एको दका-रजः ॥ अपास्पा ॥ इति ॥ द इति रत्वे रिलोप इति दीर्घः । ऋदन्तानामित्यादिरुगा-दीनां त्रयाणामपि कित्वात्त्रयोऽप्यागमाः पर्यायेण भवन्ति । रुक उकार उच्चारणार्थः । **च-र्करीति** ॥ ईकारे रूपत्रयं तदभावे च रूपत्रयमिति षट् तिपि ॥ **जंगत** इति ॥ लोपस्त्वनु-दात्ततनामिति मलोपः ॥ **जंगन्मीति** ॥ म्वोश्चेति मस्य नः । **जंघनीति** ॥ पूर्ववत् ह-न्तेरिति घत्वम् । **आशिषि वध्यादिति** ॥ द्विरुक्तस्य वधादेशात् द्वित्वं न । एकस्यां व्यक्तावेकलक्षणं सकृदेव प्रवर्तत इत्युक्तेः(ख) ॥ **चञ्चूर्तीति** ॥ चर गतिभक्षणयोः । चर-फलोरत उदिति उत्वे य्वोर्वि हस इति दीर्घः ॥ **चंखात** इति ॥ जनसनेत्यात्वम् । **यो-योतीति** । अद्विरुक्तस्येत्यनुवृत्तरोरावित्यौत्वं न । **दाप्त इति** । दादेरित्यकारलोपः ॥ **देहीति** ॥ दां हावित्येत्वलोपौ ॥ **चाकर्त्तीति** ॥ ऋदन्तानामित्यत्र तपरकरणान्न रुगा-दयः ॥ **अरर्त्तीति** ॥ गुणो द्वितीयस्य अरिर्यति । पक्षद्वयेऽपि इयादेशे तु समम् ॥ **जा-ग्रहीतीति** ॥ ईकाराभावे ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि । केश्चिदत्र संप्रसारणे जर्गृही-तीत्यादि रूपमुक्तं तदनाकरमित्युपेक्षितम् । **बहिरङ्गत्वे** इति ॥ प्रत्ययाश्रितं बहिरङ्गमि-त्युक्तेः ॥ **अजर्घा** इति ॥ द इति रत्वे रिलोप इति दीर्घः । तसादौ न संप्रसारणमेतद्भाजं तु श्तिपा निर्देशः । उक्तं च "श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ इति (ग) ॥ २-३ ॥

**( क्ङिति झसे कौ अमे च छस्य सो वस्य ऊः )** पाप्रष्टः, पाप्रच्छति । पाप्रश्मि, पाप्रछ्वः, पाप्रश्मः ॥ **हय गतौ** । जाहयीति । यव-

---

( क ) **तद्भाष्यादिविरुद्धमिति** । आदिपदेन कैयटहरदत्तौ गृह्येते ।

( ख ) लक्षे लक्षणं सकृदेव प्रवर्त्तते, सकृच्छास्त्रं प्रवर्त्तते चेत्याद्युक्तयः ।

( ग ) श्लोकस्यास्य व्याख्यानं सुबोधिनीटीकायां–सम्यक् प्रतिपादितमस्ति, तत्र द्रष्टव्यम् ।

इति टिप्पण्यां यङ्लुगन्तप्रक्रिया ।

योर्वसे हकारे च लोपः ॥ जाहति, जाहतः, जाहयति । जाहयिषि- जाहसि । जाहामि, जाहावः, जहामः । अजाहयीत् । अजाहत् । जाहय्यात् ॥ **हर्य गतिकान्त्योः ।** जाहर्यीति--जाहर्ति:, जाहर्तः, जाहर्यति । जाहर्हि । अजाहर्यीत्- अजाहः, अजाहर्ताम्, अजाहर्युः ॥ ४ ॥

( सु० ) **क्ङिति झसे कौ जमे च छस्य सो वस्य ऊः** ॥ धातोश्छस्य शकारः स्यात् वकारस्य ऊश्च क्ङिति ङिति झसे परे क्विपि जमे च परे । भाष्ये उक्तं च्छ्वोरित्यनेन ऊभाविनां यकारवकारान्तानां धातूनां यङो लुङ्न भवतीति । मव्य बंधने यान्तः तेवृ देवृ देवने इत्यादिवान्तश्च ऊभावी । ज्वरत्वरेति ऊभाविनोः स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति । छस्य शः छशपेति षः । पाप्रष्टः । पाप्रच्छति । पाप्रच्छीषि—ईडभावे छशपेति षः ॥ षढोः कः से इति कः । पाप्रक्षि । उत्तमे तु पाप्रश्मि । पाप्रच्छ्यात् । पाप्रच्छीतु—पाप्रष्टु—पाप्रष्टात् । हौ झसाद्धिर्हेरिति धिः । क्ङिति झसे इति छस्य शः । छशपेति षः । झसे इति षस्य डः ष्टुत्वं च । पाप्रड्ढि । अपाप्रच्छीत्—ईडभावे दिस्योरिति दिप्सिपोर्लोपः । छशपेति षः । षोड इति डः । अपाप्रट्, अपाप्रष्टाम्, अपाप्रच्छुः । अपाप्रच्छीः, अपाप्रट्, अपाप्रष्टम्, अपाप्रष्ट । अपाप्रच्छम् , अपाप्रच्छ्व, अपाप्रच्छ्म । पाप्रच्छाञ्चकार। पाप्रच्छ्यात् । पाप्रच्छिता। पाप्रच्छिष्यति । अपाप्रच्छिष्यत् । अपाप्रच्छीत् । हय गतौ । जाहयीति–ईडभावे यवयोर्वसे इति यलोपः । जाहति । उत्तमे तु जाहयीमि—यवयोरिति यलोपे ष्मोरित्यात्वम् । जाहामि । जाहय्यात् । जाहयीतु—जाहतु—जाहतात् , जाहताम् , जाहयतु । जाहहि—जाहतात् । उत्तमे तु जाहयानि । लङि अजाहयीत्—अजाहत् । जाहयांचकार । जाहय्यात् । जाहयिता । जाहयिष्यति । अजाहयिष्यत् । ह्रम्यन्तेति न वृद्धिः । अजाहीयत् । हर्य गतिकान्त्योः । आत इत्यात्वम् । जाहर्यीति—ईडभावे यवयोर्वसे इति यलोपः । जाहर्ति । जाहर्य्यात् । जाहर्यीतु–जाहर्तु—जाहर्तात् । अजाहर्यीत् । अजाहर्यीत्—अजाहः । जाहर्याञ्चकार । जाहर्य्यात् । जाहर्यिता । जाहर्यिष्यति । अजाहर्यिष्यत् । अजाहर्यीत् ॥ ४ ॥

( त० ) **जाहर्तीति** ॥ यवयोरिति यलोपः ॥ ४ ॥

**( ज्वरत्वरस्त्रिव्यविमवामुपधावकारयोरूः कौ झसादौ जमादौ हकारे च प्रत्यये )** जाज्वरीति--जाजूर्ति, जाजूर्तः जाज्वरति जाज्वर्वः, जाजूर्मः । अजाज्वरीत् , अजाजूः ॥ तात्वरीति--तातूर्ति । अतात्वरीत्-अतातूः॥ सेस्रिवीति सेस्रोता । सेस्रीव्यात् । असेस्रिवीत्-असेस्रोत् ॥ **वम बन्धने** । मामवीति--मामोति, मामूतः,मामवति । मामूवः, मामूमः । मामूहि, मामवानि । अमामवीत्--अमामोत् । सिपि अमामवीः--अमामोः । अमामवम् , अमामाव, अमामूम ॥ **तुर्वी थुर्वी दुर्वी धुर्वी हिंसायाम्** । तोतूर्वीति ॥५॥

( सु० ) **ज्वरत्वरस्त्रिव्यविमवामुपधावकारयोरूः कौ झसादौ जमादौ**

इकारे च प्रत्यये ॥ ज्वर रोगे । ञित्वरा संभ्रमे । स्त्रिवु गतिशोषणयोः । अव पालने। मव बन्धने । ज्वरादेरुदाहरणं क्विपि जूः, जुरौ, जुरः । झसादौ तु जूर्तिः । जूर्णः । जूर्णवान् ॥ तूः, तुरौ, तुरः । तूर्तिः । तूर्णवान् ॥ स्रू, स्रुवौ, स्रुवः । स्रूतिः ॥ ऊः उवौ, उवः ॥ ऊतिः ॥ मूः, मुवौ, मुवः । मूतिः । मूतः । ज्वर । आत इति पूर्वस्यात्वम् । जाज्वरीति । ईडभावे उपधावकारयोरूः । जाजूर्ति, जाजूर्तः, जाज्वरति । जाज्वर्यात् । जाज्वरीतु—जाजूर्तु—जाजूर्तात् । अजाज्वरीत्—अजाजूः। जाज्वरांचकार । जाज्वर्यात्। जाज्वरिता । जाज्वरिष्यति । अजाज्वरिष्यत् । अतो हलादेरिति वा वृद्धिः । अजाज्वारीत्—अजाज्वरीत् ॥ ञित्वरा संभ्रमे । तात्वरीति—तातूर्ति । तात्वर्यात् । तात्वरीतु—तातूर्तु—तातूर्तात् । अतात्वरीत्—अतातुः । तात्वरांचकार। तात्वर्यात्। तात्वरिष्यति । अतात्वरिष्यत् । अतात्वारीत्—अतात्वरीत् ॥ स्त्रिवु । सेस्त्रिवीति—सेस्त्रोति । सेस्त्रीव्यात् । सेस्त्रिवीतु—सेस्त्रोतु—सेस्रुतात् । असेस्त्रिवीत्—असेस्त्रोत् । सिपि । असेस्त्रोः । सेस्त्रवाञ्चकार । सेस्त्रीव्यात् । सेस्त्रेविता । सेस्त्रेविष्यति । असेस्त्रेविष्यत् । असेस्त्रेवीत् । मव । मामवीति । इडभावे ऊत्वे कृते गुणः । मामोति । उत्तमे तु मामवीमि-मामोमि। यवयोर्वसे इति वलोपः । व्मोरित्यात्वम् । मामावः, मामूमः । मामव्यात् । मामवीतु-मामोतु—मामूतात् । हौ मामूहि । अमामवीत्—अमोमोत् । उत्तमे तु अमामवम्, अमामाव, अमामूम । अमामावीत् ॥ तुर्वी हिंसायाम् । य्वोर्वि हसे इति दीर्घः । यङोति पूर्णस्य गुणः । तोतूर्वीति । ईडभावे तोतूर्ति ॥ ९ ॥

(त०) उपधावकारयोरिति । उपधा च वकारश्च उपधावकारौ तयोः द्वयोः स्थाने ऊरित्यर्थः ॥ मामाव इति अत्र झसादित्वाभावेन ऊत्वाभावः । यवयोरिति वलोपे दीर्घः॥९॥

## ( रेफाच्छ्वोर्लोपः क्वौ झसादौ अमादौ हे च प्रत्यये )

तोतोर्ति, तोतूर्तः, तोतूर्वति । तोतूर्वीषि—तोतोर्षि । तोतूर्वः, तोतूर्मः । सिपि अतोतूर्वीः--अतोतोः ॥ तोथोर्ति, तोथूर्तः ॥ दोदोर्ति ॥ दोधोर्ति ॥ मुर्च्छा मोहसमुच्छ्राययोः । मोमूर्च्छीति--मोमोर्ति, मोमूर्त्तः, मोमूर्च्छति । मोमूर्मः । अमोमूर्च्छीत् ॥ ६ ॥ इति यङ्लुगन्तप्रक्रिया ॥१४॥

( छ० ) रेफाच्छ्वोर्लोपः क्वौ झसादौ अमादौ हे च प्रत्यये ॥ रकारात्परयोर्धातोः छकारवकारयोर्लोपः स्यात् क्विपि परे झसे ङमे हे च । क्वावुदाहरणम् । तुर्वी । तूः, तुरौ, तुरः ॥ धुर्वी । धूः, धुरौ, धुरः॥ मुर्च्छा । मूः, मुरौ, मुरः । झसादौ तु रेफाच्छ्वोरिति वलोपः । उपधाया लघोरिति गुणः । तोतोर्ति । यद्यप्यत्र यवयोर्वसे इत्यनेन वलोपः सिध्यति तथापि तोतूर्तं इत्यादौ वलोपार्थं रेफाच्छ्वोर्लोप इत्युपन्यस्तम् । अन्यथा तत्र यवयोर्वसे इति लोपं वाधित्वा वस्य क्ङिति झसे इति ऊः स्यात् । तोतूर्व्यात् । तोतूर्वीतु-ततोर्तु-तोतूर्तात् । अतोतूर्वीत्—अततोः । लुङि अतोतूर्वीत् । थुर्वी धुर्वी हिंसायाम् । तोथूर्वीति—तोथोर्ति । तोथूर्व्यात् । तोथूर्वीतु—तोथोर्तु-तोथूर्तात् । अतोथूर्वीत्-अतोथोः । लुङि अतोथूर्वीत् ॥ धुर्वी । दोधूर्वीति-दोधोर्ति । दोधूर्व्यात् । दोधूर्वीतु-दोधोर्तु-दोधूर्तात् । अदोधूर्वीत्-अदोधोः। लुङि अदोधूर्वीत् ॥ मुर्च्छा मोहसमुच्छ्राययोः ।

मोमूर्छीति । इडभावे रेफाच्छ्वोरिति छलोपः । उपधाया लघोरिति गुणः । मोमोर्ति । मोमूर्च्छ्यात् । मोमूर्च्छीतु—मोमोर्तु—मोमूर्त्तात् । अमोमूर्च्छीत्—अमोमोः । लुङि । अमोमूर्छीत ॥ अज गत्यादौ । अजेरचतुर्षु वाति यङि विवक्षिते वीआदेशः । वेवीयते । अस्य यङ्लुङ् नास्ति लुका अपहारे विषयत्वासंभवेन वीभावस्याप्रवृत्तेः ॥ ६ ॥

इति सुबोधिन्यां यङ्लुगन्तप्रक्रिया ॥ १४ ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगाद्यङ्लुक्प्रसाधनम् ॥

इति तत्त्वदीपिकायां यङ्लुगन्तप्रक्रिया ॥ १४ ॥

# अथ नामधातुप्रक्रिया ॥ १५ ॥

**नाम्नो य ई चाऽस्य (क)** ॥ नाम्न इच्छायामर्थे यप्रत्ययो भवत्यवर्णस्य च ईकारः ॥ आत्मनः पुत्रमिच्छति पुत्रीयति ॥ क्वचित्स्वरवद्यकारः ॥ गामिच्छति गव्यति । गव्याञ्चकार ॥ नाव्यति । नाव्याञ्चकार ॥ त्वामिच्छति त्वद्यति ॥१॥

**(हसाद्यस्य लोपो वाऽनपि नामधातौ)** त्वदांचकार—त्वद्यांचकार ॥ मामिच्छति मद्यति । युष्मद्यति । अस्मद्यति ॥ २ ॥

(सु०) **नाम्नो य ई चास्य** ॥ आद्भुवीत्यतः कर्मणीति इच्छायात्मन इत्यत इच्छायामिति आत्मन इति चानुवृत्तम् । कर्मणि वर्तमानान्नाम्नो यप्रत्ययः स्यात् ॥ आत्मशब्दस्तु परव्यावृत्त्यर्थस्वशब्दपर्यायो गृह्यते । इच्छायाश्च क्रियात्वेन स्वाश्रयः कर्ताक्षिप्तः । स चेदिष्यमाणां वस्तु स्वसंबन्धित्वेनाऽपेक्षते तदा यप्रत्यय आत्मनः स्वसंबन्धित्वं साक्षाद् ग्राह्यम् । तेन यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न यः । महान्तं पुत्रमिच्छतीत्यत्रापि न यः । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनात् । य इति सप्तम्या विपरिणम्यते । अवर्णान्तस्य नाम्न ईत्वं च यप्रत्यये परे । समासप्रत्ययोरिति विभक्तेर्लुक् । स धातुरिति धातुत्वात्तिबादिः । पुत्रीयति । पुत्रीयेत् । पुत्रीयतु । अपुत्रीयत् । कासादिप्रत्ययादित्याम् । यत इत्यलोपः । पुत्रीयाञ्चकार । यत इत्यलोपः । पुत्रीयात् । पुत्रीयिता । पुत्रीयिष्यति । अपुत्रीयिष्यत् । अपुत्रीयीत् ॥ गामिच्छति गव्यतीत्यत्र 'य्वोर्लोपश्च वा पदान्ते' इति तु न भवत्यपदान्तत्वात् । अनपि संनिपातपरिभाषया यप्र-

( क ) ननु "नाम्नो य ई" इति सूत्रे नाम्न इति ग्रहणं व्यर्थम्, पूर्वेण धातोः सविधानात्परिशेषात्तल्लभात् । न च सिबन्तादपि प्राप्नोतीति वाच्यमिष्टापत्तेः । न च वाच्यति मरुत्यतीत्यादिस्थले कुत्वजवादिप्रसङ्ग इति वाच्यम्, अप्ययोरादित्यत्र जवाऽकरणेन ये पदकार्याभावस्य ज्ञापितत्वाच्च राजीयतीत्यत्र तु ज्ञापकासिद्धं न सर्वत्रेति न लोपः सिद्ध्यति, नाम्नो य पक्षे तु कुत्वाद् यद् भावो युक्त एव, न चात्र पक्षे राजीयतीत्यत्र न लोपाप्रसङ्गः ओर्वमोरित्यतो लोप इति, कृञो ये इत्यतो ये इति, ऋसंयोगादित्यतो नेति, चानुकर्ष्य 'वाक्यभेदेन व्याख्येयम् । नेति स्वरूपपरं शब्दाधिकारात्षष्ठ्या विपरिणम्ययितव्यम् । तेन नाम्नो वस्य लोपे ये इति लाभादित्थं व्यर्थं नाम्न इति चेत्, उच्यते एकत्वस्य विवक्षणार्थं नामग्रहणम्, तेन बहुनामपदात् न य प्रत्ययः । महान्तं पुत्रमिच्छति इति । अन्यथा महापुत्रीयति स्यादिति ।

त्ययकारस्यानपि च हसादिति लोपो न । यकारे परे वान्तादेशविधानात् । वकारो यस्य लोपस्य निमित्तं न भवतीति भावः (क) । गव्याञ्चकार । गव्यिता । त्वामिच्छति त्वन्मदेकत्वे इति त्वन्मदादेशौ । त्वद्यति । यत इत्यलोपः । अनपि च हसादिति यलोपः ॥ **हसाद्यस्य लोपो वानपीति ॥** हसान्तान्नाम्नो यस्य लोपो वा अनपि परे । त्वदाञ्चकार । मामिच्छति मद्यति । युवां युष्मान् वेच्छति युवावाविति सूत्रे विभक्तावित्युक्तं ततो विभक्तिपरत्वाभावान्न युवावौ एकार्थत्वाभावात् त्वन्मदावपि न युष्मद्यति। एवमस्मद्यति १-२

(त०) **नाम्नोय ॥** अत्राद्भुवीत्यतः कर्मणीत्यनुवर्त्य कर्मणि वर्तमानान्नाम्न इति बोध्यम् । तेन पुत्रेणेच्छतीत्यादौ न । आत्मन इत्यनुवर्तते । स च न चेतनद्रव्यवाची किंतु परव्यावृत्त्यर्थस्वशब्दपर्यायः । तेन घटादेश्चेतनत्वेपि घटीयतीत्यादि भवत्येव इच्छया कर्ताक्षिप्यते । स चेद्ष्यमाणं वस्तु स्वसंबन्धित्वेनापेक्षते । तेन परस्य पुत्रमिच्छतीत्यत्र न । तच्च साक्षादेव । तेन यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न । स्वसंबन्धित्वं चेष्यमाणेन रूपेण विवक्षितं तेन स्वस्य पुत्रं परस्य दासमिच्छतीत्यत्र न । अत्र यदिष्यमाणं दासत्वं तच्च न स्वसम्बन्धि । नाम्न इति तूत्तरार्थम् । धातुवारणाय तदिति चेत् धातोः सविधानेन परिशेषान्नाम्नो लाभात् । अथ सिबन्तादपि स्यात् इष्टत्वात् । न च वाच्यतीत्यादौ जबादिप्रसंगः स्यादिति वाच्यम् । अप्ययोरादित्यत्र जबाकरणेन ये पदकार्याभावस्य ज्ञापितत्वात् राजीयतीत्यादौ तज्ज्ञापकसिद्धस्यासार्वत्रिकत्वान्न लोपः ॥ ननु महान्तं पुत्रमिच्छतीत्यत्रानेकस्मान्नाम्नो यबाधनार्थं तदिति चेन्न । पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति पुत्रस्यैकदेशत्वेनान्वयाभावात् । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनाच्च । एवं च कर्मत्वद्योतकविभक्त्यभावेन कथं तद्बाध इति दूषणपरिहाराय यत्रानेककारकसंभवस्तत्र कारकस्य विशेषबोधार्थं विभक्त्यपेक्षणमिति सिद्धान्तानुसारेण क्लेशोऽपि न कार्यः । **आत्मनः पुत्रमिच्छतीति ॥** पुत्रो मे स्यादितीच्छतीत्यर्थः ॥ **गव्यतीति ॥** अवर्णाभावान्नेत्वम् ॥ **त्वद्यतीति ॥** त्वामिच्छति ॥ **युष्मद्यति ॥** युवां युष्मान्वेच्छतीति वाक्ये त्वदादेशो न एकार्थत्वाभावात् । युवावौद्विवचन इति स्याद्यभावान्न ॥ १-२ ॥

( **काम्यश्च** ) पुत्रकाम्याञ्चकार ॥ ३ ॥

( सु० ) **काम्यश्च । नाम्न इच्छायामर्थे काम्यप्रत्ययः स्यात् ॥** आत्मनः पुत्रमिच्छति पुत्रकाम्यति । यत इत्यलोपः । पुत्रकाम्याञ्चकार । पुत्रकाम्यिता । इहानपि च हसादिति यलोपो न । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषया (ख) ॥ ३ ॥

( **धनस्य नेकारो गार्द्ध्ये** ) धनायति—अन्यत्र धनीयति (ग) ॥४॥

---

( क ) **भाव इति** । यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य । तथा हि—गव्याञ्चकरेत्यादौ यमाश्रित्य गोशब्दौकारस्यावादेश उत्पन्नः । सः विधिः सन्निपातः।।अतः सन्निपातोऽयंविधिः 'अनपि च हसाद्' इति यकारस्य विघातको न भवतीत्यर्थः ।

( ख ) **इहेति** । पुत्रकाम्यांचकारेत्यादावित्यर्थः । यलोपमाशंक्य वारयति—**अर्थवद् ग्रहणे इति** । समुदायो हि अर्थवान् तदेकदेशोऽनर्थक इति तदर्थः ।

( ग ) केचिदत्र "**अशनस्य बुभुक्षाया**"मिति पठन्ति । तेन अशनायति । बुभुक्षायां किम् ?

( सु० ) धनस्य नेकारो गार्द्ध्ये ॥ गार्द्धोऽभिलाषुकस्तस्य भावे गार्द्ध्ये यण् । सत्यपि धने पुनर्धनमिच्छतीति धनायति 'ये' इति दीर्घः यश्च दरिद्रः सन् धनमिच्छति तत्र धनीयति ॥ ४ ॥

( त० ) गार्द्धय इति ॥ गर्द्धो लोभातिशयः ॥ धनायतीति ॥ सत्येव धने भूयो धनमिच्छतीत्यर्थः ॥ धनायतीति ॥ दरिद्रः सन् धनमिच्छतीत्यर्थः ॥ ४ ॥

( उदकस्योदन् पिपासायाम् ) उदन्यति -अन्यत्रोदकीयति । गीर्यति । गिराञ्चकार–गिर्याञ्चकार ॥ पूर्यति ॥ दिवमिच्छति । दिव्यति । (क) ॥ अमुमिच्छति अदस्यति । ऋतो रिङ् ॥ कर्त्रीयति ॥ ५ ॥

( सु० ) उदकस्योदन् पिपासायाम् ॥ यश्च सद्य एव पातुमुदकमिच्छति तत्र तु उदन्यति । यश्च कालान्तरोपयोगार्थं पातुमुदकमिच्छति तत्र उदकीयति ॥ गिरमिच्छति गीर्यति 'य्वोर्वि हसे' इति दीर्घः । पुरमिच्छति पूर्यति । 'य्वोर्वि हसे' इति सूत्रे धातोरिकारोकारयोरित्युक्तत्वान्नेह । दिवमिच्छति दिव्यति । दिवु धातोः क्विपि क्विडति झसे कार्विति वस्योत्वे द्यूरिति भवति । यप्रत्यये द्यूयतीति । कर्तारमिच्छति ऋतो रिङिति रिङ् । य इति दीर्घः । कर्त्रीयति ॥ ५ ॥

( त० ) पिपासायामिति ॥ पातुमिच्छा पिपासा तस्याम् उदन्यतीति । पातुमिच्छतीत्यर्थः । अन्यत्र तदभावे ॥ दिव्यतीति ॥ धातुत्वाभावान्न दीर्घः ॥ ५ ॥

(हसात्तद्धितयस्य लोपो ये च्वौ च) गार्गीयति ॥ वाच्यति ॥ कवीयति । समिध्यति । समिधाञ्चकार–समिध्याञ्चकार । समिधिता–समिध्यिता॥६॥

( सु० ) हसात्तद्धितयस्य लोपो ये च्वौ च ॥ हसादुत्तरस्य प्रत्ययकारस्य लोपो भवति यप्रत्यये च्विप्रत्यये च परे ॥ ण्यायनणिति ण्यः । च्वौ गार्गीभवति । गार्ग्यमिच्छति गार्गीयति ॥ वाचमिच्छति अप्ययोरादित्यत्र चपा अबे जबा इत्यकरणेन क्वचित्प्रत्यये पदकार्यं नेति ज्ञापितम् । तेन पदत्वाभावात् चोः कुरिति कुत्वं न (ख) । वाच्यामि ॥ आत्मनः कविमिच्छति । 'ये' इति दीर्घः । कवीयति ॥ समिधमिच्छति समिध्यति । हसाद्यस्येति आदेः परस्येति यलोपः । यतः इत्यलोपः । तस्य लोपः । तस्य स्थानिवत्त्वादुपधाया लघोरिति गुणो न । समिधिता–समिध्यिता ॥ ६ ॥

( मान्ताव्ययाभ्यां यो न ) किमिच्छति । इदमिच्छति । स्वरिच्छति । उच्चैरिच्छति ॥ ७ ॥

---

अशनीयति । यस्तु कालान्तरोपयोगार्थमशनमिच्छति तत्रेत्यर्थः । अन्ये त्वाहुः–अशनायतीत्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षादिकमेवार्थ इति ।

( क ) यत्तु—पुरमिच्छतीति पुर्यतीति माधवेनोक्तम्, तच्चिन्त्यम्, पुर्गिरोः साम्यात् । दीव्यतीति दीर्घस्तु प्राचः प्रामादिक एव 'दिवोडिव्' इति डिव्प्रत्यये धातुत्वाभावात् । एवञ्च—यत्प्रसादकृतोक्तं दिवेः क्विबन्तस्य धातुत्वमस्त्येवेति, तन्न, क्विबन्तत्वे हि तत्र ऊः स्यात् ॥

( ख ) वाच्यतीत्यत्र वाचमिच्छतीति अन्तर्वर्त्तिविभक्त्याश्रयेण पदान्तत्वात् 'चोः कुः' इति कुत्वं कथं नेति शंकायामुत्तरयति—अप्ययोरादिति । अयमर्थः—अप् च यश्च अप्यौ तयोः, अप्ययोरिति वक्तव्ये जबाकरणं यकारे परे अन्तर्वर्त्तिविभक्त्या क्वचित्पदत्वं नेत्यस्य ज्ञापकमिति ।

( सु० ) मान्ताव्ययाभ्यां ये न ॥ मान्तप्रकृतिकान्नाम्नोऽव्ययाच्च यो न । किमिच्छति । स्वरिच्छति ॥ ७ ॥

( त० ) मान्ताव्ययाभ्यामिति ॥ मान्तमिह नामैव न तु सिबन्तम् । अन्यथा इदमिच्छतीत्यत्रापि मान्तत्वान्न स्यात् (क) ॥ ७ ॥

**( अश्ववृषयोर्ये सुक् मैथुनेच्छायाम् )** अश्वस्यति वडवा । वृषस्यति गौः ॥ ८ ॥

( सु० ) अश्ववृषयोर्ये सुक् मैथुनेच्छायाम् ॥ अश्वस्यति । मैथुनार्थमश्वमिच्छतीत्यर्थः । वृषमिच्छति मैथुनार्थं वृषस्यति ॥ ८ ॥

( त० ) अश्ववृषयोरित्यादि ॥ अश्ववृषभेच्छा यदा मैथुनार्था न त्वारोहणाद्यर्था तदैव सुगित्यर्थः । अन्ये तु "इति रामो वृषस्यन्तीम्" इत्यादिप्रयोगदर्शनात्परित्यक्तप्रकृतार्था मैथुनेच्छैवार्थ इत्याहुः (ख) ॥ ८ ॥

**(क्षीरलवणयोर्लालसायां सुक्)** क्षीरस्यति बालः । लवणस्यत्युष्ट्रः ॥९॥

( सु० ) क्षीरलवणयोर्लालसायां सुक् ॥ लालसायामुत्कटेच्छायां सुक् ये ॥ क्षीरमिच्छति क्षीरस्यति । लवणस्यति ॥ ९ ॥

( त० ) लालसायामिति ॥ तृष्णातिरेको लालसा । क्षीरलवणविषय इच्छातिरेको यदाभ्यवहारार्थो न तु होमाद्यर्थस्तदेत्यर्थः ॥ ९ ॥

**( नाम्नो ये लालसायां सुगसुकौ )** दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति । यशस्काम्यति । सर्पिष्काम्यति ॥ १० ॥

(सु०) नाम्नो ये लालसायां सुगसुकौ ॥ नाम्नः सुगसुकावागमौ भवतः यप्रत्यये परे ॥ तृष्णातिरेको लालसा तस्यामर्थे ॥ दधिस्यतीत्यत्र षः स इति विपरीतनिर्देशान्न षत्वम् (ग) ॥ १० ॥

( त० ) दधिस्यतीति । षः स इति विपरीतनिर्देशान्न षत्वम् । दधिमधुशब्दावेवागमिनावित्येके । नाम्नो विधानादन्येऽपीत्यन्ये ॥ १० ॥

**( मान्ताव्ययाभ्यां काम्यः )** किंकाम्यति । स्वःकाम्यति । उच्चैः काम्यति ॥ ११ ॥

( सु० ) मान्ताव्ययाभ्यां काम्यः ॥ मान्तप्रकृतिकान्नाम्नोऽव्ययाच्च काम्यः स्यादिच्छायाम् ॥ किमिच्छति किंकाम्यति । स्वः स्वर्गमिच्छति स्वः काम्यति ॥११॥

---

( क ) न तु सिबन्तमिति ॥ सिबन्तं नाम स्यादिविभक्त्यन्तम्, तन्न ग्राह्यमित्यर्थः ॥ न स्यादिति । यो न स्यादित्यर्थः ।

( ख ) इत्याहुरिति । अतएव वृषस्यन्ती तु कामुकीति कोशोऽपि स्वरसतः संगच्छते । वृषोऽत्र शुक्लः पुरुषः । तथा च—शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः इत्यमरः । कामुकी वृषेण जन्धुमिच्छतीत्यर्थः ।

( ग ) 'किलात् षः सः कृतस्य' इत्यत्र 'षः स' इति विपरीतनिर्द्देशात्, दधिस्यतीत्यादौ दन्त्यसकारस्य मूर्द्धन्यषकारो नेत्यर्थः ।

( त० ) **स्वः काम्यतीति** ॥ अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्राधान्यात्कर्मत्वेन योगः ॥ ११ ॥

**करणे च नाम्नः** ॥ करणेऽर्थे यः ॥ तपस्यति । तपश्चरतीत्यर्थः (क) ॥१२॥

**( नमसः पूजायाम् )** नमस्यति देवान् । पूजयतीत्यर्थः ॥ १३ ॥

**(वरिवसः परिचर्यायाम् )** वरिवस्यति गुरुम् । शुश्रूषत इत्यर्थः ॥१४॥

( सु० ) **करणे च नाम्नः** ॥ य इत्यनुवृत्तम । करोत्यर्थे इत्यर्थः । नमस्करोति नमस्यति देवान् । पूजयतीत्यर्थः । वरिवस्यति गुरुम् । शुश्रूषत इत्यर्थः ॥ १४ ॥

( त० ) **करणे चेति** ॥ करणं कृतिः । न तु पारिभाषिकम् । नमस्यति देवान् । नमस्करोति । जहत्स्वार्थायां वृत्तौ नमश्शब्दस्यानर्थकत्वात् । अजहत्स्वार्थायां तु प्रत्ययार्थं उपसर्जनत्वान्न तद्योगे चतुर्थी ॥ **वरिवस्यतीति** ॥ वरिवः शुश्रूषां करोतीति विग्रहः १४

**( शब्दादिभ्यो यङ् )** (ख)शब्दायते । वैरायते । कलहायते । आभ्रायते । मेघायते ॥ १५ ॥

( सु० ) **शब्दादिभ्यो यङ्** ॥ एभ्यः कर्मभ्यः करोत्यर्थे यङ् ॥ शब्दं करोति शब्दायते । पक्षे ञिर्डित्करणे इति ञिप्रत्ययोऽपि भवति । शब्दयतीति न्यासकारः ॥१५॥

**कष्टाय क्रमणे** ॥ (ग) कष्टायते ॥ १६ ॥

( सु० ) **कष्टाय क्रमणे** ॥ चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे यङ् ॥ कष्टाय क्रमत इति कष्टायते ॥ पापं कर्तुमुत्सहत इत्यर्थः ॥ १६ ॥

**(ऊष्मबाष्पधूमेभ्य उद्वमने)** (घ) ऊष्मायते । बाष्पायते । धूमायते ॥१७॥

( सु० ) **ऊष्मबाष्पधूमेभ्य उद्वमने** ॥ एभ्यः कर्मभ्यो यङ् । ऊष्माणमुद्वमति । नाम्नो नो लोपशितिति नस्य लोपः । ये इति दीर्घः । ऊष्मायते ॥ १७ ॥

( त० ) **ऊष्मायत इति** ॥ ऊष्माणमुद्वमतीत्यर्थः ॥ १७ ॥

**ञिर्डित्करणे** ॥ (ङ) नाम्नो ञिप्रत्ययः करणेऽर्थे स च डित् ॥ घटं

( क ) **रोमन्थाच्चर्वणे** । रोमन्थाच्चर्वणेऽर्थे यङ् प्रत्ययो भवति । रोमन्थायते गौः । उद्गीर्य्य चर्वयतीत्यर्थः । **हनुचलन इति वक्तव्यम्** । तेन कीटो रोमन्थं वर्त्तयति इह न । अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः । तद्दशनाति इति **कैयटः** । वर्त्तुलं करोतीत्यर्थः, इति **न्यासकारहरदत्तौ** । अयं पाठोऽत्र निवेशनीयः ।

( ख ) **शब्दादिभ्यो यङिति** । आदिपदेन—

शब्दवैरप्रीतीपाभ्रकन्दनीहारदुर्दिनाः । कलहः सुदिनं मेघः कोटा अट्टा अटा तथा ॥

सोका मोटा च पोटा च प्लुष्टा शब्दादिरीरितः । एतद्ग्रहणम् ।

( ग ) **कष्टाय क्रमणे** । अत्र **'सत्र कक्ष कष्ट कृच्छ्र गहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्'** । कण्वं पापम् । सत्रादयो वृत्तिविषये पापार्थाः । तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां यङ् । पापं चिकीर्षति इत्यस्वपदविग्रहः सत्रायते । कक्षायते । इत्यादि ॥ मुग्धबोधे तु–**कष्टादेः पापार्थे** ॥ इति सूत्रं कृत्वा आदिपदेन 'कष्टञ्च मन्त्रो गहनञ्च कक्षः कृच्छ्रञ्च जष्टादिपु पञ्च शब्दाः' पठ्यन्ते ।

( घ ) केचिदिह धूमं न पठन्ति । किन्तु 'दिशो धूमायन्ते' इति **महानाटकम्** ।

( ङ ) **ञिर्डित्करण इति** । अत्र लघुभाष्यम् । ञिप्रत्ययो द्विविधे करोत्यर्थे भवति । स च डित् ।

करोति–घटयति । घटयते । अजघटत् ॥ पटयति–पटयते । अपपटत् ॥ अग्वृलोपिनो नाङ्कार्यम् । महान्तं करोति महयति ॥ अममहत् ॥ युवानं करोति यवयति । अयूयवत् । कनयति । अचीकनत् ॥१८॥

( सु० ) **ञिर्डित्करणे** ॥ तत्करोति तदाचष्टे वेत्यर्थे नाम्नो ञिः स च डित् ॥ डिति रिति डित्वाट्टिलोपो भवति । घटमाचष्टे घटयति । लुङि अग्वृलोपित्वादजघटत् ॥ पटमाचष्टे पटयति । लुङि परत्वाद्वृद्धौ सत्यां टिलोपः । अपीपटत् । भाष्ये तु वृद्धेर्लोपो बलीयानित्युक्तम् । तेन पूर्वं लोपस्ततोऽग्वृलोपित्वान्नाङ्कार्यम् । अपपटत् । महान्तमाचष्टे महयति ॥ १८ ॥

( त० ) **ञिर्डित्करणे** ॥ ड् इत् यस्य स डित् । अतिदेशोऽयं न तु संज्ञा । तथात्वे तु डिति टेरित्यादावस्यैव ग्रहणं स्यान्न तु ड् इत् यस्य तस्य । कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमित्युक्तत्वात् । अथ कथं वृत्तिं विनाऽतिदेशबोधनम् इति चेच्छृणु । अडितं डिदित्याह डिद्वदिति गम्यत इति भाष्योक्तेः ॥ १८ ॥

( **आविष्ठवत्कार्यम्** ) स्फिरं करोति–स्फापयति । अपिस्फपत् ॥ उरुम् वरयति । अवीवरत् ॥ बहुलम् बंहयति । अबबंहत् ॥ वृद्धम् वर्षयति । अववर्षत् ॥ तृप्रम् त्रपयति । अतित्रपत् ॥ दीर्घम् द्राघयति । अदद्राघत् ॥ वृन्दारकम् वृन्दयति । अववृन्दत् ॥ अन्तिकम् नेदयति । अनिनेदत् ॥ स्थूलम् स्थवयति । अतुस्थवत् ॥ दूरम् दवयति । अदूदवत् ॥ ह्रस्वं ह्रसयति । अजिह्रसत् ॥ क्षिप्रम् क्षेपयति । अचिक्षिपत् । क्षुद्रं करोति । क्षोदयति । अचुक्षोदत् ॥ प्रियं करोति प्रापयति ॥ अपिप्रपत् ॥ गुरुं करोति गरयति । अजीगरत् ॥ स्थिरं करोति स्थापयति । अतिस्थपत् ॥ ऊढिं करोति ऊढयति । ञेरङ् द्विश्च । स्वरादेः परः ॥ १९ ॥

( सु० ) **आविष्ठवत्कार्यम्** ॥ इष्ठप्रत्यये परतो यत्कार्यं दृष्टं संभावितं च तन्नाम्नो आवप्यतिदिश्यते ॥ इष्ठे यथा विमूवतुमतूनां लोपो रभावो गुर्वादिगराद्यादेशटिलोपौ तद्वत् आवपि स्युः ॥ स्रग्विणमाचष्टे स्रजयति । अग्निमन्तमाचष्टे अग्नयति । दण्डवन्तमाचष्टे

यदि डित्संज्ञा विधीयेत तर्हि 'डितिटेः' इत्यादौ ग्रहणमस्यैव स्यात् कृत्रिमत्वात् । ड् इत् यस्य तस्य तु ग्रहणं न स्यात् । अकृत्रिमत्वात् । कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमित्युक्तेः । अनोऽतिदेशोयं परत्र प्रयुज्यमानः परशब्दो विनापि वातवत्यर्थं गमयति अडितं डिदित्याह । डिद्वदिति गम्यते । यद्यपि डिदिति सामान्यशब्दस्तथापि लक्ष्यानुसाराद् व्याख्यानाद्विशेषपरो बोध्यः । यद्वा डिदिति वचनसामर्थ्याद्विशेषपरः । अन्यथा 'ञिर्डिङ् करणे' इत्येवावक्ष्यत् । न चैवमुत्तरयोगयोरपि डिद्विधाने टिलोप इति वाच्यम् । धातोर्ञिः प्रेरण इति गौरवाभावात्सुपाठत्वात् । न चैवं ञेरित्यादावस्यैव ग्रहणं स्यादेकानुबन्धकत्वादिति वाच्यम् । एकानुबन्धग्रहण इति परिभाषाया अनित्यत्वात् । तत्र च शसः शित्वं ज्ञापकम् । शसीत्यस्य स्थाने असीति पाठ्यम् । तत्रानुबन्धकस्यैव ग्रहणं भविष्यति न जसादेः । किं शित्वेन । तद् ज्ञापयति । तेन स्तुरारित्यत्र तृतृनोर्ग्रहणं यथा भवति तथा ञेरित्यादौ ञिञिडोर्ग्रहणं भविष्यति। तेन डिद्वदित्यस्येष्ठवदित्यर्थः ॥

दण्डयति । लङि असस्रजत् । अत्र पूर्वस्येत्वं तु न भाष्यासंमतत्वात् । अजिग्नयत् । अददण्डत् । अल्लोपस्य स्थानिवत्त्वान्नलोपो न ॥ स्थूलं करोति । गुर्वादेरिष्ठेमेयस्सु गरादिष्टयलोपश्चेति । स्थूलस्य स्थवष्टिलोपाभावश्च । स्थवयति । लुङि अतुस्थवत् । आदेशावयवत्वान्न षः ॥ दूरं करोति । दूरस्य दव् । दवयति । लुङि अदूदवत् । कथं तर्हि 'दूरयत्यवनते विवस्वति' इति । दूरमततीति दूरात् । क्विबन्तः । तं कुर्वतीत्यर्थः ॥ युवानं करोति । युवन् शब्दस्य युव् । यवयति । युवाल्पयोः कन्वेति कन् । कनयति । लुङि अयूयवत् । अचीकनत् । ञिर्डिदिति सूत्रे बहुलग्रहणं कर्तव्यम् । तस्मादिह सर्वत्र वृद्ध्यभावः ॥ ह्रस्वं करोति । ह्रस्वस्य ह्रस् । संज्ञापूर्वकविधेरनित्यत्वाद्बहुलग्रहणाद्वा न वृद्धिः । माधवेन तु विकल्पेन वृद्धिरुदाहृता । ह्रसयति । अजिह्रसत् ॥ क्षिप्रं करोति । क्षिप्रस्य क्षेप् । क्षेपयति । अचिक्षिपत् । क्षुद्रं करोति । क्षुद्रस्य क्षोदः । क्षोदयति । अचुक्षुदत् ॥ प्रियं करोति । प्रियस्य प्रः । धातोर्नामिन इति वृद्धौ रातो ञाविति पुक् । प्रापयति । अपिप्रपत् ॥ गुरुं करोति । गुरोर्गर् । गरयति । अजीगरत् ॥ स्थिरं करोति । स्थिरस्य स्थः । स्थापयति । अतिस्थपत् ॥ वहनमूढिस्तामूढिं करोति ऊढयति । ऊढिमाख्यत् औडिढत् ॥ १९ ॥

( त० ) ञाविष्ठवदिति ॥ इष्ठे यत्कार्यं दृष्टं संभावितं तन्नाम्नो ञावतिदिश्यते ॥ इष्ठे यथा विन्मतुवतूनां लोपो रभावो गुर्वादेर्गराद्यादेशटिलोपौ तथाञावपीति बोध्यम् ॥ **दवयतीति** ॥ दूरं करोति इति विग्रहवाक्यम् । संज्ञापूर्वकत्वेनानित्यत्वाद्वृद्ध्यभावः । टिलोपस्यासिद्धत्वाद्वा । 'दूरयत्यवनते विवस्वति' इत्यत्र तु वेत्यनुवर्त्यया व्यवस्थाऽभावः । यद्वा दूरमतति दूरात् । तं कुर्वतीत्यर्थः ॥ **प्रापयतीति** ॥ प्रियस्य प्रादेशे वृद्धिपुकौ । आदेशाभावे प्रिययतीत्यपि ॥ १९ ॥

( **अङि पूर्वढस्य जो वा** ) औजिढत्–औडिढत् ॥ ऊढं करोति । ऊढयति । औजढत्–औडढत् ॥ २० ॥

( सु० ) **अङि पूर्वढस्य जो वा** ॥ पूर्वरूपस्थस्य ढकारस्य जो वा भवति अङ्प्रत्यये परे ॥ औजिढत् ॥ ऊढं करोति ऊढयति । लुङि ढिलोपे च सति ञिसहितस्य द्वित्वे पश्चात्पूर्वाकारो दुर्लभः । अतो ञिनिमित्तः स्वरादेश इत्यनेन ढस्य द्वित्वम् । ऊढमाख्यत् । औडढत् । जत्वे औजढत् ॥ २० ॥

**कर्तुर्यङ्** ॥ (क)उपमानात्कर्तुराचारार्थे यङ् ॥ श्येन इवाचरति श्येनायते काकः ॥ पण्डितायते मूर्खः ॥ एतायते । यङ्मानिनोरिति पुंवत् ॥२१॥

( सु० ) **कर्तुर्यङ्** ॥ आचारे उपमानादित्यत उपमानादित्यनुवृत्तम्, आचारे इति च । उपमानात्कर्तुर्नाम्न आचरे यङ् ॥ आदनुदात्तङित इत्यात् । श्येन इवाचरति । यङ्मानिनोरिति पुंवत् । 'ये' इति दीर्घः । श्येनायते ॥ २१ ॥

(**यङि वा सलोपः**) पयायते–पयस्यते वा तक्रम् ॥ २२ ॥

( सु० ) **यङि वा सलोपः** ॥ सान्तस्य कर्तुः सस्य वा लोपः ॥ २२ ॥

---

(क) कर्तुः किम्, पुत्रीयति शिष्यम् । उपमानात्किम्, पुत्र आचरति ।

**( अप्सरसोजस्सुमनसां नित्यम् )** अप्सरायते ॥ ओजायते दुर्बलः ॥ सुमनायते ॥ २३ ॥

( सु० ) **अप्सरसोजस्सुमनसां नित्यम्** ॥ ओजः शब्दस्तद्वति वृत्तौ । ओजस्वीवाचरतीति ओजायते ॥ २३ ॥

( त० ) **अप्सरायते** इति अप्सरा इवाचरतीत्यर्थः ॥ **ओजायत** इति ॥ ओजःप्रभृतयो वृत्तिविषये तद्वति वर्तन्ते ॥ २३ ॥

**(नाम्न आचारे क्विब् वा)** (क)कृष्ण इवाचरति कृष्णाति । अकृष्णत् ॥ अ इवाचरति अति, अतः, अन्ति । एत्, एताम्, एयुः । अतु-अतात्, अताम्, अन्तु । अ—अतात् । आत्, आताम्, आन् । आः । लिटि औ, अतुः, उः । इथ । यात । इता । आसीत्, आसिष्टाम् ॥ मालेवाचरति । मालाति । मालायात् ॥ मालाहि । अमालात् । मालाञ्चकार । मालिता । अमालासीत् ॥ कविरिवाचरति कवयति । अकवयत् ॥ २४ ॥

( सु० ) **नाम्न आचारे क्विब् वा** ॥ कर्तुरुपमानान्नाम्नः क्विप् वा स्यादाचारेऽर्थे ॥ नाम त्वसिबन्तं ग्राह्यम् । तेन विभक्त्याश्रितं कार्यं न । पक्षे यङ् । कृष्ण इवाचरतीति स धातुरिति धातुत्वात्तिबादिः । 'अदे' इत्यलोपः । कृष्णति ॥ अः कृष्णस्तद्वदाचरति । 'अदे' इत्यलोपः । अति । लिटि तु कासादिप्रत्ययादिति सूत्रस्य वृत्तौ प्रत्ययग्रहणमपनीयानेकस्वरेत्युक्तेर्नाम् । द्वित्वे 'अदे' इत्यलोपे प्राप्ते परत्वादाभ्त्रोर्णादाविति पूर्वस्यात्वं तत अतो णब्डाविति डौ । डित्त्वाट्टिलोपः । औ आतोऽनपीत्यालोपे । अतुः । लुङि यमिरमिनमातामितीट्सकौ । आसीत् ॥ मालेवाचरति मालाति । लिट्यनेकस्वरत्वादाम् । मालाञ्चकार । लुङि अमालासीत् ॥ कविरिवाचरति कवयति । कवयाञ्चकार । आशिषि 'ये' इति दीर्घः । कवीयात् ॥ २४ ॥

( त० ) **नाम्न आचार** इति ॥ अत्रासिबन्तं नाम गृह्यते न तु सिबन्तम् । तेन पदकार्यं न ॥ **औ** इति ॥ सवर्णदीर्घेणानेकस्वरत्वाभावादाम्न । अतुसादिषु दीर्घः । आतोऽनपीत्यालोपः । **इता** ॥ यत इत्यलोपः । गुणस्तु प्रत्ययावयवत्वान्न । नहि निमित्तं कार्यित्वेनाश्रीयते ॥ **आसीदिति** ॥ यमिरमीति सगिटौ । **मालातीति** ॥ लिङ्गविशिष्टपरिभाषया ॥ २४ ॥

**(नामधातोर्वृद्धिर्वा सौ)** अकवायीत्—अकवयीत् ॥ विरिवाचरति । वयति । विवाय, विव्यतुः । अवायीत्—अवयीत् ॥ श्रीरिवाचरति ! श्रयति । शिश्राय, शिश्रियतुः । अश्रायीत्—अश्रयीत ॥ पितेवाचरति पितराति ।

(क) क्विप्प्रयोगो यथा—'वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति,
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति ।
गर्वी खर्वति सर्ववि‍च्च जडति त्वन्मन्त्रणायन्त्रितः
श्रीनित्ये वगलामुखि ! प्रतिदिनं कल्याणि ! तुभ्यं नमः' । इति ॥

पितराञ्चकार । यादादाविति रिङ् । पित्रियात् ॥ भूरिवाचरति भवति । बुभाव । अभावीत् ॥ द्रुरिवाचरति द्रवति । अद्रावीत् ॥ २५ ॥

( सु० ) नामधातोर्वृद्धिर्वा सौ ॥ सिप्रत्यये परे लुङि कैयटमते न वृद्धिः । माधवस्तु नामधातोरपि वृद्धिमिच्छति । विः पक्षी तद्वदाचरति वयति । लिटि नुधातोरिति यः । विव्यतुः । आशिषि यादादाविति रिङ् । पित्रियात् । 'दादेः पे' इति सिलुक् । भुवः सिलोपे इति भूवो वुगिति च वुक । आभ्वोरित्यनेनात्वं चास्य न अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात् । बुभाव । अभावीत् । श्रिस्रुद्रुभ्य इति ङे न धातुपाठस्थत्वाभावात् । अद्रावीत् ॥ २५ ॥

( त० ) बुभावेति ॥ आभ्वोर्णादौ भुवो वुगिति च न तत्र धातुपाठस्थस्यैव ग्रहणात् ॥ २५ ॥

**अमस्य क्ङिति झसे** ॥ अमान्तस्य धातोर्दीर्घः स्यात्क्ङिति झसे क्वौ हे च । इदमिवाचरति ॥ इदामति ॥ राजेवाचरति राजानति । राजायते ॥ मन्था इवाचरति मथीनति ॥ ऋभुक्षा इवाचरति ऋभुक्षीणति ॥ द्यौरिवाचरति द्यवति । दुद्याव । द्यूयात् । द्यविता ॥ क इवाचरति । कति । चकौ । चकेत्यन्ये ॥ स्व इवाचरति स्वति । सस्वौ सस्य इत्यन्ये ॥ २६ ॥

( सु० ) अमस्य क्ङिति झसे ॥ अमान्तस्य धातोर्दीर्घः स्यात् क्वौ झसादौ हकारे च क्ङिति ॥ झसादौ किति शान्तो दान्त इत्युदाहरणम् । ङिति तु यङ्लुकि तस्प्रत्यये । शंशान्तः दंदान्तः ॥ पन्था इवाचरति पथीनति । अत्रान्तरङ्गत्वाद्दीर्घस्ततो न गुणः ॥ द्यौरिवाचरति क्ङिति झसे क्वाविति वस्य उत्वे गुणावादेशौ । द्यवति ॥ को ब्रह्मा तद्वदाचरति कति । लिटि धातोर्नामिन इति वृद्धौ आतो णबूडावित्यौ । चकाविति हरदत्तः । माधवस्तु णपि वृद्धिं बाधित्वा यत इत्यलोपात् चक इति रूपमाह ॥ २६ ॥

( त० ) द्यवतीति ॥ क्ङिति झसे क्वाविति वस्योत्वे गुणवादेशौ । चकाविति ॥ आत इत्यत्र आ अत इति च्छित्त्वा अदन्तादपि डौ ॥ २६ ॥

**आचार उपमानात्** ॥ कर्मधारये उपमानादाचारार्थे प्रत्ययोऽस्य चेकारः(क) ॥ पुत्रमिवाचरति पुत्रीयति शिष्यमुपाध्यायः ॥ प्रासाद इवाचरति प्रासादीयति कुट्यां भिक्षुः ॥ २७ ॥

( सु० ) आचार उपमानात् ॥ नाम्नो य ईचास्येत्यनुवृत्तम् । आचारणमाचारः । चरेर्भावे घञ् । ज्ञानं व्यवहारो वा । उपमीयतेऽनेनेत्युपमानम् । माङः करणे युट् । कर्मण

( क ) क्षीरोदीयन्ति सद्यः सकलजलधराः वासुकीयन्ति नागाः
कैलासीयन्ति शैला दिवि च दिविषदः शङ्करीयन्ति सर्वे ।
यौष्माकीणे समन्तात् प्रसरति भुवने शुद्धकीर्त्तिप्रताने
मद्योषायाश्च भूषा न तदपि सहसा मौक्तिकीयन्ति तस्मात् ॥

अत्र क्षीरोदीयन्ति इत्यादयोऽपप्रयोगा इति । केचित् । वस्तुतस्तु आत्मानं क्षीरोदमिवाचरन्तीति कर्मोपमानाद् ये साध्याः । दर्शयते भवो भक्तानित्यादिवदेकस्य कर्त्तृकर्म्मत्वयोर्विरोधाभावात् ।

उपमानादाधारादुपमानाच्च नाम्नो यः स्यादाचारेऽर्थे तस्मिन् ये परे पूर्वस्यावर्णस्य ईत्वं च ॥ राजानमिवाचरतीत्यत्र नाम्नो न इति नलोपे कृते ईत्वम् । राजीयति ॥ २७ ॥

( त० ) आचार उपमानादिति ॥ आचरणमाचारः । चरेर्भावे घञ् व्यवहारो ज्ञानं वा उपमीयतेऽनेनेत्युपमानम् । पुत्रीयति शिष्यमुपाध्याय इति ॥ पुत्रविषयकयज्ज्ञानव्यवहारो वा तत्सदृशं शिष्याभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूलो वर्तमानकालिक एकगुर्वभिन्नाश्रयको व्यापारः। प्रासादाभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तत्सदृशं कुट्यभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूल एकाभिन्नाश्रयो वर्तमानकालिको व्यापारः ॥२७॥

( **भृशादिभ्योऽभूततद्भावे यङन्त्यहसलोपश्च** ) अभृशो भृशो भवति भृशायते ॥ अशश्वच्छश्वद्भवति शश्वायते ॥ २८ ॥

(सु०) भृशादिभ्योऽभूततद्भावे यङन्त्यहसलोपश्च ॥ भृशादिभ्यो यङ् स्यात् तस्मिन् परे भृशादीनामन्त्यस्य हसस्य लोपश्चाभूततद्भावेऽर्थे ॥ 'ये' इति दीर्घः । भृशायते ॥

( **क्विबपि** ) भृशति ॥ २९ ॥

( सु० ) क्विबपि ॥ भृशादिभ्यः क्विप् स्यादभूततद्भावेऽर्थे ॥ २९ ॥

( **च्विरपि** ) भृशीभवति ॥ भृशयभूत् ॥ सुमनायते । उपसर्गसमानाकारं पूर्वपदं धातुसञ्ज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते ॥ स्वमनायत । उदमनायत ॥ ३० ॥

( सु० ) च्विरपि ॥ भृशादिभ्यश्च्विः स्यादभूततद्भावेऽर्थे कृभ्वस्तियोगे एव । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते ॥ धातुसंज्ञाविधायके प्रत्यये कर्तुमिष्टे सति उपसर्गतुल्यं पूर्वपदं भिन्नं कर्तव्यमित्यर्थः ॥ चुरादौ संग्राम युद्धे इति संविशिष्टपाठोऽस्य ज्ञापकः। तेन मनस्शब्दात्प्रागट् भवति। स्वमनायत ॥३०॥

( त० ) उपसर्गसमानाकारमित्यादि ॥ अत्र ज्ञापकं तु चुरादिषु संग्राम युद्ध इत्यत्र संग्राम इति विशिष्टपदम् । अन्यथा ग्राम युद्ध इत्येवापठिष्यत् ॥ ३० ॥

( **सुखादिभ्यो यङ् कर्तुरनुभवे** ) (क) सुखं वेदयते सुखायते । दुःखायते ॥३१॥

( सु० ) सुखादिभ्यो यङ् कर्तुरनुभवे ॥ सुखादिभ्यः कर्मभ्योऽनुभवकर्तुरेव चेत्सुखादीनि स्युः ॥ अनुभवशब्दो ज्ञानवाची(ख) । तदपेक्षमेव कर्तृत्वम् । कर्ता चेत्सुखादिभिरन्वेति ॥ सुखं वेदयते । 'ये' इति दीर्घः । सुखायते । कर्तुरिति किम् । सुखं वेदयते परस्य । इह यन्निष्ठं सुखं तद्भिन्ननिष्ठोऽनुभवः ॥ ३१ ॥

( त० ) सुखं वेदयत इति ॥ स्वगतं सुखमनुभवतीत्यर्थः ॥ ३१ ॥

( क ) सुखादिभ्य इति । सुखं दुःखञ्च तृप्तञ्च कृपणः करुणस्तथा, प्रतापानाकसोढाभ्रकृच्छ्राः शाद्याः सुखादयः । सुखं नाम सर्वेषामनुकूलवेदनीयमिति ।

( ख ) तथाच-सर्वव्यवहारहेतुर्बुद्धिर्ज्ञानम्, तद्द्विविधम्, स्मृतिरनुभवश्चेत्यन्नंभट्टः ।

(**पुच्छादुदसने व्यसने पर्यसने च णिङ्**) (क) उत्पुच्छयते। उदपुपुच्छत ॥ विपुच्छयते ॥ परिपुच्छयते ॥ ३२ ॥

( सु० ) **पुच्छादुदसने व्यसने पर्यसने च णिङ्** ॥ पुच्छान्नाम्नो णिङ् स्यात् ॥ उत् ऊर्ध्वमसनं क्षेपणं उदसनम्। विविधं विरुद्धं वाऽसनं व्यसनम्। परि समन्तादसनं पर्यसनम्। तस्मिन्नर्थे। ङित्त्वादात्। पुच्छमुदस्यति—उत्पुच्छयते। उदपुपुच्छत ॥३२॥

( त० ) **पुच्छादुदसन** इत्यादि ॥ उदसनमुत्क्षेपणम्। विविधं विरुद्धं वा क्षेपणं व्यसनम्। परितः क्षेपणं पर्यसनम् ॥ ३२ ॥

(**भाण्डात्समाचयने**) सम्भाण्डयते (ख) ॥ ३३ ॥

( सु० ) **भाण्डात्समाचयने** ॥ भाण्डात् णिङ् स्याद्राशीकरणेऽर्थे ॥ संभाण्डयते। लुङि समबभाण्डत ॥ ३३ ॥

( त ) समाचयनं राशीकरणम् ॥ ३३ ॥

(**चीवरादर्जने परिधाने च**) (ग) चीवराण्यर्जयति, परिधत्ते वा संचीवरयते भिक्षुः ॥ ३४ ॥

(**नाम्नो णिराचष्टे**) ॥ ३५ ॥

( सु० ) **चीवरादर्जने परिधाने च** ॥ णिङ्। चीवराण्यर्जयति परिधत्ते वा संचीवरयते। लुङि समचिचीवरत ॥ ३५ ॥

( त० ) **संचीवरयते** इति ॥ अर्जयति परिधत्ते वेत्यर्थः ॥ ३५ ॥

(**अर्थवेदसत्यानामापुग् णौ**) अर्थापयति। आर्तीथपत् ॥ वेदापयति। सत्यापयति। अससत्यपत् ॥ एतयते ॥ ऐतयत् ॥ पृथुम्। प्रथयति ॥ वृद्धौ सत्यां पूर्वं वा टिलोपः अपप्रथत्—अपिप्रथत् ॥ मृदुम् म्रदयति। अमम्रदत्—अमिम्रदत् ॥ भृशम् भ्रशयति। अबभ्रशत् ॥ कृशम् क्रशयति। अचक्रशत् ॥ दृढम् द्रढयति। अदद्रढत् ॥ परिव्रढयति। पर्यवव्रढत् ॥ त्वादयति। अतित्वदत् ॥ मादयति। अमीमदत् ॥ युष्मयति। अयुयुष्मत्। अस्मयति। आसिस्मत् ॥ विद्वांसम्—विद्वयति। अविविदत् ॥ विदावयतीत्यपरे। अविविदावत्। विदयति इत्यन्ये। अविविदत् ॥ एवं श्वानमाचष्टे श्वयति। अशिश्वत्। शावयतीत्यपरे। अशुशावत्। शुनयतीत्यन्ये। अशूशुनत् ॥ उदञ्चम् उदीचयति। उदैचिचत् ॥ प्रत्यञ्चम्। प्रतीचयति ॥ प्रत्याचिचत् ॥ सम्यञ्चम् समीचयति। सम्यचिचत् ॥ तिर्यञ्चम् तिराययति। अतितिरायत् ॥

( क ) **णिङित्यत्र** ङकारो हि आत्मनेपदार्थः। **उत्पुच्छयते इति**। पुच्छमुदस्यतीत्यर्थः।

( ख ) **सम्भाण्डयत इति**। भाण्डानि समाचिनोति, राशीकरोतीत्यर्थः।

( ग ) **चीवरादर्जन इति**। अर्जनं द्रव्यग्रहोपायो याच्ञादिः।

सध्र्यञ्चम् ॥ सध्र्याययति। अससध्र्यायत् ॥ अन्तिकम् नेदयति । अनिनेदत् ॥ बाढम् साधयति ॥ वृद्धम् ज्यापयति । अजिज्यपत् ॥ वृद्धम् वर्षयति ॥ स्फिरम् स्फापयति । अपिस्फपत् ॥ उरुम् वरयति ॥ बहुलम् बंहयति ॥ तृप्रम् त्रपयति ॥ दीर्घम् द्राघयति । अदद्राघत् ॥ वृन्दारकम् वृन्दयति । अववृन्दत् ॥३६॥

इति नामधातुप्रक्रिया ॥

( सू० ) **अर्थवेदसत्यानामापुग् ञौ** ॥ एषामापुगागमः स्यात् ञिप्रत्यये परे ॥ अर्थमाचष्टे करोति वा अर्थापयति ॥ एनीमाचष्टे ञिप्रत्यये टिलोपः । ततो निमित्ताभावे नैमित्तिकस्याप्यभाव इतीपोऽभावे नस्याप्यभावः । एतयति ॥ पृथुमाचष्ट ऋ र इमनीति रभावे टिलोपे च प्रथयति । लुङि वृद्धौ सत्यां टिलोपः । अग्लोपित्वाभावादङि लघाविति पूर्वस्येत्वम् । अपिप्रथत्—वृद्धेः पूर्वं टिलोपे त्वग्लोपित्वादित्वं न । अपप्रथत् ॥ मृदुमाचष्टे णाविष्ठवद्भावात् ऋ र इमनीति रभावे टिलोपे च म्रदयति ॥ एवं भृशकृशदृढादयः ॥ त्वां मां वाऽऽचष्टे टिलोपे 'त्वन्मदेकत्वे' इति त्वन्मदादेशे च कृते अत उपधाया इति वृद्धौ त्वादयति । मादयति ॥ युवामावां युष्मानस्मान् वाऽचष्टे विभक्तिपरत्वाभावान्न युवावौ । टिलोपे सति । युष्मयति । अस्मयति ॥ श्वानमाचष्टे णाविष्ठवद्भावात् शुनो वस्य उर्वा च दीर्घ इत्युत्वे टिलोपाभावे च शुनयतीति रूपं केचिदाहुः । टिलोपे उत्वे च वृद्धौ सत्यां शावयति । लुङि अग्लोपित्वान्न ह्रस्वः । अशुशावत् ॥ विद्वांसमाचष्टे टिलोपे विद्वयति । टिलोपे कृते वसोर्व उरित्युत्वे वृद्धावावादेशे च विदावयतीत्यन्ये । नित्यत्वात्पूर्वमुत्वं पश्चाट्टिलोपः । विदयतीत्यपरे ॥ उदञ्चमाचष्टे । णाविष्ठवद्भावात् तिरश्चादय इत्युदीच् । उदीचयतीत्यत्रोपसर्गं पृथक्कृत्य अचशब्दादेव ञिः । बहुलग्रहणाट्टिलोपो न । लुङि उपसर्गसमानाकारमितीकारात्पूर्वमटि चिशब्दस्य द्वित्वे पश्चात् ञेरिति ञिलोपः । उदैचिचत् ॥ प्रत्यञ्चमाचष्टे अचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ प्रतीचयति । लुङि चिशब्दात्प्रागटि कृते पूर्वस्य यत्वम् । प्रत्यचिचत् । स्वणामसवर्णे स्वर इति प्रकृतिभावपक्षे तु प्रति अचिचत् ॥ सम्यञ्चमाचष्टे अचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ ॥ समीचयति । लुङि सम्यचिचत् । प्रकृतिभावपक्षे समि अचिचत् ॥ तीर्यञ्चमाचष्टे अञ्चेष्टिलोपे नापहारेऽपि तस्य बहिरङ्गत्वेनासिद्धत्वात्तिरीत्यस्य सद्भावः वृद्धौ सत्यां तिराययति। उपसर्गसमानाकारत्वाभावादिह तिरसः पृथक्करणं नास्ति । अतितिरायत् । अङि लघाविति ह्रस्वस्तु नाग्लोपित्वात् ॥ सध्र्यञ्चमाचष्टे टिलोपेनाञ्चेरपहारे वृद्धौ सत्यां सध्र्याययति ॥ अन्तिकमाचष्टे गुर्वादेरित्यन्तिकस्य नेदष्टयलोपश्च । यस्येत्यलोपः । नेदयति । लुङि अनिनेदत् ॥ बाढमाचष्टे बाढस्य साधः साधयति अससाधत् । वृद्धमाचष्टे वृद्धस्य ज्यादेशः । रातो णाविति पुक् । ज्यापयति । अजिज्यपत् ॥ वृद्धस्य वर्षोऽपि । वर्षयति । अववर्षत् ॥ स्फिरमाचष्टे स्फिरस्य स्फः । वृद्धौ सत्यां रातो णाविति पुक् । स्फापयति अपिस्फपत् ॥ उरुमाचष्टे उरुशब्दस्य वर् । संज्ञापूर्वकविधेरनित्यत्वाद्वाहुलकाद्वा माधवेन वृद्धिरुदाहृता । वरयति—वारयति । अवीवरत् बहुलमाचष्टे बहुलस्य बंहः । बंहयति । नो लोप इति नलोपो न । टिलोपस्य स्थानिवत्त्वात् । अग्लोपित्वा-

म्नेत्वदीर्घौ । अवबंहत ॥ तृप्रमाचष्टे तृप्रस्य त्रप् । त्रपयति । अतित्रपत् । दीर्घमाचष्टे दीर्घस्य द्राघः । द्राघयति । अदद्राघत् ॥ वृन्दारकमाचष्टे वृन्दारकस्य वृन्दः । वृन्दयति । अववृन्दत् ॥ ३६ ॥ इति सुबोधिन्यां नामधातुप्रक्रिया ॥ १५ ॥

(त०) अर्थवेदेत्यादि ॥ अत्र करण इत्युनुवृत्तं क्रियाविशेषोपलक्षणम् । (क) तेनार्थमाचष्ट इत्यादिविग्रहः । आत्वेनैव सिद्ध आपुक्करणमन्यतोऽपि विधानार्थम् । तेन लिखापयतीत्यादि सिद्धम् ॥ अपिप्रथदिति ॥ वृद्धावौकारे कृते ततो लोपः । अग्लोपित्वाभावादङ्कार्यम् ॥ त्वादयति मादयतीति ॥ नो वेत्यत्र वा इत्यस्य व्यवस्थितत्वात्क्वचिन्न टिलोपः ॥ विद्वयतीति ॥ आदौ टिलोपः । पुनरङ्गवृत्तपरिभाषया संप्रसारणं न ॥ विदावयतीति । टिलोपे कृते संप्रसारणे वृद्ध्यावादेशौ ॥ सकृत्प्रवृत्तत्वात्पुनष्टिलोपाप्रसंगः ॥ विद्यतीति ॥ संप्रसारणे कृते टिलोप इति पक्षे ॥ उदीचयतिति ॥ टिलोपो न व्यवस्थितत्वात् ॥ तिरायतीति ॥ आदौ टिलोपस्ततस्तिर्यादेशस्ततो वृद्ध्यायादेशौ । पुनष्टिलोपस्तु सकृत्प्रवृत्तत्वान्न ॥ अतितिरायदिति ॥ अग्लोपित्वादुपधाह्रस्वोऽपि न ॥ ३६ ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । समासेनेदमभवन्नामधातुसमापनम् ॥

इति तत्त्वदीपिकायां नामधातुप्रक्रिया ॥ १५ ॥

# अथ कण्ड्वादिप्रक्रिया ॥ १६ ॥

**( कण्ड्वादिभ्यो धातुभ्यो यक् स्वार्थे ) कण्डूञ् गात्रविघर्षणे ।** कण्डूयति । कण्डूयते । **मन्तु अपराधे रोषे च ।** मन्तूयति । ञिदित्येके । मन्तूयते ॥ **वल्गु पूजामाधुर्ययोः ।** वल्गूयति ॥ **अस असु असूञ् उपतापे ।** अस्यति । अनपि च ह्रसात् । असाञ्चकार ॥ असूयति । असूयते ॥ **लेला दीप्तौ ।** लेलायति ॥ **मेधा आशुग्रहणे ।** मेधायति ॥ **सुख दुःख तत्क्रियायाम् ।** सुख्यति । दुःख्यति ॥ **सपर् पूजायाम् ।** सपर्यति, सपराञ्चकार ॥ **भिषग् चिकित्सायाम् ।** भिषज्यति ॥ **इषुध् शरधारणे ।** इषुध्यति, ऐषुधीत् ॥ **गद्गद वाक्स्खलने ।** गद्गद्यति ॥ **एला केला खेला विलासे ।** एलायति । केलायति । खेलायति ॥ **हृणीङ् रोषणे लज्जायां च ।** हृणीयते ॥ **महीङ् पूजायाम् ।** महीयते ॥ **अगद नीरोगत्वे ॥** अगद्यति । आगदीत् (ख) ॥१॥

इति कण्ड्वादिप्रक्रिया ॥ १६ ॥

---

( क ) **उपलक्षणमिति ।** स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणत्वम् ।

इति चक्रधराख्यटिप्पण्यां नामधातुप्रक्रिया समाप्ता ॥ १५ ॥

( ख ) **लेट् लोट् ।** धौर्त्ये पूर्वभावे स्वप्ने च । दीप्तावित्येके । लेट्यति । लेटिता । लोटयति । लोटिता । **इरस् इरज् इरम् ईर्ष्यायाम् ।** इरस्यति । इरज्यति । इर्यति । ईर्यते । **उषस् प्रभातीभावे ।**

(सु०) **कण्ड्वादिभ्यो धातुभ्यो यक् स्वार्थे** ॥ एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे ॥ कण्ड्वादयो द्विधा । धातवः प्रातिपदिकानि च । नाम्नां तु विग्रह एव ॥ सपर् पूजायाम् । यगन्तात् पिच्चिदामङ् इत्यनेनाङ्प्रत्यये आप् ॥ सपर्या ॥ महीङ् पूजायाम् महीयते । पूजां लभत इत्यर्थः । आकृतिगणोऽयम् ॥ १ ॥

इति सुबोधिन्यां कण्ड्वादिप्रक्रिया ॥ १६ ॥

(त०) **कण्ड्वादिभ्यो यगिति** ॥ कड्वादयो हि द्विविधाः । धातवो नामानि । तत्र धातुभ्यो नित्यं यक् । नाम्नां तु कण्डुं करोतीति विग्रह एव ॥ १ ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगात्कण्ड्वादिसाधनम् ॥

इति तत्त्वदीपिकायां कण्डवादिप्रक्रिया ॥ १६ ॥

# अथ प्रत्ययमाला ॥ १७ ॥

कण्डूयतेः सप्रत्यये द्विश्चेति प्रथमस्य द्वित्वे प्राप्ते कण्ड्वादेस्तृतीयस्य द्वित्वम् । कण्डूयियिषति । यप्रत्ययान्तात्सप्रत्यये तु यथेष्टं नामधातुषु द्वित्वमित्याद्यानां त्रयाणामन्यतमस्य द्वित्वं भवति । स्वराद्वेस्त्वाद्येतरस्य द्वित्वम् । पुत्रीयितुमिच्छति-पुत्रीयिषति-पुतित्रीयिषति । पुत्रीयियिषति ॥ अशिश्वीयिषति ॥ अश्वीयियिषति ॥ आत्मन इन्द्रमिच्छति इन्द्रीयति । इन्द्रीयतेः सप्रत्यये द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम् । इन्दिद्रीयिषति । इन्द्रीयियिषति ॥ ज्यन्तात्सप्रत्यये तु प्रियशब्दात् आविष्टवद्भावेन प्रियशब्दस्य प्रादेशस्ततो द्वित्वादि । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति । पिप्रापयिषति । प्रापिपयिषति । प्रापयियिषति ॥ यङन्ज्यन्तात्सप्रत्यये तु बोभूयिषयिषति ॥ यङ्जिसान्तात् जिप्रत्यये तु । बोभूययिषयति ॥ १ ॥ इति प्रत्ययमाला ॥ १७ ॥

# अथ पदव्यवस्था ॥ १८ ॥

( **निविशादेः** ) निपूर्वाद्विशादेर्धातोरात् ॥ निविशते ॥ १ ॥

( सु० ) **निविशादेः** ॥ निपूर्वो विशः । नेः परो विश इति वा निविशः स आदिर्यस्य स निविशादिस्तस्मादात्स्यात् । आदिशब्दः प्रकारे । विश इत्यत्र अकार उच्चारणार्थः । 'निविशते यदि शूकशिखा पदे' इति श्रीहर्षः (क) । नि किम् । प्रविशति । अर्थ-

---

**वेद धौर्त्ये स्वप्ने च** । **कुषुभ क्षेपे** । कुषुभ्यति । **मगध परिवेष्टने** । नीचदास्य इत्यन्ये । **तन्तस् पम्पस् दुःखे** । अरर आराकर्मणि । भिष्णज् उपसेवायाम् । **चरणवरण गतौ** । **चुरण** चौर्य्ये । **तुरण** त्वरायाम् । **भुरण** धारणपोषणयोः । **इला** विलासे । **लेखा** स्खलने । अदन्तोऽयमित्यन्ये । लेख्यति । **लिट** अल्पकुत्सनयोः । लिट्यति । लाट जीवने । **रेखा** श्लाघासादनयोः । **द्रवस्** परितापपरिचरणयोः । **तिरस् अन्तर्धौ** । **उरस्** बलार्थः । उरस्यति, बलवान् भवतीत्यर्थः । **तरण** गतौ । **पयस्** प्रसृतौ । **संभूयस्** प्रभूतभावे । **अम्बर सम्बर** संवरणे । एते धातवो व्याकरणान्तरेषु अधिका पठन्ति कण्ड्वादिगणे । अतोऽत्रास्माभिर्निवेशिताः । इति टिप्पण्यां कड्वादिप्रक्रिया समाप्ता ॥ १६ ॥

( क ) सम्पूर्णोयं श्लोकः—यथा—

**निविशते** यदि शूकशिखा पदे सृजति सा कीयतीमिव न व्यथाम् ।
मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः ॥ इति । नैष० स० ४, श्लो: ११

चद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणम् । तेनेह न । मधुनि विशन्ति भ्रमराः (क) ॥ १ ॥

( त० ) **निविशादेः** ॥ निपूर्वो विशः नेः परो विश इति वा । विशोऽकार उच्चारणार्थः असंदेहार्थं वा । तेन पदकार्यवारणम् । अन्यथा निविडादेरित्युक्ते विश् वा विड् भेदेन वेति संदेहः स्यात् । निविश आदिर्यस्येति स तथा तस्मात् । अत्रादिशब्दः प्रकारे । तेन निविशदृशादिति बोध्यम् । सादृश्यं चोपसर्गपूर्वत्वम् । निविशादिगणाभावाद्व्यवस्थावाचिन आदिशब्दस्य ग्रहणं न । तेन नयतीति नि कुलं विपतीत्यत्र न भवति। एवं वेतीति विकुलं जयतीत्यत्र न । पराजयति । दूरानात्मोत्तमाः परा ॥ १ ॥

**(परिव्यवेभ्यः क्रियः)** परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥२॥

( सु० ) **परिव्यवेभ्यः क्रियः** । परगामिफलार्थमिदमात्मनेपदम् ॥ २ ॥

**( विपराभ्यां जेः)** (ख) विजयते । व्यजेष्ट ॥ पराजयते ॥ ३ ॥

( सु० ) **विपराभ्यां जेः** ॥ आभ्यां परो जयतिरात्वान् ॥ ३ ॥

**( आङो दाञो न तु विकसने )** (ग) विद्यामादत्ते । आदित । विकसने तु व्याददाति मुखं कृष्णः । पराङ्गकर्मकाद्भवत्येव(घ) । व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥ ४ ॥

( सु० ) **आङो दाञो न तु विकसने** ॥ परगामिफलार्थमिदम् । आङ् पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् ॥ विद्यामादत्ते ॥ ४ ॥

**( क्रीड आङनुसम्परिभ्यः)** आक्रीडते । अनुक्रीडते। परिक्रीडते ॥

( सु० ) **क्रीड आङनुसम्परिभ्यः** ॥ तृतीयार्थस्यानोर्योगे नात्मनेपदम् ॥ माणवकमनुक्रीडति । तेन सहेत्यर्थः ॥ ५ ॥

**(समोऽकूजने)** (ङ)संक्रीडते । कूजने तु । संक्रीडति रथचक्रम् ॥६॥

( सु० ) **समोऽकूजने** ॥ समः परः क्रीडतिरात्वानकूजनेऽर्थे ॥ ६ ॥

**( आगमेः क्षमायाम् )** (च) आगमयस्व तावत् ॥ ७ ॥

---

( क ) कथन्तर्हि—इत्युक्त्वा मैथिली भर्तुरङ्के निविशती भयादिति । अत्र तु अङ्कानि विशतीति पाठ्यम् । न च पदसंस्कारपक्षे त्वङ्के निवशतीति पाठेऽप्यदोष इति वाच्यम् । युष्मदस्मदोः सामानाधिकरण्येऽपि त्वं करोति भवान् करोपीत्यादिप्रयोगस्यापि त्वदुक्तरीत्या साधुत्वापत्तेः । वा लिप्सायामित्यादेर्वैयर्थ्यापत्तेश्च ।

( ख ) **विपराभ्यामिति** । विशब्देन साहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणम् , तेन 'पराजयति सेना' इत्यत्र आवन्तेन उत्कृष्टा इत्यर्थकेन पराशब्देन योगे न । पक्षिवाचकस्य विशब्दस्य सम्भवेऽपि परस्परसाहचर्यादुपसर्गग्रहणं व्याख्येयम् । इति कैयटः ।

( ग ) **आङो दा०** । कथं तर्हि—"व्यादत्ते विहगपतिर्मुखं स्वकीयमि' ति, इदं कर्त्रभिप्राये भविष्यति । **विद्यामादत्ते इति** । गृह्णातीत्यर्थः । **मुखं व्याददातीति** । विस्तारयतीत्यर्थः ।

( घ ) अत्र भाष्ये 'स्वाङ्गकर्म्मकाच्च' इत्युक्तम् , तस्य 'स्वाङ्गकर्म्मकादेव प्रतिषेधः' इत्यर्थः, तदभिप्रायेणाह—**पराङ्गकर्म्मकाद्भवत्येवेति** । ( ङ ) **समोऽकूजने इति** । कूजनमव्यक्तशब्दः ।

( च ) **आगमेरिति** । अत्र भाष्ये "माणवक आगमयस्व तावद्" इति ण्यन्तस्यैवोदाहरणात् ण्यन्तस्य ग्रहणम् ।

( सु० ) **आगमेः क्षमायाम्** ॥ आङ्पूर्वात् ण्यन्ताद्गमेरात्स्यात् क्षमायामर्थे । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः (क) ॥ ७ ॥

( त० ) **आगमेः क्षमायाम्** ॥ गमेरिति ण्यन्तस्य ग्रहणम् । क्षमा प्रतीक्षा ॥ **आगमयस्वेति** ।। मा त्वरिष्ठा इत्यर्थः ॥ ७ ।।

**( शिक्षेर्जिज्ञासायाम् )** धनुषि शिक्षते ।। ८ ।।

( सु० ) **शिक्षेर्जिज्ञासायाम्** ॥ शिक्ष विद्योपादाने इत्यस्य नेह ग्रहणम् । अनुदात्तत्वादेवात्मनेपदसिद्धेः । किन्तु शकेः सान्तस्येह ग्रहणम् । धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ।। ८ ।।

( त० ) **धनुषि शिक्षत** ॥ इति ।। धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः।।८॥

**(हरतेर्गतताच्छील्ये)** (ख)पैतृकमश्वा अनुहरन्ते। मातृकं गावः ॥९॥

(सु०) **हरतेर्गतताच्छील्ये** ॥ गतं प्रकारः सादृश्यमिति यावत् । पैतृकमश्वा अनुहरन्ते । मातृकं गावः । पितुर्मातुश्च सादृश्यं सततं परिशीलयन्तीत्यर्थः ॥ ताच्छील्ये किम् । मातुरनुहरति(ग) । इह सादृश्यमात्रं विवक्षितं न तु प्रकारताच्छील्यम् ।।९।।

(त०) **गतताच्छील्य** इति ।। गतं प्रकारः ॥ **पैतृकमश्वा अनुहरन्त** इति ॥ पितुः प्रकारं सततं परिशीलयन्तीत्यर्थः । गतं गमनं तस्य ताच्छील्य इति व्याख्याने तु "अयं कः संबन्धो यदनुहरते तस्य कुमुदम्" इत्यादावव्याप्तिः स्यात् ॥ ९ ॥

**( किरतेर्हर्षजीविकाकुलायकरणेषु )** (घ) ॥१०॥

( सु० ) **किरतेर्हर्षजीविकाकुलायकरणेषु** ॥ किरतेरात्स्यादेषु वाच्येषु हर्षादयो विषयाः(ङ) । तत्र हर्षो विक्षेपस्य कारणमितरं फले ।। १० ।।

( त० ) **किरतेरिति** ।। कृ विक्षेपे हर्षादयो विषयत्वेनोपादीयन्ते । तत्र हर्षो विक्षेपस्य कारणम् । इतरं फले ।। १० ।।

**( अपात्किरतेः सुट् चतुष्पाच्छकुनिकर्तृके आलेखने )** अपस्किरते वृषो हृष्टः (च)। कुक्कुटो भक्षार्थी। श्वाऽऽश्रयार्थी च। हर्षादिष्विति किम् ? अपाकिरति कुसुमं वायुः ॥ ११ ॥

( सु० ) **अपात्किरतेः सुट् चतुष्पाच्छकुनिकर्तृके आलेखने** ॥ अपात्किरतेः सुट् स्याद्धर्षादिष्वेव । चतुष्पाच्छकुनिकर्तृके आलेखने सति ॥ अपस्किरते वृषो हृष्टः । हर्षेण भूमिं विलिखतीत्यर्थः । हर्षादिष्विति किम् । अपकिरति कुसुमम् । इहात्स्त्रटौ

( क ) **मात्वरिष्ठा इति** । सहस्व किञ्चित्कालमित्यर्थः ।

( ख ) **प्रकार इति** । गुणक्रियादिधर्म इत्यर्थः । **ताच्छील्यं** नियततत्स्वभावता ।

( ग ) **मातुरनुहरतीति** । अत्र सादृश्यमात्रप्रतीतिर्न तु मातृवृत्तिगुणस्य सततं परिशीलनमिति नात्मनेपदम् ।

( घ ) **किरतेर्हर्षेति** । यद्यपि 'कुलायो नीडमस्त्रियाम्' इति कोशप्रमाणेन नीडवाची कुलायशब्दस्तथापि "अपस्किरतेः श्वाऽऽश्रयार्थी" इति भाष्योदाहरणदर्शनादत्र कुलायशब्दो वासस्थानमात्रपरः ।

( ङ ) **विषया इति** । समभिव्याहृतपदान्तरगम्या इत्यर्थः ।

( च ) **आलेखनं खननम् । अपस्किरते इति** । अत्र कृधातोः खननरूपे धूल्यादिविक्षेपे वृत्तिः ।

न (क)। हर्षादिमात्रविवक्षायां यद्यप्यात्मनेपदं प्राप्तं तथापि सुडभावे नेष्यत इत्याहुः। गजोऽपकिरति (ख)। अत्र हर्षे सत्यालेखनाभावात्सुटोऽप्राप्तिः ॥ ११ ॥

( त० ) **अपस्किरते वृषो हृष्टेति** ॥ हर्षेण भूमिं विलिखतीत्यर्थः ॥ ११॥

( **आङो नुप्रच्छोः** ) आनुते (ग)। आपृच्छत ॥ १२ ॥

( सु० ) **आङो नुप्रच्छोः** ॥ आङः परावेतावात्वन्तौ भवतः। णु स्तुतौ अदादिः। प्रच्छ ज्ञीप्सायाम् तुदादिः ॥ १२ ॥

( त० ) आङ इति। णु स्तुतौ अदादिः प्रच्छ ज्ञीप्सायां तुदादिः ॥ **आनुते—** इति ॥ उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः ॥ १२ ॥

( **शप उपालम्भे** ) विप्राय शपते ॥ १३ ॥

( सु० ) **शप उपालम्भे** ॥ आक्रोशार्थे स्वरितेतः शपः परगामिफले शपथरूपेऽर्थे आत्मनेपदं भवति। कृष्णाय शपते। श्लाघह्नुङ् इति संप्रदानसंज्ञा ॥ १३ ॥

( त० ) **उपालम्भ इति** ॥ शपथ इत्यर्थः (घ)। स च वाचा शरीरस्पर्शनरूपः ॥ **विप्राय शपत** इति। त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येव शपथेन विप्रस्य स्वाभिप्रायं प्रकाशयतीत्यर्थः ॥ 'सख्यः शपामि यदि **किंचिदिह स्मरामि**' (ङ)इत्यत्र तु स्वाशयप्रकाशनमात्रं विवक्षितं न तु शपथरूपमपीत्यदोषः ॥ १३ ॥

( **समवप्रविभ्यः स्थः** ) संतिष्ठते। समस्थिते ॥ अवतिष्ठते ॥ प्रतिष्ठते ॥ वितिष्ठते ॥ १४ ॥

( सु० ) **समवप्रविभ्यः स्थः** ॥ लुङि। अपिद्राधास्थामिदितीत्वम्। **समस्थिषाताम्** ॥ १४ ॥

( **आङः प्रतिज्ञायाम्** ) (च)शब्दं नित्यमातिष्ठते ॥ १५ ॥

( सु० ) **आङः प्रतिज्ञायाम्** ॥ शब्दं नित्यमातिष्ठते। नित्यत्वेन प्रतिजानीत इत्यर्थः ॥ १५ ॥

---

(क) **आत्सुटौ नेति**। आलेखनाभावात्सुडभावः। (ख) **गजोऽपकिरतीति**। स्वभावकथनमत्र।

( ग ) **आनुते इति**। शृगाल उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ इति कैयटः ॥ **आपृच्छत इति**। 'ग्रहिज्या' इति संप्रसारणम्।

( घ ) **शपथस्तु**–त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवं वाचा शरीरस्पर्शनमिति।

( ङ ) अयं पूरितपूर्वत्रिपादः श्लोकः—

धन्याऽसि या कथयसि प्रियसंगमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः! शपामि यदि किञ्चिदपि स्मरामि। इति।

यत्तत्र साहित्यदर्पणटीकाकृता हरिदाससिद्धान्तवागीशेन प्रौढानायिकायाः स्मरान्धायाः उदाहरणव्याख्यानाऽवसरे "**शपामीति**" 'शपथे शपः,' इत्यनेनात्मनेपदविषयत्वेऽपि परस्मैपदप्रयोगादपप्रयोग एवेत्युक्तम्, तच्चिन्त्यम्, अत्र नायिकाया वाचा शपामीति स्वाभिप्रायप्रकाशनमात्रत्वात् परस्मैपदम्॥ वाचा शरीरस्पर्शनाभावान्नात्मनेपदमिति वृद्धैर्व्याख्यातत्वात्।

( च ) **आङः प्रतिज्ञायाम्**। प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा। अङ्गीकारः प्रतिज्ञेति तु सुगमोऽध्वा ॥ **शब्दं नित्यमिति**। नित्यमिति पदं शब्दस्य विशेषणम्। शब्दो नित्य इति प्रतिज्ञां करोतीत्यर्थः ॥

**( स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च )** गोपी कृष्णाय तिष्ठते । अस्थित । 'संशय्य कर्णादिषु तिष्ठते यः' ॥ (क) ॥ १६ ॥

( सु० ) **स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च** ॥ स्वाशयस्य प्रकाशने विवादस्य निराकरणकर्ता निर्णेता तस्मिन्नर्थे च तिष्ठतेरात्स्यात् । गोपी कृष्णाय तिष्ठते । स्थित्या नेत्रादिविकाराद्वा स्वाभिप्रायं ज्ञापयति । 'संशय्य कर्णादिषु तिष्ठते यः' संशयं विधाय निर्णेतृत्वेन कर्णादीनाश्रयत इत्यर्थः ।। १६ ।।

( त० ) **निर्णेत्राख्यायामिति** ।। निर्णेता विवादस्य निराकरणकर्ता लोके प्रसिद्धः । **कृष्णाय तिष्ठत** इति ।। स्वस्थित्या नेत्रादिविकारद्वारा स्वाभिप्रायविशेषं ज्ञापयतीत्यर्थः । **संशय्य कर्णादिष्विति** ॥ संशयं निर्णेतुं कर्णादिषु तिष्ठतीत्यर्थः । अन्ये तु संशयस्य कर्णादय एव निर्णेतार इत्येवार्थ इति वदन्ति ॥ १६ ।।

**(उदोऽनूर्ध्वकर्मणीहायाम्)** (ख)मुक्तावुत्तिष्ठते । उदः स्थास्तम्भोः सलोपः । उत्थासीष्ट, उत्थासीयास्ताम् । उदस्थास्यत । उदस्थित । अनूर्ध्व-कर्मणि किम् । पीठादुत्तिष्ठति । ईहायां किम् । ग्रामाच्छतमुत्तिष्ठति(ग) ॥१७॥

( सु० ) **उदोऽनूर्ध्वकर्मणीहायाम्** ॥ इच्छापूर्विका चेष्टा ईहा तस्यामेव नेह । ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः ॥ १७ ॥

( त० ) **उद्** इति ॥ कर्म क्रिया । ईहा परिस्पन्दः । **मुक्तावुत्तिष्ठत** इति मुक्त्यर्थं घटत इत्यर्थः ॥ ईहायां किम् । ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः । उत्पत्तिः क्रिया न तु परिस्पन्दात्मिकेत्यादभावः ॥ १७ ॥

**( उपान्मन्त्रकरणदेवपूजासङ्गतिकरणमित्रकरणपथिषु )** आग्नेय्याऽऽग्नीध्रमुपतिष्ठते ।। मन्त्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते । गङ्गा यमुनामुपतिष्ठते । रथिकानुपतिष्ठते । स्रुघ्नमुपतिष्ठते पन्थाः ।। १८ ॥

( सु० ) **उपान्मन्त्रकरणदेवपूजासङ्गतिकरणमित्रकरणपथिषु** ॥ एष्वर्थेषूपात्तिष्ठतेरात्स्यात् ॥ मन्त्रः करणं यत्र तन्मन्त्रकरणं स्तुतिः । आग्नेय्याग्नीध्रमुपतिष्ठते । अग्निदेवताकया ऋचाऽऽग्नीध्रमग्निविशेषं स्तोतुं तत्समीपे तिष्ठतीत्यर्थः । अग्निमिन्धे इति अग्नीत् क्विबन्तः । अग्नीधः स्थानमाग्नीध्रम् । तत्स्थोऽऽप्याग्नीध्रः । निपातनात्तद्धितो रणप्रत्ययः ॥ मन्त्रकरणे किम् । भर्त्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते । आदित्यं

---

( क ) श्लोकोऽयं किरातार्जुनीयकाव्यस्य—

जहातु नैनं कथमर्थसिद्धिः ? संशय्य कर्णादिषु तिष्ठते यः ।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥ स० ३ , १४ ।

(ख) **उदोऽनूर्ध्वकर्मणीति** । उत्पूर्वात्तिष्ठतेरनूर्ध्वे परिस्पन्दे वर्त्तमानादित्यर्थः । इह परिस्पन्दस्यानूर्ध्वत्वं नामोपरिदेशसंयोगफलकत्वाभावः ॥ यद्यप्युदोऽनूर्ध्व इत्युक्तेऽपि क्रियावाचकत्वं लभ्यत एव तथापि परिस्पन्दतालाभार्थं कर्मपदम्, तदेतदाह **ईहायामेवेति** ॥ काम्यपरिस्पन्दरूपो व्यापार ईहा ।

( ग ) **ग्रामाच्छतमुत्तिष्ठतीति** । उत्पद्यत इत्यर्थः । शतस्य कर्त्तुः चेष्टाया अभावान्नात्मनेपदम् ।

स्तोतुं तदभिमुखतया तिष्ठतीत्यर्थः । गङ्गा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते । मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नो देशस्तमुपतिष्ठते प्राप्नोतीत्यर्थः ॥१८॥

( त० ) **उपान्म०** ॥ मन्त्रं करणं कारकम् । देवानां पूजा (क) संगतिः संश्लेषः । मित्रस्य करणम् । पन्था मार्गः । स च कर्तृत्वेन संबध्यते ॥ **आदित्यमुपतिष्ठत** इति ॥ पूजयतीत्यर्थः । **यमुनामिति** ॥ उपश्लिष्यतीत्यर्थः ॥ **रथिकानिति** ॥ मित्रीकरोतीत्यर्थः ॥ **पन्था** इति ॥ प्राप्नोतीत्यर्थः ॥ १८ ॥

( **वा लिप्सायाम्** ) भिक्षुः प्रभुमुपतिष्ठते–उपतिष्ठति वा ॥१९॥

( सु० ) **वा लिप्सायाम्** ॥ प्रभुमुपतिष्ठेते–उपतिष्ठति वा । लिप्सयोपगच्छतीत्यर्थः ॥ १९ ॥

(त०) **वा लिप्सायामिति**॥ लब्धुमिच्छा लिप्सा तस्यां गम्यमानायामित्यर्थः॥ १९॥

( **अकर्मकाच्च** ) ज्ञानमुपतिष्ठते (ख) उत्पद्यत इत्यर्थः ॥ २० ॥

( सु० ) **अकर्मकाच्च** ॥ उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते । सन्निहितो भवतीत्यर्थः ॥ २० ॥

( त० ) **अकर्मकाच्चेति** ॥ कर्म कारकं न तु क्रिया (ग) ॥ **ज्ञानमुपतिष्ठत** इति ॥ सन्निपत्त इत्यर्थः ॥ २० ॥

( **उद्विभ्यां तपोऽकर्मकात्स्वाङ्गकर्मकाच्च** ) उत्तपते वितपते पाणिं शिरो वा ॥ स्वाङ्गकर्मकात्किम् । सुवर्णमुत्तपति ॥ २१ ॥

( सु० ) **उद्विभ्यां तपोऽकर्मकात्स्वाङ्गकर्मकाच्च** ॥ स्वमङ्गं स्वाङ्गं न त्वद्रवमिति परिभाषितम् (घ) । उत्तपते । वितपते । दीप्यते इत्यर्थः । नेह सुवर्णमुत्तपति । संतापयति विलापयति वेत्यर्थः ॥ चैत्रो मैत्रस्य पाणिमुत्तपति । संतापयतीत्यर्थः ॥ २१ ॥

( त० ) **उत्तपत** इति ॥ दीप्यत इत्यर्थः ॥ २१ ॥

---

( क ) **देवनां पूजेति** । पूजा गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रियेत्यर्थः ॥ **संगतिरिति** । संगतिकरणमुपश्लेषः ॥ **मित्रस्य करणमिति** । मित्रकरणमनुपश्लिष्टस्यापि मैत्रीसम्बन्धः ॥ अथ कथं स्तुत्यं स्तुतिभिरथ्र्याभिरुपतस्थे सरस्वतीति संगच्छते, नृपस्य देवतात्वाभावादिति चेन्न, नृपे देवतात्वाभावेऽपि देवतात्वारोपात् नृपस्य देवतांशत्वाद्वा । स्तुत्यं स्तोत्रार्हं तं रघु सरस्वती अथ्र्याभिरर्थादनपेताभिः स्तुतिभिः स्तोत्रैः उपतस्थे पूजितवतीति पद्यार्थः । आरोपस्तु स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व–स्वप्रतियोगिनिष्ठत्व–स्वावच्छिन्नत्व—एतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताशालिज्ञानत्वमिति ॥ अत्र स्वपदार्थस्तु विशेष्यविशेषणयोर्भासमानः सम्बन्धो ज्ञेयः । आहार्यज्ञानमारोप इति वस्तुस्थितिः । बाधसमानकालीनेच्छाजन्यज्ञानमाहार्यारोप उच्यते ॥ आरोपस्य भ्रमरूपत्वात् 'स्तुत्यं स्तुतिभिरथ्र्याभिरुपतस्थे सरस्वती' इत्यत्र पक्षान्तरे समादधन्ति,,— नृपस्य देवतांशत्वाद् उपतस्थ इत्यात्मनेपदं संगच्छते इति बोध्यम् ॥ तथा च मनुः "अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा" इति ॥

( ख ) 'मूलतत्त्वदीपिकयोः 'भोजनकाल उपतिष्ठते' इति पाठ इति केचित् ॥

( ग ) **कर्म कारकमिति** । अकर्मकस्तु व्यापारसमानाधिकरणफलवाचकः । व्यापाराधिकरणेतरावृत्ति यत्फलं तद्वाचक इत्यर्थः । तथा सति गम्यादौ द्विनिष्ठत्वेन फलस्य व्यापाराधिकरणकर्तृनिष्ठत्वेऽपि न दोषः ॥

( घ ) **परिभाषितमिति** । स्वतन्त्रसंकेतः परिभाषा ॥ परिभाषासञ्जातास्येति परिभाषितम् ॥

**( आङो यमहनिभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च )** आयच्छते आहते पार्णि शिरो वा। आघ्नाते। आहसे। अन्यत्र। शत्रुमायच्छति आहन्ति वा ॥ २२ ॥

**( सु० ) आङो यमहनिभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च ॥** यमहनिभ्यामात् ॥ नेह परस्य शिर आहन्ति। अथ तर्हि 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः(क) ॥ 'आहध्वं मा रघूत्तमम्' इति भट्टिश्च। प्रमाद एवायमिति (ख)। समीपमेत्येत्यध्याहारो वा बोध्यः। विषमविलोचनस्य समीपमेत्य वक्ष आजघ्ने। स्वकीयमेव वक्षो मल्ल इव संतोषातिशयादास्फोटनं चक्रे इत्यर्थः ॥ २२ ॥

**(त०) आङ** इति ॥ अकर्मकस्वाङ्गकर्मकयोरवृत्तिरत्रापि। **आयच्छति** इति ॥ दीर्घो भवतीत्यर्थः ॥ **आहत** इति ॥ नलोपः आघ्नाते। 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यादौ तु प्राप्येत्यध्याहारो बोध्यः (ग) ॥ २२ ॥

**( हनः सिः कित् )** वधो वाति ॥ आहत। आवधिष्ट, आवधिषाताम्—आहसाताम् ॥ २३ ॥

**(सु०) हनः सिः कित ॥** हन्तेः परः सिः प्रत्ययो वा कित् स्यात्। हनो लुङ्लिङोरिति वधादेशः। आवधिष्ट, आवधिषाताम्। पक्षे कित्त्वात् लोपस्त्वनुदात्ततनामिति नलोपः। लोपो ह्रस्वादिति सिलोपः आहत, आहसाताम्, आहसत ॥ २३ ॥

**(यमः सूचने सिः कित्)** उदायत, उदायसाताम्, उदायसत॥२४॥

**(सु०) यमः सूचने सिः कित् ॥** सूचनं परदोषाविष्करणम्। कित्त्वाल्लोपस्त्वनुदात्ततनामिति मलोपः। लोपो ह्रस्वादिति सिलोपः। उदायत। सूचने किम्। उदायंस्त पादम्। आकृष्टवानित्यर्थः ॥ २४ ॥

( क ) **आजघ्ने इति।** गाण्डीवी अर्जुनो विषमविलोचनस्य त्र्यम्बकस्य वक्षः हृदयम्, भुजाभ्याम् आजघ्ने ताडितवानिति श्लोकार्थः ॥ **सम्पूर्णः श्लोकस्तु—**

उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ॥ इति ॥

किरातार्जुनीयस्य सप्तदशसर्गः ॥

इह तु 'आजघ्ने' इति पदे च्युतसंस्कारतादोषः। न च कनकशिलानिभं कनकनिकषपाषाणतुल्यं श्यामवर्णं स्ववक्ष एवाजघ्ने इत्यर्थ इति वाच्यम्। युद्धे प्रवर्त्तमानानां वीराणां स्ववक्षस आघातादर्शनात् तत्पूर्वमेव हि दर्पप्रकाशार्थं तत्करणदर्शनात्।

( ख ) **प्रमादत एवेति।** पूर्वमकर्त्तव्यतया निश्चिते सत्यपि पुनः कर्त्तव्यताधीः प्रमादः ॥

( ग ) ननु "प्राप्येति" अध्याहारे कृते "ल्यब्लोपे कर्मण्याधारे च पञ्चमी" इति पञ्चमी प्रसक्तस्तत्राह—ल्यब्लोपे पञ्चमीति तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयकम् इति, ल्यबर्थो दृश्यते यत्र ल्यबन्तं नैव दृश्यते तदेव हि ल्यब्लोपित्वं ज्ञातव्यञ्च सदा बुधैः। इति शिष्टोक्तेरिति भावः। "उच्चारितः शब्दः प्रत्यायको नानुच्चारितः" इति भाष्योक्तेः कथं तदर्थावगतिरिति चेन्न, वाक्ये वाक्यैकदेशप्रयोगन्यायेन अत्र शब्दाध्याहारात्। ननु शब्दाध्याहारेऽपि लोपोऽप्रयोगोऽस्त्येवेति इदमसाध्विति शङ्कया केचिदाहुः—**भेत्तुमित्यादितुमन्ताध्याहारो वेति ॥** तुमन्तघटितवाक्यस्यैकदेशोऽयमित्यर्थः, समीपमेत्येति वेति।

( त० ) **सूचन** इति ॥ परेणाच्छाद्यमानस्याविष्करण इत्यर्थः **उदायत** इति ॥ परावद्यं प्रकाशयति स्मेत्यर्थः ॥ २४ ॥

**( समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिदृशिभ्योऽकर्मकेभ्यः )** (क) संगच्छते ॥ २५ ॥

( सु० ) **समोगम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिदृशिभ्योऽकर्मकेभ्यः** ॥ समुपसर्गादकर्मकेभ्यो गम्यृच्छ्यर्तिश्रुदृशिभ्यः प्रच्छिस्वरतिविदिभ्यः सकर्मकेभ्यश्चात्स्यात्॥ सङ्गच्छते । सङ्गतं भवतीत्यर्थः ॥ २५ ॥

( त० ) **समो गम्यृच्छी**ति ॥ ऋच्छ गत्यादौ । आदेशस्तु न अर्तेः पृथग्ग्रहणात् । विदीति वेत्तेरेव ग्रहणं गम्यादिपरस्मैपदिसाहचर्यात् । **संगच्छत** इति ॥ युज्यत इत्यर्थः । अकर्मकादित्येव 'रक्षांसीति पुरापि संश्रृणुमहे' इति मुरारिप्रयोगस्तु इति कथयन्त्य इत्यध्याहारेण समाधेयः । अर्थान्तरे वृत्तेरकर्मकत्वं सकर्मकाणामपि ॥ २५ ॥

**( गमेः सिस्यौ कितौ वा )** सङ्गसीष्ट—सङ्गंसीष्ट । समगत—समगंस्त ॥ समृच्छिष्यते । समानृच्छे । समार्च्छिष्ट ॥ संस्वरते । संसस्वरे । संस्वरिषीष्ट—संस्वृषीष्ट । समस्वरिष्ट—समस्वृत ॥ संपृच्छते । समप्रष्ट, समप्रक्षाताम् ॥ संशृणुते । संश्रोता । समश्रोष्ट ॥ संवित्ते, संविदाते ॥ २६ ॥

( सु० ) **गमेः सिस्यौ कितौ वा** ॥ गमेरनिटौ सिस्यौ वा कितौ स्तः ॥ आशिषि लिङि कित्त्वाल्लोपस्त्वनुदात्ततनामिति मलोपः । सङ्गसीष्ट-पक्षे सङ्गंसीष्ट । लुङि कित्त्वान् मलोपे लोपो ह्रस्वादिति सिलोपः । समगत, समगसाताम्, समगसत । कित्त्वाभावे समगंस्त, समगंसाताम्, समगंसत । तौदादिकस्य ऋच्छेरत्र ग्रहणम्, न तु ऋच्छादेशस्येति ध्वननार्थं लृटः प्रयोगः । समृच्छिष्यते ॥ ग्रहामिति संप्रसारणम् । संपृच्छते ॥ स्वृ शब्दोपतापयोः । संस्वरते ॥ अर्तीति भौवादिकजौहोत्यादिकयोर्ग्रहणम् । तत्र भ्वादेः समृच्छते । लिटि समाराते, समारिरे । लिङि उरिति न गुणः । समृषीष्ट । समर्ता । हृन्त इतीट् । समरिष्यते । समारिष्यत । लुङि मेट इत्यटोऽभावः । उरिति न गुणः । लोपो ह्रस्वादिति सिलोपे । मा समृत, मा समृषाताम्, मा समृषत । माङभावे समार्त्त, समार्षाताम्, समार्षत । इयर्तेस्तु ऋप्रोरिः पूर्वस्येति पूर्वस्येत्वे असवर्णे स्वरे पूर्वस्येतीय् । समीयृते । लुङि सर्तिशास्त्यर्त्तिभ्य इति ङः । ऋवर्णदृशोरिति गुणः । मेट इत्यडभावः । मा समरत, मा समरेताम्, मा समरन्त । माङभावे समारत, समारेताम्, समारन्त ॥ श्रुवः श्रआदेशो इति श्रआदेशो नुप्रत्ययश्च । संश्रृणुते । परस्मैपदसाहचर्याद्विद ज्ञाने इत्यस्यैव ग्रहणं न तु स्वरितेतो विद्लृ लाभे इत्यस्य । सत्ताविचारणार्थस्य विदेस्त्वनुदात्तत्वादात्मनेपदं सिद्धमेव ॥ २६ ॥

**( वेत्तेरन्तो वा रुडाति )** संविद्रते-संविदते । संपश्यते । समदृष्ट ॥ समियृते, समियरते । समारे । ऋप्रो रिः पूर्वस्य । समियृरीति ।

( क ) **अकर्मकेभ्य इति** ॥ अथ कथं तर्हि—तच्चैक्यं समगच्छतेति, आर्षत्वात् ।

समित्रीयाताम् । स्वरादेः । अ इ ए । ए ऐ ऐ । समैयृत, समैयृराताम् । अकर्मकात्किम् । ग्रामं सङ्गच्छति ॥२७ ॥

( सु० ) **वेत्तेरन्तो वा रुट्** ॥ विदेः परस्यान्प्रत्ययस्य रुड् वा स्यात् आति ॥ दृशादेरिति पश्यः । संपश्यते । कथं तर्हि सकर्मकस्य 'रक्षांसीति पुरापि संश्रृणुमहे' इति मुरारिप्रयोगः ? प्रामादिकोऽयम्, इति कथयन्तय इत्यध्याहारो वा । अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेच्छृणु । "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः, कर्मणोऽकर्मिका क्रिया" इत्युक्तत्वादकर्मकत्वं बोध्यम् ॥ २७ ॥

( **उपसर्गादस्यत्यूह्योर्वा** ) निरस्यते । निरस्यति । निरास्यत ॥ समूहति । समूहते । समूह्यात् ॥ २८ ॥

( सु० ) **उपसर्गादस्यत्यूहोर्वा** ॥ अकर्मकादिति निवृत्तम् (क) । असु क्षेपणे । ऊहवितर्के । बन्धं निरस्यति । दिवादित्वाद्यः ॥ उपसर्गादूहतेर्ह्रस्वो यादौ क्ङिति । ब्रह्म समुह्यात् । अग्निं समुह्यति ॥ २८ ॥

( **निसमुपविभ्यो ह्वः** ) (ख) निह्वयते ॥ २९ ॥

( सु० ) **निसमुपविभ्यो ह्वः** ॥ एभ्यः परस्मात् ह्वेञ् आत् स्यात् ॥ २९ ॥

( **स्पर्द्धायामाङः** ) कृष्णश्चाणूरमाह्वयते (ग) ॥ ३० ॥

( सु० ) **स्पर्द्धायामाङः** ॥ आङः परात् ह्वेञः आत्स्यात् ॥ पराभिभवेच्छा स्पर्द्धा तस्यामर्थे ॥ ३० ॥

( त० ) **स्पर्द्धायामिति** ॥ पराभिभवेच्छा स्पर्धा ॥ कृष्ण इति ॥ स्पर्धया तस्याह्वानं करोतीत्यर्थः ॥ ३० ॥

( **अप्रतिबन्धोत्साहस्फीततासु क्रमः** ) ऋचि क्रमते बुद्धिः । अध्ययनाय क्रमते । क्रमन्तेऽस्मिञ्छास्त्राणि ॥ ३१ ॥

(सु०) **अप्रतिबन्धोत्साहस्फीततासु क्रमः** ॥ ऋचि क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । अध्ययनाय क्रमते । उत्सहत इत्यर्थः ॥ क्रमन्तेऽस्मिञ्छास्त्राणि । स्फीतानि प्रवृद्धानि भवन्तीत्यर्थः ॥ ३१ ॥

( त० ) **ऋचि क्रमत** इति ॥ न प्रतिहन्यत इत्यर्थः । **अध्ययनाय क्रमत** इति । उत्सहत इत्यर्थः ॥ **क्रमन्त** इति स्फीतानि भवन्तीत्यर्थः ॥ ३१ ॥

( **उपपराभ्याम्** ) उपक्रमते । पराक्रमते ॥ ३२ ॥

( सु० ) **उपपराभ्याम्** ॥ अप्रतिबन्धादिषु वाच्येष्वाभ्यां क्रम आत्स्यात् ॥ नेह संक्रामति ॥ ३२ ॥

( क ) **निवृत्तमिति** । सोपसर्गास्यत्यूह्योः सकर्मकत्वेनाकर्मकादित्येतत्सम्बन्धस्य वक्तुमशक्यत्वादिति भावः ।

( ख ) **निसमुपविभ्यो ह्व इति** । अत्र 'ह्व' इत्येकारान्तानुकरणं लक्षणवशसम्पन्नमारम्भ् । तेन "निह्वयते" इत्यत्रात्मनेपदं भवति । कृतात्त्वानुकरणे तु यत्रात्त्वविषयताऽस्ति तत्रैव स्यात् ।

( ग ) **स्पर्द्धायामाङः इति** । स्पर्द्धायां किम्, पुत्रमाह्वयति । आकारयतीत्यर्थः ।

**( आङो ज्योतिरुद्गमने )** (क)आक्रमते—आक्रम्यते सूर्यः ॥३३॥

( सु० ) **आङो ज्योतिरुद्गमने** । आक्रमते सूर्यः । उदयत इत्यर्थः । नेह । आक्रमति धूमो हर्म्यतलात् ॥ ३३ ॥

( त० ) **ज्योतिरुद्गमन इति** ॥ ज्योतिर्नक्षत्रादिः ॥ **आक्रमते सूर्य इति** ॥ उदयत इत्यर्थः । नभः समाक्रामति चन्द्रमाः क्रमात्' इत्यत्र तु प्राप्नोतीत्येवार्थो न तूद्गमनम्॥३३॥

**( वेः पादविहरणे )** (ख) साधु विक्रमते वाजी ॥ ३४ ॥

( सु० ) **वेः पादविहरणे** ॥ क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तम् ॥ पादविहरणे किम् । विक्रामति सन्धिः । द्विधा भवति स्फुटतीत्यर्थः ॥३३॥

( त० ) **वेः** ॥ विहरणं विक्षेपणम् । यद्यपि धातुरयमस्मिन्नेवार्थे प्रसिद्धस्तथापि धातूनामनेकार्थत्वाद्विशेषणम् । नेह । विक्रामति सन्धिः । द्विधा भवतीत्यर्थः ॥३४॥

**( प्रोपाभ्यां प्रारम्भार्थाभ्याम् )** प्रक्रमते । उपक्रमते ॥ ३५ ॥

**( स्नुक्रमोरीति नेट् )** प्रक्रंसीष्ट ॥ ३६ ॥

( सु० ) **प्रोपाभ्यां प्रारम्भार्थाभ्याम्** ॥ प्रक्रमते । आरम्भं करोतीत्यर्थः । प्रारम्भार्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामत्यागच्छतीत्यर्थः । उपपराभ्यामिति नात्रात्मनेपदं शङ्क्यम् । अप्रतिबन्धादिष्वेवेत्युक्तत्वात् ॥ ३५ ॥

**( अनुपसर्गाद्वा )** क्रमते—क्रम्यते । क्राम्यति—क्रामति ॥ ३७ ॥

( सु० ) **अनुपसर्गाद्वा** ॥ अप्राप्तविभाषेयम् । अप्रतिबन्धादिषु तु नित्यमेव ॥३७॥

**( अपह्नवे ज्ञः )** (ग) शतमपजानीते ॥ ३८ ॥

( सु० ) **अपह्नवे ज्ञः** ॥ अपनयनेऽर्थे ज्ञ आत् ॥ ३८ ॥

( त० ) **शतमपजानीते** ॥ अपलपतीत्यर्थः ॥ ३८ ॥

**( अकर्मकाच्च )** (घ) सर्पिषो जानीते ॥ ३९ ॥

( सु० ) **अकर्मकाच्च** ॥ सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ॥३९॥

( त० ) **सर्पिष इति** ॥ सर्पिषा उपायेन प्रवर्तत इत्यर्थः ॥ ३९ ॥

**( अनुपसर्गाज्ज्ञः । )** गां जानीते ॥ ४० ॥

( सु० ) **अनुपसर्गाज्ज्ञः** ॥ अकर्मकाच्चेत्येव सिद्धे सकर्मकार्थमारम्भः ॥ अनुपसर्गात् किम् । स्वर्गं लोकं न प्रतिजानामि । कथं तर्हि 'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य' इति भट्टिः (ङ) । कर्मणि लिट् । नृपेणेति विपरिणामः ॥ ४० ॥

---

( क ) **उद्गमन इति** । उर्ध्वदेशसंयोगानुकूलव्यापारः ।

( ख ) पादविहरणं पादविक्षेपः । धातूनामनेकार्थं बोधयितुं सूत्रे पादविहरण इत्युक्तम् ।

( ग ) **अपह्नवे ज्ञ इति** । अपह्नवोऽपह्नुतिरपलापः । अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा ।

( घ ) **अकर्मकाच्चेति** । 'अनुपसर्गाज्ज्ञः' इत्यनेनैव सिद्धे सर्पिषोऽनुजानीते इत्यादि । सोपसर्गार्थमिदं सूत्रम् ।

( ङ ) **उत्कण्ठापूर्वकमिति** । झटिति झटित्युद्बुद्धसंस्कारजन्यस्मरणमुत्कण्ठा ।

( **सम्प्रतिभ्यामनाध्याने** ) शतं संजानीते । शतं प्रतिजानीते । अनाध्याने किम् । मातरं संजानाति ॥ ४१ ॥

( सु० ) **सम्प्रतिभ्यामनाध्याने** ॥ उत्कण्ठापूर्वकं स्मरणमाध्यानम् (क) ॥ शतं संजानीते । अवेक्षत इत्यर्थः ॥ शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः ॥ ४१ ॥

( त० ) **शतं सञ्जानीते** ॥ अवेक्षत इत्यर्थः ॥ **शतं प्रतिजानीते** ॥ अङ्गीकरोतीत्यर्थः ॥ ४१ ॥

( **अनुपसर्गाद्वा** ) गां जानाति, जानीते वा ॥ ४२ ॥

( सु० ) **अनुपसर्गाद्वा** ॥ अनुपसर्गात्परस्य ज्ञो वा आत्स्यात् ॥ ४२ ॥

( **वेः शब्दकर्मणः कृञः** ) (ख) शब्दं विकुरुते ॥ ४३ ॥

( सु० ) वेः शब्दकर्मणः कृञः ॥ शब्दं विकुरुते । उच्चारयतीत्यर्थः ॥ शब्दकर्मणः किम् । चित्तं विकरोति कामः (ग) ॥ ४३ ॥

( **अकर्मकाच्च** ) विकुर्वते सैन्धवाः ॥ ४४ ॥

( सु० ) **अकर्मकाच्च** ॥ वेरकर्मकात्कृञ आत्स्यात् ॥ विकुर्वते सैन्धवाः । वाजिनो विकारं लभन्त इत्यर्थः ॥ ४४ ॥

( **भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः** ) शास्त्रे वदते । भृत्यानुपवदते । शास्त्रे वदते । क्षेत्रे वदते । गेहे विवदन्ते । उपवदन्ते ब्राह्मणाः परदारान् (घ) ॥ ४५ ॥

( सु० ) **भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः** ॥ वदतेरात्स्याद्ेष्वर्थेषु ॥ शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । उपसम्भाषोपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयतीत्यर्थः ॥ शास्त्रे वदते । ज्ञानं वदतीत्यर्थः ॥ क्षेत्रे वदते । क्षेत्रप्रयत्नं वदतीत्यर्थः । गेहे विवदन्ते । विवादं कुर्वन्तीत्यर्थः । उपवदन्ते । प्रार्थयन्ते । उपमन्त्रणमुपच्छन्दनम् । एषु किम् । किंचिद्वदति ॥ ४५ ॥

( त० ) **भासनेत्यादि** ॥ भासनं दीप्तिः । उपसंभाषा सान्त्वनम् । **शास्त्रे वदत इति** ॥ भासमानो ब्रवीतीत्यर्थः ॥ **भृत्यानिति** ॥ सान्त्वयतीत्यर्थः ॥ **शास्त्रे वदत इति**॥ वदितुं सम्यगबुध्यत इत्यर्थः ॥ **क्षेत्रे वदत इति**॥ क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः ॥ **गेहे विवदन्त इति** ॥ विविधं भाषन्त इत्यर्थः ॥ **परदारानुपवदत इति** ॥

---

( क ) क्रुध्यन् कुलं धक्ष्यति विप्रवह्निर्यास्यन् सुतस्तप्स्यति मां समन्युम् ।
इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य ॥
इत्ययं सम्पूर्णश्लोको भट्टिकाव्यस्य प्रथमसर्गीयः ।

( ख ) **वेरिति** । शब्दः कर्म कारकं यस्य ततः कृञो विपूर्वादात्मनेपदमित्यर्थः ।

( ग ) **विकरोतीति** । अन्यथा करोतीत्यर्थः ।

( घ ) **शास्त्रे वदते इति** । बोधोत्तरं शास्त्रविषयकज्ञानवत्त्वं मनसा बुध्यते इत्यर्थः । **क्षेत्रे वदत इति** । क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः । **गेहे विवदन्त इति** । वैमत्यहेतुकं नानाविधं भाषन्त इत्यर्थः ।

भद्रे भजस्व मामिदं ते दास्यामीत्येवंरं इसि प्रचोद्य स्वाभिलषिते प्रवर्तयतीत्यर्थः ॥४५॥

**(मनुष्यादीनां संभूयोच्चारणे)** (क) संप्रवदन्ते ब्राह्मणाः ॥४६॥

(सु०) **मनुष्यादीनां संभूयोच्चारणे**॥ वदतेरात्स्यान्मनुष्यादीनां सहोच्चारणेऽर्थे ४६

**( व्यक्तवाग्विषयादनुपूर्वादकर्मकात् )** अनुवदते कठः कलापस्य ॥ ४७ ॥

( सु० ) **व्यक्तवाग्विषयादनुपूर्वादकर्मकात्** ॥ एतादृशाद्वदतेरात्स्यात् ॥ व्यक्तः वाग्विषयो यस्य स व्यक्तवाग्विषयस्तस्मात् । अनुवदते कठः कलापस्य । वेदशाखावाचकावपि कठकलापशब्दावत्र तदध्येतरि वर्तेते । अनु सादृश्यम् । कलापस्येति सम्बन्धे षष्ठी । अकर्मकात् किम् । उक्तमनुवदति ॥ व्यक्तवागिति किम् । अनुवदति वीणा ॥ ४७ ॥

( त० ) **व्यक्तेति** ॥ व्यक्ता परिस्फुटवर्णा अर्थावगतिहेतुश्च वाक् येषां ते व्यक्तवाचः । ते च यद्यपि शुका अपि तथापि मनुष्या एवात्र बोध्याः प्रसिद्धतरत्वात् । अत एव च्छेतदुपात्तम् । अन्यथा वदेः स्वभावादेव तदर्थकत्वात्कृतमनेन ॥ **अनुवदत** इत्यादि ॥ शाखावचनावपि कठकलापशब्दौ तदध्येतरि वर्तेते । कलापेन सदृशं कठोऽधीयानो वदतीत्यर्थः ॥ अकर्मकात्किम् । उक्तमनुवदति ॥ व्यक्तवाचां किम् । अनुवदति वीणा ॥ ४७ ॥

**( वा विरुद्धोक्तौ )** विप्रवदन्ति विप्रवदन्ते वा वैद्याः ॥ ४८ ॥

( सु० ) **वा विरुद्धोक्तौ** ॥ विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणेऽर्थे वदेर्वात ॥ अप्राप्तविभाषेयम् ॥ ४८ ॥

( त० ) **विप्रवदन्तीत्यादि** ॥ युगपत्परस्परं विरुद्धं वदन्तीत्यर्थः ॥ ४८ ॥

**( अवाद्गिरतेः )** अवगिरते ॥ ४९ ॥

( सु० ) **अवाद्गिरतेः** ॥ गिरतेरिति तौदादिकस्यैव ग्रहणम् । गृणातेरवपूर्वस्य प्रयोगो नास्तीति भाष्योक्तेः ॥ ४९ ॥

( त० ) **अवादिति** ॥ गिरतेरिति निर्देशात्तौदादिकस्यैव ग्रहणम् । गृणातेस्त्ववपूर्वस्य प्रयोगो नास्तीति भाष्योक्तेः क्रैयादिकस्याग्रहः । अतो गिर इत्युक्तावप्यदोषः ॥४९॥

**( समः प्रतिज्ञाने )** (ख) शब्दं नित्यं संगिरते ॥ ५० ॥

( सु० ) **समः प्रतिज्ञाने** ॥ समो गिरतेरात्स्यात्प्रतिज्ञानेऽर्थे ॥ संगिरते । प्रतिजानीत इत्यर्थः ॥ प्रतिज्ञाने किम् । संगिरति ग्रासम् ॥ ५० ॥

( त० ) **संगिरत** इति ॥ प्रतिजानीत इत्यर्थः ॥ ५० ॥

**( उदश्चरः सकर्मकात् )** धर्ममुच्चरते ॥ ५१ ॥

( सु० ) **उदश्चरः सकर्मकात्** ॥ धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकात्किम् । बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥ ५१ ॥

( त० ) **धर्ममुच्चरत** इति ॥ उल्लङ्घ्य गच्छतीत्यर्थः ॥ ५१ ॥

---

( क ) **मनुष्यादीनामिति** । तेन शुकसारिकादीनां सहोच्चारणे न ।

( ख ) **सम इति** । प्रतिज्ञानमभ्युपगमः ।

**( समस्तृतीयायुक्तात् )** रथेन संचरते ॥ ५२ ॥

( सु० ) **समस्तृतीयायुक्तात्** ॥ तृतीयान्तयुक्तात्समश्चरोरात्स्यात् ॥ रथेन संचरते व्यवधानेऽपि रथेन समुच्चरते ॥ ५२ ॥

**(दाणश्च सा चेच्चतुर्थ्यर्थे)** (क) दास्या संयच्छते कामुकः ॥५३॥

( सु० ) **दाणश्च सा चेच्चतुर्थ्यर्थे** ॥ तृतीयान्तयुक्तात्समो यच्छतेरात्स्यात् सा तृतीया चेच्चतुर्थ्यर्थे भवति ॥ दास्या संयच्छते । दास्यै धनं ददातीत्यर्थः । दास्येति संप्रदाने तृतीया ॥ ५३ ॥

( त० ) **दास्येत्यादि** ॥ कामितया दास्यै ददातीत्यर्थः ॥ ५३ ॥

**( उपाद्यमः स्वीकारे )** (ख) भार्यामुपयच्छते ॥ ५४ ॥

( सु० ) **उपाद्यमः स्वीकारे** ॥ उपाद्यमेरात्स्यात् स्वीकारो विवाहस्तस्मिन्नर्थे ॥ ५४ ॥

( त० ) **स्वीकार** इति ॥ स्वीकारो विवाहः । अङ्गीकारमात्रमिति तु भाष्यम् ५४

**(यमः सिः किद्वा विवाहे)** रामः सीतामुपायत—उपायंस्त वा ॥५५॥

( सु० ) **यमः सिः किद्वा विवाहे** ॥ यमः परः सिप्रत्ययो वा कित्स्याद्विवाहेऽर्थे । लोपस्त्वनुदात्ततनामिति मलोपः । उदायत । पक्षे उदायंस्त ॥ ५५ ॥

**( ज्ञाश्रुस्मृदृशां सान्तानामात् )** जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥ ५६ ॥

( सु० ) **ज्ञाश्रुस्मृदृशां सान्तानामात्** ॥ सप्रत्ययान्तेभ्य आत्स्यात् ॥ अपह्नवे ज्ञ इत्यादिना ज्ञाधातोः समो गम्यृच्छीत्यनेन श्रुदृशिभ्यां चात्मनेपदे कृते ततः सप्रत्यये सान्तात्पूर्ववदादित्यनेन तदात्मनेपदं सिद्धमेव । पुनर्ग्रहणं विषयान्तरेऽप्यात्मनेपदार्थम् ॥ ५६ ॥

**( अनोर्ज्ञानातेर्न )** अनुजिज्ञासति पुत्रम् ॥ ५७ ॥

( सु० ) **अनोर्ज्ञानातेर्न** ॥ अनोः सान्ताज्जानातेर्नात्स्यात् ॥ ५७ ॥

**( प्रत्याङ्भ्यां श्रुवः )** प्रतिशुश्रूषति । आशुश्रूषति ॥ ५८ ॥

( सु० ) **प्रत्याङ्भ्यां श्रुवः** ॥ आभ्यां सान्ताच्छृणोतेर्नात् ॥ ५८ ॥

**( स्वराद्यन्तोपसर्गाद्युजेरयज्ञे )** (ग) प्रयुङ्क्ते । उद्युङ्क्ते ॥ अय-

---

( क ) दाण इति । भाष्ये त्विदं सूत्रं प्रत्याख्यातम् । तथाहि—यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुंक्ते स्वयं च तस्यै ददाति तत्रायं प्रयोग इष्यते ॥ "अशिष्टव्यवहारे दानप्रयोगे चतुर्थ्यर्थे तृतीया" इति तृतीया चतुर्थ्यर्थे बोध्यम् । शिष्टव्यवहारे तु ब्राह्मणीभ्यः संप्रयच्छत इति प्रत्युदाहरन् भाष्यकार इह व्याख्याने प्रमाणम् ।

( ख ) **उपाद्यम इति** । स्वीकरणं स्वीकार इति । यत्तु—वृत्तिकृतोक्तं पाणिग्रहणमेवेष्यते । तेनेह न । परभार्यामुपयच्छति । दासीत्वेन स्वीकरोतीत्यर्थ इति । तद्भाष्यविरुद्धम् । तत्र स्वीकारमात्रे आत्मनेपदस्योक्तत्वादिति भावः । तथा च भट्टिः प्रायुक्त—उपायंस्त महास्त्राणीति ।

( ग ) **स्वराद्यन्तेति** । स्वर आदिरन्तोऽयवो यस्य स चासावुपसर्गस्तस्मात् । सम् निस् निर् दुस् दुर् एतद्भिन्नाः सर्वेऽप्युपसर्गाः सङ्गृहीताः ।

ज्ञे किम् । पात्राणि प्रयुनक्ति ॥ ५९ ॥

( सु० ) **स्वराद्यन्तोपसर्गाद्युजेरयज्ञे** ॥ स्वरादेः स्वरान्ताच्चोपसर्गाद्युजेरात् । न तु यज्ञपात्रेऽर्थे ।। ५९ ।।

( त० ) **स्वराद्यन्तोपसर्गादिति** ॥ स्वर आदिरन्तोऽवयवो यस्य स तथा । तेन समादयो व्यावृत्ताः ।। ५९ ।।

( **समः क्ष्णुवः** ) संक्ष्णुते शस्त्रम् ॥६०॥

( सु० ) **समः क्ष्णुवः** ॥ समः क्ष्णोतेरात्स्यात् ।। ६० ।।

( त० ) **संक्ष्णुते शस्त्रमिति** ।। समो गम्यृच्छीत्यादौ न पठितः। अस्यात्र सकर्मकस्य ग्रहणात् ।। ६० ।।

( **भुजोऽपालने** ) ओदनं भुङ्क्ते । पालने महीं भुनक्ति ॥ ६१ ॥

( सु० ) **भुजोऽपालने** । अभ्यवहारे इति वक्तव्ये पालन इति पर्युदासग्रहणं प्रयोजनद्वयार्थम् । संयोगवद्धिप्रयोगस्यापि विशेषावधारणहेतुत्वाद्रौधादिकस्यैव भुजेर्ग्रहणमित्येकम् । अभ्यवहारादर्थान्तरे उपभोगादावप्यात्मनेपदं भवतीति द्वितीयम् । निषेधस्य निषेधः पर्युदासः।। भुजेरात्र स्यात्पालने अपालनत्वादुपभोगार्थे तु भवति। 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इतीह भुजेरुपभोगोऽर्थः । उपभोग इत्युपलक्षणम् (क) । तेन 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' इत्यत्रात्मसात्करणमर्थः। पृथिवीं बुभुजे। स्वाधीनां चकारेत्यर्थः । 'भुजो कौटिल्ये' इति तुदादेस्तु पमेव । पाणिं विभुजति ।। अपालने किम् । महीं भुनक्ति ।। ६१ ।।

( त० ) **भुजोऽपालन** इति ॥ रुधादेरेव ग्रहणम् । तौदिकस्य अनवन इति प्रतिषेधात् । तेन विभुजति पाणिमित्यादावदोषः । 'बुभुजे पृथिवीपालः' इत्यादौ तु भुजेरुपभोगोऽर्थः । अन्यथा भुजो भक्षण इत्येवाकरिष्यत् ।। ६१ ।।

( **गृधिवञ्चिभ्यां ण्यन्ताभ्यां प्रतारणे** ) माणवकं वञ्चयते । गर्द्धयते ॥ ६२ ॥

( सु० ) **गृधिवञ्चिभ्यां ण्यन्ताभ्यां प्रतारणे** ॥ परगामि फलार्थमिदमात्मनेपदम् ।। प्रतारणे किम् । श्वानं गर्द्धयति । अस्यामिकाङ्क्षामुत्पादयति । अहिं वञ्चयति । वर्जयतीत्यर्थः ।। ६२ ।।

( **अपाद्वदः** ) न्यायमपवदते ॥ ६३ ॥

(**समुदाङ्भ्यो यमोऽग्रन्थे**) व्रीहीन् संयच्छते । धान्यानि स्वीकरोतीत्यर्थः ॥ भारमुद्यच्छते ॥ भारं वहतीत्यर्थः ॥ वस्त्रमायच्छते । वस्त्रमादधातीत्यर्थः ॥ अग्रन्थे किम् । वेदमुद्यच्छति । अधिगन्तुमुद्यमं करोतीत्यर्थः ॥६४॥

( सु० ) **अपाद्वदः** ।। अपाद्वदतेरात्स्यात् । अनुपसर्गाज्ज्ञः । पूर्वं व्याख्यातम् ६४

( **कर्मव्यतिहारे धातोरात्** ) व्यतिभवते । व्यतिराते ॥ ६५ ॥

( सु० ) **कर्मव्यतिहारे धातोरात्** ॥ क्रियाविनिमयेऽर्थे धातोः कर्तर्यात्मनेपदं

---

( क ) **उपभोग इति** । विषयसेवनजन्यसुखविशेष उपभोगः ।

स्यात् ॥ व्यतिभवते। अन्यस्य योग्यं भवनमन्यतरः करोतीत्यर्थः॥ रा दाने। व्यतिराते ६५

(त०) **कर्मव्यतिहारे(क) धातोरिति** ।। कर्म क्रिया तस्य व्यतिहारो विनिमयो व्यत्यासस्तस्मिन्नर्थे वर्तमानाद्धातोरादित्यर्थः । **व्यतिभवत** इति ।। अन्यस्य योग्यं भवनमन्यतरः करोतीत्यर्थः । परस्परकरणमपि कर्मव्यतिहारः । संप्रहन्ते राजान इति यथा । अत्र च यदानेकस्य कर्तृत्वे सहविवक्षा तदा द्विवचनं च भवति। सहविवक्षाभावे त्वेकवचनमपि तेन कर्मव्यतिहारस्यानेककर्तृकत्वादेकवचनं न संभवतीति न शङ्कनीयम् ।। ६५ ।।

( **न गतिहिंसार्थपठजल्पहसात्** ) व्यतिगच्छन्ति । व्यतिपठन्ति । व्यतिघ्नन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति ॥ ६६ ॥

( **इतरेतरान्योन्यपरस्परोपदाच्च** ) इतरेतरस्याऽन्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥ ६७ ॥ इत्यात्मनेपदम् ॥ १८ ॥

( सु० ) **न गतिहिंसार्थपठजल्पहसात्** ॥ **इतरेतरान्योन्यपरस्परोपपदाच्च** ॥ गतिहिंसार्थेभ्यः पठजल्पहसेभ्यः इतरेतरान्योन्यपरस्परोपपदेभ्यश्च धातुभ्यः आन्न स्यात् ।। ६७ ।। इति सुबोधिन्यामात्मनेपदम् ।। १८ ।।

---

# अथ परस्मैपदव्यवस्था ॥ १९ ॥

( **अनुपराभ्यां कृञः पम्** ) अनुकरोति । पराकरोति ॥ १ ॥

( सु० ) **अनुपराभ्यां कृञः पम्** ॥ आत्मगामिफले परस्मैपदार्थमिदम् ।। १ ।।

( **अभिप्रत्यतिभ्यः क्षिपः पम्**) अभिक्षिपन्ति । प्रतिक्षिपन्ति । अतिक्षिपन्ति ॥ २ ॥

( सु० ) **अभिप्रत्यतिभ्यः क्षिपः** ॥ क्षिप प्रेरणे । स्वरितेत् । तस्यात्मगामिफलेऽपि परस्मैपदार्थमिदम् ।। २ ।।

( **प्राद्वहः** ) प्रवहन्ति ॥ ३ ॥

( सु० ) **प्राद्वहः** ॥ प्राद्वहतेः पं स्यात् ।। ३ ।।

( **परेर्मृषश्च** ) परिमृष्यति परिवहति ॥ ४ ॥ इति परस्मैपदम् ॥१९॥

( सु० ) **परेर्मृषश्च** ) ॥ परेर्मृषेः पं स्यात् ।। स्वरितेत्त्वात्परेर्मृषेः पद्द्वये प्राप्ते आरम्भः । मृष आमर्षणे दिवादिः । परिमृष्यति । मृष तितिक्षायां चुरादिः ।। ञेरभावे परिमर्षति । चकाराद्वहेरपि पं भवति । परिवहति । व्याङ्पर्युपेभ्यो रमः ।। भ्वादौ व्याख्यातमिदम् ।। अकर्मकाद्वा ।। अकर्मकाद्रमतेर्वा पं स्यात् ।। उपादित्येव । उपरमति । उपरमते वा । निवर्तते इत्यर्थः ।। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो ञ्यन्तेभ्यः पम् । इङ्कीजीनामित्यात्वे । अध्यापयति । पाठयतीत्यर्थः ।। द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्पन्दयतीत्यर्थः ।। ४ ।। इति सुबोधिन्यां परस्मैपदव्यवस्थाप्रक्रिया ।।१९।।

---

( क ) **कर्मव्यतिहार** इति । तथा च श्रीहर्षः—

अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि। श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते॥इति

इति टिप्पण्यामात्मनेपदप्रक्रिया समाप्ता ॥ १८ ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । पदव्यवस्थेयमगात्समाप्तिं शुभलक्षणा ॥

इति तत्त्वदीपिकायां परस्मैपदव्यवस्थाप्रक्रिया ॥ १९ ॥

---

# अथ भावकर्मप्रक्रिया ॥ २० ॥

**(यक् चतुर्षु)** धातोर्भावे कर्मणि च यक् प्रत्ययस्तिबादिषु चतुर्षु परतः ॥१॥

( सु० ) अथ भावकर्मणोर्लडादयः ॥ यक् चतुर्षु ॥ भुवि कर्मणीति चादूभुवीत्यतोऽनुवृत्तम् । अव्यवहितमपि कर्तरीति नानुवर्तते उत्तरसूत्रे कर्तृग्रहणात् । आख्यातप्रकरणादादितश्चतुर्विधेष्वाख्यातेषु चतुर्शब्दोऽस्ति । तेन भावार्थकेषु कर्मार्थकेषु च चतुर्षु परतो धातोर्यक् स्यात् ॥ १ ॥

**( आदूभुवि कर्मणि )** अकर्मकाद्भावे सकर्मकाच्च कर्मण्याद्भवति ॥

भावस्यैकत्वादेकवचनमेव । युष्मदस्मदोः सामानाधिकरण्याभावात्प्रथमः(क) । नामाद्यविषयत्वेऽपि प्रथमातिक्रमे कारणाभावात्प्रथमः । भूयते । भूयताम् । अभूयत । भूयेत । बभूवे ॥ २ ॥

( सु० ) **आदूभुवि कर्मणि** ॥ भवनं भूः । संपदादित्वाद्भावे क्विप् । तस्यां भुवि शुद्धे धात्वर्थे साध्यरूपे स्वार्थे इति फलितम् । घञर्थो भावस्तु सिद्धरूपः । उक्तं च "क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता । सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्" भावो भावना उत्पादना क्रिया । सा च, धातुत्वेन सकलधातुवाच्या वर्तते (ख) । उक्तं च—'व्यापारो भावना सैवोत्पादना सैव च क्रिया ।' इति उत्पत्त्यनुकूलो

( क ) लकारस्य सामानाधिकरण्यं कर्तृकर्माभिधायिन एव संभवति न भावाभिधायिन इत्याशयेनाचष्टे—**सामानाधिकरण्याभावादिति** ।

( ख ) **क्रियाया इत्यादि** । अत्र साध्यत्वं नाम क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम् "यथा करोति पचति" इत्यादिक्रिया । सिद्धत्वन्तु क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वम् । यथापाक इति ॥

**भावो भावनेति** । उत्पत्त्यर्थाद् भवतेर्ण्यन्तादइति भावः ॥ भवतेरुत्पत्त्यर्थे ण्यन्तस्य भवतेः शुद्धेन करोतिना तुल्यार्थत्वं च दर्शयति—**उत्पादना क्रियेति** । यथा करोति घटमित्यादावुत्पत्त्यनुकूलो व्यपारः कुलालनिष्ठः, तथा भावयति घटमित्यादावपि । भवति घट इत्यत्रापि घटनिष्ठ उत्पत्त्यनुकूलो व्यापारोऽस्त्येव, परन्तु फलसमानाधिकरणः सः । कुलालनिष्ठस्तु फलव्यधिकरण इतीयान् भेदः । अत एव फलव्यापारयोः समानाधिकरण्याद् भवत्यादिरकर्मकस्तयोस्तु वैयधिकरण्यात्करोत्यादिः सकर्मकः ॥ **धातुत्वेनेति** । सकलधातुषु धातुत्वं जातिरखण्डोपाधिर्वेत्यन्यदेतत् । तच्चवाचकतावच्छेदकम् । क्रियात्वन्तु वाच्यतावच्छेदकम् । इति भावः ।

**धातुवाच्येति** । नन्वेवं पचतीत्यादावेककर्तृका वर्तमाना पाचिक्रियेति क्रियाविशेष्यको बोधो न स्यात् । प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणताया औपगवादौ क्लृप्तत्वात् । तथाच–भावना तिङ्प्रत्ययवाच्येति मीमांसकमतमेव रमणीयमिति चेत्, अत्राहुः प्रत्यार्थप्रधानमिति उत्सर्गः स चेह त्यज्यते क्रियाप्रधानमाख्यातम्' इति स्मरणात् । भावाद्यर्थत्वेन मीमांसकैरभ्युपगतस्य स्त्रीत्वस्य पाचिकादौ विशेषणत्वाभ्युपगमात्प्रत्ययार्थः प्रधानमिति नियमस्य त्यक्तत्वाच्च । किं च भोक्तव्यमित्यादौ तिङं विनापि भावना प्रतीयते कारकापेक्षा च दृश्यते अस्ति च करोतिसामानाधिकरण्यम् । किं कर्तव्यं भोक्तव्यम्, किं कृतवान् भुक्तवान् इति । न च कृतमपि तव्यानीयादीनां भावनावाचकत्वमस्तु इति शक्यम् । नामार्थयोरभेदान्वया-

व्यापार इत्यर्थः । तत्र सिद्धरूपो भावो घञादिवाच्यः । तस्य तु सत्त्वरूपत्वमिष्टमेवेति । उक्तं च भाष्यकृता—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति । द्रव्यधर्मान् लिङ्गसंख्याकारकादीन्गृह्णातीत्यर्थः । लिङ्गसंख्याकारकान्वितं द्रव्यमित्युक्तेः । तेन पाकं पाकेनेत्यादौ द्वितीयादयः प्रवर्तन्ते । साध्यरूपो भावस्त्वाख्यातवाच्यस्तस्यासत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि । भाष्ये तु आस्यन्ते शय्यन्ते इत्यत्र भावेऽपि बहुवचनं कृतम् । न च कर्मण्येवाख्यातप्रत्ययोऽस्त्विवति शङ्क्यम् । धातुद्वयस्याप्यकर्मकत्वात् । आस्यन्त इत्यासिकाः । शय्यन्ते इति शायिका इत्यत्र धात्वर्थनिर्देशे वुण्प्रत्ययः । उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते, इत्यत्र ह्युष्ट्राणां यादृशान्यासनानि हतानां यादृशानि शयनानि तादृशानि देवदत्तादिकर्तृकाण्यासनादीनीत्यर्थः । फलाश्रयः कर्म । फलं च धातुनैवोक्तमित्याश्रयमाख्यातार्थः स्यात् । अनन्यलभ्यत्वात् । अकर्मकेभ्यो धातुभ्यो भावे आत् ।सकर्मकेभ्यस्तु कर्मण्यात् स्यात् । साध्यरूपस्यभावस्योत्सर्गत एव संख्यानपेक्षत्वेन स्वस्यैकत्वादेकवचनमेव भवति । तत्तु प्रथमस्यैव न मध्यमोत्तमयोः । युष्मदस्मदोराख्यातवाच्यकारकवाचित्वाभावात् । यद्यपि नाम्नोऽप्याख्यातवाच्यकारकवाचित्वाभावस्तथापि प्रथमो भवति । तस्यानिष्पादने वचनाभावात् । तत्रैकवचनस्वीकारः प्रथमपुरुषमन्तरा कथं संभवेदित्यर्थः । भावे यथा—भूयत इत्यादि ॥ २ ॥

( त० ) **आद्भुवि कर्मणि** ॥ भवनं भूः तस्यां भुवि । शुद्धे धात्वर्थे साध्यरूपभावो घञर्थस्तु सिद्धरूपो भावः इति भेदः । तत्र सिद्धरूपो भावो द्रव्यवत्प्रकाशते लिङ्गसंख्यादीन्गृह्णातीत्यर्थः । अतो द्विवचनादि । साध्यरूपस्य त्वसत्त्वरूपत्वान्न संख्याद्यन्वयः । उक्तं च—"क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता । सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम् ॥" इति ॥ कर्म तु परिभाषिकमेव । पुनर्भावग्रहणात् । फलाश्रयः कर्म फलस्य च धातुवाच्यत्वादाश्रयमात्रमाख्यातार्थः । अथ सकर्मकादपि भावे स्यादिति चेन्न । द्विश्चेत्यतश्चेत्यनुवर्तते स चावधारणार्थः । सकर्मकात्कर्मण्येव न भावे । कर्तर्यपि न स्यादिति चेच्छृणु । मध्येऽपवादन्यायेन भावस्यैव बाधनात् ॥ **एकवचनमिति** ॥ एकवचनमुत्सर्गतः करिष्यत इति वचनादिति भावः । तर्त्कि मध्यमोत्तमयोरपि न चेत्याशङ्कायामाह—**युष्मदस्मदोरिति** ॥ २ ॥

**( स्वरान्तानां हनग्रहदृशां च भावकर्मणोः सितासीस्यपामिड्वा स इणवच्च )** भाविषीष्ट—भविषीष्ट । भाविता—भविता । भाविष्यते—भविष्यते । अभाविष्यत्—अभविष्यत् ॥ ३ ॥

( सु० ) **स्वरान्तानां हनग्रहदृशां च भावकर्मणोः सितासीस्यपामिड्वा स इणवच्च** ॥ स्वरान्तेभ्यो हनिग्रहिदृशिभ्यश्च परेषां भावे कर्मणि चार्थे स्थितानां सितासीस्यपां प्रत्ययानामिडागमो वा भवति स इट् इणीवेतीणवत् । सप्तम्यन्ताद्वत् । कार्यातिदेशोऽयम् । इणि परे यद्वृद्ध्यादिकार्यं भवति तदिण्वति परेऽपीत्यर्थः । यथा भाविता,

---

नुरोधेन 'कृत्कर्तरि' इति तव्यादयः कर्मादाविति परैरप्यभ्युपगमात् । अन्यथा पाचको देवदत्तः पक्तव्य ओदन इत्यत्राभेदबोधो न स्यात्, तथा च धातुवाच्यत्वं भावनाया इत्येव मतं रमणीयतरमिति ।

भाविष्यते इत्यादौ वृद्धिः दायिता, दायिष्यते इत्यादौ युक् घानिता, घानिष्यते इत्यादौ घत्वम् । प्रयोजकण्यन्ताच्छमः कर्मण्याख्याते कृते शामिता-शमिता । शामिष्यते-शमिष्यते । इत्यादौ मितां ण्यन्तानामित्यनेन मितामुपधाया वा दीर्घ इत्यादि ॥ ३ ॥

**इण् तन्यकर्तरि ॥** धातोस्तनि परे भावे कर्मणि च इण्प्रत्ययः । सेरपवादः । लुक् । अभावि । अकर्मकोऽप्युपसर्गवशात्सकर्मको भवति सुखमनुभूयते स्वामिना (क) । "लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥" "फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥" (ख)"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" ॥ ४ ॥

( मु० ) **इण् तन्यकर्तरि** ॥ कर्तुरन्योऽकर्ता तस्मिन्नकर्तरि भावे कर्मणि चार्थे तन्प्रत्यये परे धातोरिण् स्यात् ॥ अकर्तरीति किम् । अकृत घटं कुलालः । लुगिति तनो लुक् । अभावि । अकर्मकोऽपि धातुः कुत्र चिदर्थान्तरे सकर्मको भवति । धातूनामनेकार्थत्वेनार्थान्तरस्योपसर्गेण द्योतनाद्धेतोः । यथा कर्मण्यात् । स्वामिना सुखमनुभूयते । आत्मसात् क्रियते इत्यर्थः ॥ "लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः । " अकर्मकधातुलक्षणमाह—आचार्यास्तं धातुगणमकर्मकमाहुर्ब्रुवन्ति । तं कम् । लज्जासत्तास्थितिजागरणान्यर्थाः सन्ति यस्य स लज्जासत्तास्थितिजागरणस्तम् । पुनः । वृद्धिक्षयभयजीवितमरणान्यर्थाः सन्ति यस्य स वृद्धिक्षयभयजीवितमरणस्तम् । पुनः । शयनक्रीडारुचिदीप्तयोऽर्था यस्य स शयनक्रीडारुचिदीप्त्यर्थस्तम् ॥ फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ सकर्मकाकर्मकधातुलक्षणमाह-आचार्यैरकर्मको धातुरुदाहृतः । क सत्याम् । उत्पत्त्यनुकूलो व्यापारो धात्वर्थः । तत्रोत्पादनं व्यापारः । उत्पत्तिः फलम् । यथा पचेः फूत्करणैधोदकोपस्करणादिलक्षणो व्यापारः । विक्लित्त्यादि फलम् । तयोः फलव्यापारयोरेकनिष्ठतायामेकस्मिन्धर्मिण्याश्रये स्थितौ सत्यामित्यर्थः । धातुः सकर्मक उदाहृतः । क सति । तयोः फलव्यापारयोर्धर्मिभेदे आश्रयभेदे सति । एकस्मिन्धर्मिणि फलमन्यस्मिन्धर्मिणि व्यापार इत्यर्थः ॥ "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥" कुत्रचित्सकर्मकस्यापि धातोः क्रिया धात्वर्थोऽकर्मिका कर्मरहिता भवतीत्यर्थः। कुतः ॥ अन्योऽर्थ इत्य-

( क ) **सुखमनुभूयते स्वामिनेति** । सुखमित्यत्र कर्मणि प्रथमा स्वामिनेत्यत्र कर्त्तरि तृतीया 'अनुक्ते कर्तृकरणे तृतीयाविधानात्, अनुभूयते इति कर्मणि वाच्ये यक्प्रत्ययः । तथाच प्राचामुक्तिः—

कर्त्तरि प्रथमा यत्र द्वितीया तत्र कर्मणि । धातोरुभे पदे स्यातामेतत् कर्तृक्लिलक्षणम् ॥ १ ॥
कर्त्तरि तृतीया यत्र प्रथमा तत्र कर्मणि । यक्प्रत्ययान्तं विज्ञेयं धातोश्चात्रात्मने पदम् ॥ २ ॥
भावे कर्त्ता तृतीयान्तः कर्म चात्र भवेन्नहि । क्रियायाश्चैकवचनं भवेद्यक्यात्मनेपदम् ॥ ३ ॥
कर्त्तृवाच्ये तु विज्ञेयं कर्त्त्रधीनं क्रियापदम् । कर्मवाच्ये हि सर्वत्र कर्माधीना भवेत्क्रिया ॥ इति ॥४॥

( ख ) **अकर्मक इति** । फलसामानाधिकरण्यव्यापारवाचकत्वमकर्मकत्वम् । **सकर्मक इति** । फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमित्युभयोरर्थः ।

र्थान्तरं तस्मिन्नर्थान्तरे वृत्तेर्वर्तनाद्धेतोः । यथा नदी वहति । स्यन्दते इत्यर्थः ॥ पुनर्धात्वर्थेन कर्मण उपसंग्रहाद्धेतोः । जीवति प्राणान् बिभर्तीत्यर्थः ॥ पुनः कर्मणः प्रसिद्धेर्हेतोः । मेघो वर्षति जलमिति कर्म प्रसिद्धमेव । पुनः कर्मणोऽविवक्षातो वक्तुरिच्छाया अभावाद्धेतोः । यथा । 'हिताच्च यः संश्रृणुते स किंप्रभुः ॥ कुत्सितप्रभुरित्यर्थः ॥ वचनमिति कर्माविवक्षितमत्र (क) ॥ ४ ॥

( त० ) **अकर्मकोऽपी**ति ॥ यो यदा कर्मक्रियावाच्यप्यनेकार्थत्वात्सकर्मकक्रियमुत्थापयति, तदा तदर्थपरत्वे सकर्मको भवति तत्परत्वं च तस्योपसर्गेण द्योत्यत इत्यनुपसर्गवशादित्युक्तं न तु सोपसर्ग एव सकर्मकः उपसर्गस्तु द्योतक एव ॥ **अनुभूयत** इति ॥ उपलम्भेऽयं सकर्मकः । सुखे कर्मण्यात् ॥ **फलव्यापारयो**रित्यादि । फलं विक्लित्त्यादि । व्यापारः फूत्कारादिलक्षणः । एकनिष्ठतायामेकस्मिन्धर्मिणि स्थितौ । तयोः फलव्यापारयोर्धर्मिभेदे एकस्मिन्धर्मिणि फलमन्यस्मिन्व्यापार इति भेदे धातुः सकर्मको बोध्यः ॥ **धातोरर्थान्तरे वृत्ते**रित्यादि ॥ अन्योऽर्थोऽर्थान्तरं तस्मिन्वृत्तेर्वर्तनात् । उदाहरणानि यथा । नदी वहति । स्यन्दत इत्यर्थः ॥ नृत्यति चैत्रः । गात्रविक्षेपं करोतीत्यर्थः । मेघो वर्षति । जलमित्यर्थः । गच्छति । ग्राममिति शेषः ॥ ४ ॥

( **शीङोऽयङ् ये क्ङिति** ) (ख)शय्यते । शिश्ये । शायिषीष्ट—शयिषीष्ट । अशायि । अयकि ॥ ऋतो ग्ङि भवत्यकारप्रत्ये यकि च । घटः क्रियते । त्वं दुःखी क्रियसे । रागैर्विरागैः सुख्यहं क्रिये । चक्रे । भाव्यते । भावयांचक्रे । भावयामासे । भावयांबभूवे ॥ ५ ॥

( सु० ) **शीङोऽयङ् ये क्ङिति** ॥ शेतेरयङादेशः स्यात्किति ङिति च यप्रत्यये परे ॥ ङित्त्वादन्तादेशः । यत इत्यलोपः । शय्यते । नुधातोरिति यः । शिश्ये । इणवद्भावाद्वा वृद्धिः । शायिषीष्ट-शयिषीष्ट । करोतेः कर्मण्यात् । उरिति न गुणः । कृषीष्ट । चौरादिकात् ण्यन्ताद्भावयतेः कर्मण्यात् ञेरिति ञिलोपः । भाव्यते ॥ ६ ॥

( **इणवदिटि ञेर्लोपः** ) भाविता—भावयिता । भाविष्यते—भावयिष्यते । अभावि, अभाविषाताम्—अभावयिषाताम् । सन्नन्तात्तु बुभूष्यते । बुभूषांचक्रे । अबुभूषि । यङन्तात्तु । बोभूय्यते । बोभूयांचक्रे ॥ यङ्लुगन्तात्तु । बोभूयते । बोभवांचक्रे । बोभाविषीष्ट—बोभविषीष्ट ॥ स्तूयते विष्णुः । अस्तावि, अस्ताविषाताम्—अस्तोषाताम् ॥ अर्यते । आरे । आरिषीष्ट—

( क ) श्लोकोयं किरातार्जुनीयस्य, सो यथा—

स किं सखा साधु न शास्ति योऽधिपं हिताच्च यः संश्रृणुते स किं प्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥ इति ॥

'संश्रृणुते' अत्र 'समो गम्यृच्छि'—इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदम् अकर्मकत्वं च वैवक्षितमिति भावार्थः ॥

( ख ) **शीङ इति** । केचिदाचार्याः न पठन्ति सूत्रमिदं किन्तु 'शीङः सर्वत्र गुणो भवति' अनेन कित्यपि गुणः, क्वचित्स्वरवद्यकारः अनेन यकारस्य स्वरत्वात् 'ए अय्' शय्यते ॥ इति चन्द्रकीर्त्तिः ॥

ऋषीष्ट । आरिषाः–आर्षाः ॥ स्मर्यते । स्मारिता–स्मर्ता ॥ इज्यते । ईजे । यक्षीष्ट । यष्टा ॥ ६ ॥

( सु० ) इण्वदिटि ञेर्लोपः ॥ ञिलोपो वा स्यादिण्वदिटि परे । ञिलोपे भाविता । पक्षे सिसतेतीटि भावयिता । स प्रत्ययान्तात् बुभूषतेर्भावेआत् । यत इत्यल्लोपः । बुभूष्यते । यङ्प्रत्ययान्तात्तु यत इत्यल्लोपे बोभूय्यते । यङ्लुगन्ताद्भावे आत् । बोभूयते । स्नौतेः कर्मण्यात् । ये इति दीर्घः । स्नूयते ॥ ऋ गतौ कर्मण्यात् । गुणोऽर्तीति गुणः । अर्यते । इण्वदिटि तु धातोर्नामिन इति वृद्धिः । आरिता ॥ स्मृ चिन्तायाम् । गुणोऽर्तीति गुणः । स्मर्यते ॥ यजतेः कर्मण्यात् । यजादिति संप्रसारणम् । इज्यते । लिटि । ईजे । आशिषि लिङि । यक्षीष्ट ॥ ६ ॥

( तनोतेर्वाऽऽत्वं यकि ) तायते-तन्यते । तनिषीष्ट । अतानि ॥ जायते–जन्यते ॥ ७ ॥

( सु० ) तनोतेर्वाऽऽत्वं यकि ॥ तनेराकारोऽन्तादेशो वा स्याद्यक्प्रत्यये परे ॥७॥

( तपो नेण् कर्मकर्तर्यनुतापे च ) अन्वतप्त देवदत्तः पापेन ॥ दादेरिः । दीयते । ददे ॥ ८ ॥

( सु० ) तपो नेण् कर्मकर्तर्यनुतापे च ॥ तपेरिण् प्रत्ययो न स्यादनुतापेऽर्थे कर्मकर्तर्यर्थे च ॥ अन्वतप्त देवदत्तः । पापेन कर्त्राऽभ्याहत इत्यर्थः । भावेऽपीदं बोध्यम् । पापवता पुंसाऽविचार्य कृत्वा पश्चादशोचीत्यर्थः ॥ कर्मकर्तरि तु —अतप्त तपस्तापस इत्यत्र तपस्तपः कर्मकस्येत्यनेन कर्तुः कर्मवद्भावः ॥ डुदाञ् दाने । दादेरिरितीत्वम् । ये इति दीर्घः । दीयते । आतोऽनपीत्यालोपे ददे ॥ ८ ॥

(त०)तपो नेण् कर्मकर्तर्यनुतापे च ॥ तप संतापे इत्यस्मादिण् न । पापेनेति । पूर्वं कृतं यत्पापं कर्तृ तेनाभ्याहतो देवदत्त इत्यर्थः । पापेनेति कर्तरि तृतीया । यदा तु कर्म न विवक्ष्यते, शोकार्थो वा तपिस्तदा भावे लः । पापेनेति कर्तरि तृतीया । करणे पुरुषधर्मयोरनभिधानात् । अभ्याहननार्थस्य तु कर्मकर्तृत्वविवक्षायां हेतौ तृतीयेति बोध्यम् ॥ ८ ॥

( आतो युक् ) इणि ञ्णिति कृति च ॥ दायिषीष्ट–दासीष्ट । अदायि, अदायिषाताम्–आदिषाताम् ॥ धीयते ॥ स्थीयते ॥ अग्लायि ॥ हन्यते । हनो घ्नं । घानिषीष्ट–वधिषीष्ट । घानिता–हन्ता । अघानि, अघा, निषाताम्–अहसाताम् । अवधि, अवधिषाताम् ॥ ९ ॥

( सु० ) आतो युक् ॥ आदन्तस्य धातोर्युक् स्यादिणि प्रत्यये परे ञिति णिति कृत्प्रत्यये च परे ॥ घञि दायः । वुणि दायकः । इण्वदिटि दायिषीष्ट । इण्वदिटोऽभावे दासीष्ट लुङि अदायि । इण्वदिटि अदायिषाताम् । तदभावे अपिद्याधास्थामितीत्वम् । आदिषाताम् ॥ एवं धास्था धातू ॥ ग्लै हर्षक्षये । इण्वदिटि युक् । अग्लायिषाताम् ॥ हन्तेः कर्मण्यात् । हन्यते । पूर्वाद्धन्तेरिति घः । जघ्ने । हनो लुङ्लिङोरिति बधः । यत इत्यल्लोपः । वधिषीष्ट । पक्षे हनो घ्न इति घः । अत उपधाया इति वृद्धिः । घानिषीष्ट ।

इण्वद्भावो वधादेशस्य बाधको ज्ञेयः । अत्र हनो घदित्यनेन घदादेशो न । इण्वर्जिते इत्युक्तत्वात् । लृटि इण्वदिटि घानिष्यते । पक्षे हन्नृत इतीट् । हनिष्यते । लुङि इण्वदिडभावे हनः सिः किदिति कित्त्वात् लोपस्त्वनुदात्ततनामिति नलोपः ॥ अहसाताम् ॥ गृह्णातेः कर्मण्यात् । ग्रहामिति संप्रसारणम् गृह्यते ॥ ९ ॥

( त० ) वधिषीष्टेति ॥ इण्वद्भावे वधादेशो बोध्यः । वध हिंसायामिति प्रकृत्यन्तरम् ॥ अवधीति ॥ जनिवध्योरिति वृद्धिनिषेधः । हनादेशस्य त्वदन्तत्वान्न वृद्धिः । तथा च प्रयोगः । भक्षकश्चेन्न विद्यते वधकोऽपि न विद्यत इति ॥ ९ ॥

**( इण्वदिटो न दीर्घः )** ग्राहिता–ग्रहीता ॥ दर्शिषीष्ट-दृक्षीष्ट । दर्शिता- द्रष्टा । अदर्शि, अदर्शिषताम्–अदृक्षाताम् ॥ शम्यते मुनिना ॥१०॥

( सु० ) इण्वदिटो न दीर्घः ॥ ईटो ग्रहामिति सूत्रेण सिसतेत्यादिलक्षणेन विधीयमानस्यैवेटो दीर्घो भवति नेण्वदिट इत्यर्थः ॥ दृशेः कर्मण्यात् । लुङि इण्वदिटि परे उपधाया लघोरिति गुणः अदर्शिषताम् । पक्षे छशषेति षत्वम् । षढोरिति कः । इशपान्तादिति सक् तु न, न तु दृशेरित्युक्तत्वात् । सिस्योरिति न गुणः । अदृक्षाताम् । शमेर्भावे आदकर्मकत्वात् ॥ १० ॥

**( मान्तस्य सेटो न वृद्धिरिणिञ्णिति कृति च न त्वाचमिकमिवमीनाम् )** अशमि । अदमि । आचामि । अकामि । अवामि ॥ ण्यन्तात्तु शम्यते मोहो मुनिना शमयाञ्चक्रे ॥ ११ ॥

( सु० ) मान्तस्य सेटो न वृद्धिरिणिञ्णिति कृति च न त्वाचमिकमिवमीनाम् ॥ सेटो मान्तस्य धातोर्वृद्धिर्न स्यादिणि ञिति णिति कृत्प्रत्यये च परे । आचमिकमिवमीनां तु वृद्धिर्भवतीत्यर्थः ॥ घञि शमः, दमः । वुणि शमकः दमकः । कथं तर्हि 'हरेर्यदक्रामि पदैककेन खम्' इति श्रीहर्षप्रयोग इति चेदुच्यते । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते (क) ।' इति प्राकृते ञिस्तत इण् बोध्यः सेटः किम् । अगामि ॥ कमु कान्तौ । कमेः स्वार्थे णिङिति णिङ् वा । णेरिति णिलोपः । काम्यते । लुङि णिङभावे । अकामि । णिजिङोप्येवम् । ण्यन्तात् शमेः कर्मण्यात् । णेरिति णिलोपः । शम्यते । कासादिप्रत्ययादित्याम् । शमयाञ्चक्रे ॥ ११ ॥

**( मितां ण्यन्तानामिणि णमि च वा दीर्घः )** शामिता–शमिता–शमयिता । अशामि–अशमि । अशामिषाताम्–अशमिषाताम्–अशमयिषाताम् ॥ **वध हिंसायाम्** । वध्यते । जनिवध्योर्न वृद्धिः । अवधि ॥१२॥

( सु० ) मितां ण्यन्तानामिणि णमि च वा दीर्घः ॥ मित्संज्ञकानां ण्यन्तानां

---

( क ) श्रीहर्षप्रयोग इति । नैषधीयचरितस्य प्रथमसर्गे ७० श्लोकः । सो यथा—

हरेर्यदक्रामि पदैककेन खं पदैश्चतुर्भिः क्रमणेऽपि तस्य नः ।

त्रपा हरीणामिति नम्रिताननैर्न्यवर्त्ति तैरर्धनभःकृतक्रमैः ॥ इति ॥

केचिदत्र– 'आक्रामि' इति पाठमङ्गीकृत्य क्रमणं क्रमः, क्रमः, एव क्रामः, आङा समासे इन् प्रत्ययान्तमाक्रमि इति खम् इत्येतद्विशेषणं सुबन्तमिति वदन्ति ॥

धातूनां वा वृद्धिर्भवति इणप्रत्यये णम्प्रत्यये च परे । इण्वदिटि ञेरिति ञिलोपः । वृद्धिश्च वा । शामिता-पक्षे शमिता-पक्षे सिसतेतीटि गुणः । शमयिता । यङन्तप्रकृतिकञिप्रत्ययान्तात् शंशमेः कर्मण्यात् । ञौ परतोऽनपि च हसादिति यलोपः । यत इत्यल्लोपः । ततो यकि ञेरिति ञिलोपः । शंशम्यते लुटि शंशामिता-शंशमिता-शंशमयिता । लुङि अशंशामि-अशंशमि । णम्प्रत्यये तु शंशाम-शंशमम् । वध हिंसायाम् । हसान्तः ॥ १२ ॥

( **भञ्जेरिणि नलोपो वा** ) अभाजि-अभञ्जि ॥ १३ ॥

( सु० ) **भञ्जेरिणि नलोपो वा** । भञ्जो आमर्दने इत्यस्य नस्य लोपो वा स्यादिणि प्रत्यये परे ॥ १३ ॥

( **लभेरिण्णमोर्नुम्वा** ) अलम्भि-अलाभि "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥ प्रयोज्यकर्मण्यन्येषां ञ्यन्तानां लादयो मताः ॥" गौर्दुह्यते पयः । धुक्षीष्ट ॥ अजा ग्रामं नीयते । ह्रियते । कृष्यते । उह्यते ॥ बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा ॥ भोज्यते माणवकमोदनः, माणवक ओदनमिति वा । पाठ्यते माणवकं वेदः, माणवको वेदमिति वा ॥ देवदत्तो ग्रामं गम्यते ॥ १४ ॥

( सु० ) **लभेरिण्णमोर्नुम् वा** ॥ डुलभष् प्राप्तावित्यस्य नुमागमो वा स्यादिणि प्रत्यये णमि प्रत्यये च परे । प्रादेर्नित्यं नुम् । प्रपूर्वस्य लभेर्नित्यं नुम् स्यात् णमि प्रत्यये । प्रलम्भम् ॥ अथ ये द्विकर्मकधातवस्तेभ्य आत्कृत्यक्तखलर्थप्रत्ययाः किं मुख्ये कर्मणि उत गौणे किं चोभयोरिति संदेहे व्यवस्थामाह—"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृषवहां बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया प्रयोज्यकर्मण्यन्येषां ञ्यन्तानां लादयो मताः ॥" दुह्याचिति कारके उक्तम् । दुह्यादेर्द्वादश संख्यस्य धातोर्गौणे कर्मणि लादयः प्रत्यया मताः । नीप्रभृतीनां चतुर्णां प्रधाने कर्मणि लादयो मताः । बुद्धिभक्षार्थयोर्ञ्यन्तयोः शब्दकर्मकञ्यन्तानां च प्रयोज्यप्रधानयोरन्यतरकर्मणि निजेच्छया लादयो मताः । अन्येषां ञ्यन्तानां तु प्रयोज्यकर्मणि लादयो मताः । कारके गतिबुद्धीत्यनेन कर्तुर्यत्कर्मकारकं कृतं तत्प्रयोज्यं कर्म ज्ञातव्यम् । लादय इत्यत्रादिशब्देन कृत्यक्तखलर्थाः प्रत्यया ग्राह्याः दुह्यादेर्गौणे कर्मण्यात् स्वार्थमुत्सृज्य परार्थावलम्बनं गौणम् । उदाहरणमाह-गौर्दुह्यते पय इत्यत्र गौरिति गौणं कर्म । तत्राख्यातेनोक्तत्वादन्योक्ते इत्यनेन प्रथमा । पय इति तु मुख्यं कर्म । तत्र कर्मणि द्वितीया । कर्तुरनुक्तत्वात्तृतीया देवदत्तेनेति । न्यादीनां प्रधाने कर्मण्यात् । उदाहरणमाह-अजा ग्रामं नीयते इत्यत्राजेति मुख्यं कर्म । तत्रोक्तत्वात्प्रथमा । ग्राममिति गौणं कर्म । कर्त्ता तु तृतीयान्तोऽध्याहार्यः ॥ बुद्धिभक्षार्थयोः शब्दकर्मकाणां च ञ्यन्तानां प्रयोज्ये मुख्ये च कर्मण्यात् । उदाहरणमाह-बोध्यते माणवकं धर्म इत्यत्र धर्म इति मुख्यं कर्म । माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाऽऽख्यातादिः कर्तव्यः । भोज्यते माणवकमोदन इत्यत्रौदन इति मुख्यं कर्म । माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाऽऽख्यातादिः । पाठ्यते माणवकं वेद इत्यत्र वेद इति मुख्यं कर्म । माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाऽऽख्यातादिः । तृतीयान्तः कर्ताऽध्याहार्यः ।

ण्यन्तस्य प्रयोज्यकर्मण्यात् । उदाहरणमाह–देवदत्तो ग्रामं गम्यत इत्यत्र ग्राममिति मुख्यं कर्म । देवदत्त इति प्रयोज्यं कर्म । तत्राख्यातादिः कर्मणा उक्तत्वात् प्रथमा । कर्ता तु तृतीयान्तोऽध्याहार्यः ॥ १४ ॥

( त० ) द्विकर्मणां तु—**गौणे कर्मणीत्यादि गौर्दुह्यत** इति ॥ **गौरिति** गौणं कर्म ॥ **अजेत्यादि** ॥ अजाऽत्र प्रधानम् । **निजेच्छयेति** ॥ गौणप्रधानयोरात्मेच्छयेत्यर्थः ॥ **अन्येषामिति** ॥ पूर्वोक्तव्यतिरिक्तानामित्यर्थः ॥ १४ ॥

**( अकर्मकाणां कालादिकर्मकाणां भावे कर्मणि च लकारः )** मासं मासो वाऽऽस्यते देवदत्तेन । क्रोशः क्रोशं वाऽऽस्यते । कुरवः, कुरून् वाऽऽस्यते । गोदोहं गोदोहो वाऽऽस्यते ॥ ण्यन्तात्तु प्रयोज्ये प्रत्ययः । मासमास्यते माणवकः ॥ १५ ॥ इति भावकर्मप्रक्रिया ॥ २० ॥

( सु० ) **अकर्मकाणां कालादिकर्मकाणां भावे कर्मणि च लकारः** ॥ कालादिकर्मकाद्धातोर्भावकर्मणोरर्थयोराख्यातो भवति ॥ कारके, अकर्मकधातुभिर्योगे इति सूत्रेण कर्मसंज्ञा येषां धातूनां कृता ते कालादिकर्मकाः । कालादिकर्मकस्य कर्मण्यात् । उदाहरणमाह–मास आस्यते इत्यत्र कालवाचिकर्मण आख्यातेनोक्तत्वात्प्रथमा । कर्ता तु तृतीयान्तोऽध्याहार्यः ॥ भावे तु मासमास्यते देवदत्तेनेत्यत्र कर्मणोऽनुक्तत्वान्मासमिति द्वितीया । कर्तुरनुक्तत्वाद्देवदत्तेनेति कर्तरि तृतीया । ण्यन्तात्कालादिकर्मकाद्धातोस्तु प्रयोज्यकर्मण्येवाख्यातादिः ॥ मासमास्यते माणवक इति अत्र कालवाचिकर्मणोऽनुक्तत्वान्मासमिति द्वितीया । माणवक इति प्रयोज्यं कर्म । तत्राख्यातेनोक्तत्वात्प्रथमा । कर्तरि त्वनुक्तत्वात्तृतीया देवदत्तेनेति (क) ॥ १५ ॥ इति सुबोधिन्यां भावकर्मप्रक्रिया ॥२०॥

---

# अथ कर्मकर्तृप्रक्रिया ॥ २१ ॥

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते (ख) ॥ साध्वसिश्छिनत्ति ॥ काष्ठानि पचन्ति ॥ स्थाली पचति ॥ पच्यते ओदनेन । अपाचि ॥ भिद्यते काष्ठेन । अभेदि ॥ लेनोक्ते कर्मकर्तरि यगादिणिण्वदिटः । पच्यते ओदनः । अपाचि । भिद्यते काष्ठम् । अभेदि ॥ १ ॥

( सु० ) सकलकारकाणामवान्तरव्यापारो वर्तते । सकलकारकाणामवान्तरव्यापारहीनस्याकारकत्वात् । तत्र स्वव्यापारे स्वातन्त्र्यं च व्यापारभेदाकाङ्क्षायां करणादिसंभवः । तत्र यदा कारकान्तराणां सौकर्यातिशयं द्योतयितुं प्रतिपादयितुं कर्तृव्यापारो वक्तुं नेष्यते

---

( क ) तृतीयेति । 'कर्तृकरणे तृतीया' इति सूत्रेणेति भावः ।।इति भावकर्म्मप्रक्रिया ॥ २० ॥

( ख ) **सौकर्य्यमिति** । सुखेन कर्त्तुं योग्य इति सुकरस्तस्य भावः सौकर्यमिति ॥ **कर्तृव्यापार इति** ॥ 'साधनान्तरनियोगव्यापारवान् कर्त्ता' इति केचित् । अन्ये धात्वर्थव्यापाराश्रयः कर्त्ता इति वदन्ति ॥

तदा कारकान्तराण्यपि कर्तृसंज्ञां प्राप्नुवन्ति स्वव्यापारे स्वतन्त्रत्वात् । सुष्ठु करोतीति सुकरस्तस्य भावः सौकर्यम् । कारकान्तराणां पूर्वं करणत्वादिसत्त्वेऽपि साम्प्रतं कर्तृसंज्ञाकरणात्कर्तर्याख्यातो भवति ॥ साध्वसिश्छिनत्तीत्यत्र करणस्य कर्तृसंज्ञा । आख्यातेन कर्तुरुक्तत्वादसिरित्यत्र प्रथमा ॥ काष्ठानि पचन्तीत्यत्रापि करणस्य कर्तृसंज्ञा । कर्तुराख्यातेनोक्तत्वात्काष्ठानीति प्रथमा ॥ स्थाली पचतीत्यत्राधारस्य कर्तृसंज्ञा । कर्तुराख्यातेनोक्तत्वात्स्थालीति प्रथमा ॥ कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः ॥ कर्मणः सौकर्यातिशयं द्योतयितुं यदा कर्तृत्वविवक्षा ततः प्राक् सकर्मका अपि धातवोऽकर्मकाः प्रायेण भवन्ति । प्रायेणेत्युक्तत्वादेककर्मकाश्छिदिभिदिप्रभृतय एवाकर्मका भवन्ति न तु द्विकर्मकाः ॥ अकर्मकस्य फलमाह-तेभ्यो भावे कर्तरि च लकारः । कर्मकर्तुरकर्मकाद्धातोर्भावे तर्तरि चार्थे आख्यातप्रत्ययो भवति । भावे आख्यातस्योदाहरणमाह-पच्यते ओदनेन भिद्यते काष्ठेनेत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातस्तु भावे । कर्तरनुक्तत्वादोदनेनेत्यादौ तृतीया ॥ कर्मकर्तर्याख्यातस्योदाहरणमाह-लेनोक्ते इत्यादि । **कर्मवत्कर्मणा तुल्यक्रियः** । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति । कार्यातिदेशोऽयम् । कर्मणो यत्कार्यं भवति तत्कर्मकर्तुरपीत्यर्थः । तेन यक् चतुर्ष्विति यक् । आद्भुर्वीत्यात् । इण् तनोतीण् । स्वरान्तानामितीण्वदिट् इत्यादि कार्याणि कर्मकर्तरि भवन्ति ॥ काष्ठं भिनत्तीत्यत्र काष्ठस्था या विदारणाश्रयत्वरूपा क्रिया सैव काष्ठं भिद्यते स्वयमेवेत्यत्र तस्मिन्कर्मभूतेऽपि भवति । अयं कार्यातिदेशः कर्मस्थभावकानां कर्मस्थक्रियाणां च धातूनां भवति न तु कर्तृस्थभावकानां कर्तृस्थक्रियाणां च धातूनां भवति । यत्र कर्मणि दृष्टे क्रियाऽनुमातुं शक्यते ते कर्मस्थक्रियास्ततोऽन्ये कर्तृस्थक्रियाः । पक्वेषु तण्डुलेषु भिन्नेषु च काष्ठेषु दृष्टेष्वदृष्टः कर्तृव्यापारोऽनुमीयते तदुक्तं च—"कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया । आशासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया" । यद्यप्याधारभावयोरित्यत्र भावशब्देन क्रियाऽपि गृह्यते तथाप्यत्र भेदो विवक्षितः पृथगुपादानात् । परिस्पन्दरूपो धात्वर्थः छिदादिः क्रिया अपरिस्पन्दरूपो विक्लित्त्यादिर्भावः । पचत्योदनं भिनत्ति काष्ठं च देवदत्तः पच्यते ओदनः भिद्यते काष्ठं स्वयमेवेत्यत्राख्यातेन कर्मकर्तुरुक्तत्वात्प्रथमा ॥ कर्तृस्थक्रियाया उदाहरणमाह—अशास्ते घटं देवदत्तः । आशास्ते घटः स्वयमेव । गच्छति ग्रामं देवदत्तः । गच्छति ग्रामः स्वयमेवेत्यत्र घटग्रामयोर्दृष्टयोर्न हि देवदत्तस्य व्यापारोऽनुमातुं शक्यत इति कर्तृस्थत्वं क्रियायाः ॥ १ ॥

( त० ) **यदा सौकर्यातिशयमित्यादि**॥ अयमर्थः । सकलकारकाणामवान्तरव्यापारोऽस्ति । व्यापारहीनस्य कारकत्वाभावात् । स्वव्यापारे स्वतन्त्रत्वं सर्वत्रैव कारकेऽस्ति । व्यापारभेदाकाङ्क्षायां कारकत्वादिसंभवः । तत्र यदा कर्मणः सौकर्यातिशयप्रतिपादनाय कर्तृव्यापारो न विवक्षितस्तदा भिदादिकर्म व्यापारकारकमात्रे प्रवर्तते । व्यापारमात्रं प्रति च कर्तृत्वमेव काष्ठादीनाम् । यदा करणत्वादिलेशोऽपि न तदा सकर्मकाणाप्यकर्मकत्वमेव । तत्र भावे कर्तरि च लकारः । कर्तरि तु लेनोक्ते इत्यादि । कर्मग्रहणात्साध्वसिरित्यादौ न । यद्यपि काष्ठादेरचेतनतया कुठारोद्यमननिपातनादिकरणसम्बन्धेन भेदनादिकर्तृत्वमनुपपन्नं तथापि स्वधर्मैः प्रशिथिलावयवसंयोगनिस्सारणादिभिः कर्मकर्तृत्वमिति ध्येयम् ॥ १ ॥

**( सकर्मकाणां न )** अजा ग्रामं नयति ॥ २ ॥

( सु० ) **सकर्मकाणां न** ॥ सकर्मकधातूनां कर्मकर्ता कर्मवन्न भवति । अजा ग्रामं नयतीत्यत्र प्रधानकर्मणः कर्तृसंज्ञा । प्रधाने नीहृकृष्वहामित्युक्तत्वात् । आख्यातेनोक्तत्वात्तत्र प्रथमा । इह प्रतिषेधाभावे यक् स्यात् । क्रियाफलस्याकर्तृगामित्वेऽप्यात्मनेपदं स्यादित्यर्थः ॥ २ ॥

**( दुहिपच्योः सकर्मकयोर्वा )** ॥ ३ ॥

( सु० ) **दुहिपच्योः सकर्मकयोर्वा** ॥ अनयोः कर्म कर्ता कर्मवद्वा भवति ॥३॥

**(दुहस्नुनमां कर्मकर्तरि यगिणौ न)** गौः पयो दुग्धे, दोग्धि वा ॥४॥

( सु० ) **दुहस्नुनमां कर्मकर्तरि यगिणौ न )** एभ्यो यगिणौ प्रत्ययौ न भवतः कर्मकर्त्रर्थे । दुहेरनेन यक् निषिध्यते, इण् तु विकल्पेन वक्ष्यते । गौः पयो दुग्धे इत्यत्र गौकर्मणः कर्तृत्वविवक्षा । गोणे कर्मणि दुह्यादेरित्युक्तत्वात् ॥ ४ ॥

**(स्वरान्तानां कर्मकर्तरीण् वा तनि)** अकारि-अकारिष्ट–अकृत कटः स्वयमेव ॥ ५ ॥

( सु० ) **स्वरान्तानां कर्मकर्तरीण् वा तनि** ॥ स्वरान्तेभ्यो धातुभ्यः इण् प्रत्ययो वा भवति कर्मकर्तर्यर्थे तनि परे ॥ स्वरान्तानां किम् । अभेदि काष्ठम् ॥ कर्मकर्तरि किम् । अकारि घटः कुलालेन । कर्मकर्तरि लुङ् यथा । अकारि घटः स्वयमेव । पक्षे लोपो ह्रस्वादिति सिलोपः । अकृत ॥ ५ ॥

**( दुहश्च )** अदोहि–अधुक्षत–अदुग्ध ॥ उदुम्बरः फलं पच्यते, पचति वा ॥ प्रस्नुते गौः । स्नुक्रमोराति नेट् ॥ प्रास्नाविष्ट–प्रास्नोष्ट ॥ नमते दण्डः । अनंस्त ॥ ६ ॥

( सु० ) **दुहश्च** ॥ दुहेरिण् प्रत्ययो वा भवति कर्मकर्तर्यर्थे तनि परे ॥ कर्मकर्त्तरि किम् । अदोहि गौर्देवदत्तेन । कर्मकर्तरि लुङ् यथा । इण्प्रत्यये अदोहि—पक्षे हशषान्तादिति सक् । दुहदिहलिहगुहूभ्य इति सको वा लुक् । अधुक्षत—पक्षे अदुग्ध ॥ फलं पच्यते उदुम्बर इत्यत्र गौणकर्मण उदुम्बरस्य कर्तृसंज्ञा । गौणे कर्मणि दुह्यादेरित्युक्तत्वात् । तत्र कर्मवद्भावस्तेन यगादिण्वदिणिटो भवन्ति ॥ ष्णु प्रस्रवणे । प्रस्रवणमुत्कण्ठा । वत्सो गां प्रस्नौति । उत्कण्ठयतीत्यर्थः ॥ गोः कर्मणः कर्तृत्वविवक्षायां प्रस्नुते गौः । लुङि स्वरान्तानां हनग्रहेतोण्वदिट् । प्रास्नाविष्ट—पक्षे स्नुक्रमोरिति नेट् । प्रास्नोष्ट ॥ नमते दण्ड इत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि अनंस्त । अत्र कर्मकर्तर्यात्मनेपदमेव जातम् । अत्र च अन्तर्भावितण्यर्थो बोध्यः ॥ ६ ॥

**(सृजेः श्रद्धोपपन्ने कर्तरि वा)** (क) सृज्यते स्रजं भक्तः । असर्जि ॥७॥

( सु० ) **सृजेः श्रद्धोपपन्ने कर्तरि वा** ॥ सकर्मकस्य सृजेः कर्ता कर्मवद्वा भवति

---

( क ) **सृजेः श्रद्धोपपन्ने इति** । श्रद्धा आस्तिक्यबुद्धिः, तयोपपन्नो युक्त इत्यर्थः । अश्रद्धायुक्ते कर्त्तरि तु यगेव ।

श्रद्धायुक्ते कर्तर्यर्थे । सृज्यते स्रजं भक्त इत्यत्र कर्तर्य्याख्यातादिः । कर्तुः कर्मवद्भावा-दाद्यगिणो भवन्ति श्रद्धया निष्पादयतीत्यर्थः ॥ ७ ॥

( युजेर्वा ) युज्यते ब्रह्मचारी योगम् (क) । युनक्ति वा ॥ ८ ॥

( सु० ) युजेर्वा ॥ सकर्मकस्य युजेः कर्ता कर्मवद्वा भवति । युज्यते योगं ब्रह्मचारीत्यत्र कर्तर्य्याख्यातः । कर्त्तुः कर्मवद्भावादाद्यगिणः । तपस्तपःकर्मकस्य । तपः कर्मकस्य तपेः कर्ता कर्मवद्भवति । तप्यते तपस्तापस इत्यत्र कर्तर्याख्यातः । कर्तुः कर्मवद्भावादात्मनेपदादिः । अर्जयतीत्यर्थः । लुङि तपो नेणित्यनेनेण्न । अतप्त ॥ ८ ॥

( भूषावाचिनां किरादीनां सन्तानां च यगिणिण्वदिटो न ) अलंकुरुते कन्या (ख) । अलमकृत ॥ अवकिरते हस्ती । अवाकरीष्ट—अवाकरिष्ट—अवाकीर्ष्ट ॥ अवगिरते पुष्पम् । अवागीर्ष्ट ॥ आद्रियते दानम् । आदृत ॥ ध्रियते । अधृत ॥ पृच्छते । अप्रष्ट ॥ चिकीर्षते कटः । चिकीर्षाञ्चक्रे । चिकीर्षांबभूवे । अचिकीर्षिष्ट ॥ ९ ॥

( सु० ) भूषावाचिनां किरादीनां सन्तानां च यगिणिण्वदिटो न ॥ भूषार्थेभ्यः किरादिभ्यः सप्रत्ययान्तेभ्यश्च धातुभ्यः कर्मकर्तरि यगिणिण्वदिटो न भवन्ति । आत्मनेपदमेव भवतीत्यर्थः॥ तुदाद्यन्तर्गणः किरादिः कॄ विक्षेपे । गॄ निगरणे । दृङ् आदरे । धृङ् अवस्थाने । प्रच्छ ज्ञीप्सायामिति पञ्चकः ॥ अलंकुरुते कन्येत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वादत्र प्रथमा । एवमग्रेऽपि ज्ञेयम् । तुदादेरित्यः । ऋत इतीर् । अवकिरते । लुङि । वृङ्वृञृदन्तात्सिस्योरिति वेट् । अवाकरिष्ट । वृङ्वृञृदन्तानामिति वा दीर्घः । अवाकरीष्ट । ईडभावे उरिति गुणो न । ऋत इतीर् । पुनः सिस्योरिति गुणो न अवाकीर्ष्ट ॥ एवं गॄ ॥ तुदादेरित्यप्रत्यये अयकीति रिङ् । ततो नुधातोरितीय् । आद्रियते । लुङि उरिति गुणो न । लोपो ह्रस्वादिति सिलोपः । आदृत ॥ एवं धृङ् । तुदादेरित्यप्रत्यये ग्रहामिति सम्प्रसारणम् । पृच्छते । लुङि छशषेति षत्वम् । झसादिति सिलोपः । अप्रष्ट ॥ चिकीर्षते कट इत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि सिसतेतीट् । यत इत्यल्लोपः अचिकीर्षिष्ट ॥ ९ ॥

( ञिश्रिब्रूञ्ग्रन्थिग्रन्थ्यादकर्मकाणां यगिणौ न ) कारयते

( क ) योगमिति । अत्रैवं कर्मणः कर्तृत्वम्,—योगो ब्रह्मचारिणं युनक्ति सम्बध्नाति सम्बन्धानुकूलव्यापारविशिष्टो भवतीति पूर्वकल्पः । सम्बन्धश्च योगप्रतियोगिको ब्रह्मचार्य्यनुयोगिकः । अत्र प्रथमकल्पे य आश्रयतारूपः सम्बन्धस्तद्वत्वाद् ब्रह्मचारिणः कर्म्मत्वम् । ततो द्वितीयकल्पे युजेः प्रतियोगित्वावच्छिन्नसम्बन्धार्थकत्वे ब्रह्मचारिणः कर्त्तृत्वम्, प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वमिति । प्रतियोगी संसर्गाभाववान् । अनुयोगी संसर्गवान् । "योगश्चित्तवृत्तिनिरोधः" ।

( ख ) अलंकुरुते कन्येति । कश्चित्कन्यामलंकरोतीति पूर्वकल्पः । अलंकरोति भूषयतीत्यर्थः ॥ अवकिरते हस्तीति । कश्चिदङ्कुशेन हस्तिनमवकिरति ताडयतीत्यर्थ इति पूर्वकल्पः ॥ अवगिरते पुष्पमिति । कश्चित्पुष्पं अवगिरति आदत्ते इत्यर्थ इति पूर्वकल्पः ॥ आद्रियते दानमिति पूर्वकल्पः ॥

कटः स्वयमेव (क) । कारिषीष्ट । अचीकरत ॥ उच्छ्रूयते दण्डः । उदशिश्रियत । ब्रूते कथा (ख) अवोचत ॥ श्रन्थते अश्रंथिष्ट ॥ ग्रन्थते ग्रन्थः । अग्रन्थिष्ट ॥ विकुर्वते सैन्धवाः ॥ व्यकारिष्ट । व्यकृत ॥ १० ॥

( सु० ) ञिश्रिब्रूश्रन्थिग्रन्थ्यादकर्मकाणां यगिणौ न ॥ ञिप्रत्ययान्तेभ्यः श्रिब्रूश्रन्थिग्रन्थिभ्यः आत्मनेपदविधावकर्मकेभ्यश्च धातुभ्यो यगिणौ न भवतः कर्मकर्तर्यर्थे । आदिण्वदिटौ भवत इत्यर्थः ॥ कारयते घट इत्यत्र ञ्यन्तात्कर्मकर्तर्याख्यातः । तत्रोक्तत्वात्प्रथमा । लुङि ञेरङित्यङ् । द्वित्वे अङि लघावित्युपधाह्रस्वः पूर्वस्येकारश्च । कजोरिति पूर्वदीर्घः । ञेरिति ञिलोपः अचीकरत ॥ उच्छ्रूयते दण्ड इत्यत्र कर्मकर्तर्याख्यातः । अप् कर्तरीत्यप् । लुङि श्रिद्रुस्रुभ्यः इति ङः । द्वित्वे नुधातोरितीय् । उदशिश्रियत । ब्रूते कथेत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि ब्रुवोऽनपीति वच् । अस्यतिवक्तीति ङः । ङे वचेरित्युमागमः । अवोचत ॥ श्रन्थिग्रन्थ्योश्चौरादिकयोर्ञेरभावपक्षे श्रन्थते, ग्रन्थते ग्रन्थ इत्यत्र कर्मणः कर्तृत्वविवक्षा । तत्राख्यातेनोक्तत्वात्प्रथमा । लुङि अश्रन्थिष्ट । अग्रन्थिष्ट । क्र्यादिकयोस्तु श्रथ्नीते ग्रथ्नीते च मेखला स्वयमेव ॥ आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति । विकुर्वते सैन्धवा इत्यत्राकर्मकाच्चेत्यनेनात्विधानम् । आख्यातेनोक्तत्वात्कर्मकर्तरि प्रथमा भवतीत्यर्थः ॥ लुङि इण्वदिटि व्यकारिष्ट, व्यकारिषाताम् , व्यकारिषत । इण्वदिडभावे लोपो ह्रस्वादिति सिलोपः । व्यकृत । व्यकृषाताम् । व्यकृषत ॥ १० ॥

( त० ) ञ्यात्यादि ॥ श्रन्थिग्रन्थ्योर्ञेरभावे ग्रहणम् । आदित्यात्मनेपदिनो ग्रहणं त्वादन्तस्य । आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति ॥ विकुर्वते सैन्धवा इति॥१०॥

( कुषिरञ्जोः कर्मकर्तरि वा तिबादौ ) कुष्यति, कुष्यते वा पादः । अकोषि ॥ रज्यति रज्यते वा वस्त्रम् ॥ अरञ्जि ॥ इति कर्मकर्तृ प्रक्रिया ॥ ११ ॥

( सु० ) कुषिरञ्जोः कर्मकर्तरि वा तिबादौ ॥ कुषिरञ्जिभ्यामुभयपदं भवति कर्मकर्त्तर्यर्थं तिबादिचतुष्टये परतः । अनपि त्वात्मनेपदमेव भवति । कुष निष्कर्षे । क्र्यादिकः । रञ्ज रागे । दैवादिकः ॥ कुष्यति, कुष्यते वा पाद इत्यत्र कर्मणः कर्तृत्वविवक्षायामाख्यातः । कर्तुः । कमवद्भावादात्मनेपदादिः । लुङि इण् तनोतोग् । अकोषि । रज्यति, रज्यते वा अस्त्रमित्यत्रापि कर्मकर्तर्याख्यातः । तत्राख्यातेनोक्तत्वात्प्रथमा । लुङि अरञ्जि, अरङ्क्षाताम् , अरङ्क्षत । इह कर्मकर्तृप्रकरणे भिद्यते काष्ठं स्वयमेवेत्यादिसर्वत्र स्वयं शब्दः करणार्थको ज्ञेयः । आत्मना करणेनेत्यर्थः । अन्यर्थे तु कर्मण्याख्यातः स्यादित्यर्थः ११

इति सुबोधिन्यां कर्मकर्तृप्रक्रिया ॥ २१ ॥

(त०) कृतायामिह टीकायां लोकेशकरशर्मणा । बाधनं दुष्टबुद्धीनामगाद्भावादिसाधनम्॥

इति तत्त्वदीपिकायां कर्मकर्तृप्रक्रिया ॥ २१ ॥

---

( क ) कारयते इति । कारयति कटं देवदत्तो यज्ञदत्तेनेति पूर्वकल्पः । कारयते कटः स्वयमेवेति द्वितीयकल्पः ।

( ख ) ब्रूते कथेति । उच्चारणेन शब्दे प्राकट्यरूपविशेषदर्शनात्कर्मस्थक्रियत्वमस्येति बोध्यम् ॥

इति टिप्पण्यां कर्मकर्तृप्रकिया ॥ २१ ॥

# अथ लकारार्थप्रक्रिया ॥ २२ ॥

**( स्मृतिवाचिन्युपपदे भूतानद्यतने धातोर्लृट् लङोऽपवादः )** स्मरसि कृष्ण गोकुले वत्स्यामः(क) ॥ १ ॥

( सु० ) **स्मृतिवाचिन्युपपदे भूतानद्यतने धातोर्लृट्** ॥ धातोर्लृड् भवति स्मृतिवाचकशब्दे उपपदे सति न लङ् ॥ वत्स्यामः । वयमवसाम इत्यर्थः ॥ एवं बुध्यसे चेतयसे इत्यादियोगेऽपि ॥ १ ॥

( त० ) **स्मृतिवाचिनी**त्यादि ॥ स्मृतिवाचिनीत्युक्तेर्बुध्यसे चेतयसे इत्यादियोगेऽपि न भवति । एषामपि प्रकरणादिना स्मृतिवाचित्वात् ॥ **स्मरसी**त्यादि ॥ अत्र पश्य मृगो धावतीतिवद्वाक्यार्थस्य कर्मता बोध्या ॥ १ ॥

**(यद्योगे उक्तं न)** अभिजानासि कृष्ण यद्वनेऽभुञ्ज्महि (ख) ॥२॥

( सु० ) **यद्योगे उक्तं न** ॥ स्मृतिवाचकशब्दे उपपदे सत्यपि यच्छब्दयोगे भूतानद्यतने लृट् न भवति किं तु लङेव ॥ २ ॥

( त० ) **अभी**त्यादि ॥ अत्र लङेव न तु लृट् ॥ २ ॥

**(उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्)** (ग) सुप्तोऽहं किल विललाप ॥ ३ ॥

( सु० ) **उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्** ॥ मदस्वप्नादिभिः कश्चित्स्वान्तगतमेव न वेत्ति, पश्चादन्येभ्यः श्रुत्वा प्रयुङ्क्ते । किलशब्दोऽज्ञानसूचकः । सुप्तः सन्नहं विललापेति ॥ ३ ॥

( त० ) **उत्तमपुरुषे**त्यादि ॥ अत्र यद्यपि बुद्धीन्द्रियशरीरादिसंघातरूपस्य कर्तुरात्मनः प्रत्यक्षतैव तथापि मदस्वप्नादिभिश्च विक्षिप्ते चित्ते कश्चित्स्वगतमेव न वेत्ति पश्चादन्येभ्यः श्रुत्वा प्रयुङ्क्ते सुप्तोऽहमित्यादि । किलेत्यज्ञानं सूचयति ॥ ३ ॥

**( अत्यन्तापह्नवे लिट् )**(घ) कलिङ्गेष्ववात्सीः । नाहं कलिङ्गाञ्जगाम ॥ ४ ॥

( सु० ) **अत्यन्तापन्हवे लिट्** ॥ अत्यन्तापलापेऽर्थे लिड् भवति ॥ कलिङ्गो नाम निषिद्धो देशः । उक्तं च-"अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति ॥" इति ॥ केनचित्कश्चित्पृष्टः त्वं कलिङ्गेषु अवात्सीः तत्र गत्वा त्वया चिरं स्थितमित्यर्थः । स आह नाहं कलिङ्गान् जगामेति । केवलमवस्थानमेव न निषिध्यते किंतु तद्धेतुभूतं गमनमपीत्यत्यन्तापन्हवो भवति ॥ ४ ॥

( क ) **गोकुले वत्स्याम इति** । गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासकर्मकं कृष्णसंबोध्यकं स्मरणमिति शाब्दबोधः ॥

( ख ) **यद्वने इति** । भूतानद्यतनवनाधिकरणकास्मत्कर्तृकभोजनकर्मकं स्मरणमिति शाब्दबोधः।

( ग ) **पारोक्ष्यमिति** । परोक्षत्वञ्च प्रत्यक्षीकरोमीत्येतादृशविषयताशालिज्ञानविषयत्वमिति ।

( घ ) अत्यन्तापह्नवो नामाबधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनमिति ॥

( त० ) अत्यन्तापन्हव इति ॥ अत्रन्हवाऽपलापः ॥ नाहमित्यादि ॥ कलिङ्गस्य तु जुगुप्सितत्वेन तत्र त्वया चिरं स्थितमित्युक्ता कश्चिद्गमनमेव निषेधतीत्यत्रास्त्यत्यन्तापन्हवः । यदा तु गमनमेवायुक्तं तदेवापलपति तदा लङेवात्यन्तापन्हवाभावात् ॥ ४ ॥

**(हशश्वतोर्लिङ्विषये लङ्लिटौ)** इति हाकरोत्, चकार वा। शश्वदकरोत्, चकार वा ॥ ५ ॥

( सु० ) **हशश्वतोर्लिङ्विषये लङ्लिटौ** ॥ हशश्वन्निपातयोर्योगे लिङर्थे लङ्लिटौ भवतः ॥ ५ ॥

**( आसन्नकाले पृच्छ्यमानेर्थे लङ्लिटौ )** (क) अगच्छत् किम्। जगाम किम्। अनासन्ने तु कंसं जघान किम् ॥ ६ ॥

( सु० ) **आसन्नकाले पृच्छ्यमानेऽर्थे लङ्लिटौ** ॥ आसन्नकालिके भूतानद्यतनपरोक्षवृत्तिधात्वर्थे प्रष्टव्ये लङ्लिटौ भवतः । पञ्चवर्षाभ्यन्तर आसन्नकालः । पञ्चवर्षातीतो विप्रकृष्टकालः ॥ पृच्छ्यमाने किम् । जगादैवम् । लिडेव ॥ अनासन्ने तु लिडेव । कंसं जघान किम् ॥ ६ ॥

( त० ) **आसन्नेत्यादि** ॥ पञ्चवर्षाभ्यन्तरमासन्नकालम्, पञ्चवर्षातीतं विप्रकृष्टकालं वर्णयन्ति ॥ ६ ॥

**( स्मे लट् लिटोऽपवादः )** यजति स्म युधिष्ठिरः ॥ ७ ॥

**(भूतानद्यतने लट् स्मयोगे)** एवं स्म पिता ब्रवीति (ख) ॥८॥

( सु० ) **स्मे लट्** ॥ स्मयोगे लड् भवति, न तु लिट् । स्मेत्यव्ययं भूतकालद्योतकम् । **भूतानद्यतने लट् स्मयोगे** । लङोऽपवादः ॥ ब्रवीति स्म । अब्रवीदित्यर्थः॥८॥

**( ननौ पृष्टप्रतिवचने भूते लट् )** (ग) अकार्षीः किम्। ननु करोमि भोः ॥ ९ ॥

( सु० ) **ननौ पृष्टप्रतिवचने भूते लट्** ॥ पृच्छ्यते इति पृष्टः । कर्मणि क्तः । पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनमिति षष्ठीसमासः । भावे क्तप्रत्यये तु पृष्टं प्रश्नः । पृष्टपूर्वं च तत्प्रतिवचनं च पृष्टप्रतिवचनमिति मध्यमपदलोपी समासः । ननु करोमि । अकार्षमित्यर्थः ९

( त० ) **ननाविति** ॥ पृष्टेति कर्मणि क्तः । पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनमिति षष्ठी समासः । भावे तु पृष्टं प्रश्नस्तत्पूर्वं प्रतिवचनमित्युत्तरपदलोपी समासः ॥ ९ ॥

**( नन्वोर्वा )** (घ) अकार्षीः किम्। न करोमि। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम् ॥ १० ॥

( सु० ) **नन्वोर्वा** ॥ ननुनिपातयोर्योगे पृष्टप्रतिवचने भूते वा लड् भवति । पक्षे लुङ्लिटौ ॥ १० ॥

---

( क ) **पृच्छ्यमानेऽर्थे इति** । सो हि जिज्ञासाविषयार्थज्ञानानुकूलः किं कर्त्तव्यमित्यभिलापादिरूपो व्यापारः । ( ख ) **एवंस्मेति** । अत्र एवमिति अपरोक्षत्वद्योतकम् ॥

( ग ) ननाविति । ननु शब्दो वितर्केऽर्थे ॥ ( घ ) **नन्वोर्वेति** । ननु शब्दावत्रपर्य्यायौ ॥

(**पुराशब्दयोगे भूतानद्यतने वा लुङ्लटौ न तु स्मयोगे**) वसन्तीह पुरा छात्राः, अवात्सु, अवसन्, ऊषुर्वा ॥ स्मेति किम्। यजति स्म पुरा युधिष्ठिरः ॥११॥

( सु० ) **पुराशब्दयोगे भूतानद्यतने वा लुङ्लटौ न तु स्मयोगे** ॥ पक्षे लङ्लिटौ ॥ स्मेति किम् । यजति स्म पुरा युधिष्ठिरः ॥ ११ ॥

(**यावत्पुरानिपातयोर्भविष्यति लट्**) यावद्भुङ्क्ते । पुरा भुङ्क्ते । भोक्ष्यसे, भोक्ता, वा ॥ १२ ॥

(**कदाकर्ह्योर्वा भविष्यति लट्**) कदा कर्हि वा भुङ्क्ते, भोक्ष्यसे, भोक्ता वा ॥ १३ ॥

( सु० ) **यावत्पुरानिपातयोर्भविष्यति लट्** ॥ यावद्भुङ्क्ते । निश्चितं भोक्ष्यत इत्यर्थः ॥ निपातावेतौ निश्चयं द्योतयतः (क) ॥ निपातयोः किम् । यावद्दास्यते तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ॥ १३ ॥

(**वर्तमानसामीप्ये भूते भविष्यति च वर्तमानवद्वा**) (ख) कदाऽऽगतोऽसि । अयमागच्छामि, अयमागमम् । कदा गमिष्यसि । एष गच्छामि, गमिष्यामि वा ॥ १४ ॥

( सु० ) **वर्तमानसामीप्ये भूते भविष्यति च वर्तमानवद्वा** ॥ कदाऽऽगतोऽसीति भूतकाले प्रश्नवाक्यम्। अयमागच्छामीत्युत्तरं भूतकालाभिव्यक्तये अयमिति प्रयोगस्त्विदानीमेवागममिति वर्तमानसमीपभूतकालद्योतनाय । तेन ह्यागमनादिना भूतं रूपं यद्धूलीधूसरताप्रस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते । एवं कदा गमिष्यसीति भविष्यत्काले प्रश्न वाक्यम् । एष गच्छामीत्युत्तरं भविष्यत्कालाभिव्यक्तये । एष इति प्रयोगस्त्विदानीमेव गमिष्यामीति वर्तमानसमीपभविष्यत्कालद्योतनाय । तेन हि गमनेन विना भूतं यत्परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते । तत्र कदेति प्रश्ने उत्तरवाक्ययोः कालानुपादानादयमेषशब्दाभ्यामिदानीमिति कालावगमः ॥ १४ ॥

( त० ) **अयमागच्छामीत्यादि** ॥ अयमेषशब्दाभ्यामागमनादिना भूतं यद्रूपं प्रस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते । इदानीमागममित्यर्थः ॥ १४ ॥

(**क्षिप्रवचने लृट्**) वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति तदा शीघ्रं वप्स्यामः ॥ १५ ॥

( क ) **निश्चयमिति** । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति कोशप्रमाणादिति भावः ॥ **कदाकर्ह्योर्वा इति** । कदाकर्ही शब्दौ कस्मिन् काले इत्यर्थकौ ॥

(ख) **वर्त्तमानसामीप्य इति**। प्रयोगोच्चारणाश्रयत्वे सति प्रारब्धापरिसमाप्तिक्रियाश्रयत्वं वर्त्तमानत्वम् ॥ वर्त्तमानध्वंसप्रतियोगित्वं भूतत्वम् । वर्त्तमानप्रागभावप्रतियोगित्वं भविष्यत्वम् ॥ समीपमेव सामीप्यम् ॥

( सु० ) **क्षिप्रवचने लृट्** ॥ वचनग्रहणं स्वरूपग्रहणनिरासार्थम् । क्षिप्रपर्याय उपपदे लृट् ॥ १५ ॥

( त० ) **क्षिप्रेति** ॥ क्षिप्रपर्यायस्यापि ग्रहणं न तु स्वरूपस्यैव ॥ १५ ॥

( **गर्हायां लडपिजात्वोः कालत्रये** ) (क) अपि जायां त्यजसि । जातु गणिकामाधत्से ॥ १६ ॥

( सु० ) **गर्हायां लडपिजात्वोः कालत्रये** ॥ अभ्यां योगे लट् स्याद्गर्हायां कालत्रये । परत्वाल्लुङादीनयं वाधते । अपि जयां त्यजसि । त्यक्ष्यसि, अत्याक्षीः इत्यादिविषये त्यजसीत्यादि लडेव प्रयुज्यत इति भावः ॥ एवं यो जायामत्यजत् , तत्याज, त्यक्ष्यति, अत्याक्षीदित्यादिविषये यो जायामपि त्यजति, जातु गणिकामाधत्ते गर्हितमेतत् ॥ १६ ॥

( त० ) **जातु गणिकामिति** । गर्हितमेतत् ॥ १६ ॥

( **वा कथमि लिङ्लटौ गर्हायां कालत्रये** ) कथं धर्मं त्यजेस्त्यजसि वा ॥ १७ ॥

( सु० ) **वा कथमि लिङ्लटौ गर्हायां कालत्रये** ॥ पक्षे लङ्लिट्लुट्लृट्लङ्लुङः । भूतानद्यतने लङ् । कथं धर्ममत्यजः । परोक्षानद्यतने भूते लिट् । कथं धर्मं तत्यक्थ । भविष्यत्यनद्यतने लुट् । कथं धर्मं त्यक्तासि । भविष्यत्सामान्ये लृट् । कथं धर्मं त्यक्ष्यसि । क्रियातिक्रमणे लृङ् । कथं धर्ममत्यक्ष्यः । भूतसामान्ये लुङ् । कथं धर्ममत्याक्षीः १७

( **जातुयद्यदायदियोगे लिङ् लृटोऽपवादः** ) जातु यत् यदा यदि वा त्वादृशो हरिं निन्देत् नावकल्पयामि, न मर्षयामि ॥ १८ ॥

( सु० ) **जातुयद्यदायदियोगे लिङ् लृटोऽपवादः** ॥ अनवक्लृप्त्यमर्षयोर्लिङ्स्यादेषां योगे । अनवक्लृप्तिरसम्भावना । अमर्षोऽक्षमा लृटोऽपवादः, लृङ् तु क्रियानिष्पत्तौ भूते वा, भविष्यति तु नित्यमित्यर्थः ॥ जातु भवान् हरिमनिन्दिष्यदित्याद्युदाहर्तव्यम् । अगर्हायामिदम् , गर्हायां तु जातुयोगे लडुक्तः ॥ १८ ॥

( त० ) **नावकल्पयामीत्यादि** ॥ अनवक्लृप्तिरसंभावना ॥ अमर्षोऽक्षमा ॥ १८ ॥

**उताप्योर्बाढार्थयोर्लिङ्** (ख) ॥ समर्थयोरनयोर्लिङ् कालत्रये ॥ उत अपि वा हन्यादघं हरिः ॥ बाढार्थयोरिति किम् उत दण्डः पतिष्यति अपिधास्यति द्वारम् ॥ १९ ॥

( सु० ) **उताप्योर्बाढार्थयोर्लिङ्** ॥ समर्थयोरनयोर्योगे लिङ् कालत्रये ॥ बाढार्थयोः किम् । उत दण्डः पतिष्यति । अपिधास्यति । द्वारम् । अत्र प्रश्न आच्छादनं च गम्यते ॥ १९ ॥

( त० ) **समर्थयोरिति** ॥ समोऽर्थो ययोस्तौ तयोः । हलादित्वाट्टिलोपः । सम्शब्द एव वा तुल्यार्थे । बाढमित्यर्थेऽनयोस्तुल्यार्थता । **उत दण्ड इत्यादि** ॥ प्रश्न आच्छादनं चार्थः ॥ १९ ॥

---

( क ) **गर्हायामिति** । जातु कदाचित् । ( ख ) **बाढार्थयोरिति** । 'भृशप्रतिज्ञयोर्बाढमिति' अमरः ।

**( स्वाभिप्रायाविष्करणे गम्ये लिङ् कालत्रये न तु कच्चिति )** कामो मे भुञ्जीत भवानिति ॥ न तु कच्चितीति किम् । कच्चिज्जीवति मे माता ॥ २० ॥

(सु०) **स्वाभिप्रायाविष्करणे गम्ये लिङ् कालत्रये न तु कच्चिति** ॥ सर्वलकारापवादः ॥ न तु कच्चितीति किम् । कामो मे कच्चिज्जीवति । वर्तमानसामीप्ये इति लट् ॥

**( हेतुहेतुमतोर्भविष्यति लिङ् वा )** कृष्णं नमेच्चेत्सुखं यायात् कृष्णं नंस्यति चेत्सुखं यास्यति ॥ २१ ॥

( सु० ) **हेतुहेतुमतोर्भविष्यति लिङ् वा** ॥ हेतुः कारणम् । हेतुमत्फलम् । पक्षे लृट् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णनतिः सुखप्राप्तेर्हेतुः । भविष्यत्येवेष्यते । नेह हन्तीति पलायते ॥ २१ ॥

( त० ) **हेतुहेतुमतोरिति** ।। हेतुः कारणम् । हेतुमत्फलम् ॥ **कृष्णमित्यादि** ॥ नमनमात्रं हेतुः । सुखप्राप्तिः फलम् ॥ २१ ॥

**( इच्छार्थेषु लिङ्लोटौ कामप्रवेदने )** इच्छामि भुञ्जीत, भुङ्क्तां वा भवान् ॥ २२ ॥

( सु० ) **इच्छार्थेषु लिङ्लोटौ कामप्रवेदने** ॥ काम इच्छा तस्य प्रवेदनं प्रकाशनं तस्मिन्नर्थे ॥ २२ ॥

( त० ) **कामप्रवेदन** इति ॥ काम इच्छा प्रवेदनं प्रकाशनम् ॥ २२ ॥

**(इच्छार्थेभ्यो लिङ्लटौ वर्तमानेऽर्थे)** कामयते । कामयेत॥२३॥

( सु० ) **इच्छार्थेभ्यो लिङ्लटौ** ॥ वर्तमाने इति शेषः । इच्छाऽर्थो येषां ते इच्छार्थास्तेभ्यः तेन वश कान्तावित्यादयोऽपीच्छार्था ग्राह्याः ॥ २३ ॥

( त० ) **इच्छार्थेभ्य इति** ॥ इच्छा अर्थो येषां ते इच्छार्थाः । तेन वश कान्तौ इत्यादयोऽपीच्छार्था ग्राह्या ॥ २३ ॥

**( पौनःपुन्ये भृशार्थे च धातोर्लोट् सर्वलकारविषये तस्य हिस्वौ सर्वतुबादिविषये तध्वमोर्विषये वा क्रियासमभिहारे द्वित्वं तस्यैव धातोरनुप्रयोगश्च )** ॥ २४ ॥

( सु० ) **पौनःपुन्ये भृशार्थे च धातोर्लोट् सर्वलकारविषये तस्य हिस्वौ सर्वतुबादिविषयं तध्वमोर्विषयं वा** ॥ पौनःपुन्यं भृशार्थश्च धातोरेवार्थः । लोट् द्योतक इति भावः ॥ किं च तुबादीनामादेशत्वेऽपि तेषां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्त्वात् । 'ङिच्च पिन्न पिच्च ङिन्न' इति भाष्योक्तत्वात् ङित्त्वाभावे लुनीहीत्यत्र ईहसे इतीत्वं न स्यात् । तृण्ढि इत्यत्र तु तृहो नमि कृते, इमागमः पितीतीमागमे तृणेढि इति च स्यात् । अतो लोटो हिस्वावित्युक्तम् । **सकलवचनविषये परस्मैपदिभ्यो हिः कर्तरि** । आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु । क्रियासमभिहारे इति द्वित्वम् । यस्मा-

धातोर्लोड्विहितस्तस्यैव धातोरनुप्रयोगश्च कर्तव्यः । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च कर्तव्याः । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिर्भवति अत्र लोडन्तविषये संख्याकारकादीनां स्वान्तादप्रतीतिस्तद्बोधनायानुप्रयोगो न्यायत एव । याहि याहीति याति, यातः यान्ति । यासि । पुनः पुनरतिशयेन वा यानं हि प्रत्ययान्तस्यार्थः । एककर्तृकं वर्तमानं यानं यातीत्यस्यार्थः । इतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयति । मध्यमपुरुषबहुवचने तशब्दे तु यात यातेति यूयं याथ । पक्षे याहि याहीति यूयं याथ । एवं भूतभविष्यतोरप्युदाहरणम् । याहि यहीति यास्यति । याहि याहित्ययासीत् । मध्यमपुरुषबहुवचने ध्वशब्दे तु अधीध्वमधीध्वमिति यूयमधीध्वे पक्षे अधीष्वाधीष्वेत्यधीष्व । भावकर्मणोस्तु भूयस्व भूयस्वेति भूयते । पच्यस्व पच्यस्वेति पच्यते । गद्यस्वगद्यस्वेति गद्यते । भज्यस्वभज्यस्वेति भज्यते । इत्यादि ज्ञेयम् ॥ २४ ॥

( त० ) **पौनःपुन्ये भृशार्थे** चेति ॥ पुनःपुनर्भावः पौनःपुन्यम् । भृशार्थोऽतिशयार्थः । एतद्विशिष्टक्रियावचनाद्धातोरित्यर्थः । **क्रियासमभिहारे द्वित्वमिति** ॥ पौनःपुन्ये भृशार्थे चेत्यर्थः । परस्मैपदिभ्यो हिः कर्तरि, आत्मनेपदिभ्यः स्वः भावकर्मकर्तृषु सकलपुरुषवचनविषये । **याही याहीति यातेति** ॥ पुनः पुनरतिशयेन वा यानं लोडन्तस्यार्थः । एककर्तृकं वर्तमानं यानं तिबन्तस्य । कालपुरुषविशेषाभिव्यक्तिः सर्वत्र तु प्रयोगादेव बोध्या इति शब्दोऽभेदान्वयद्योतकः भविष्यद्भूतयोरप्युदाहरति । **यास्यतीत्यादि** ॥ स्वयमुदाहरति ॥ **अधीष्वेत्यादि** ॥ २४ ॥

**( अनेकक्रियासमुच्चये वा लोट् तस्य हिस्वौ तध्वमोर्विषये वा )** समानार्थस्य धातोरनुप्रयोगात्तिवादयः ॥ याहि याहीति याति । एवं यातः, यान्ति । यासि, याथः, याथ । यात यातेति । यूयं याथ । यामि यावः । यामः याहि याहीति यास्यति । अयासीत् ॥ अधीष्वाधीष्वेत्यधीते । एवमन्यत्रापि । ध्वविषये प्रागवत् । पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे ॥ सक्तून् पिब, धानाः खादेत्यभ्यवहरति । पिबत खादतेत्यभ्यवहरथ । अन्नं भुङ्क्ष्व, दाधिकमास्वादयस्वेत्यभ्यवहरते । भुङ्ग्ध्वमास्वादयध्वमित्यभ्यवहरध्वे ॥२५॥ इति लकारार्थप्रक्रिया ॥ २२ ॥

इत्याख्यातप्रक्रिया समाप्ता ॥



( सु० ) **अनेकक्रियासमुच्चये तु वा लोट् तस्य हिस्वौ तध्वमोर्विषये वा** ॥ समानार्थस्य धातोरनुप्रयोगात्तिबादयः । चिनोतेर्भावे स्वराद् इत्यप्रत्यये कृते समुच्चीयते इति समुच्चयः । अस्मिन् सूत्रे पौनःपुन्ये भृशार्थे चेत्यनुवर्तनाद्द्वित्वमकृत्वैवोदाहरति सक्तून्पिबेत्यादि । तध्वमोस्तु पिबत खादतेति यूयमभ्यवहरथ । पक्षे पिब खादेति यूयम-

भ्यवहरथ। भुङ्ध्यमास्वादयध्वमिति यूयमभ्यवहरध्वम्। पक्षे भुङ्क्ष्व, आस्वादयस्वेति यूयमभ्यवहरध्वम्। लोडभावपक्षे सक्तून् पिबति। धानाः खादति। अन्नं भुङ्क्ते। दाधिकमास्वादयते। 'धाना भृष्टयवे स्त्रियाम्।' इत्यमरः। दध्ना संस्कृतं दाधिकं व्यञ्ज-नादि। एतेन 'पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः। विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः" (क) इति व्याख्यातम्। अवस्कन्द-नलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। इह पुनःपुनश्चस्क-न्देत्यादिरर्थ इति तु व्याख्यानं भ्रममूलकमेव। द्वितीयसूत्रे क्रियासमभिहारे इत्यस्या-ननुवृत्तेः, लोडन्तस्य द्वित्वापत्तेश्च। पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषां-चिद् भ्रम एव। पुरुषवचनसंज्ञे इह नेत्युक्तत्वात्॥२६॥

इति सुबोधिन्यां लकारार्थप्रक्रिया॥ २२॥

बुद्धिमान्द्यवशात्किंचिद्यदशुद्धमलेखि तत्।
द्वेषभावं समुत्सृज्य शोधनीयं मनीषिभिः॥

इति श्रीसिद्धान्तचन्द्रिकाव्याख्यायां सदानन्दाख्यायामाख्यातप्रक्रिया समाप्ता॥

---

(त०) सक्तून् पिबेत्यादि॥ सक्तून् पिब सक्तुपानादिकं करोतीत्यर्थः। एवं पुरीमवस्कन्द लुनीहि नन्दनमित्यादि व्याख्येयम्। अवचस्कन्द लुलावेत्यादि। यत्तु वासुदेवादिभिरतिशयेन पुनःपुनर्वाऽवचस्कन्देत्यादि व्याख्यातं तदसत्। अनेकक्रियासमु-च्चये क्रियासमभिहारेऽस्यानुक्तेः लोडन्तद्वित्वापत्तेश्च॥

इति तत्त्वदीपिकायां लकारार्थप्रक्रिया॥ २२॥

कृतायामिह टीकायां लोकेशकरशर्मणा। अगादगाधबुद्धीनां कृतमाख्यातसाधनम्॥
इति सिद्धान्तचन्द्रिकाव्याख्यायां तत्त्वदीपिकायामाख्यातप्रक्रिया संपूर्णा॥

---

**इत्याख्यातप्रक्रिया समाप्ता॥**

---

(क) **पुरीमिति** श्लोकोऽयं शिशुपालवधकाव्यस्य। इदमस्य व्याख्यानम्। यो बली बलवान् **रावणः**, नमुचिद्विषा इन्द्रेण, विगृह्य कलहं कृत्वा, पुरीममरावतीम्, अवस्कन्द अवरुरोध। नन्दनं तन्नामकमिन्द्र-वनम्, लुनीहि चिच्छेद। रत्नानि श्रेष्ठवस्तूनि मणीन्वा, 'रत्नं श्रेष्ठे मणावपीत्यमरः' मुषाण मुमोष। अमराङ्गनाः देवयोषितः, **हर जहार**। इत्थमनेन प्रकारेण अहर्दिवमहन्यहनि, दिवः स्वर्गस्य, अस्वास्थ्य-मुपद्रवम्, चक्रे कृतवान् इति। अत्रायं शाब्दबोधः। पुरीकर्मकम् अवस्कन्दनाभिन्नं नन्दनवनकर्मकं लव-नाभिन्नं बलिकर्तृकं दिवोऽस्वास्थ्यकरणमिति। वैयाकरणमते शाब्दबोधस्तु धात्वर्थमुख्यविशेष्यको नैया-यिकानां मते प्रथमान्तार्थमुख्यविशेष्यकः इति द्विप्रकारः। वैयाकरणानां त्वित्थम्—पश्य मृगो धावति, इत्यादौ मृगाभिन्नकर्तृकं धावनकर्मकं दर्शनम् इति क्रियामुख्यविशेष्यकः। नैयायिकानान्तु—घटो पटो न भवतीति वाक्यात्। घटभेदवान् पट इति प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः॥ इति लकारार्थप्रक्रिया।

# अथ पूर्वकृदन्तप्रक्रिया ॥ २३ ॥

**कृत्कर्तरि** ॥ वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि भवन्ति ॥१॥

सुबोधिनी—

प्रतोष्टूय्य जगन्नाथं सदानन्देन सन्मुदा ।
सिद्धान्तचन्द्रिकावृत्तिः क्रियते कृत्प्रकाशिका ॥ १ ॥

कृत्कर्तरि इति ॥ उत्सर्गतः कर्तरीति बोध्यम् ॥ १ ॥

( त० ) कृत्कर्तरीति ॥ उत्सर्गतः कर्तरीति बोध्यम् ॥ १ ॥

**तृवुणौ** ॥ धातोः । पक्ता ॥ २ ॥

( सु० ) तृवुणौ ॥ धातोरेतौ स्तः ॥ कर्तरि तृप्रत्ययमाह—पचतीति विग्रहे चोः कुरिति कः । कृत्तद्धितेति नामसंज्ञायां स्यादिर्विभक्तिः । सेरा इति सेरात्वं टिलोपश्च । पक्ता पाकानुकूलकृतिमान्देवदत्त इत्यर्थः ॥ २ ॥

( त० ) धातोरिति ॥ अधिकारादिदं लब्धमित्याशयः । पक्तेति ॥ पचतीति वाक्यम् । चोः कुरिति कुत्वम् ॥ २ ॥

**कृतः** ॥ वसादेः कृत इट् ॥ कुटिता ॥ एधते इति एधिता ॥ गोपायिता—गोपिता—गोप्ता । सहिता—सोढा । एषिता एष्टा ॥ ३ ॥

( सु० ) कृतः ॥ धातोः परस्य वसादेः कृत्प्रत्ययस्येट् ॥ वसोऽत्र प्रत्याहारः । भवतीति भविता । कुट कौटिल्ये । तुदादिः । कुटादेर्ञ्णिद्वर्जं इति तृप्रत्ययस्य ङित्वान्न-गुणः । कुटतीति कुटिता । एधते इति एधिता । गुपू रक्षणे । आयादयोऽनपीति वा आयः । आयपक्षे कृत इति नित्यमिट् । अन्यत्र ऊदितो वेति वेट् । गोपायतीति-गोपायिता—गोपिता-गोप्ता । षह मर्षणे । इषुसहेति वेट् । सहते इति सहिता । इडभावे हो ढः इति हस्य ढः । तथोर्ध इति तस्य धः । ष्टुत्वम् । ढि ढ इति ढलोपपूर्वदीर्घौ । सहिवहोरित्योत्वम् । सोढा ॥ इषु इच्छायाम् । इषुसहेति वेट् । इच्छतीति एषिता । इडभावे ष्टुत्वम् ॥ एष्टा ॥ ३ ॥

( त० ) कृत इति । वसादेरिति ॥ वसप्रत्याहार आदिर्यस्य स तथा तस्य । कुटितेति ॥ ङित्वान्न गुणः ॥ सोढेति इषुसहेत्यादिना वेट् । ढत्वष्टुत्वढलोपाः । सहिवहोरित्योत्वम् ॥ ३ ॥

**(युवोरनाकौ)** ॥ वाचकः । पाचकः । भावकः ॥ आतो युक् । दायकः । धातकः । जनकः । घटकः । दरिद्रायकः । कोटकः । शमकः । नियामकः ॥४॥

( सु० ) वुणप्रत्ययमाह । णकारो वृद्ध्यर्थः । युवोरनाकौ ॥ युश्च वुश्चानयोः समाहारो युवुः तस्य युवोः ॥ वक्तीति वाचकः (क) ॥ पचति, पाचयतीति वा पाचकः ॥ भवति, भावयतीति वा भावकः यदि ण्यन्ताद् गुणविधिस्तदा णेरिति णिलोपः । ददातीति आतो

( क ) वाचक इति । 'अत उपधायाः, अनेन वृद्धिः ।

युगिति युक् । दायकः । हन्तीति । हनो घदिति घत् । घातकः ॥ जनी प्रादुर्भावे । दैवादिकः । जन जनने । जुहोत्यादिः । जनयतीति । जनिवध्योरिति न वृद्धिः । ञेरिति ञिलोपः । जनकः ॥ घटयतीति । मितां ह्रस्वः इति ह्रस्वः ञेरिति ञिलोपः । घटकः ॥ दरिद्रातीति । आतो युगिति युक् । दरिद्रायकः । तृप्रत्यये तु कृत इतीट् । दरिद्रातेरनपीत्यालोपः । दरिद्रिता ॥ कुट कौटिल्ये । कुटादेर्ञ्णिद्वर्जं इति वुणोऽङित्वादुपधाया लघोरिति गुणः । कुटतीति कोटकः ॥ शमु उपशमे । मान्तस्य सेटो नेति न वृद्धिः । शाम्यतीति शमकः ॥ यम उपरमे । नियच्छतीति । मान्तस्य सेट इति वृद्धिनिषेधस्तु न वर्तते अस्यानिट्त्वात् । नियामकः ॥ ४ ॥

( त० ) युवौः ॥ युश्च वुश्चेति समाहारः । नुम्त्वनित्यत्वान्न । दायक इति । आतो युगिति युक् ॥ जनक इति ॥ जनिवध्योरिति न वृद्धिः ॥ कोटक इति ॥ ञ्णिद्वर्जं इति ङित्वाभावाद् गुणः ॥ ४ ॥

## ( क्रमेः कर्तर्याद्विषयात्कृत इण्न ) (क) प्रक्रान्ता ॥ ५ ॥

( सु० ) क्रमेः कर्तर्याद्विषयात्कृत इण्न ॥ आत्मनेपदविषयात्क्रमेः परस्य कर्तरि कृत्प्रत्ययस्येण्न भवति ॥ प्रोपाभ्यां प्रारम्भार्थाभ्यामिति क्रमेरात्मनेपदविषयता । प्रक्रमते इति प्रक्रन्ता । तृप्रत्ययः ॥ कर्तरि किम् ? प्रक्रम्यते इति प्रक्रमितव्यम् । आत्मनेपद इति किम् । संक्रामतीति संक्रमिता ॥ ५ ॥

( त० ) प्रक्रन्तेति । प्रोपाभ्यामित्याद्विषयता ॥ ५ ॥

## ( नाम्युपधात्कः ) क्षिपः । बुधः । वृतः ॥ ६ ॥

( सु० ) नाम्युपधात्कः ॥ कप्रत्ययमाह । प्रत्ययाद्या लशकवर्गा इत्संज्ञका भवन्ति तद्धितवर्जम् (ख) ॥ कित्त्वाद् गुणो न बोधतीति बुधः(ग) ॥ क्षिप प्रेरणे । क्षिपतीति क्षिपः ॥ तृप्रत्यये तु क्षेप्ता । वुणि तु क्षेपकः वर्तते इति वृतः ॥ ६ ॥

( त० ) नाम्युपधादिति ॥ नामी अवर्णवर्जः उपधा यस्य स तस्मात् ॥ क्षिप इति ॥ क्षिपतीति विग्रहः ॥ ६ ॥

## ( प्रीकृज्ञाभ्यश्च ) नुधातोः । प्रियः । किरः । ज्ञः ॥ ७ ॥

( सु० ) प्रीकृज्ञाभ्यश्च ॥ एभ्योऽपि कः ॥ प्रीञ् तर्पणे । प्रीणातीति । नुधातोरितीय् । प्रियः ॥ कॄ विक्षेपे । किरतीति । ॠत इरितीर् । किरः ॥ जानातीति ।

---

( क ) क्रमेः कर्तर्याद्विषयादिति । अनन्यभावे (१) विषयशब्दः । तेन 'अनुपसर्गाद्वा' इति विकल्पार्हस्य न निषेधः । क्रमिता । तदर्हत्वमेव तद्विषयत्वम् । तेन क्रन्तेत्यपि केचित् ।

( ख ) तथाच पाणिनीये-'लशक्वतद्धिते' । तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युरिति । अतद्धित इति किम् ! 'सिध्मादेर्लः' सिध्मालः । 'लोमपामपिच्छादिभ्यः शनेलाः' इति लोमादिभ्यः शप्रत्यये लोमशः गिरिशः' इत्यादि ।

( ग ) बुध इति । अत्र अप्रत्ययकरणेन सिद्धेऽपि 'उपधाया लघोः' इति गुणस्य वारणार्थं कित्करणमिति भावः ।

---

( १ ) अनन्यभावे इति । तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावः । तथा च विकल्पार्हस्य क्रमः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्निषेधो नेति भावः ॥ इति तत्त्वबोधिनी ॥

आतोऽनपीत्यालोपः । ज्ञः ॥ ७ ॥

( त० ) प्रिय इति ॥ प्रीञ् तर्पणे । इय् ॥ किर इति ॥ कॄ विक्षेपे । ऋत इर् ॥ ज्ञ इति ॥ आतोऽनपीत्यालोपः ॥ ७ ॥

( **उपसर्गे आदन्तात्** ) प्रदः । सुज्ञः । सुग्लः ॥ ८ ॥

( सु० ) **उपसर्गे आदन्तात्** ॥ उपसर्गे पूर्वपदे आदन्ताद्धातोः कः ॥ प्रददातीति । आतोऽनपीत्यालोपः । प्रदः ॥ सुष्ठु जानातीति सुज्ञः ॥ ग्लै हर्षक्षये । सुष्ठु ग्लायतीति सुग्लः ॥ ८ ॥

( **पचिनन्दिग्रहादेरयुणिनि** ) पचादेरः । नन्द्यादेर्युः । ग्रहादेर्णिनिः ॥ पचः । वदः । चलः । पतः । चरः ॥ ९ ॥

( सु० ) **पचिनन्दिग्रहादेरयुणिनि** ॥ (क) द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबद्धयत इत्यादिशब्दः प्रत्येकं योज्यः ॥ पचादेर्धातोरप्रत्ययः । नन्द्यादेर्धातोर्युप्रत्ययः । ग्रहादेर्धातोर्णिनिप्रत्ययः ॥ अप्रत्ययमाह–पचतीति पचः । वदतीति वदः चल संचलने । चलतीति चलः । पत्लृ पतने । पततीति पतः ॥ चुरतीति चरः ॥ ९ ॥

( त० ) **पचिनन्दिग्रहादेरित्यादि** ॥ द्वन्द्वान्ते श्रूयमाणस्यादिशब्दस्य प्रत्येकं योगः । अश्च युश्च णिनिश्चेति समाहारद्वन्द्वः । एते च गणा न धातुपाठे पठ्यन्ते किंतु नन्दनरमण इत्येवमादिषु नामगणेष्वेवोदाहृत्य प्रकृतयो निर्दिश्यन्त इति ॥ **पच** इति ॥ पचतीति वाक्यम् । पचादिराकृतिगणः ॥ ९ ॥

( **चरिचलिपतिवदीनां वा द्वित्वं पूर्वस्यागप्रत्यये** ) (ख) चराचरः । चलाचलः । पतापतः । वदावदः ॥ १० ॥

( सु० ) **चरिचलिपतिवदीनां वा द्वित्वं पूर्वस्यागप्रत्यये** ॥ अत्र ह्रस्व इति ह्रस्वः पूर्वस्य हसादिश्शेष इत्यादिशेषश्च न भवति । आगमस्य दीर्घत्वसामर्थ्यात् ॥ चराचर इत्यादि ॥ १० ॥

( त० ) **चरिचलीत्यादि** ॥ **चराचर** इत्यादि ॥ आगागमविधानसामर्थ्याद्धसादिः शेष इति न । तथा हि सति तस्मिन्नागमादेशयोर्विशेषो न स्यात् । दीर्घत्वविधेर्ह्रस्वोऽपि न ॥ १० ॥

( **हन्तेर्हस्य घत्वं च** ) घनाघनः ॥ ११ ॥

( सु० ) **हन्तेर्हस्य घत्वं च** ॥ हन्तेर्द्वित्वं पूर्वस्य हस्य घत्वं वाऽप्रत्यये चकारात्पूर्वस्याक् उत्तरहस्य तु पूर्वाद्धन्तेरिति घः । घनाघनः ॥ ११ ॥

( त० ) **हन्ते** ॥ हन्तेः पूर्वस्यैव, उत्तरस्य तु पूर्वादित्यनेनैव सिद्धम् । चकारात्पूर्वोक्तमपि ॥ ११ ॥

---

( क ) **द्वन्द्वान्त इति** । पचिश्च नन्दिश्च ग्रहश्च एषां समाहारः पचिनन्दिग्रहम् । तद् आदिर्यस्य स पचिनन्दिग्रहादिः, इति समाहारद्वन्द्वानन्तरं बहुव्रीहिः ॥

( ख ) **चरिचलीति** । चरि चलि पति वदीनां धातूनां द्वित्वं वा भवति पूर्वस्यागागमश्चाप्रत्यये परे ।

( **पाटेर्णिलुक् चोक् च दीर्घश्च पूर्वस्य** ) पाटूपटः । हनः । पाटः । नन्दनः । वामनः । क्रमणः । दूषणः । साधनः । वर्धनः । शोभनः । रोचनः । रावणः । सहनः । तपनः । दमनः । जल्पनः । लवणः । णत्वं निपात्यम् । कोचनः । ( कुच शब्दे चुरादिः ) ॥ ( म्लेच्छ अव्यक्ते शब्दे ) । म्लेच्छनः । ग्राही । उत्साही । उद्भासी । स्थायी । छायी । पायी । मन्त्री । अयाची । अवादी । अपराधी ॥ १२ ॥

( सु० ) **पाटेर्णिलुक् चोक् दीर्घश्च पूर्वस्य** ॥ यद्यपि णेरित्यनेनैव णिलोपः सिद्धस्तथापि प्रत्ययलक्षणेनोपधाया वृद्धिर्मा भूदित्येवमर्थं लुकरणम् । पूर्वं णिलुक्-ततो द्वित्वम् । तत ऊगागमपूर्वदीर्घौ स्तः ॥ पाटयतीति पाटूपटः । इहापि ह्रस्वहसादिशेषयोरभावः ॥ पक्षे हन्तीति हनः ॥ णेरिति णिलोपः । पाटः ॥ युप्रत्ययमाह—युवोरित्यनादेशः । टुणदि समृद्धौ । नन्दयतीतिण । णेरिति णिलोपः । नन्दनः ॥ टुवम् उद्गिरणे । ग्लास्नावनुवमां चेति वैकल्पिकमित्त्वाभावे वामयतीति वामनः । दुष वैकृत्ये । दुषेर्णाविति दीर्घः । णेरिति णिलोपः । दूषयतीति दूषणः ॥ साध संसिद्धौ । साध्यति साधयतीति वा साधनः ॥ वृधु वृद्धौ । वर्धते इति वर्धनः ॥ शोभते इति शोभनः ॥ रोचते इति रोचनः ॥ रु शब्दे । रावयतीति । णेरिति णिलोपः । रावणः ॥ षह मर्षणे । सहते इति सहनः ॥ तप ऐश्वर्ये । दैवादिकः । तप्यते इति तपनः ॥ दाम्यतीति दमनः ॥ जल्पतीति जल्पनः ॥ लुनातीति लवणः । नन्द्यादिगणे निपातनाण्णत्वम् ॥ कुच शब्दे कोचनः ॥ म्लेच्छ अव्यक्ते शब्दे । म्लेच्छतीति म्लेच्छनः ॥ णिनिप्रत्ययमाह-प्रत्ययाद्यौ चवर्गटवर्गावितौ स्त इति णित्त्वादत उपधाया इति वृद्धिः । गृह्णातीति । इनामिति सौ दीर्घः । नाम्नो न इति नलोपः । ग्राही ॥ षह मर्षणे । उत्सहते इति उत्साही ॥ उद्भासते इति उद्भासी ॥ तिष्ठतीति । आतो युगिति युक् स्थायी ॥ छो छेदने । छ्यतीति छायी ॥ पिबतीति पायी ॥ मत्रि गुप्तभाषणे चुरादिः । मन्त्रयतीति णेरिति णिलोपः । मन्त्री ॥ टु याचृ याच्ञायाम् । न याचते इति ना इति । नञोऽदादेशः । अयाची ॥ न वदतीति अवादी ॥ राध संसिद्धौ । अपराध्यतीति अपराधी ॥ १२ ॥

( त० ) पाटेरिति ॥ यद्यपि णेरित्यनेनैव णिलोपः सिद्धस्तथापि प्रत्ययलक्षणेनोपधावृद्धिर्मा भूदित्येवमर्थं लुकरणम् ॥ **पाटूपट** इति ॥ पूर्ववद्धसादिशेषह्रस्वयोरभावः ॥ **नन्दन** इति ॥ नन्दयतीति विग्रहः । टुणदि समृद्धौ । युवोरित्यनः । दूषयतीति वाक्यम् । दुष वैकृत्ये । दुषेर्णाविति दीर्घः ॥ १२ ॥

**दृशादेः शः (क)** ॥ दृशपाघ्राध्माधेड्भ्यः शः ॥ १३ ॥

(सु०) **दृशादेः शः**। दृशपाघ्राध्माधेड्भ्यः शप्रत्ययो भवति। शप्रत्ययमाह-शस्येत्संज्ञा १३

( त० ) **दृशादेः** ॥ आदिपदग्राह्यानाह—दृशपाघ्रेत्यादि ॥ १३ ॥

**शिति चतुर्वत्** ॥ चतुर्षु तिबादिषु यत्कार्यमुक्तं तच्छिति परे भवति ॥

---

( क ) **दृशादेरिति** । दृश् आदिर्यस्य सः दृशादिः तस्य दृशादेः ।

पश्यः । पिबः । जिघ्रः । धमः । धयः । घ्रः संज्ञायां न । व्याघ्रः ॥ १४ ॥

( सु० ) **शिति चतुर्वत्** ॥ चतुर्ष्विवेति चतुर्वत् ॥ पश्यतीति । दृशादेरिति पश्यादेशः । अप् कर्त्तरीत्यप् । अदे इत्यलोपः । पश्यः ॥ पा पाने । पा रक्षणे । इत्ययं तु न गृह्यते लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायात् (क) । पिबतीति पिबः ॥ घ्रा गन्धोपादाने । जिघ्रतीति जिघ्रः । ध्मा शब्दाग्निसंयोगयोः धमतीति धमः ॥ धेट् पाने । धयतीति धयः ॥ घ्रः संज्ञायां न । संज्ञायां वाच्यायामस्माच्छो न । विशेषेण जिघ्रतीति । उपसर्गे आदन्तादिति कः । आतोऽनपीत्यालोपे व्याघ्रः ॥ १४ ॥

( त० ) **पश्य** इति ॥ पश्यतीति विग्रहः । चतुर्वत्करणादप्पश्यादेशौ ॥ एवमन्यत्रापि ॥ अत्र केचिदुपसर्गमनुवर्तयन्ति बहवः । श्रीहर्षोऽपि 'फलानि धूमस्य धयान्' इत्युदाहृतवान्(ख) **व्याघ्र** इति ॥ विशेषेण जिघ्रतीति व्याघ्रः उपसर्गे आदन्तादिति कः ॥ १४ ॥

**( अनुपसर्गेभ्यो लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यः शः )** लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सुखे । सातयः । साहयः ॥ १५ ॥

( सु० ) **अनुपसर्गेभ्यो लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यः शः** ॥ लिप उपदेहे ॥ विदॢ लाभे । तौदादिकाविमौ । भाविना मुमानिर्दिष्टौ । तेन लाभार्थस्यैव विदेर्ग्रहणं न तु सत्ताद्यर्थकस्य । लिम्पतीति । विन्दतीति । तुदादेरित्यः । अदेरित्यलोपः । लिम्पः । विन्दः । मुचादेरिति मुम् ॥ धृञ् धारणे । धृङ् अवस्थाने । ण्यन्तयोर्द्वयोरपि ग्रहणम् । धारयतीति धारयः ॥ पार कर्मसमाप्तौ । चुरादिः । पॄ पालनादौ इति ण्यन्तो वा । पारयतीति पारयः विद चेतनादिषु चुरादिः । ज्ञानाद्यर्थानामन्यतमो ण्यन्तो वा । वेदयतीति । वेदयः ॥ उत्पूर्वः एजृ कम्पने । ण्यन्तः । उदेजयतीति उदेजयः ॥ चित संचेतने चुरादिः । चेतयतीति चेतयः ॥ सातिः सुखे । सौत्रः । सातयतीति सातयः ॥ क्विप्प्रत्यये तु सात् परमात्मा । सात् विद्यते येषां ते सात्वन्तो भक्ताः ॥ षह मर्षणे चुरादिः प्रयोजकण्यन्तो वा ॥ साहयतीति साहयः ॥ अनुपसर्गेभ्यः इति किम् । प्रलिपः । नाम्युपधादिति कः ॥ १५ ॥

( त० ) **अनुपसर्गेभ्यः** ॥ लिप उपदेहे । विदॢ लाभे । समुम्निर्देशाल्लाभार्थादन्येषामग्रहणम् । धृञ् धारणे । धृङ् अवस्थाने । द्वयोरपि ण्यन्तयोर्ग्रहणम् ॥ पार कर्मसमाप्तौ । पॄ पालनपूरणयोरिति वा ण्यन्तः विद चेतनाख्याननिवासेषु । चुरादिण्यन्तः । ज्ञानाद्यर्थानामन्यतमो वा प्रेरणण्यन्तः । उत्पूर्व एजृ कम्पने ॥ षह मर्षणे चुरादिः । प्रेरणार्थण्यन्तो वा ॥ लिम्पविन्दोस्तुदादित्वादः । मुचादित्वान्मुम् । धारयादिष्वबादयो गणाय(?)दृशाः १५

---

( क ) अत्र लुग् विकरणं पा रक्षणे इति, अलुग्विकरणं पा पान इति । अतो पा पान इत्यस्य ग्रहणमिति भावः ।

( ख ) **उदाहृतवानिति** । श्लोकोयं नैषधीयचरितस्य प्रथमसर्गे ८२ संख्यकः । सो यथा—

विदर्भसुभ्रूस्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः ।
फलानि धूमस्य धयानधोमुखान् स दाडिमे दोहदधूपि निद्रुमे ॥

( **नौ लिम्पेः** ) निलिम्पा देवाः (क) ॥ १६ ॥

( सु० ) **नौ लिम्पेः** ॥ नौ पूर्वपदे शः निलिम्पतीति निलिम्पा देवाः ॥ १६ ॥

( **गवादिषु विन्देः संज्ञायाम्** ) गोविन्दः । अरविन्दम् ॥१७॥

( सु० ) **गवादिषु विन्देः संज्ञायाम्** ॥ कार्येऽण् इत्यस्यापवादोऽयम् । गां विन्दतीति गोविन्दः ॥ चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठान्यरा उच्यन्ते । अराकाराणि दलानि तत्सादृश्यादरास्तान् विन्दते लभत इत्यरविन्दम् ॥ १७ ॥

( त० ) **अरविन्दमिति** ॥ चक्रनाभिनेम्यन्तरालस्थितकाष्ठान्यरास्तदाकाराणि दलानि विन्दति प्राप्नोतीति विग्रहः ॥ १७ ॥

( **दाञ्धाञोर्वा** ) ददः । दधः ॥ १८ ॥

( सु० ) **दाञ्धाञोर्वा** ॥ अनुपसर्गाभ्यामाभ्यां वा शः ॥ ददातीति । दधातीति । ह्वादेरिति द्वित्वम् । शस्य ङित्त्वाद्दादेरित्यलोपः । ददः । दधः । पक्षे ज्वलादेरिति णः । आतो युगिति युक् । दायः । धायः ॥ अनुपसर्गे किम् । प्रदः । प्रधः । उपसर्गे इति कः । दद दाने । दध धारणे । एतयोरपि ददः दध इति ॥ १८ ॥

( **ज्वलादेर्णः** ) ज्वालः । चालः । तापः ॥ १९ ॥

( **श्यादेश्च** ) अवश्यायः । दायः । धायः ॥ २० ॥

( सु० ) **ज्वालादेर्णः** ॥ अनुपसर्गाज्ज्वलादेर्वा णः ॥ ण प्रत्ययमाह णकारो वृद्ध्यर्थः । ज्वलतीति ज्वालः । चलतीति चालः । तप संतापे । तपतीति तापः । पक्षे पचादेरित्यः । ज्वलः । चलः । तपः । उपसर्गे तु उज्ज्वलः ॥ २० ॥

( त० ) **ज्वलादेरिति** ॥ पान्थ इत्यादौ ज्वलादिपाठसामर्थ्यादवृद्धौ सत्यां नुम् । अणप्यत्रेति केचित् । 'प्रियाङ्गपान्थः कुचयोर्निपत्य इति श्रीहर्षोऽपि (ख) ॥ २० ॥

( **कार्येऽण्** ) कर्मण्युपपदे धातोरण् ॥ कुम्भकारः ॥ २१ ॥

( सु० ) **कार्येऽण्** ॥ अण्प्रत्ययमाह–णकारो वृद्ध्यर्थः । कुम्भं करोतीत्यत्रापि कृते कर्तृकार्ययोरिति षष्ठ्यन्तस्य कुम्भशब्दस्य नाम्नश्च कृतेति कारशब्देन समासः ॥ कुम्भस्य कारः कुम्भकारः । कथं तर्हि गङ्गाधरभूधरादय इति चेत् पदसंस्कारपक्षे धरतीति धरः गङ्गाया धरः गङ्गाधरः इति शेषे कृति वेति कर्मणि या षष्ठी तदन्तेन समासः ॥ २१ ॥

( त० ) **कुम्भकार इति** । कुम्भं करोतीति नित्यसमासार्थमस्वपदविग्रहः । इहापि कृते कर्तृकार्ययोरिति षष्ठ्यन्तेन कुम्भशब्देन कारशब्दस्य समासः । गङ्गाधर इत्यादौ अचि गङ्गाया धर इति विग्रहो बोध्यः ॥ २१ ॥

( **ह्वावामाभ्यश्च** ) स्वर्गह्वायः । तन्तुवायः । धान्यमायः ॥ २२ ॥

---

( क ) **निलिम्पा इति** । लिप उपदेहे तुदादिः मुचादित्वात् 'मुचादेर्मुम्' इति मुमागमः ।

( ख ) **श्रीहर्षोऽपीति** । तत्कृतः श्लोकोऽयं नैषधीयचरितस्य सप्तमसर्गे ६ संख्यकः । सो यथा—

प्रीयाङ्गपान्था कुचयोर्निवृत्य निवृत्य लोला नलदृग्भ्रमन्ती ।
बभौ तमां तन्मृगनाभिलेपन्तमः समासादितदिग्भ्रमेव ॥ इति ॥

अत्र—नित्यं पन्थानं गच्छतीति पान्थः 'पन्थो ण नित्यम्' इति णः । तत आप् ॥

( सु० ) ह्वावामाभ्यश्च ॥ कर्मण्युपपदे एभ्योऽप्यण् ॥ आतो ड इत्यस्यापवादः । स्वर्गं ह्वयतीति । सन्ध्यक्षराणामित्यात्वे आतो युक् । स्वर्गह्वायः ॥ वेञ् तन्तुसन्ताने । तन्तुं वयतीति तन्तुवायः ॥ माङ् माने । मेङ् प्रणिदाने । अनयोरिह ग्रहणं न तु मा माने इत्यस्याकर्मकत्वात् । धान्यं मिमीते इति धान्यमायः ॥ २२ ॥

( शीलकामिभक्ष्याचरिक्षमीक्षिभ्यो णः ) मांसशीला । मांसकामा । मांसभक्षा कल्याणाचारा बहुक्षमा सुखप्रतीक्षा ॥ २३ ॥

( सु० ) शीलकामिभक्ष्याचरिक्षमीक्षिभ्यो णः ॥ णप्रत्ययमाह-णो वृद्ध्यर्थः । शील समाधौ । मासं शीलतीति । आबतः स्त्रियामित्याप् । मांसशील ॥ मांसं कामयते इति । कमेर्णिङिति णिङ् । णेरिति णिलोपः । मांसकामा ॥ भक्ष अदने चुरादिः । मासं भक्षयतीति मांसभक्षा ॥ कल्याणमाचरतीति कल्याणाचारा ॥ क्षमूष् सहने । बहून् क्षमत इति बहुक्षमा ॥ ईक्ष दर्शनादौ । सुखं प्रतीक्षते इति सुखप्रतीक्षा ॥ २३ ॥

(आतो डः) कर्मण्युपपदे आदन्ताड्डः गोदः । धनदः । पार्ष्णित्रः ॥२४॥

( सु० ) आतो डः ॥ अनुपसर्गादित्येव ॥ डप्रत्ययमाह—अणोऽपवादः । डित्त्वाट्टिलोपः । गां ददातीति गोदः ॥ धनं ददातीति धनदः ॥ पार्ष्णि पश्चात्पदं त्रायते इति पार्ष्णित्रः ॥ अनुपसर्गे किम् । गोसंदायः । अण् युक् च ॥ २४ ॥

( त० ) आतो डः ॥ यद्यपि कप्रत्ययेनैवातोऽनपीत्यालोपे रूपसिद्धिस्तथाप्युत्तरार्थं डित्त्वम् तथा च द्विज इत्यादिसिद्धिः फलम् ॥ २४ ॥

( नाम्नि च ) नाम्युपपदे धातोर्डः ॥ द्विजः । द्विपः । गृहस्थः । गिरिशः । पादपः ॥ २५ ॥

( सु० ) नाम्नि च ॥ नाममात्र इत्यर्थः द्वाभ्यां मुखशुण्डाभ्यां पिबतीति द्विपः । गृहे तिष्ठतीति गृहस्थः ॥ गिरावुपपदे डः छन्दस्येव नान्यत्र भाष्याद्यनुक्तत्वात् । गिरौ शेत इति गिरिशः ॥ पादैः पिबतीति पादपः कथं तर्हि 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इति (क) । गिरिरस्यास्तीति गिरिशः । लोमादित्वाच्छः ॥ २५ ॥

( त० ) नाम्नि चेति ॥ नाममात्र इत्यर्थः ॥ द्विप इति ॥ द्वाभ्यां शुण्डादण्ड-मुखाभ्यां पिबतीति द्विपः ॥ द्विर्जायते इति द्विजः 'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्' । इत्युक्तेः ॥ २५ ॥

( शुचः शूद्रे ) शुचं द्रवतीति शूद्रः ॥ २६ ॥

( सु० ) शुचः शूद्रे ॥ शुचः शब्दस्य शूरादेशो द्रे परे चात् ॥ द्रुधातोर्डप्रत्ययः । द्रु गतौ । शुचं द्रवतीति शूद्रः ॥ २६ ॥

( त० ) शुचः शूद्रे ॥ शुचः शू इत्ययादेशः द्रे पर इत्यर्थः । शुचं द्विजसेवारूपं

( क ) इतीति । श्लोकोयं कुमारसम्भवकाव्यस्य । सो यथा—

अवचितवलिपुष्पा वेदिसन्मार्गदक्षा नियमविधिजलानां बर्हिषाञ्चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ इति ।

शिवस्य गिरिशत्वं कैलासवासित्वात् । अतो मत्वर्थीयशप्रत्ययः संगच्छते ॥

शोकं द्रवति प्राप्नोतीति शूद्रः ॥ २६ ॥

**( उरसो लोपो मुम्वा डान्ते गमौ )** उरगः—उरंगः ॥ २७ ॥

( सु० ) **उरसो लोपो मुम्वा डान्ते गमौ** ॥ उरस्शब्दस्य सस्य लोपः गमेर्डश्च वा मुमागमः ॥ उरसा गच्छतीति उरगः—उरंगः ॥ २७ ॥

( त० ) **उरसो लोप** इति ॥ सस्येत्यर्थः ॥ उरसा गच्छतीति विग्रहः ॥ २७ ॥

**(विहायसो विहो मुम्वा डान्ते गमौ)**(क)विहगः-विहंगः ॥२८॥

( त० ) **विहायसो विहो मुम्वा डान्ते गमौ** ॥ विहायस्शब्दस्य विह आदेशः गमेर्डश्च वा मुम् ॥ विहायसा आकाशेन गच्छतीति विहगः—विहंगः ॥ २८ ॥

**(भुजतुरयोर्मुम्वा)** डान्ते गमौ । भुजगः-भुजंगः । तुरगः-तुरंगः ॥२९॥

( सु० ) **भुजतुरयोर्मुम्वा** ॥ अनयोरुपपदयोर्गमेर्डः अनयोर्मुम् च वा ॥ भुजेन कौटिल्येन गच्छतीति भुजगः—भुजंगः ॥ तुरेण वेगेन गच्छतीति तुरगः—तुरंगः ॥ २९ ॥

( त० ) **भुजग** इति ॥ भुजेन कौटिल्येन गच्छतीति विग्रहः (ख) ॥ २९ ॥

**( संप्रसारणिभ्यो डः )** कापवादः ॥ प्रज्यः आह्वः । प्रह्वः ॥३०॥

( सु० ) **संप्रसारणिभ्यो डः** ॥ उपसर्गे आदन्तादित्यस्यापवादः । संप्रसारणं येषां धातूनामस्ति ते संप्रसारणिनस्तेभ्यो डः ॥ ज्या वयोहानौ । प्रजिनातीति प्रज्यः ॥ ह्वेञ् स्पर्द्धायाम् । आह्वयतीति आह्वः । प्रह्वः ॥ ३० ॥

( त० ) **संप्रसारणिभ्य** इति ॥ **कापवाद** इति ॥ के तु संप्रसारणं स्यादिति भावः ॥ **प्रज्य** इति ॥ प्रजानातीति विग्रहः ॥ ३० ॥

**(तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः कः)** तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता ॥ ३१ ॥

( सु० ) **तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः कः** ॥ तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः आलस्यसुखाहरणयोरर्थयोः । नुदोरिति पञ्चम्यर्थे षष्ठी ॥ पुनः कप्रत्ययमाह—कित्त्वान्न गुणः । मृजूष् शुद्धौ । तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । अत्र मृजेर्वृद्धिरिति वैकल्पिकी वृद्धिर्नेत्येके । स्यादेवेत्यन्ये ॥ णुद प्रेरणे । शोकमपनुदतीति शोकापनुदः सुखस्याहर्ता सुखाभिलाषी । अलसादन्यत्र तुन्दपरिमार्जः यश्च संसारासारत्वोपदेशेन शोकमनुपदति स शोकापनोदः । अणेव ॥ ३१ ॥

( त० ) **तुन्दशोकयोरिति** ॥ तुन्दशोकयोरुपपदयोः । परिपूर्वो मृजूष् शुद्धौ अपपूर्वो णुद प्रेरणे इत्यनयोः षष्ठी। पञ्चम्यर्थे षष्ठी । आलस्यसुखाहरणयोरर्थयोः ॥ **तुन्दपरिमृजोऽलस** इति ॥ य आलस्यात्तुन्दं परिमार्ष्टि स एवमुच्यते । मृजेर्वा वृद्धिरिति तु व्यवस्थितविभाषया न ॥ अलसादन्यत्र तुन्दपरिमार्ज एव ॥ **शोकापनुद** इति ॥ यस्तु संसारानित्यताद्युपदेशेन शोकमेवापनुदति स शोकापनोद एव ॥ ३१ ॥

---

( क ) **मुम्वेति** । मकारस्थाननियमार्थः ॥ उकार उच्चारणार्थः **विहङ्ग इति** । 'मोनुस्वारः' 'यमायपेऽस्यः,, विहङ्गः पक्षी ॥

( ख ) **विग्रह इति** । भुजं वक्रं यथा तथेति क्रियाविशेषणपूर्वको विग्रह इति केचित् ॥

( मूलविभुजादेः कः ) मूलानि विभुजतीति मूलविभुजो रथः । कुध्रः । महीध्रः । गिरः—गिलः ॥ ३२ ॥

( सु० ) मूलविभुजादेः कः ॥ मूलानि विभुजातीति । भुजोऽकौटिल्ये मूलविभुजः ॥ धृञ् धारणे । महीं धरतीति महीध्रः पर्वतः । कुं धरतीति कुध्रः । गॄ निगरणे । गिलतीति ऋत इरितीर् । गिरतेः स्वरे इति वा लः गिलः ।। ३२ ।।

( त० ) मूलविभुजादेरिति ।। मूलविभुज इत्यादे रूपस्य सिद्धये को वक्तव्य इति व्याख्येयम् ।। ३२ ।।

( गष्टक् ) सामगः । सामगी स्त्री ॥ ३३ ॥

( सु० ) गष्टक् ॥ कर्मण्युपपदेऽनुपसर्गाद्गायतेष्टक् । 'टक्प्रत्ययमाह—टष्ट्ञित इति ईवर्थः । गै शब्दे । न तु गाङ् गतौ गा स्तुतावित्यनयोर्ग्रहणमनभिधानात् । साम गायतीति । आतोऽनपीत्यालोपः । सामगः । स्त्री सामगी ।। अनुपसर्गे किम् । सामसंगायः । अण् युक् च ।। ३३ ।।

( त० ) गष्टगिति ।। गै शब्दे इत्यस्यैव ग्रहणं न तु गाङ् गतौ गा स्तुतावित्यनयोः अनभिधानात् । सामगीति ष्टिड्ढत इतीप् ।। ३३ ॥

( पिबतेः सुराशीध्वोः ) सुरापी । शीधुपी ॥ ३४ ॥

( सु० ) पिबतेः सुराशीध्वोः ॥ सुराशीध्वोरुपपदयोः पिबतेष्टक् ।। सुरां पिबतीति सुरापी ।। शीधु मद्यं पिबतीति शीधुपी । अन्यत्र उ एव । क्षीरपा ब्राह्मणी ।। ३४ ।।

( त० ) सुरापीति ।। सुरां पिबतीति विग्रहः । अन्यत्र क्षीरपा सुरां पातीति सुरापा ।। ३४ ।।

( अटौ ) नाम्नि कार्ये च अकारटकारौ प्रत्ययौ ।। अस्थिहरः श्वा । कवचहरः कुमारः । धनुर्धरो युवा । कुरुचरः । पुरःसरः । अग्रेसरः । पार्श्वशयः पृष्ठशयः । शक्तिग्रहः । पूजार्हा । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । यशस्करी विद्या । श्राद्धकरः (क) । वचनकरः । कर्मकरः । दिवाकरः । निशाकरः ॥ ३५ ॥

( सु० ) अटौ ॥ नाम्नि कार्ये च अकारटकारौ प्रत्ययौ भवतः ॥ अप्रत्ययमाह—अस्थि हरतीति अस्थिहरः । कवचं हरतीति कवचहरः ॥ धनुर्धरतीति धनुर्धरः ॥ पार्श्वाभ्यां शेते इति पार्श्वशयः ॥ पृष्ठेन शेते इति पृष्ठशयः॥ शक्तिं गृह्णातीति शक्तिग्रहः ॥ अर्ह पूजायाम् । पूजामर्हतीति पूजार्हा ब्राह्मणी ॥ स्तम्बे रमते इति सप्तम्या अलुक् । स्तम्बेरमः ॥ कर्णे जपतीति सप्तम्या अलुक् । कर्णेजपः सूचकः पिशुनः । टप्रत्ययमाह—ट ईवर्थः । कुरुषु देशेषु चरतीति कुरुचरः । स्त्री कुरुचरी ॥ पुरः सरतीति पुरःसरः । अग्रे सरतीति । एदन्तत्वं निपात्यते अग्रेसरः ॥ हेतुताच्छील्यानुलोम्येषु कृञष्टः । हेतौ यशः करोतीति यश-

---

( क ) श्राद्धकर इति । देशे काले च पात्रे च श्रद्धया विधिना च यत् । पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ।

स्करी । सहादित्वात्सः । ताच्छील्ये श्राद्धं करोतीति श्राद्धकरः । आनुलोम्ये वचनं करोतीति वचनकरः । एषु किम् । कुम्भकारः अणेव । कर्मशब्दपूर्वात् कृञो वेतने टः । कर्म करोतीति कर्मकरो भृतकः । अन्यः कर्मकारः अणेव । दिवाऽव्ययं दिवसवाची ॥ दिवा करोतीति दिवाकरः ३९

( त० ) **अटौ** ॥ अश्च टश्च अटौ । कर्मत्वविशेषविवक्षायामपि यथा स्यादित्येवमर्थं कार्यस्यानुवर्तनम् । अन्यथा कार्ये अणेव स्यात् ॥ **अस्थिहर** इति ॥ अस्थि हरतीति विग्रहः ॥ **कुरुचरीति** ॥ टित्वाद्दीप् ॥ ३९ ॥

( **इखखि** ) नाम्नि कार्ये च ॥ शकृत्करिः । स्तम्बकरिः । फलानि गृह्णातीति फलेग्रहिः । फलस्यैदन्तत्वं निपातनात् । दृतिहरिः । नाथहरिः । देवापिः । वातापिः ॥ ३६ ॥

( सु० ) **इखखि** ॥ स्तम्बशकृत्पूर्वात्कृञ इर्व्रीहिवत्सयोरर्थयोः ॥ इप्रत्ययमाह—स्तम्बं करोतीति स्तम्बकरिर्व्रीहिः । शकृत्पुरीषं करोतीति शकृत्करिर्वत्सः ॥ अनयोः किम् । स्तम्बकारः, शकृत्कारः, अणेव ॥ फलानि गृह्णातीति । एदन्तत्वं निपात्यते । फलेग्रहिः ॥ दृतिनाथपूर्वाद्धरतेरिः पशौ कर्तरि । दृतिश्चर्ममयी खल्ला इति ख्याता । तां हरतीति दृतिहरिः पशुः ॥ नाथं नासारज्जुं हरतीति नाथहरिः ॥ पशौ किम् । दृतिहारः । नाथहारः । अणेव ॥ आप्लृ व्याप्तौ । देवान् आप्नोतीति देवापिः ॥ वातान् आप्नोतीति वातापिः ॥ ३६ ॥

( त० ) **इखखि** ॥ इश्च खश्च खिश्च एतेषां समाहारः इखखि ॥ ३६ ॥

( **खिति पदस्य** ) खिति परेऽनव्ययपूर्वपदस्य मुम् ॥ सर्वंकषः । कूलंकषः । करीषंकषः ॥ ३७ ॥

( सु० ) **खिति पदस्य** ॥ खिदन्ते परेऽनव्ययस्य पूर्वपदस्य मुम् । खप्रत्ययमाह—खित्वान्मुम् । सर्वकूलाभ्रकरीषपूर्वात्कषः खः ॥ कष हिंसायाम् । सर्वं कषतीति सर्वंकषः खलः । कूलं कषतीति कूलंकषा नदी । अभ्रं कषतीति अभ्रंकषो वायुः । 'करीषं गोमयं शुष्कम्' इत्यमरः ॥ करीषं कषतीति करीषंकषा वात्या ॥ ३७ ॥

( त० ) **खिति** ॥ ख् इत् यस्य खित् तस्मिन् ॥ ३७ ॥

( **वाचंयमादयो निपात्याः** ) वाचंयमः । पुरंदरः । द्विषंतपः । परंतपः । कुक्षिंभरिः(क) । उदरंभरिः आत्मंभरिः ॥ ३८ ॥

( सु० ) **वाचंयमादयो निपात्याः** ॥ वाक्पूर्वाद्यमेः खो व्रतेऽर्थे ॥ यमु उपरमे वाचं यच्छतीति वाक्पूर्वस्यादन्तत्वं निपात्यते । वाचंयमो मौनव्रती ॥ व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः । अणेव ॥ दृ विदारणे । पुरं दृणातीति पुरंदरः ॥ दृ भये दृङ् आदरे एतयोर्ग्रहणं न संप्रदायात् । द्विषत्परपूर्वात्तापेः खः । द्विषन्तं परं वा तापयतीति । णेरिति णिलोपः । उपधाह्रस्वत्वं निपात्यते। मुमि कृते संयोगान्तस्येति तलोपः।

---

( क ) **कुक्षिंभरिरिति** । एवं च—

गिरिस्तु कनकाचलः कति न सन्ति चाश्मव्रजाः किटिस्तु धरणीधरः कति न सन्ति भूदारकाः ।
मरुत्तु मलयानिलः कति न सन्ति झञ्झानिलाः प्रभुस्तु विबुधाश्रयः कति न सन्ति कुक्षिंभराः॥इति केषांचित्प्रयोगः प्रामादिक एवेति **तत्त्वबोधिनी** ॥

द्विषंतपः ।। परंतपः ॥ खिप्रत्ययमाह—आत्मोदरकुक्षिषु भृञः खिः । आत्मानं बिभर्तीति मुमि कृते संयोगान्तस्येति नलोपः । आत्मंभरिः । कुक्षिमुदरं वा बिभर्तीति कुक्षिंभरिः ॥ उदरंभरिः ।। ३८ ।।

( **आशिते भुवो भावकरणयोः खः** ) आशितेन भूयते आशितंभवः । आशितो भवत्यनेनेति वा ॥ ३९ ॥

( सु ) **आशिते भुवो भावकरणयोः खः** ॥ पुनः खप्रत्ययमाह ।। आशितशब्दे उपपदे भवतेः खः भावे करणे च ॥ यावतौदनेनातिथ्यादिर्भोजितो भवति स आदेन आशितंभवः उच्यते ।। ३९ ।।

( त० ) **आशितंभव इति** ॥ यावता ओदनेनातिथ्यादिर्भोजितो भवत्याशितंभवः स एवमुच्यते ।। ३९ ।।

**एजां खश्** ॥ जनानेजयतीति जनमेजयः । आत्मानं पण्डितं मन्यते इति पण्डितंमन्यः । मुञ्जं धयतीति मुञ्जंधयः । कूलंधयः ।। ४० ।।

( सु० ) **एजां खश्** ॥ एजादिभ्यः खश् । खश्प्रत्ययमाह–खित्वान्मुम् शित्वाच्चतुर्वत्कार्यम् ।। एजृ कम्पने । जनमेजयतीति । अप् कर्तरीत्यप् । अट इत्यलोपः । जनमेजयः ।। पण्डितमात्मानं मन्यते इति । दिवादेरिति यः । पण्डितंमन्यः । णिनि प्रत्यये पण्डितमानी । मुञ्जं धयतीति । अयादेशेन धेटो धय् । मुञ्जंधयः (क) ।। ४० ।।

( त० ) **एजामिति** बहुवचनमाद्यर्थम् ।। ४० ।।

( **खशन्ते पूर्वपदस्यानव्ययस्य ह्रस्वः** ) मुष्टिं धयतीति मुष्टिंधयः । नाडिंधमः । नासिकंधयः । अनव्ययस्य किम् । दिवामन्या रात्रिः । दोषामन्यमहः । कूलमुद्रुजः । कूलमुद्वहः । अरुंतुदः ।। ४१ ।।

( सु० ) **खशन्ते पूर्वपदस्यानव्ययस्य ह्रस्वः** ॥ मुष्टीं धयतीति मुष्टिंधयः । मुष्टीं धमतीति मुष्टिंधमः । नाडीं धमतीति नाडिंधमः । नासिकां धयतीति नासिकंधयः । नाडिमुष्टीनासिकानां ह्रस्वः । दशादेरिति ध्माधातोर्धम् । धेटोऽयादेशः ॥ अनव्ययस्य किम् । दिवामन्या रात्रिः । दोषामन्यमहः । रुजो भङ्गे । कूलमुद्रुजतीति कूलमुद्रुजः । तुदादेरित्यः । कूलमुद्वहतीति कूलमुद्वहः । अरुस्तुदतीति अरुंतुदः । मुमि कृते संयोगान्तस्येति सलोपः । 'व्रणोऽस्त्रियामीर्ममरुः' इति 'अरुंतुदस्तु मर्मस्पृक्' इति चामरः ॥ ४१ ॥

( त० ) **अरुंतुद इति** ॥ 'व्रणोऽस्त्रियामीर्ममरुः' अरुः तुदतीति विग्रहः । उकारात् मुमि कृते संयोगान्तस्येति सलोपः ॥ ४१ ॥

( **दारावाहनोऽणन्तस्य च टः संज्ञायाम्** ) हनो घत् । उवम् । दारु आहन्तीति दार्वाघाटः ॥ ४२ ॥

( सु० ) **दारावाहनोऽणन्तस्य च टः संज्ञायाम्** ॥ दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् अन्तस्य तस्य टश्च स्यात् ॥ पुनरण्प्रत्ययमाह—णित्वाद्वृद्धिः । दारु

---

( क ) **मुञ्जंधय इति** । मुञ्जस्तृणविशेषः ।

आहन्तीति । हनो घदिति घत् । उवमिति वः । दार्वाघाटः । सूत्रे शब्दापेक्षया दारावि-ति पुंस्त्वम् । काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥ टकारविधानार्थमिदं सूत्रम् । अण् तु कार्येऽणित्यनेनैव सिद्धः । अन्तग्रहण स्पष्टार्थम् ॥ ४२ ॥

( **चारौ वा** ) चार्वाघाटः—चार्वाघातः ॥ ४३ ॥

( सु० ) **चारौ वा** ॥ चारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् , वा टः ॥ चारु आह-न्तीति चार्वाघाटः—चार्वाघातः ॥ ४३ ॥

( **कर्मणि संपूर्वाच्च** ) वर्णान् संहन्तीति वर्णसंघाटः—वर्णसंघातः पदं संहन्तीति पदसंघाटः—पदसंघातः ॥ ४४ ॥

( सु० ) **कर्मणि सम्पूर्वाच्च** । कर्मण्युपपदे संपूर्वाद्धन्तेरण् , वा टः ॥ वर्णान् संह-न्तीति वर्णसंघाटः—वर्णसंघातः एवं पदानि संहन्तीति पदसंघाटः—पदसंघातः ॥ ४४ ॥

( **जायापत्योष्टक् लक्षणवति कर्तरि** गमां स्वरे । हनो घ्ने याया हन्तीति जायाघ्नो ना । पतिघ्नी स्त्री ॥ ४५ ॥

( सु० ) **जायापत्योष्टक् लक्षणवति कर्तरि** ॥ हन्तष्टक् । टकप्रत्ययमाह—टि-त्त्वात् 'ष्टिवतः' इतीप् । मरणसूचकं पाणिरेखादिकं लक्षणं यस्यास्ति स लक्षणवान् तस्मि-न्कर्तरि सति । जायां हन्तीति । 'गमां स्वरे' इत्युपधालोपः । 'हनो घ्ने' इति घः । जा-याघ्नो ना । पतिघ्नी स्त्री ॥ ४५ ॥

( त० ) **जायापत्योरिति** ॥ कथं प्रलम्बघ्नः, कृतघ्नः, शत्रुघ्नः इत्यादि । मूलवि-भुजादित्वात् को बोध्यः ॥ ४५ ॥

( **अमनुष्यकर्तृके च** ) पतिघ्नी पाणिरेखा । जायाघ्नस्तिल-कालकः (क) ॥ ४६ ॥

( सु० ) **अमनुष्यकर्तृके च** ॥ कर्मण्युपपदे हन्तेष्टक् मनुष्यभिन्ने कर्तरि सति ॥ जायाघ्नस्तिलकालकः । पित्तघ्नं घृतम् अमनुष्येति किम् । आखुघातः शूद्रः । अणेव कथं तर्हि 'बलभद्रः प्रलम्बघ्नः इति, शत्रुघ्नः कृतघ्नः इति च । मूलविभुजादित्वात्कः ॥४६॥

( **पाणिघताडघौ शिल्पिनि निपात्यौ** ) पाणिघः । ताडघः । शिल्पिनि किम् । पाणिघातः । तडघातः ॥ ४७ ॥

( सु० ) **पाणिघताडघौ शिल्पिनि निपात्यौ** ॥ पाणताडयोरुपपदयोर्हन्तेष्टक् टिलोपघत्वे च निपात्येते । पाणिं हन्तीति पाणिघः । ताडं हन्तीति ताडघः क्रियासु कौशल्यं शिल्पं तदस्यास्तीति शिल्पी ॥ शिल्पिनि किम् । पाणिघातः । ताडघातः । कार्येऽणित्याण् ॥ ४७ ॥

(त०) **शिल्पिनीति** ॥ क्रियासु कौशल्यं शिल्पं तदस्यास्तीति शिल्पी तस्मिन् ४७

( **राजघश्च** ) राजानं हन्तीति राजघः ॥ ४८ ॥

---

( क ) **अमनुष्यकर्तृके चेति**। यद्यपि अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह, तथापि लक्षानु-रोधेन व्याख्यातव्यमित्याशयेनाह—**तिलकालकेति** ।

(सु०) **राजघश्च** ॥ राज्ञि हन्तेष्टक् टिलोपघत्वे च। राजानं हन्तीति राजघः ॥४८॥

(**भजां विण् वेः**) लोपः। अर्द्धभाक्। सुखभाक्। तुराषाट्। भारवाट् ॥ ४९ ॥

(सु०) **भजां विण्** ॥ नाम्न्युपपदे भजादेर्विण् ॥ विण्प्रत्ययमाह—णित्वा-द्वृद्धिः। वेरिति विलोपः अर्द्धं भजतीति अर्द्धभाक्। चोः कुरिति कः ॥ सुखं भजतीति सुखभाक् ॥ षह मर्षणे। तुरां सहते इति सहेः षः, साढेति षत्वम्। तुराषाट्। केचित्तु-रशब्दमदन्तमाहुः। तन्मतेऽन्येषामपीति पूर्वपदस्य दीर्घः ॥ ४९ ॥

(त०) **भजामिति** ॥ बहुवचनमाद्यर्थम् ॥ **तुराषाडिति** ॥ तुरं वेगं सहते इति विग्रहः। अन्येषामपीति अन्त्यस्वरस्य दीर्घः। सहादित्वाद्वा। तुरं न सहत इति कश्चि-त्। तद्बहूनामसंमतम् ॥ ४९ ॥

(**अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः**) च्वौ दीर्घः। ई चास्य ॥ च्वौ परेऽवर्णस्य ई ॥ इदुतोर्दीर्घः। मिथुनीकरणम्। शुक्लीभावः। शुचीभवति। सहायीस्यात्। हेतूकृतम् ॥ ५० ॥

(सु०) **अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः**। नाम्नश्च्विप्रत्ययः। न प्राग् भूतमभूतम्, अभूतस्य तेन भवनमभूततद्भावस्तस्मिन्नर्थे कृ भू अस् एषां धातूनाम-न्वये सति। च्विप्रत्ययमाह-च्वौ दीर्घ ई चास्य ॥ च्वौ परे अवर्णस्य ईकारः। इदुतोश्च दीर्घः ॥ च्वाविति विशेषणार्थं। वेरिति विलोपः। क्त्वाद्यन्तं चेति च्व्यन्तस्याव्ययत्वा-द्विभक्तेर्लुक्। अमिथुनं मिथुनं क्रियत इति मिथुनीकरणम्। अशुक्लस्य शुक्लेन भवनमिति शुक्लीभावः। असहायः सहायः स्यादिति सहायीस्यात्। अहेतुना हेतुना कृतमिति हेतू-कृतम् ॥ कृभ्वस्तियोगे इति किम्। अशुक्लः शुक्लो जायते ॥ ५० ॥

(**च्वौ सलोपः**) सुमनीभावः। अरूकरोति। चक्षूकरोति। सुचे-तीभावः। रहीभवति। विरजी करोति ॥ ५१ ॥

(सु०) **च्वौ स लोपः** ॥ अरुर्मनश्चक्षुश्चेतोरहोरजसां सस्य लोपः च्विप्रत्यये ॥ असुमनसा सुमनसा भवनमिति सुमनीभावः। अनरुररुः करोतीति अरूकरोति। अचक्षुश्च-क्षुः करोतीति चक्षूकरोति। असुचेताः सुचेता भवतीति सुचेतीभवति। अरहो रहो भव-तीति रहीभवति। अविरजो विरजः करोतीति विरजीकरोति ॥ ५१ ॥

(**क्वचिड्डा**) सुखं करोतीति सुखाकरोति दुःखाकरोति। शम्बाकरो-ति। द्विगुणाकरोति ॥ बीजाकरोति ॥ ५२ ॥

(सु०) **क्वचिड्डा** ॥ नाम्नो डाप्रत्ययः कृञो योगे ॥ दुःखात्प्रातिलोम्येडाः ॥ डाप्रत्ययमाह-डित्वाट्टिलोपः। क्त्वाद्यन्तं चेति डाप्रत्ययान्तस्याव्ययत्वाद्विभक्तेः लुक् दुःखाकरोति। स्वामिनं पीडयतीत्यर्थः ॥ सुखप्रियाभ्यामानुलोम्ये डा। सुखाकरोति प्रियाकरोति वा गुरुम्। अनुकूलाचरणेनानन्दयतीत्यर्थः ॥ शम्बाद्विगुणबीजेभ्यो डा कृषि-वाच्ये। शम्बाकरोति। शम्बशब्दः प्रतिलोमेऽर्थेऽस्ति। अनुलोमं कृष्टं क्षेत्रं पुनः प्रति-

लोमं कर्षतीत्यर्थः। क्षेत्रं द्विगुणाकरोति। क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः। बीजाकरोति। काशिकायां बीजशब्दो बीजवापनसहितविलेखने वर्तते। बीजवापनसहितं विलेखनं करोतीत्यर्थः इत्युक्तम् ॥ ९२ ॥

( त० ) दुःखाकरोतीति ॥ पीडयतीत्यर्थः ॥ **सुखाकरोति** ॥ अनुकूलाचरणेनानन्दयतीत्यर्थः ॥ **शम्बाकरोति** ॥ अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः ॥ **द्विगुणाकरोति** ॥ क्षेत्रकर्मकं द्विगुणं करोतीत्यर्थः ॥ **बीजाकरोति** ॥ बीजेन सह विलेखनं करोतीत्यर्थः ॥ ९२ ॥

( **अव्ययस्य च्वावीत्वं न**) (क)दोषाभूतमहः। दिवाभूता रात्रिः। हसात्तद्धितयस्य लोपो ये च्वौ च। अगार्ग्यो गार्ग्यो भवति गार्गी भवति ॥५३॥

( सु० ) **अव्ययस्य च्वावीत्वं न** ॥ पुनश्च्विप्रत्ययमाह-अदोषा दोषाभूतमिति दोषाभूतमहो दिनम्। अदिवा दिवाभूतेति दिवाभूता रात्रिः। 'न्यायनणेयणणीयाः' इति ण्यः। गार्ग्यः। आगार्ग्या गार्ग्यो भवति। हसात्तद्धितयस्येति। यलोपे च्वावितीत्वे च गार्गीभवति ॥ ९३ ॥

( **रीङ् ऋतः** ) मात्रीकरोति ॥ ५४ ॥

( सु० ) **रीङ् ऋतः** ॥ ऋकारस्य रीङ् स्यात् च्वौ ॥ अमातरं मातरं करोतीति मात्रीकरोति ॥ ९४ ॥

( **च्विविषये साद्वा** ) ॥ ५५ ॥

( सु० ) **च्विविषये साद्वा** ॥ नाम्नोऽभूततद्भावे एव सात्प्रत्ययो वा स्यात्साकल्येऽर्थे॥ सात्प्रत्ययमाह-सात्प्रत्ययस्याव्ययत्वाद्विभक्तेर्लुक् ॥ ९९ ॥

(**सात्पदाद्योः**) सस्य षत्वं न ॥ अग्निसाद्भवति। अग्नीभवति ॥५६॥

( सु० ) **सात्पदाद्योः** ॥ सात्प्रत्ययस्य पदादौ वर्तमानस्य च सस्य षत्वं न ॥ दधि सिञ्चति। क्विलादिति षत्वे प्राप्ते निषेधः। अनग्निरग्निर्भवतीति अग्निसाद्भवति। कृत्स्नं सर्वावयवोपेतं शस्त्रमग्नीभवतीत्यर्थः। सादभावपक्षे च्विरेव। साकल्ये किम्। एकदेशेन शुक्लीभवति पटः ॥ ९६ ॥

( **संपदा योगे च** ) जलसात्संपद्यते ॥ ५७ ॥

( सु० ) **संपदा योगे च** ॥ नाम्नः संपद्धातुयोगे सात्प्रत्ययो वा भवति। अजलं जलं संपद्यते इति जलसात्संपद्यते लवणम्। पक्षे संपदा योगे वाक्यमेव ॥ ९७ ॥

( **अधीने च** ) राजसात्संपद्यते ॥ ५८ ॥

( सु० ) **अधीने च** ॥ नाम्नस्तदधीनेऽर्थे सात् स्यात् कृभ्वस्तिसंपद्योगे॥ राजाधीनं संपद्यते। इति। नाम्नो नो लोपशिति नलोपः। राजसात्संपद्यते। राजाधीनं करोतीति राजसात्करोति ॥ ९८ ॥

( **देये त्रा च** ) विप्राधीनं देयं करोति विप्रत्राकरोति। विप्रत्रासं-

( क ) 'च्वौ दीर्घः, ई चास्य' अनेन ई प्राप्तौ वारयति—अव्ययस्येत्यादि।

पद्यते । विप्रसात्करोति ॥ ५९ ॥

( सु० ) देये त्रा च ॥ नाम्नस्तदधीने देयेऽर्थे त्राप्रत्ययः स्यात् चात्सादपि कृभ्वस्तिसंपद्योगे ।। त्राप्रत्ययमाह-अव्ययत्वाद्विभक्तेर्लुक् । विप्राधीनं देयं करोतीति विप्रत्राकरोति । विप्राधीनं देयं संपद्यते इति विप्रत्रासंपद्यते ।। देये किम् । राजसाद्भवति राष्ट्रम् ५९

**( देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यन्तेभ्यो वा त्रा )** देवत्रावन्दे । देवं बन्दे ॥ ६० ॥

( सु० ) देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यन्तेभ्यो वा त्रा ॥ द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्चैभ्यस्त्रा वा स्यात् ।। देवान् इति देवत्रा वन्दे । देवेषु इति देवत्रारमे (क) । मनुष्यान् इति मनुष्यत्रा गच्छति । मनुष्येषु इति मनुष्यत्रा वसति । पुरुषान् इति पुरुषत्रा गच्छति । पुरुषेषु इति पुरुषत्रा वसति । पुरून् इति । पुरुशब्दोऽत्र बहुशब्दपर्यायः । "पुरुः परागे प्रचुरे स्वर्लोकनृपभेदयोः ।।" इति हैमः। पुरुत्रा गच्छति। पुरुषु इति पुरुत्रा वसति । मर्त्यान् इति मर्त्यत्रा गच्छति । मर्त्येषु इति मर्त्यत्रा वसति६०

**( ख्युट् करणे )** आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेषूपपदेषु कृञः करणेऽर्थे ख्युट्प्रत्ययः ॥ अनाढ्यमाढ्यं करोत्यनेनाढ्यंकरणम् । सुभगंकरणम् । स्थूलंकरणं दधि । पलितंकरणम् । नग्नंकरणं द्यूतम् । अन्धंकरणम् । प्रियंकरणम् ॥ ६१ ॥

( सु० ) ख्युट् करणे ॥ ख्युट्प्रत्ययमाह—खः खिति पदस्येति मुमर्थः । ट ईवर्थः । युवोरित्यनः । आढ्यंकरणम् । एवं सुभगंकरणम् । स्थूलंकरणम् । पलितंकरणम् । नग्नंकरणम् । अन्धंकरणम् । प्रियंकरणम् ।। ६१ ।।

( त० ) च्व्यर्थेष्विति ।। अभूततद्भावविषयेष्वित्यर्थः । आढ्यंकरणमिति ।। खित्त्वान्मुम् ।। ६१ ।।

**( भुवः खिष्णुखुकञौ कर्तरि )** (ख) अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः । आढ्यम्भावुकः ॥ ६२ ॥

( सु० ) भुवः खिष्णुखुकञौ कर्तरि ॥ आढ्यादिषु च्व्यर्थेपूपपदेषु भवतेरेतौ स्तः ।। खिष्णुप्रत्ययमाह—खित्त्वान्मुम् । आढ्यंभविष्णुः एवं सुभगंभविष्णुः स्थूलंभविष्णुः । पलितंभविष्णुः । नग्नंभविष्णुः । अन्धंभविष्णुः । प्रियंभविष्णुः खुकञ्प्रत्ययमाह खित्त्वान्मुम्—ञित्वाद्वृद्धिः । अनाढ्य आढ्यो भवतीति आढ्यंभावुकः । एवं सुभगंभावुकः । स्थूलंभावुकः । पलितंभावुकः । अन्धंभावुकः । प्रियंभावुकः ।।६२।।

**( आतो मनिष्क्वनिब्वनिपः )** नाम्न्युपपदे आदन्ताद्धातोरेते प्रत्ययाः स्युः ॥ सुदामा । अश्वे तिष्ठतीति अश्वत्थामा । निपातात्सस्य तः ॥६३॥

---

( क ) सप्तम्यन्तेभ्यः त्राप्रत्ययमुदाहरति–देवत्रा रमे इति ॥ एवमन्यत्रापि ॥

( ख ) भुव इति ॥ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेषूपपदेषु भुवः कर्त्तर्यर्थे खिष्णुखुकञौ स्त इत्यर्थः ।

( सु० ) **वृञ एण्यः** ॥ एण्यप्रत्ययमाह—वृञ् वरणे । वरेण्यः श्रेष्ठः ॥ १६४ ॥

**( अर्तेरन्यः )** अरण्यम् ॥ १६५ ॥

**( पृषेश्च षस्य जः )** पृषु सेचने पर्जन्यः ॥ १६६ ॥

( सु० ) **अर्तेरन्यः** ॥ अन्यप्रत्ययमाह-ऋ गतौ । अरण्यम् । 'अटव्यरण्यं विपिनम्' इत्यमरः ॥ पृषु सेचने । षस्य जः अन्यश्च स्यात् । पर्जन्यः । पर्जन्यो मेघशब्दोऽपि ध्वनदम्बुदशक्रयोः' इति मेदिनी ॥ १६५-१६६ ॥

( त० ) **पर्जन्य** इति ॥ 'पर्जन्यः शक्रमेघयोः' ॥ १६६ ॥

**( वदेरान्यः )** वदान्यः ॥ १६७ ॥

( सु० ) **वदेरान्यः** ॥ अन्यप्रत्ययमाह-वद व्यक्तायां वाचि । वदान्यः । 'वदान्यस्त्यागिवाग्मिनोः' इत्यजयकोशः ॥ १६७ ॥

( त० ) वदेरिति ॥ 'वदान्यस्त्यागिवाग्मिनोः' ॥ १६७ ॥

**( अमादेरत्रः )** अमत्रम् । नक्षत्रम् । पतत्रम् । कलत्रम् । वरत्रा ॥ १६८ ॥

( सु० ) **अमादेरत्रः** ॥ अत्रप्रत्ययमाह—अम गत्यादौ । अमत्रं भाजनम् ॥ नक्ष गतौ । नक्षत्रम् । नञः प्रकृतिभावे नक्षत्रमिति साधितं तत्तु व्युत्पत्त्यन्तरम् ॥ पत्लृ पतने । पतत्र तनूरुहम् ॥ गड सेचने । गडेरादेश्च कः । कडत्रम् । डलयोरेकत्वस्मरणात् कलत्रम् । 'कलत्रं श्रोणिभार्ययोः' वृञ् वरणे । वरत्रा । 'नध्री वध्री वरत्रा स्यात्' इत्यमरः ॥ चर्ममयी रज्जुरित्यर्थः ॥ १६८ ॥

(त०) **अमादेरिति** ॥ अमत्रं भाजनम् । पतत्रं तनूरुहम् ॥ वरत्रा चर्ममयी रज्जुः १६८

**( भृदेरतः )** भरतः । पर्व पूरणे । पर्वतः ॥ १६९ ॥

( सु० ) **भृादेरतः** ॥ अतप्रत्ययमाह-भृञ् भरणे । 'भरतः । 'भरतः शबरे नटे । क्षेत्रे रामानुजे शास्त्रे दौष्यन्तावृषभात्मजे । तन्तुवाये' इति हेमचन्द्रः ॥ 'भरतो ना नाट्यशास्त्रे शबरे च मुनौ नटे । रामानुजे च दौष्यन्तौ' इति मेदिनी ॥ पर्व पूरणे । पर्वतः । 'पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले' इति मेदिनी ॥ १६९ ॥

**( पृषिरञ्जिभ्यां कित् )** पृषतः । रजतम् ॥ १७० ॥

( सु० ) **पृषिरञ्जिभ्यां कित्** ॥ कतप्रत्ययमाह—कित्त्वान्न गुणः । पृषु सेचने । पृषतः । "पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेप्युभाविमौ" इति मेदिनी ॥ रञ्ज रागे । नो लोप इति नलोपः । रजतम् । 'रजतं त्रिषु शुक्ले स्यात्क्लीबे हारे सुवर्णके' इति मेदिनी ॥ १७० ॥

( त० ) **पृषि** ॥ 'पृषतो बिन्दुमृगयोः' ॥ १७० ॥

**(शपादेरथः)** शपथः । शमथः । दमथः । वस आवसथः । संवसथः १७१

( सु० ) **शपादेरथः** ॥ अथप्रत्ययमाह—शप आक्रोशे । शपथः । शमु दमु उपशमे । शमथः । 'दमथः । 'शमथः शान्तिमन्त्रिणोः' इति मेदिनी ॥ दमथस्तु पुमान्दण्डे दमे च परिकीर्तितः' इति मेदिनी । 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः' इत्यमरः ॥ वस निवासे । आवसथो गृहम् । संवसथो ग्रामः ॥ १७१ ॥

( त० ) शपादेरिति ॥ 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ॥ १७१ ॥

( रभादेरसः ) रभसः ॥ १७२ ॥

(सु०) रभादेरसः । असप्रत्ययमाह—रभ राभस्ये । रभसः । 'रभसो वेगहर्षयोः१७२

( वेञ आत्वाभावस्तुट् च ) वेतसः ॥ १७३ ॥

( सु० ) वेञ आत्वाभावस्तुट् च ॥ वेञ् तन्तुसन्ताने अस्मादसप्रत्यये परे आत्वाभावः प्रत्ययस्य तुडागमश्च स्यात् ॥ वेतसः ॥ १७३ ॥

( दिवेः कित् ) दिवु दिवसः ॥ १७४ ॥

( सु० ) दिवेः कित् । कसप्रत्ययमाह—कित्त्वान्न गुणः । दिवु क्रीडादौ । दिवसः । 'वा तु क्लीबे दिवसवासरौ' इत्यमरः ॥ १७४ ॥

( कादेरभः ) कॄ करभः । शॄ शरभः । शल गतौ । शलभः । कल गतौ । कलभः । गर्द शब्दे । गर्दभः ॥ १७५ ॥

( सु० ) कादेरभः ॥ अभप्रत्ययमाह–कॄ विक्षेपे । करभः । 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी ॥ 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः ॥ शॄ हिंसायाम् । शरभः । 'शरभस्तु पशोर्भिदि' करभो वानरभिदि' इति च मेदिनी ॥ शल गतौ । शलभः । 'समौ पतङ्गशलभौ' इत्यमरः ॥ कल गतौ । कलभः । 'कलभः करिपोतके' गर्द शब्दे । गर्दभः । "गर्दभः श्वेतकुमुदे गर्दभो गन्धभिद्यपि । रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः" इति मेदिनी ॥ १७५ ॥

( ऋषिवृषिभ्यां कित् ) (क) ऋषभः । वृषभः ॥ १७६ ॥

( सु० )ऋषिवृषिभ्यां कित् ॥ कभप्रत्ययमाह—कित्त्वान्न गुणः । ऋषी गतौ । ऋषभः "ऋषभःस्यादादिजिने वृषभे भेषजे स्वरे । कर्णरन्ध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरे स्थितः ॥ ऋषभी शूकशिम्ब्यां स्यात्पुरुषाकारयोषिति । विधवायां शिरालायाम्" इति हेमचन्द्रः ॥ "ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्र गर्दभपुच्छयोः । उत्तरस्थः स्मृतः श्रेष्ठे स्त्रीनकारयोषिति । शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता" इति मेदिनी ॥ वृषु सेचने । वृषभः । "वृषभः श्रेष्ठवृषयोः" ॥ १७६ ॥

(रासवल्लिभ्यां च) (ख) रासृ शब्दे । रासभः । वल्ल संवरणे । वल्लभः ॥

( सु० ) रासवल्लिभ्यां च ॥ अभः स्यात् ॥ रासृ शब्दे । राशभः ॥ वल्ल संवरणे । वल्लभः । 'वल्लभो दयितेऽध्यक्षे सलक्षणतुरङ्गमे' इति मेदिनी ॥ १७७ ॥

( विशादेरन्तः ) वेशन्तः । वसन्तः । जयन्तः ॥ १७८ ॥

( सु० ) विशादेरन्तः ॥ अन्तप्रत्ययमाह—विश प्रवेशने । वेशन्तः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः ॥ वस निवासे । वसन्तः ऋतुः ॥ जि जये । जयन्तः । 'जयन्तः पाकशासनिः' इत्यमरः ॥ १७८ ॥

---

( क ) ऋषिवृषिभ्यामिति । आभ्यामिभः प्रत्ययः स्यात् स च कित् ।

( ख ) चेति । चकारात् 'अभप्रत्ययो भवति ।

( त० ) विशादेरिति ॥ वेशन्तः पल्लवम् ॥ जयन्तः शक्रपुत्रः ॥ १७८ ॥

( हन्तेर्हिमुट् च ) हेमन्तः ॥ १७९ ॥

( सु० ) हन्तेर्हिमुट् च ॥ हन हिंसागत्योः । अस्य हिरादेशोऽन्तप्रत्ययः प्रत्ययस्य मुडागमश्च स्यात् ॥ हेमन्तः ॥ बाहुलकादन्येभ्योऽप्यन्तः । अर्ह पूजायाम् । अर्हन्तः । 'अर्हन्तः क्षपणको जिनः' इति विक्रमादित्यकोशः ॥ १७९ ॥

( अर्त्यादेररः ) अररम् । (क) भ्रमरः । चमरः । देवरः । वस निवासे । वासरः ॥ १८० ॥

( सु० ) अर्त्यादेररः ॥ अरप्रत्ययमाह—ऋ गतौ । अररम् । 'अररं छदकपाटयोः' इति मेदिनी ॥ 'कपाटमररं तुल्ये' इत्यमरः ॥ भ्रमु अनवस्थाने । भ्रमरः । 'भ्रमरः कार्मुके भृङ्गे' इति मेदिनी ॥ चमु अदने । चमरः । 'चमरं चामर स्त्री तु मञ्जरीमृगभेदयोः' इति मेदिनी ॥ दिवु क्रीडादौ । ण्यन्तः । देवयतीति देवरः । पत्युः कनिष्ठभ्राता ॥ वस निवासे । ण्यन्तः । वासयतीति वासरो दिवसः ॥ १८० ॥

( त० ) अर्त्यादेरिति ॥ अररं कपाटम् ॥ १८० ॥

( कुवः क्रिद्रुट् च ) (ख) कुररः ॥ १८१ ॥

( सु० ) कुवः क्रिद्रुट् च ॥ करप्रत्ययमाह—कित्त्वान्न गुणः । कु शब्दे । कुररः । 'उत्क्रोशकुररौ समौ' इत्यमरः ॥ १८१ ॥

( अङ्गयादेरारः ) अङ्गारः । मन्दारः ॥ १८२ ॥

( सु० ) अङ्गयादेरारः ॥ आरप्रत्ययमाह-अगि गतौ अङ्गारः । 'अङ्गारमुल्मुके न स्त्री पुँल्लिङ्गस्तु महीसुते' इति मेदिनी ॥ मदि स्तुत्यादौ । मन्दारः । बाहुलकादारुप्रत्ययोऽपि । मन्दारुः । 'पारिभद्रे तु मन्दारुर्मन्दारः पारिजातके' इति शब्दार्णवः ॥ 'मन्दारुः स्यात्सुरद्रुमे । पारिभद्रेऽर्कपर्णे च' इति विश्वः ॥ १८२ ॥

( गडेः कड च ) गड आसेचने । कडारः ॥ १८३ ॥

( सु० ) गडेः कड च ॥ गडि वदनैकदेशे । गड सेचने वा । अस्य कडादेश आरप्रत्ययश्च स्यात् ॥ 'कडारः कपिलः पिङ्गः' इत्यमरः ॥ 'कडारः कपिले दासे' इति मेदिनी १८३

( शृङ्गारादयः ) शृङ्गारः । भृङ्गारः । मृजूष् मार्जारः । कमु कुमारः तुषारः । कासारः ॥ १८४ ॥

( सु० ) शृङ्गारादयः ॥ आरप्रत्ययान्ता निपात्यन्ते ॥ शॄ हिंसायाम् । नुम् नुक् ह्रस्वश्च निपात्यते । शृङ्गारः । 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने । नपुंसकं लवङ्गेऽपि नागसंभवचूर्णयोः' इति मेदिनी । भृञ् भरणे । नुम् गुक् च निपात्यते । भृङ्गारः । 'भृङ्गारः कनकालुका' 'भृङ्गारी झिल्लिकायां स्यात्कनकालौ पुनः पुमान्' इति च ॥ मृजूष् शुद्धौ । मृजेर्वृद्धिरिति वृद्धिः । मार्जारः । 'ओतुर्बिडालो मार्जारः' इत्यमरः ॥

---

( क ) अर्त्तेररप्रत्यये धातोर्गुणे चाररमिति ।

( ख ) कुव इति । कुधातोररप्रत्ययः स्यात् स च कित् तस्य रुडागमश्च ।

'मार्जार ओतौ खट्वाङ्गे' इति मेदिनी ॥ कमु कान्तौ । उपधाया उत्वं गुणाभावश्च निपातनात् । कुमारः । 'कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणाद्रौ ना न द्वयोर्जात्यकाञ्चने । कुमारी शैलतनयावनकाल्योर्नदीभिदि । सहाऽपराजिताकन्याजम्बूद्वीपेषु च स्त्रियाम्' इति मेदिनी ॥ तुष तुष्टौ । तुषारः । 'तुषारस्तुहिनं हिमम्' इत्यमरः ॥ कासृ शब्दकुत्सायाम् । कासारः । 'कासारः सरसी सरः' इत्यमरः ।। १८४ ।।

( त० ) भृङ्गारः इति । 'भृङ्गारः कनकालुका ।।' १८४ ।।

**( सर्तेरपः षुक् च )** सर्षपः ॥ १८५ ॥

( सु० ) **सर्तेरपः षुक् च** ॥ सृ गतौ अस्मादपप्रत्ययः स्याद्धातोः षुगागमश्च ॥ अपप्रत्ययमाह—सर्षपः ।। १८५ ।।

**( विटपादयः )** विट् शब्दे । विटपः । विष्टपम् । कुणपम् । वल संवरणे । उलपम् ॥ १८६ ॥

( सु० ) **विटपादयः** ॥ कपप्रत्ययान्ता निपात्यन्ते—कित्त्वान्न गुणः । विट् शब्दे । विटपः । 'विटपो न स्त्रियां स्तम्बे शाखाविस्तारपल्लवे । विटाधिपे ना' इति मेदिनी । विश प्रवेशने । विशतेः प्रत्ययस्य तुडागमो निपात्यते । छशषेति षत्वम् । ष्टुत्वम् । विष्टपम् । 'विष्टपं भुवनं जगत्' इत्यमरः ।। कण शब्दे । वस्योत्वं निपातनात् । कुणपम् । 'कुणपः पूतिगन्धे शवेऽपि च' इति मेदिनी ।। 'कुणपः शवमस्त्रियाम्' इत्यमरः ।। वल संवरणे । वस्योत्वं निपातनात् । उलपम् । 'उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी ।। १८६ ।।

( त० ) उलप इति ।। कोमलं तृणम् ।। १८६ ।।

**( वृतादेस्तिकः )** वर्त्तिका (क) ॥ १८७ ॥

( सु० ) **वृतादेस्तिकः** ॥ तिकप्रत्ययमाह-वृतु वर्तने । वर्त्तिका ।। १८७ ।।

**( कृतः कित् )** कृत्तिका (ख) ॥ १८८ ॥

( सु० ) **कृतः कित्** ॥ कृती छेदने इत्यादिभ्यस्तिकक स्यात् ।। कित्त्वान्न गुणः । कृत्तिका ।। भिदिर् विदारणे । भित्तिका भित्तिः । लतु सौत्रो धातुः । लत्तिका गोधा ॥१८८॥

**( इष्यशिभ्यां तकः )** इष्टका । अष्टका (ग) ॥ १८९ ॥

( सु० ) **इष्यशिभ्यां तकः** ॥ तकप्रत्ययमाह—इषु इच्छायाम् । ष्टुत्वम् । इष्टका ॥ अशूङ् व्याप्तौ । छशषेति षत्वम् । अष्टका ॥ १८९ ॥

**( वीपतिभ्यां तकः )** वेतनम् । पत्तनम् ॥ १९० ॥

( सु० ) **वीपतिभ्यां तकः** ॥ तनप्रत्ययमाह-वी गत्यादौ । वेतनम् ॥ पत्लृ पतने । पत्तनम् । 'पत्तनं पुटभेदनम्' इत्यमरः ॥ १९० ॥

**( अर्त्यादेर्भः )** अर्भः । दृ । दर्भः । गर्भः ॥ १९१ ॥

---

( क ) **वर्तिकेति** । स्त्रीलिङ्गत्वादाप्, वतीति भाषा । ( ख ) **कृत्तिकेति** । ताराविशेषः ।
( ग ) 'अष्टका श्राद्धे, अश्नन्ति ब्राह्मणा यस्यां साष्टका । अष्टौ परिमाणमस्य इत्यष्टिका ।

( सु० ) **अर्त्यादेर्भः** ॥ भप्रत्ययमाह—ऋ गतौ । इयर्तीति अर्भः शिशुः । कप्रत्यये अर्भकः ॥ दॄ विदारणे । दर्भः गॄ निगरणे । गर्भः । 'गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके' इति मेदिनी ॥ १९१ ॥

( **इणः कित्** ) इभः ॥ १९२ ॥

( सु० ) **इणः कित्** ॥ भक् स्यात् ॥ कित्त्वान्न गुणः । इण गतौ । इभः । 'इभः स्तम्बेरमः पद्मी' इत्यमरः ॥ १९२ ॥

( **असिसञ्जिभ्यां क्थिः** ) अस्थि । सक्थि ॥ १९३ ॥

( सु० ) **असिसञ्जिभ्यां क्थिः** ॥ क्थिप्रत्ययमाह—कित्त्वान्नस्य लोपः । असु क्षेपणे । अस्थि । 'कीकसं कुल्यमस्थि च' इत्यमरः ॥ षञ्ज सङ्गे । चोः कुरिति जस्य गः । 'खसे चपा' इति कः । 'नो लोप' इति नलोपः । सक्थि । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः ॥ १९३ ॥

(**शुषादेः क्सिः**) शुक्षिः । कुष निष्कर्षे । कुक्षिः । अशू अक्षि ॥१९४॥

( सु० ) **शुषादेः क्सिः** ॥ क्सिप्रत्ययमाह—कित्त्वान्न गुणः । शुष शोषणे । षढोरिति कः । पत्वम् । शुक्षिः वातः ॥ कुष दाहे । कुक्षिः ॥ अशूङ् व्याप्तौ । छशषेति पत्वं कत्वं च अक्षि नयनम् ॥ १९४ ॥

( त० ) शुक्षिरिति ॥ शुक्षिर्वातः ॥ १९४ ॥

( **इषः क्सुः** ) इक्षुः ॥ १९५ ॥

( सु० ) **इषः क्सुः** ॥ क्सुप्रत्ययमाह—कित्त्वान्न गुणः । इषु इच्छायाम् । कत्वे पत्वे इक्षुः । 'रसाल इक्षुः' इत्यमरः ॥ १९५ ॥

(**अवितॄस्तॄतन्त्रिभ्य ईः**) अवीः । तरीः । स्तरीर्धूमः । तन्त्रीः १९६

( सु० ) **अवितॄस्तॄतन्त्रिभ्य ईः** ॥ ईप्रत्ययमाह—अव रक्षणादौ । अवीः । 'अवीर्नारी रजस्वला ॥ तॄ प्लवनतरणयोः । तरीः । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ॥ स्तॄञ् आच्छादने । स्तरीधूमः ।। तन्त्रि कुटुम्बधारणे चुरादिः । तन्त्रयतीति । णेरिति णिलोपः । तन्त्रीर्वीणा ॥ १९६ ॥

( त० ) अवीरिति ॥ अवति गर्भमवीः । अवी स्त्री गर्भिणीं विदुः ॥ तरीर्नौः ।। 'स्तरीः शयनं धूम' इति च ।। १९६ ।।

( **लक्षेर्मुट् च** ) लक्ष्मीः ॥ १९७ ॥ इति तृतीयः पादः ॥

( सु० ) **लक्षेर्मुट् च** ॥ लक्ष दर्शनाङ्कनयोः चुरादिः अस्मादीप्रत्ययः स्यात्प्रत्ययस्य मुडागमश्च ।। णेरिति णिलोपः । लक्ष्मीः । 'लक्ष्मीः संपत्तिशोभयोः । ऋद्ध्योपधौ च पंद्मायाम्' इति मेदिनी । दीर्घादपि कृदिकारादिति पाक्षिक ङीप् कैश्चिदिष्यते । अत एव वातप्रमीश्रीलक्ष्मीत्यादिशब्दा पक्षे ईबन्ता अपि । 'आशीराश्यहिर्दंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशः ।। १९७ ।।

इति सुबोधिन्यामुणादौ तृतीयः पादः ।।

---

( **वातप्रम्यादयः** ) वातप्रमीः । (क) यान्त्यनेनेति ययीः । पा रक्षणे । पपी ॥ १९८ ॥

( सु० ) **वातप्रम्यादयः** ॥ कीप्रत्ययान्ता निपात्यन्ते । कस्येत्संज्ञा । माङ् माने । आतोऽनपीत्यालोपः । वातं प्रमिमीते इति वातप्रमीः । 'वातप्रमीर्वातमृगः' इत्यमरः ॥ अयं स्त्रीपुंसयोः ॥ या प्रापणे । ययीरश्वः ॥ पा रक्षणे पपीः । निपातनादुभयत्र द्वित्वम् 'पपीः स्यात्सोमसूर्ययोः' इति विश्वः ॥ १९८ ॥

( त० ) **वातेति** ॥ ययीरश्वः ॥ 'पपीः स्यात्सोमसूर्ययोः' ॥१९८॥

( **रत्न्यादयः** ) ऋ रत्निः । अञ्जू अञ्जलिः । मदी मत्स्यः । अत अतिथिः । अगि अङ्गुलिः । कौतेः कवचः । यु यवासः । कृश कृशानुः ॥ १९९ ॥

( सु० ) **रत्न्यादय इति** ॥ रत्न्यादयो निपात्यन्ते–ऋअञ्जूमदीअतअगिकुयुकृशिभ्योऽष्टभ्यः कत्नि अलि स्य इथि उलि अच आश आनुक् प्रत्यया यथासंख्यमष्टौ भवन्ति । ऋ गतौ, कत्निः । कित्वान्न गुणः, रत्वम्, रत्निः । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः' अरत्निरत्र नञ्समासः । प्रसृताङ्गुलिर्यो हस्तः सोऽरत्निरित्यर्थः ॥ अञ्जू व्यक्त्यादौ कलिः । अञ्जलिः । 'अञ्जलिस्तु पुमान्हस्तः संपुटे कुडवेऽपि च' इति मेदिनी ॥ मदी हर्षे । स्वः मत्स्यः । 'मत्स्यो मीनेऽथ पुम्भूम्नि देशे' इति मेदिनी ॥ अत सातत्यगमने इथिः । अतिथिः । 'अतिथिः कुशपत्रे स्यात्पुमानागन्तुके त्रिपु' इति मेदिनी ॥ अगि गतौ । उलिः । अङ्गुलिः । 'अङ्गुलिः करशाखायां कर्णिकायां गजस्य च' इति हैमः ॥ कु शब्दे । अचः । कवचः । 'कवचो गर्दभाण्डे च सन्नाहे पर्पटेऽपि च' इति मेदिनी ॥ यु मिश्रणे । आसः । यवासः । 'यासो यवासो दुःस्पर्शः' इत्यमरः ॥ कृश तनूकरणे । आनुक् । कृशानुः । 'कृशानुः पावकोऽनलः' इत्यमरः ॥ १९९ ॥

( त० ) **रत्न्यादयः** इति ॥ ऋ इत्यस्य रत्निरिति । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः' ॥ १९९ ॥

( **शॄः करः** ) शर्कराः ॥ २०० ॥

( सु० ) **शॄः करः** ॥ करप्रत्ययमाह—ककारस्य नेत्वं बाहुलकात् ॥ शॄ हिंसायाम् । शर्करा । 'शर्करा खण्डविकृतावुपलाशर्करांशयोः' । 'शर्करान्वितदेशे च रुग्भेदे सकलेऽपि च' इति मेदिनी ॥ २०० ॥

( **पुषः कित्** ) पुष्करः ॥ २०१ ॥

( सु० ) **पुषः कित्** ॥ करक्प्रत्ययमाह—पुष पुष्टौ । पुष्करम् । "पुष्करं खेऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधौ द्वीपतीर्थभेदयोश्च नपुंसकम् । ना रागनागविहगनृपभेदेषु चाम्बुदे" इति मेदिनी ॥ २०१ ॥

( **गमेरिनिर्भविष्यति** ) गमिष्यतीति गमी (ख) ॥ २०२ ॥

---

( क ) **वातप्रमीरिति** । वातशब्दोपपदे प्रपूर्वान्माधातोरीप्रत्ययः, निपातनात् स च कित् । सूत्रे आदिग्रहणाद् पपीरादेर्निपातनाद्द्वित्वम् । ( ख ) **'आङिणित्'** । आगमी । **'भुवश्च'** । भावी । कुत्रचिदयं पाठो विशेषो दृश्यते । सुबोधिन्यामपि व्याख्यातः ।

( सु० ) **गमेरिनिर्भविष्यति** ॥ इकार उच्चारणार्थः । इनिप्रत्ययमाह-गम्लृ गतौ इनामिति दीर्घः । गमी । आङ्पूर्वाद्गमेरिनिप्रत्ययस्तु णित् । णित्वाद् वृद्धिः । आगमिष्यतीति आगामी । सत्तायामस्मादपि इनिः स च णित्स्यात् । भविष्यतीति भावी ॥२०२॥

**( परमे स्थः कित )** परमेष्ठी (क) ॥ २०३ ॥

( सु० ) **परमे स्थः कित्** ॥ परमशब्दे उपपदे तिष्ठतेरिनिः कित्स्यात् ॥ कित्वादातोऽनपीत्यालोपः । परमेष्ठी । 'परमेष्ठी पितामहः' इत्यमरः । सप्तम्या अलुक् ॥ २०३ ॥

**( मन्थ इनिः कित् )** मन्थाः, मन्थानौ ॥ २०४ ॥

( सु० ) **मन्थ इनिः कित्** ॥ मन्थ विलोडने अस्मादिनिः कित् । नो लोप इति नलोपः । इतोऽत्पञ्चसु इत्यत्वम् । आ सौ इति टेरात्वे थो नुट् । मन्थाः । मन्था मन्थनदण्डे च वज्रे चापेऽपि च स्मृतः ॥ २०४ ॥

**( पतेस्थश्च )** पन्थाः, पन्थानौ ॥ २०५ ॥

( सु० ) **पतेस्थश्च** ॥ पत्लृ गतौ अस्मादिनिः स्यात्तकारस्य थश्च । पन्थाः ॥ पथे गतावित्यस्मात्पचाद्यप्रत्ययेऽकारान्तोऽप्यस्ति । बाटः पथश्च मार्गश्च' इति सुभूतिचन्द्रः ॥ ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे बाहुलकात् डप्रत्यये ऋभुक्षः । 'ऋभुक्षः स्वर्गवज्रयोः' इति विश्वः । ततो मत्वर्थीय इन् , ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । अत्वे आत्वे च ऋभुक्षा इन्द्रः ॥ २०५ ॥

**( बलाकादयः )** बलाका । पताका । खज मन्थे । खजाकः । पिनाकः । पिण्याकः तड अघाते । तडाकः ॥ २०६ ॥

( सु० ) **बलाकादयः** ॥ आकप्रत्ययान्ता निपात्यन्ते–बल प्राणने बलाका । "बलाका बकपंक्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः" इति विश्वः । पत्लृ पतने । पताका । 'पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः ॥ 'पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः' इति मेदिनी ॥ खज मन्थे । खजाकः पक्षी ॥ पा रक्षणे । पातेरित्वं नुम् च निपात्यते । पिनाकः 'क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः' इत्यमरः॥ 'पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः इति मेदिनी ॥ पिष्लृ संचूर्णने । पस्य णत्वं यतार्यगागमश्च निपात्यते । पिण्याकः । 'पिण्याकोऽस्त्रीतिलकल्के हिङ्गुबाह्लीकसिह्के, इति मेदिनी ॥ तड आघाते । तडाकः ॥ २०६ ॥

( त० ) **पिनाक इत** ॥ क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः ॥ २०६ ॥

**( दूषेरीकः )** दूषिका ॥ २०७ ॥

( सु० ) **दूषेरीकः** ॥ ईकप्रत्ययमाह—दुष वैकृत्ये ण्यन्तः । दुषेर्णाविति दीर्घः । णेरिति णिलोपः । दूषीका 'दूषीका नेत्रयोर्मलम्' इत्यमरः ॥ किं च अकृतेऽपि ईकप्रत्यये दूषयतेर्धातोरिरिति इप्रत्यये दूषिः । कृदिकारादिति वेपि दूषी । उभाभ्यामपि स्वार्थे कप्रत्यये ह्रस्वो वेति पाक्षिके ह्रस्वे च कृते दूषिका दूषीका च सिद्ध्यति । 'पिचण्डी दूषिका दूषी पिचाटश्च दृशोर्मलम्' इति विक्रमादित्यकोशः ॥ 'दूषिका तूलिकायां च मले

---

( क ) **परमेष्ठीति** । परमे ब्रह्मणि तिष्ठतीति विग्रहः । सप्तम्या अलुक् ।

स्याल्लोचनस्य च' इति मेदिनी ॥ २०७ ॥

( त० ) दूषेरिति ॥ 'दूषीका नेत्रयोर्मलम्' ॥ २०७ ॥

**( अनिहृषिभ्यां किच्च )**(क) अनीकम् । हृषीकम् ॥ २०८ ॥

( त० ) **अनिहृषिभ्यां किच्च** ॥ कीकप्रत्ययः स्यात् ॥ कित्त्वान्न गुणः । अन प्राणने । अनीकम् । 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनी ॥ हृष तुष्टौ । हृषीकम् । 'हृषीकं विषयीन्द्रियम्' इत्यमरः ॥ २०८ ॥

**( अलीकादयः )** अल भूषणादौ । अलीकम् । वलीकम् । पुण कर्मणि शुभे । पुण्डरीकम् । ईष—इषीका ॥ २०९ ॥

( सु० ) **अलीकादयः** ॥ कीकप्रत्ययान्ता निपात्यन्ते । अल भूषणादौ । अलीकम् । अलीकं त्वप्रियेऽपि स्याद्दिव्येऽसत्ये नपुंसकम्' इति मेदिनी ॥ 'अलीकमप्रिये लाभे वितथे' इति हेमचन्द्रः ॥ विपूर्वात् 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने । ना नागरे' इति मेदिनी ॥ वल संवरणे । वलीकम् । 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः ॥ वलेर्निपातनान्मुमागमे कृते वल्मीकम् । 'वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्' इत्यमरः ॥ पुण कर्मणि शुभे । धातोर्नुमागमो णस्य डश्च प्रत्ययस्यारुडागमश्च निपातनात् । पुण्डरीकम् । "पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च" इति मेदिनी ॥ ईष गतौ । निपातनाद्ध्रस्वः । इषीका शलाका ॥ २०९ ॥

( त० ) **अलीकादयः** इति ॥ अलीकं मिथ्या । 'वलीकं पटलप्रान्ते ॥ २०९ ॥

**( कादेरीषः )** करीषम् । तॄ तरीषः ॥ २१० ॥

( सु० ) **कादेरीषः** ॥ ईषप्रत्ययमाह—कॄ विक्षेपे । करीषम् । 'करीषं गोमयं शुष्कम्' इत्यमरः ॥ तॄ प्लवनतरणयोः । तरीषः । तरीषा ॥ २१० ॥

( त० ) **कादेरिति** । 'करीषोऽस्त्री पशुशुष्कगोमययोः ॥ २१० ॥

**( आदेः कीषः )** शॄ शिरीषः । पॄ पुरीषम् ॥ २११ ॥

( सु० ) **आदेः कीषः** ॥ शॄ हिंसायाम् । ऋरितीर् । शिरीषो वृक्षः ॥ पॄ पालनपूरणयोः । पोरुरित्युर् पुरीषम् । 'गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्' इत्यमरः २११

**( अर्जेर्ऋजः )** ऋजीषम् । अबि शब्दे । अम्बरीषो निपात्यः । अम्बरीषम् ॥ २१२ ॥

( सु० ) **अर्जेर्ऋजः** ॥ अर्ज अर्जने । अस्मात्कीषः स्याद्धातोर्ऋजादेशश्च ॥ ऋजीषम् । 'ऋजीषं पिष्टपचनम्' इत्यमरः । अबि शब्दे । निपातनादीषप्रत्ययः प्रत्ययस्यारुडागमश्च । अम्बरीषः । "अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुपाते च" इति मेदिनी ॥ 'अम्बरीषः पुमान्भ्राष्ट्रे' क्लीबे पुंसि नृपान्तरे' इति बोपालितः ॥ 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः ॥ २१२ ॥

( त० ) **अम्बरीष** इति ॥ 'अम्बरीषः पुमान्भ्राष्टे क्लीबेऽपि' ॥ २१२ ॥

( क ) **अनिहृषिभ्यामिति** ॥ अनप्राणने' हृषतुष्टौ' आभ्यामीकप्रत्ययः स्यात् । स च कित् ।

**( कादेरीरः )** करीरः । शृ शरीरम् (क) ॥ २१३ ॥

( सु० ) **कादेरीरः** ॥ ईरप्रत्ययमाह—कृ विक्षेपे । करीरः । "वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् । करीरा चीरिकायां च दन्तमूले च दन्तिनाम्" इति मेदिनी ।। शृ हिंसायाम् । शीर्यते इति शरीरम् । अर्द्धर्चादिः । 'शरीरं वर्ष्म विग्रहः' इत्यमरः ॥२१३॥

( त० ) **कादेरिति** ।। करीरो वंशाङ्कुरः ॥ २१३ ॥

**(गभीरादयः)** गम्लृ गभीरः-गम्भीरः । वश उशीरम् । घस्लृ क्षीरम्॥

( सु० ) **गभीरादयः** ॥ ईरप्रत्ययान्ता निपात्यन्ते ।। गम्लृ गतौ । मस्य भः पाक्षिको नुम् च निपातनात् । गभीरम्-गम्भीरम् । 'निम्नं गभीरं गम्भीरम्' इत्यमरः ।। वश कान्तौ । निपातनात्किरिप्रत्ययः । ग्रहामिति संप्रसारणम् । उशीरम् । 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम्' इत्यमरः ।। घस्लृ अदने । कीरप्रत्ययो निपातनात् । गमामित्युपधालोपे कत्वं षत्वम् । क्षीरम् । 'क्षीरं च दुग्धे नीरे च' इति विश्वः ॥२१४॥

**( शीङो धुक्लक्वलञ्वालपालाः )** शीधुः । शीलम् । शेवलः । शैवलः । शेवालम् । शेपालम् ॥ २१५ ॥

( सु० ) **शीङो धुक्लक्वलञ्वालपालाः** ॥ शीङ् स्वप्ने अस्मात्षट् प्रत्यया भवन्ति ।। शेरतेऽनेनेति शीधुः । अर्द्धर्चादिः । "मैरेयमासवः शीधुः" इत्यमरः ॥ लक् शीलम् । 'शीलं स्वभावे सद्वृत्ते' इति मेदिनी ।। वलः । शेवलम् । वलञ् । शैवलम् । 'जलनीली तु शेवालं शैवलः' इत्यमरः । 'शैवलं पद्मकाष्ठे स्याच्छैवाले तु पुमानयम्' इति मेदिनी ।, वाल । शेवालम् ।। पाल । शेपालम् । शैवालं शैवलो न स्त्री शेपालो जलनीलिका' इति शब्दार्णवः ।। २१५ ।।

( त० ) **शीधुरिति** ।। मद्यम् । 'शैवालं शैवलो न स्त्री शेपालो जलनीलिका' ।।२१५।।

**( उलूकादयः )** उलूकः । शमु शम्बूकः । शल शालूकः । मडि भूषायाम् । मण्डूकः (ख) ॥ २१६ ॥

( सु० ) **उलूकादयः** ॥ ऊकप्रत्ययान्ता निपात्यन्ते–वल संवरणे । संप्रसारणं निपातनात् । उलूकः । 'उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि' इति मेदिनी ।। शमु उपशमे । धातोर्बुगागमो निपातनात् । शम्बूकः । 'शम्बूको गजकुम्भान्ते घोषे स्याच्छूद्रतापसे' इति मेदिनी ।। बाहुलकादुकप्रत्ययोऽपि । शम्बुकम् । 'जम्बूकं जम्बुकं प्रोक्तं शम्बूकमपि शम्बुकम्' इति द्विरूपकोशः ।। 'शम्बूका जलशुक्तयः' इत्यमरः ।। शल गतौ । निपातनाद् वृद्धिः । शालूकम् । 'सौगन्धिकं तु कह्लारम्' इत्याद्युपक्रम्य 'शालूकमेषां कन्दः स्यात्' इत्यमरः ।। एषां सौगन्धिकादीनां कुमुदकैरवान्तानां कन्दो मूलं शालूकमित्यर्थः ।। मडि भूषायाम् ।। मण्डते वर्षासमयमिति मण्डूकः भेकः ।। २१६ ।।

( त० ) **उलूकादय इति** ॥ 'उलूकाविन्द्रमेचकौ' शम्बूको जलशुक्तिः । शालूकं कन्दविशेषः ।। २१६ ।।

---

( क ) कृ शृ धातोरीरप्रत्यये गुणे च करीरः, शरीरमिति ॥करीर इति वांशकर्णाति नाम भाषायाम्।

( ख ) मण्डयति जलाशयं मण्डनेवा मण्डूकः । 'मण्डूको भेकशोणयोः' इति हैमः ।

( **नियो मिः** ) नेमिः (क) ॥ २१७ ॥

( सु० ) **नियो मिः** ॥ मिप्रत्ययमाह—णीञ् प्रापणे । नयति चक्रमिति नेमिः । 'नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्' इति मेदिनी ।। २१७ ।।

( **अर्तेरूच्च** ) ऊर्मिः ॥ २१८ ॥

( सु० ) **अर्तेरूच्च** ॥ मिप्रत्ययः स्याद्धातोरूरादेशश्च ।। ऋ गतौ । ऊर्मिः । 'ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि' इति मेदिनी । २१८ ।

( **भुवः किच्च** ) भूमिः ॥ २१९ ॥

( सु० ) **भुवः किच्च** ॥ मिक् स्यात् ।। कित्त्वान्न गुणः । भू सत्तायाम् । भवन्ति भूतान्यस्यामिति भूमिः । 'भूमिर्वसुन्धरायां स्यात्स्थानमात्रेऽपि च स्त्रियाम्' इति मेदिनी २१९

( **अश्नोते रश् च** ) रश्मिः ॥ २२० ॥

( सु० ) **अश्नोते रश च** ॥ अशूङ् व्याप्तावस्मान्मिः स्याद्धातो रशादेशश्च । रश्मिः । 'रश्मिः पुमान्दीधितौ स्यात्पक्षप्रग्रहयोरपि' इति मेदिनी ॥ २२० ॥

( त० ) **रश्मिरिति** ॥ रज्जुकिरणयो रश्मिः (ख) ॥ २२० ॥

( **सृादेर्निः कित्** ) सृणिः । वृष्णिः ॥ २२१ ॥

( सु० ) **सृादेर्निः कित्** ॥ सृ गतौ । सृणिः । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥ 'सृणिः स्यादङ्कुशः पुमान्' इति ॥ वृषु सेचने । वृष्णिः । 'वृष्णिस्तु यादवे मेषे वृष्णिः पाषण्डचण्डयोः' इति विश्वः ॥ 'वृष्णिः क्षत्रियमेषयोः ॥ २२१ ॥

( त० ) **सृणिरिति** ॥ अङ्कुशः । वृष्णिरिति ॥ क्षत्त्रियमेषयोः ॥ २२१ ॥

( **अङ्गेर्नलोपश्च** ) अग्निः (ग) ॥ २२२ ॥

( सु० ) **अङ्गेर्नलोपश्च** ॥ अगि गतौ । निः अग्निः । 'अग्निर्वैश्वानरो वह्निः' इत्यमरः ॥ 'अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी ॥ २२२ ॥

(**वहादेर्निः**) वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । (घ)ग्लानिः २२३

( सु० ) **वहादेर्निः** ॥ निप्रत्ययमाह—वह प्रापणे । वह्निः । 'वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी ॥ श्रिञ् सेवायाम् । श्रेणिः । 'श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति मेदिनी ॥ 'निःश्रेणिस्त्वधिरोहिणी' श्रु श्रवणे । श्रोणिः । 'कटिः श्रोणिः ककुद्मती' इत्यमरः ॥ यु मिश्रणे । योनिः । 'योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे' इति ॥ द्रु गतौ । द्रोणिः सेचनी ॥ ग्लै हर्षक्षये । ग्लानिःदौर्बल्यम् २२३

( **घृण्यादयः** ) घृणिः । स्पृश् पृष्णिः । पृषु पार्ष्णिः ॥२२४ ॥

( सु० ) **घृण्यादयः** ॥ प्रिक्प्रत्ययान्ता निपात्यन्ते ॥ घृ सेचने । घृणिः । 'घृणिः

---

( क ) नेमिश्चक्रधारा । 'चक्रधारा प्रधिर्नेमिः' इयि यादवः ।

( ख ) तथाच—किरणप्रग्रहौ रश्मीत्यमरः । ( ग ) अङ्गति गच्छतीति—अग्निः ।

( घ ) **द्रोणिः** काष्ठाम्बुसेचनी, द्रुणिश्च, द्रुण हिंसागत्योः, अस्माद् औणादिककित् ॥ मरकतमणिद्रोणिसरला' इति पूर्वकविप्रयोगः–इति मुकुटबुधमनोहरे ॥ 'कृदिकारात्' ईपि कृते **द्रोणिति**। दोणी काष्ठाम्बुवाहिन्यां,गवादन्यामपीष्यते ।

पुनः । 'अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः ॥ स्पृश संस्पर्शने । स्पृशतेः सलोपो निपातनात् । छशषेति षत्वं ष्टुत्वम् । पृष्णिः । 'पृष्णिरल्पतनौ' इत्यमरः ॥ पृषु सेचने । पृषेर्वृद्धिर्निपात्यते । पार्ष्णिः । 'पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति मेदिनी ॥ २२४ ॥

(त०) घृणिरिति ॥ किरणः ॥ पृष्णिरिति ॥ स्पृशेः सलोपे ॥ पृषेस्तु वृद्धौ पार्ष्णिः २२४

( **पातेर्डतिः** ) पतिः ॥ २२५ ॥

( सु० ) **पातेर्डतिः** ॥ डतिप्रत्ययमाह—डित्त्वाट्टिलोपः । पा रक्षणे । पतिः । 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी ॥ २२५ ॥

( **शकेर्ऋतन्** ) शकृत् ॥ २२६ ॥

( सु० ) **शकेर्ऋतन्** ॥ ऋतन्प्रत्ययमाह—शक्लृ शक्तौ । शकृत् । 'उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ' इत्यमरः ॥ २२६ ॥

( **हन्तेरतिरंह च** ) हन्ति दुरितमनया अंहतिः ॥ २२७ ॥

( सु० ) **हन्तेरतिरंह च** ॥ हन हिंसागत्योः । अस्मादतिः स्याद्धातोरंहादेशश्च ॥ अंहतिः । 'प्रादेशनं निर्वपणमपवर्जनमंहतिः' इत्यमरः ॥ २२७ ॥

( **सूङादेः क्रिः** ) सूरिः । भूरिः । अद्रिः ॥ २२८ ॥

( सु० ) **सूङादेः क्रिः** ॥ क्रिप्रत्ययमाह—कित्त्वान्न गुणः ॥ षूङ् प्राणिप्रसवे । सूरिः 'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः ॥ अभिधानमालायां सूरीति नान्तमुदाहृतम् ॥ भू सत्तायाम् । भूरिः । "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः" इति मेदिनी ॥ अद भक्षणे ॥ अद्रिः । 'अद्रयो द्रुमशैलार्काः' इत्यमरः ॥ २२८ ॥

( **रादेस्त्रिः** ) रात्रिः । शत्रिः । अत्रिः ॥ २२९ ॥

( सु० ) **रादेस्त्रिः** ॥ त्रिप्रत्ययमाह—रा दाने । रात्रिः । शद्लृ शातने । शत्रिः । 'शत्रिर्नाम्भोधरे विष्णौ' इति मेदिनी ॥ अद भक्षणे अत्रिर्मुनिभेदः ॥ २२९ ॥

( **पतेरत्रिः** ) पतत्रिः ॥ २३० ॥

( सु० ) **पतेरत्रिः** ॥ अत्रिप्रत्ययमाह—पत्लृ गतौ । पतत्रिः पक्षी । पतत्रशब्दात्पक्षवाचकान्मत्वर्थे इनि तु नान्तः । पतत्री, पतत्रिणौ ॥ २३० ॥

( त० ) पतेरत्रिरिति । पक्षिणि ॥ २३० ॥

( **मृङ ईचिः** ) मरीचिः ॥ २३१ ॥

( सु० ) **मृङ ईचिः** ॥ ईचिप्रत्ययमाह—मृङ् प्राणत्यागे । मरीचिः । 'मरीचिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः ॥ 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्' इति मेदिनी ॥ २३१ ॥

( **वेञो डिच्च** ) वीचिः (क) ॥ २३२ ॥

---

( क ) वयति ऊयते वा वीचिः । विचिर्नित्यं स्त्री इति स्वामी ।

( सु० ) वेञो डिच्च ॥ वेञ् तन्तुसंताने अस्मादीचिर्डित्स्यात् ॥ वीचिः । 'वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः' इति विश्वः ॥ २३२ ॥

( पुरः कुषः ) पुर अग्रगमने । पुरुषः (क) ॥ २३३ ॥

(सु०) पुरः कुषः ॥ कुषप्रत्ययमाह-कित्त्वान्न गुणः । पुर अग्रगमने । पुरुषः । बाहुलकाद्दीर्घे पूरुषः । 'पुरुषस्त्वात्मनि पुन्नागे च' इति हैमः ॥ 'पुरुषाः पूरुषा नरः' इत्यमरः२३३

( पॄनहिकलिभ्य उषः ) परुषम् । नहुषः । कलुषम् ॥ २३४ ॥

( सु० ) पॄनहिकलिभ्य उषः ॥ उषप्रत्ययमाह—पॄ पालनपूरणयोः । परुषम् । 'परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी ॥ णह बन्धने । नहुषः । 'नहुषो राजविशेषे नागभिद्यपि' इति हैमः ॥ कल शब्दसंख्यानयोः । कलुषम् । 'कलुषं त्वाविलैनसोः' इति विश्वः ॥ २३४ ॥

( पीयेरूषः ) पीय पाने सौत्रः । पीयूषम् । पेयूषः ॥ २३५ ॥

( सु० ) पीयेरूषः ॥ ऊषप्रत्ययमाह—पीय पाने ॥ सौत्रो धातुः । पीयूषम् । बाहुलकाद् गुणे तु पेयूषः । पेयूषोऽभिनवं पयः' इत्यमरः ॥ 'पीयूषममृतं सुधा' इत्यमरः ॥ 'पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते' इति मेदिनी ॥ 'पीयूषममृते नव्यसूतधेनोः पयस्यपि' इति हैमः ॥ २३५ ॥

( मस्जेर्नुम्च ) मञ्जूषा ॥ २३६ ॥

( सु० ) मस्जेर्नुम् च ॥ टुमस्जो शुद्धौ अस्मादूषः स्याद्धातोर्नुमागमश्च ॥ मित्वादन्त्यात्स्वरात्परः । मस्य श्चुत्वेन शः । झबे जबा इति शस्य जः । हसात्परस्य झसस्येति वा जलोपः । मञ्जूषा । लोपाभावपक्षे जकारद्वयम् । मञ्ज्जूषा । 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः ॥ २३६ ॥

( गण्डेश्च ) गडि वदनैकदेशे । गण्डूषः ॥ २३७ ॥

( सु० ) गण्डेश्च ॥ गडि वदनैकदेशे अस्मादूषः स्यात् ॥ गण्डूषः । 'गण्डूषो मुखपूर्तीभपुष्करप्रसृतोन्मिते' इति मेदिनी ॥ २३७ ॥

(शकादेरटः) शकटम् । ककि गतौ । कङ्कटः(ख) । कॄञ् करटः २३८

( सु० ) शकादेरटः ॥ अटप्रत्ययमाह—शकि गतौ शक्लृ शक्तौ शकटः । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः । ककि गतौ । कङ्कटः सन्नाहः ॥ डुकृञ् करणे कॄ विक्षेपे वा । करटः । 'काकेभगण्डौ करटौ' इत्यमरः ॥ "करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे" इति मेदिनी ॥ २३८ ॥

( त० ) कङ्कट इति ॥ सन्नाहे ॥ २३८ ॥

(कलिकर्द्योरमः) कलमः । कर्द कुत्सिते शब्दे । कर्दमः ॥२३९॥

---

( क ) यद्वा पुरा आप्यायने इत्यस्माद् बाहुलकात्कुषः । यत्तु—'पिपर्ति' इति विगृह्य 'पुरः कुष' इति उपन्यस्तन्तद्भ्रमात् ।

( ख ) कङ्कट इति । कं मुखं कटति वा विग्रहः । कटे वर्षावरणयोरित्यस्मान्मूलविभूजादेः कः, इति कः, इति क्वस्यचिद्व्याख्या ॥

( सु० ) **कलिकर्द्योरमः** ॥ अमप्रत्ययमाह—कल संख्याने । कमलः । 'कमलः शालिचौरयोः' इति हैमः ॥ 'कमलः पुंसि लेखिन्यां शालौ पाटच्चरेऽपि च' इति मेदिनी ॥ कर्द कुत्सिते शब्दे । कर्दमः पङ्कः ॥ २३९ ॥

( **पुल्यादेः किन्दः** ) पुलिन्दः ॥ २४० ॥

( सु० ) **पुल्यादेः किन्दः** ॥ किन्दप्रत्ययमाह—कित्त्वान्न गुणः । पुल महत्त्वे । पुलिन्दो जातिविशेषः ॥ २४० ॥

( त० ) **पुलिन्द** इति ॥ जातिविशेषे ॥ २४० ॥

( **कुपेर्वा वः** ) कुपिन्दः-कुविन्दः (क) ॥ २४१ ॥

( सु० ) **कुपेर्वा वः** ॥ किन्दः स्यात्पस्य वा वकारश्च ॥ कुप क्रोधे । कुपिन्दः—कुविन्दः—'तन्तुवायः कुविन्दः स्यात्' इत्यमरः ॥ २४१ ॥

( त० ) कुपिन्दकुविन्दौ तन्तुवाये ॥ २४१ ॥

( **नौ षञ्जेर्घथिः** ) निषङ्गथिः ॥ २४२ ॥

( सु० ) **नौ षञ्जेर्घथिः** ॥ षञ्ज सङ्गे निपूर्वादस्माद् घथिप्रत्ययः स्यात् ॥ घथिप्रत्ययमाह—घित्त्वाच्चजोरिति कुत्वम् । प्रादेच्चेति षत्वम् । निषङ्गथिः आलिङ्गकः २४२

( त० ) **निषङ्गथिरिति** आलिङ्गके ॥ २४२ ॥

( **सर्तेर्णिच्च** ) सारथिः (ख) ॥ २४३ ॥

( सु० ) **सर्तेर्णिच्च** ॥ सृ गतौ अस्माद् घथिः स्यात्स च णित् ॥ सारथिः । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः ॥ २४३ ॥

( **खर्जादेरूरः** ) खर्जूरः । कर्पूरम् । वल्लूरम् (ग) ॥ २४४ ॥

( सु० ) **खर्जादेरूरः** ॥ ऊरत्ययमाह—खर्ज आर्जवे । खर्जूरः । 'खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः, इति मेदिनी ॥ कृपू सामर्थ्ये । बाहुलकाद् कृपो रोल इति लत्वाभावः । कर्पूरम् । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इत्यमरः ॥ वल्ल संवरणे । वल्लूरम् । 'वल्लूरं शुष्कमांसं स्यात्' ॥ २४४ ॥

( त० ) **वल्लूरमिति** ॥ शुष्कमांसम् ॥ २४४ ॥

( **लङ्गेर्वृद्धिश्च** ) लाङ्गूलम् ॥ २४५ ॥

( **कुसेश्च** ) कुसूलम् ॥ २४६ ॥

( सु० ) **लङ्गेर्वृद्धिश्च** ॥ लगि गतावस्मादूलप्रत्ययः स्याद्धातोर्वृद्धिश्च ॥ लाङ्गूलम् । 'लाङ्गूलं पुच्छशेफसोः'इति मेदिनी ॥ कुस संश्लेषणे । ऊलः । निपातनाद् गुणाभावः । कुसूलम् । 'कुसूलं च कुसीदं च मध्यदन्त्यमुदाहृतम्' इति विश्वः ॥ २४६ ॥

( **कुवश्चट् दीर्घश्च** ) कूर्ची २४७ ॥

( क ) कुं कुत्सितं भुवं वा विन्दतीति 'गवादिषु विन्देः संज्ञायाम'नेन श इति वा ।
( ख ) **सारथिरिति** । सरत्यश्वानिति अन्तर्भावितण्यर्थः । सरथस्यापत्यं वा सारथिः ॥
(ग ) वल्लूरं स्याद् वन क्षेत्रे वाहनोषरयोरपि । वल्लरा त्रिषु संशुष्कमांसशूकरमासयोरिति मेदिनी ।

(सु०) कुवश्चट् दीर्घश्च ॥ कु शब्दे । अस्माच्चट् प्रत्ययः स्याद्धातोः पाक्षिको दीर्घश्च । चट्प्रत्ययमाह–टित्वाद्दीप् । कूची चित्रलेखनिका । 'कुचकूचौ स्तनौ मतौ' इति विश्वः २४७

( त० ) कूचीति ॥ चित्रलेखनिका ॥ २४७ ॥

( सिवेरू च ) सूची ॥ २४८ ॥

( सु० ) सिवेरू च ॥ षिवु तन्तुसंताने अस्माच्चट् स्याद्धातोष्टेरूश्च ॥ सूची दर्भाङ्कुरः । 'सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी ॥ २४८ ॥

( त० ) सूचीति । सूची दर्भाङ्कुरः ॥ २४८ ॥

( शमेर्बः ) शमु शम्बः ॥ २४९ ॥

( सु० ) शमेर्बः ॥ शमु उपशमे अस्माद्बः स्यात् ॥ बप्रत्ययमाह–शम्बः । 'शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु' इति विश्वमेदिन्यौ ॥ २४९ ॥

( त० ) शम्ब इति मुसले ॥ २४९ ॥

(उल्बादयः) उच समवाये । उल्बः । शुल्बम् । स्था स्तम्बः । स्तबकः ।

( सु० ) उल्बादयः ॥ बप्रत्ययान्ता निपात्यन्ते ॥ उच समवाये चस्य लत्वं गुणाभावश्च । निपातनात् उल्बम् । 'गर्भाशये जरायुः स्यादुल्बं च कललेऽस्त्रियाम्' इति मेदिनी ॥ शुच शोके । चस्य लत्वं गुणाभावश्च निपातनात् । शुल्बम् । 'शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ' इति मेदिनी ॥ ष्ठा गतिनिवृत्तौ अस्मादम्बअवक एतौ प्रत्ययौ निपातनाद्धातोस्थस्य तश्च । स्तम्बः । स्तबकः । 'स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः ॥ 'स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः' इति मेदिनी ॥ स्याद् गुच्छकस्तु स्तबकः' इत्यमरः २५०

(त०) उल्बमिति गर्भाशयः । शुल्बं ताम्रम् । स्तम्बो गुच्छस्तृणादीनाम् । स्तबकः पुष्पगुच्छः ॥ २५० ॥

( शाशपिभ्यां दः ) शादः । शब्दः (क) ॥ २५१ ॥

( सु० ) शाशपिभ्यां दः ॥ दप्रत्ययमाह–शो तनूकरणे । शादः । 'शादो जम्बालशष्पयोः' इत्यमरः ॥ 'शादः स्यात्कर्दमे शष्पे' इति मेदिनी ॥ 'शष्पं बालतृणं घासः' इत्यमरः ॥ शप आक्रोशे । शब्दो निनादः ॥ २५१ ॥

( त० ) शाद इति जम्बालशष्पयोः ॥ २५१ ॥

( अब्दादयः ) अवतीत्यब्दः । कुन्दः ॥ २५२ ॥

( सु० ) अब्दादयः ॥ दप्रत्ययान्ता निपात्यन्ते–अव रक्षणे वस्य बः अब्दः । 'अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्' इति मेदिनी ॥ कु शब्दे । निपातनान्नुम् । कुन्दः । 'कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति मेदिनी ॥ २५२ ॥

( वलिमलितनिभ्यः कयः ) वलयम् । मलयः । तनयः ॥२५३॥

( सु० ) वलिमलितनिभ्यः कयः ॥ कयप्रत्ययमाह—कित्त्वाद् गुणनिषेधादि । वल संवरणे । वलयम् । 'वलयः कण्ठरोगे ना कङ्कणे पुन्नपुंसकम्' इति मेदिनी ॥ मल धारणे । मलयः । 'मलयः पर्वतान्तरे । शैलांशे देश आरामे त्रिवृतायां तु योषिति' इति

( क ) शप्यते आक्रुश्यते इति शब्दः ॥ 'शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणेध्वनौ' इति हैमः ।

मेदिनी ॥ तनु विस्तारे । तनयः । 'आत्मजस्तनयः सूनुः' इत्यमरः ॥ २९३ ॥

( हृञो दुक् च ) हरतीति हृदयम् (क) ॥ २५४ ॥

( सु० ) हृञो दुक् च ॥ हृञ् हरणे अस्मात्कयः स्याद्धातोर्दुगागमश्च । ह्रियते विषयैरिति हृदयं मनः ॥ २९४ ॥

( मिनोते रुः ) मेरुः ॥ २५५ ॥

(सु०) मिनोतेरुः ॥ रुप्रत्ययमाह–डुमिञ् प्रक्षेपणे। "मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः २९५

( जत्वादयः ) जत्रु (ख) । अश्रु । रुरुः । शातयतीति शत्रुः ॥२५६॥

( सु० ) जत्वादयः ॥ रुप्रत्ययान्ता निपात्यन्ते–जनी प्रादुर्भावे । नस्य तो निपातनात् । जत्रु । 'संधी तस्यैव जत्रुणी' इत्यमरः ॥ तस्य स्कन्धस्येत्यर्थः ॥ अशूङ् व्याप्तौ । अश्रु नयनजलम् ॥ रु शब्दे । निपातनाद् गुणाभावः । रुरुः । कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः ॥ 'रुरुर्दैत्ये मृगेऽपि च' इति मेदिनी ॥ शदॢ शातने ण्यन्तः । शातयतीति । णेरिति णिलोपः । निपातनाद्ध्रस्वत्वम् । शत्रुः ॥ २९६ ॥

( त० ) रुरुरिति मृगभेदे ॥ २९६ ॥

( कुसेरुम्भोमेदेताः ) कुसुम्भम् । कुसुमम् । कुसीदम् (ग) । कुसितः ॥ २५७ ॥

( सु० ) कुसेरुम्भोमेदेताः ॥ कुस संश्लेषणे अस्मात् उम्भ उम ईद इत एते प्रत्ययाः स्युः ॥ उम्भादिप्रत्ययानाह–कुसुम्भम् । 'कुसुम्भं हेमनि महारजते ना कमण्डलौ' इति मेदिनी ॥ कुसुमम् । कुसुमं स्त्रीरजोनेत्ररोगयोः' फलपुष्पयोः' इति मेदिनी ॥ कुसीदम् । 'कुसीदं जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके' इति मेदिनी ॥ कुसितो जनपदः ॥१९७॥

( त० ) कुसित इति जनपदे ॥ २९७ ॥

( तण्डुलादयः ) तड आघाते । तण्डुलः । अकि लक्षणे । अङ्कुशः । चष चषालः । पल्वलम् । ञिधृषा धिष्ण्यम् । शल्यम् ॥ २५८ ॥

( सु० ) तण्डुलादयो निपात्याः ॥ तड आघाते । उलप्रत्ययो नुमागमश्च निपात्यते । तण्डुलः । तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान्' इति मेदिनी ॥ अकि लक्षणे । उशप्रत्ययो निपातनात् । अङ्कुशः । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥ चष भक्षणे ॥ आलप्रत्ययो निपातनात् । चषालः । चषालो यूपकटकः(घ) इत्यमरः । पा पाने । वलप्रत्ययो निपात्यते लुगागमश्च धातोर्ह्रस्वत्वं च । पल्वलमल्पसरः ॥ ञिधृषा प्रागल्भ्ये । ण्यप्रत्ययः । ऋत इत्वं च निपात्यते । धिष्ण्यम् । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः॥ 'धिष्ण्यं स्थानाग्निसद्मसु । 'ऋक्षे शक्तौ च' इति मेदिनी ॥ शल गतौ । यप्रत्ययः । शल्यम् । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधो ना' इति मेदिनी ॥ २९८ ॥

---

( क ) हृदयं मानसे वुक्कोरसोरपि नपुंसकमिति मेदिनी ।

( ख ) जायते बाहुरस्मादिति जत्रु । ( ग ) कुसीदमिति । 'वृद्ध्या जीवे' इति हैमः ।

( घ ) यूपकटक इति । यूपस्याग्रे कृतः कटकाकारः ।

( त० ) शल्यम् ॥ 'शल्यं वा पुंसि शङ्कुर्ना ॥ २५८ ॥

( **मूङ्शकयम्यबिभ्यः क्लः** ) मूलम् । शक्लः । अम्लः । अविशब्दे । अम्बलः ॥ २५९ ॥

( सु० ) **मूङ्शकयम्यबिभ्यः क्लः** ॥ क्लप्रत्ययमाह—कित्वान्न गुणः । मूङ् बन्धने । मूलम् । 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः ॥ शक्लृ शक्तौ । शक्लः । 'शक्लः प्रियंवदे' इत्यमरः । अमरोगे । चुरादिण्यन्तः । बाहुलकादुपधाह्रस्वः । णेरिति णिलोपः । अम्लः । 'अम्लो रसविशेषे स्यादम्ली चाङ्गेरिकौषधौ' इति मेदिनी ॥ अविशब्दे । अम्बलो रसः ॥ २५९ ॥

( त० ) शक्ल इति ॥ 'शक्लः प्रियंवदे ॥ २५९ ॥'

( **मादेर्यः** ) माया । छाया । सस्यम् । षुञ् सव्यम् (क) ॥ २६० ॥

( सु० ) **मादेर्यः** ॥ यप्रत्ययमाह–मा माने । माया 'माया स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' इति मेदिनी ॥ छो छेदने छाया । "छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्" इति विश्वः । षस स्वप्ने । सस्यम् । 'वृक्षादीनां फलं सस्यम्' इत्यमरः । षुञ् अभिषवे । सव्यम् । 'सव्यं वामे प्रतीपे च' इति मेदिनी ॥ 'सव्यं दक्षिणवामयोः' इति विश्वः ॥ २६० ॥

( त० ) सव्यमिति ॥ 'दक्षिणवामयोः' ॥ २६० ॥

( **जनेर्यक्** ) जाया–जन्यम् ॥ २६१ ॥

( सु० ) **जनेर्यक्** ॥ जन जनने अस्माद्यक् प्रत्ययः स्यात् ॥ जनसनेति वाऽऽत्वम् । जाया । जन्यम् । "जन्यं हट्टपरीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । त्रिषूत्पाद्यजामात्रोश्च नवोढाज्ञातिभृत्ययोः । स्निग्धे" इति मेदिनी २६१

( त० ) जन्यमिति युद्धे ॥ २६१ ॥

(**अघ्न्यादयः**) हन् अघ्न्या । कनी दीप्तौ । कन्या । वन्ध्या संध्या २६२

( सु० ) **अघ्न्यादयः** ॥ यक्प्रत्ययान्ता निपात्यन्ते–हन हिंसागत्योः । धातोरडागम उपधालोपश्च निपातनात् । 'हनो घ्ने' इति घः । अघ्न्या । नञ् पूर्वाद्धन्तेर्यक् उपधालोपश्चेत्यन्ये । अघ्न्यः प्रजापतिः "माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात्" इत्यमरः । कनी दीप्तौ । कन्या । 'कन्या कुमारिकागौर्योरौषधीराशिभेदयोः' इति विश्वः ॥ बन्ध बन्धने । निपातनान्नलोपाभावः । बवयोरैक्यात् । वन्ध्या 'वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजः स्त्रियाम्' इति मेदिनी ॥ संपूर्वाद्ध्यो यक् । आतो लोपश्च निपातनात् । संध्या । 'सायंसंध्या पितृप्रसूः' इत्यमरः ॥२६२॥

( **अर्त्यादेर्वन्** ) अर्वा । पॄ पर्वा ॥ २६३ ॥

( सु० ) **अर्त्यादेर्वन्** ॥ वन्प्रत्ययमाह—अर्वा । 'अर्वा तुरङ्गर्ष्योः' इति विश्वः ॥ 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः' इति मेदिनी ॥ पॄ पालनादौ । पर्वा । "पर्व

---

( क ) सव्यं वामे च दक्षिणे । इत्यजयः ॥ वामे प्रसिद्धम् । दक्षिणे यथा—'वामो बाहुर्मृडान्याः करकलितरणत्कारकंकणालीकरालो यस्मिन् सव्यो भुजगवलयवान् इति अनेकार्थकैरवाकरकौमुदी ।

क्लीबं सहे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि" इति मेदिनी ॥ २६३ ॥

**( ध्याप्योः संप्रसारणम् )** ध्यै चिन्तायाम् । प्यैङ् वृद्धौ । धीवा । पीवा ॥ २६४ ॥

( सु० ) **ध्याप्योः संप्रसारणम्** ॥ ध्यै चिन्तायाम् प्यैङ् वृद्धौ आभ्यां वन् प्रत्ययः स्याद्धातोः संप्रसारणं च । धीवा कर्मकरः । पीवा स्थूलः ॥ २६४ ॥

( त० ) धीवेति ॥ कर्मकरे । पीवा स्थूलः ॥ २६४ ॥

**( अदेर्ध च )** अध्वा ॥ २६५ ॥

( सु० ) **अदेर्ध च** ॥ अद भक्षणे अस्माद्वन् स्याद्दस्य धश्च ॥ अध्वा मार्गः ॥ २६५ ॥

**( धातोरिः )** यजिः । वट वेष्टने । वटिः । जनिः । बोधिः । हरिः । वर्तिः ॥ २६६ ॥

( सु० ) **धातोरिः** ॥ इप्रत्ययमाह—यज देवपूजादौ । यजिः ॥ वट वेष्टने । वटिः ॥ बुध अवगमने । बोधिः । 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति मेदिनी ॥ हृञ् हरिः "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते प्रकीर्तितः" वृतु वर्तने । वर्तिर्दीपोपकरणम् ॥ २६६ ॥

( त० ) हरिरिति ॥ "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते प्रकीर्तितः" ॥ २६६ ॥

**( नाम्युपधात्किः )** कृषिः । ऋषिः । शुचिः । लिपिः । तूल निष्कर्षे । तुलिः ॥ २६७ ॥

( सु० ) **नाम्युपधात्किः** ॥ नाम्युपधाद्धातोः किः स्यात् ॥ किप्रत्ययमाह—कित्वान्न गुणः । कृष विलेखने । कृषिः । ऋषिः गतौ । ऋषिः । "ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्" इति मेदिनी ॥ शुच शोके । शुचिः । 'शुचिः शुद्धे सितेऽनले । ग्रीष्माषाढा-नुपहतेपूपधायु (शु) द्धमन्त्रिणि । शृङ्गारे' इति हेमः ॥ लिप उपदेहे । लिपिः । बाहुल-काद्वित्वमपि । लिविः ॥ तूल निष्कर्षे । तूलिः कूर्चिका ॥ २६७ ॥

**( क्रमितमिशतिस्तम्भामत इच्च )** क्रिमिः । तिमिः । शितिः । स्तिम्भिः ॥ २६८ ॥

( सु० ) **क्रमितमिशतिस्तम्भामत इच्च** ॥ एभ्यः किः स्यादेषामत इकारादेशश्च ॥ क्रमु पादविक्षेपे । क्रिमिः । निपातनाद्रस्य संप्रसारणमपि भवति कृमिः ॥ 'कृमिर्ना क्रिमिवत्कीटे' इति मेदिनी ॥ तमु काङ्क्षायाम् । तिमिः । तिमिर्मत्स्यभेदः ॥ शतिः सौत्रो धातुः । शितिः । 'शितिः कृष्णे सिते भूर्जे' इति विश्वः ॥ 'शितिर्भूर्जे ना सितासितयोस्त्रिषु' इति मेदिनी ॥ स्तम्भः सौत्रः । स्तिम्भिः समुद्रः ॥ २६८ ॥

**( मनेरत उच्च )** मुनिः ॥ २६९ ॥

( सु० ) **मनेरत उच्च** ॥ मन ज्ञाने अस्मात्किः स्यादकारस्योकारादेशश्च ॥ मन्यते जानातीति मुनिः । 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ॥ २६९ ॥

**( वर्णेर्बलिश्च )** वर्ण वर्णने सौत्रः बलिः ॥ २७० ॥

( सु० ) **वर्णेर्बलिश्च** । वर्णिः सौत्रोऽस्मात्किः स्याद्धातोर्वलिरादेशश्च ॥ वलिः । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' बवयोरैक्याद्वलिः ॥ २७० ॥

( त० ) बलिरिति ॥ पूजोपहारयोः ॥ २७० ॥

**( वपादेरिञ् )** वापिः । राजिः । वारिः ॥ २७१ ॥

( सु० ) **वपादेरिञ्** ॥ इञ्प्रत्ययमाह—ञित्त्वाद् वृद्धिः । डुवप् बीजसंताने । वापिः ॥ राजृ दीप्तौ । राजिः । राजिः स्त्री पङ्क्तिरेखयोः' इति मेदिनी ॥ वृञ् वरणे । ण्यन्तः । णेरिति णिलोपः । वारिः । 'वारिः स्मृता सरस्वत्यां वारि ह्रीवेरनीरयोः' इति विश्वः ॥ कृदिकारादितीप्तु पाक्षिकः सर्वत्र भवति । 'वारी तु गजबन्धनी' इत्यमरः । वारिः पथिकसंहतौ, इति च ॥ २७१ ॥

( त० ) वपा० ॥ वारिर्गजबन्धनी । जले क्लीबम् ॥ २७१ ॥

**( नहो भः )** नाभिः (क) । जनिः । आजिः । आतिः ॥२७२॥

( सु० ) **नहो भः** ॥ णह बन्धने अस्मादिञ् स्यात् हस्य भश्च ॥ नाभिः । 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे'' इति मेदिनी ॥ जनी प्रादुर्भावे । इञ् । जनिवध्योरिति न वृद्धिः । जनिः । कृदिकारादिति पक्षे ईप् । जनी । 'जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि' इति मेदिनी ॥ अज गतौ क्षेपणे च । बाहुलकादजेर्वीभावो न । आजिः संग्रामः ॥ अत सातत्यगमने । आतिः पक्षी ॥ २७२ ॥

( त० ) नहो भः ॥ ''नाभिः स्यात्क्षत्रिये 'पुंसि प्राण्यङ्गे तु स्त्रियाम्'' ॥ २७२ ॥

**( अशो रुट् )** राशिः ॥ २७३ ॥

( सु० ) **अशो रुट्** ॥ अशूङ् व्याप्तावस्मादिञ् प्रत्ययो धातो रुडागमश्च स्यात् ॥ राशिः ॥ 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी ॥ २७३ ॥

**( वातेर्डित् )** विः ॥ २७४ ॥

( सु० ) **वातेर्डित्** ॥ वा गतिगन्धनयोरस्माड्डिः स्यात् । डित्त्वाट्टिलोपः । विः पक्षी । स्त्रियां वीत्यपि ॥ २७४ ॥

**( नीव्यादयः )** निपूर्वो व्येञ् । नीविः प्रहिः । समानं ख्यायते जनैरिति सखा ॥ २७५ ॥

( सु० ) **नीव्यादयः** ॥ डिप्रत्ययान्ता निपात्यन्ते—निपूर्वो व्येञ् संवरणे । डित्वाट्टिलोपः नेर्दीर्घो निपात्यते । यत इति यलोपः । नीविः । कृदिकारादितीपि नीवी । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः ॥ परिपणो मूलधनम् ॥ हृञ् हरणे । टिलोपे प्रहिः 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः ॥ ख्याप्रकथने । टिलोपे सति यलोपः । सहादेरिति समानस्य सादेशः सेर्डाऽधेरिति डा । सखा ॥ २७५ ॥

---

( क ) नाभिरिति । नह्यन्तेऽरा अत्रेति व्युत्पत्तिः । यद्वा नम्यतेऽक्षेणेति णम हिंसायामस्मात् 'इनजादिभ्यः' इति, इञ् प्रत्ययः ।

( त० ) नी० ॥ प्रहिः कूपः ॥ २७५ ॥

**( आङ्पूर्वौ श्रिहनी )** अश्रिः । अहिः (क) ॥ २७६ ॥

( सु० ) **आङ्पूर्वौ श्रिहनी** ॥ श्रिञ् सेवायाम् । टिलोपे सत्याङो ह्रस्वो निपातनात् । अश्रिः । 'स्त्रियः पाल्यश्रिकोटयः' इत्यमरः ॥ दन्त्यसकारवांस्त्वदन्तः । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनी ॥ आङ्पूर्वो हन हिंसागत्योः ॥ टिलोपे सत्याङो ह्रस्वो निपातनात् । अहिः । 'अहिर्वृत्रासुरे सर्पे' इति मेदिनी । ।२७६॥

( त० ) आङ्० ॥ 'स्त्रियः पाल्यश्रिकोटयः ॥ २७६ ॥

**( कॄगॄपॄभ्यः किः )** कॄ किरिः । गॄ गिरिः । पॄ पुरिः ॥ २७७ ॥

( सु० ) **कॄगॄपॄभ्यः किः** ॥ किप्रत्ययमाह—कित्त्वान्न गुणः । कॄ विक्षेपे । ॠत इरितीर् । किरिः । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । पॄकॄञाभ्यश्चेति कप्रत्ययेऽदन्तोऽप्यस्ति । 'त्वचि त्वचः किरोऽपि स्यात्किरौ प्रोक्तः पथः पथि' इति द्विरूपकोशः ॥ गॄ निगरणे । गिरिः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु' इति मेदिनी ॥ पॄ पालनादौ । पोरुरित्युर् । पुरिर्नगरं राजा नदी च २७७

**( मन्धातोः )** कर्म । चर्म । भस भर्त्सनदीप्त्योः । भस्म । जन्म । छद्म । सुत्रामा ॥ २७८ ॥

( सु० ) **मन्धातोः** ॥ मनप्रत्ययमाह—डुकृञ् करणे । क्रियते इति कर्म । 'कर्म व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्, इति रुद्रः ॥ चर गत्यादौ । चर्म । 'चर्म कृत्तौ च फलके, इति मेदिनी ॥ भस भर्त्सनदीप्त्योः । भस्म ॥ जन जनने । जन्म ॥ छद अपवारणे चुरादिः । इस्मन्निति ह्रस्वः । णेरिनि णिलोपः । छद्म ॥ त्रैङ् पालने । सुष्ठु त्रायते इति सुत्रामा इन्द्रः ॥ २७८ ॥

**( बृंहेर्नस्य अः )** ब्रह्म (ख) ॥ २७९ ॥

( सु० ) **बृंहेर्नस्य अः** ॥ बृहि वृद्धावस्मान्मन्स्यात् ॥ नुमो नस्य अकारे कृते रत्वम् । ब्रह्म 'ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी ॥ 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः ॥ २७९ ॥

( त० ) बृंहेः ॥ 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः जापतिः ॥ २७९ ॥

**( नामादयः )** म्ना नाम(ग) । षो साम । षिञ् सीमा । व्येञ् व्योम । रु रोम । पै शोषणे पाप्मा । वेमा । अतेर्मनिण् आत्मा ॥ २८० ॥

( सु० ) **नामादयः** ॥ मन्प्रत्ययान्ता निपात्यन्ते ॥ म्ना अभ्यासे । म्नायतेऽनेनेति । मलोपो निपातनात् । नाम 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः ॥ षोऽन्तकर्मणि । साम । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी ॥

---

( क ) यत्तु—अंहति, अन्यतिवेति कश्चित् तन्न, नलोपासम्भवात् ।

( ख ) ब्रह्मेति । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म, सत्यं ज्ञानमानन्दं ब्रह्मेति च तल्लक्षणम् ।

( ग ) नम्यतेऽभिधीयतेऽर्थोऽनेनेति णमप्रह्वत्वे शब्दे चास्माद्धातोर्निपातितमिति वा ।

षिञ् बन्धने । सिनोतेर्दीर्घो निपात्यते । सीमा । 'सीमसीमे स्त्रियामुभे' इत्यमरः ।। व्येञ् संवरणे । अन्त्यस्योत्वं निपातनात् । गुणः । व्योम ।। रु शब्दे । रोम गात्रकेशः ।। पा पाने । पुगागमो निपात्यते । पाप्मा पापम् ।। वेञ् तन्तुसंताने । वेमा तन्तुवायदण्डः । आद्धंर्चादिः । अतेर्मनिण् । णित्वाद्वृद्धिः । इकार उच्चारणार्थः । अत सातत्यगमने । आत्मा । "आत्मा पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि" इति मेदिनी ।। २८० ।।

( त० ) नामा० ॥ वेमा तन्तुवायदण्डः ।। २८० ।।

**( हनिमशिभ्यां सिकः )** हंसिका । मश शब्दे मक्षिका ॥२८१॥

( सु० ) **हनिमशिभ्यां सिकः**॥ आभ्यां सिकप्रत्ययः स्यात् ।। सिकप्रत्ययमाह— हन हिंसागत्योः । हंसिका । 'हंसिका हंसयोषिति' । मश शब्दे रोपकृते च । छशषेति षत्वम् । षढोरिति कत्वं षत्वं च । मक्षिका । 'मक्षिका भस्मराली स्यात्' इति हारावली२८१

**( कोररः )** कवरः ॥ २८२ ॥

( सु० ) **कोररः** ॥ . शब्दे अस्मादरः स्यात् ॥ कबरः पाठकः । बवयोरैक्याद्दीपि प्रत्यये कबरी केशविन्यासः । अन्यत्र कबरा ।। २८२ ।।

**( गिर उडः )** गरुडः (क) ॥ २८३ ॥

( सु० ) **गिर उडः** ॥ गॄ निगरणे अस्मादुडप्रत्ययः ।। गरुडः २८३ ।।

**( इन्देः कमिर्नलोपश्च )** इदम् ॥ २८४ ॥

( सु० ) **इन्देः कमिर्नलोपश्च** ॥ इदि परमैश्वर्ये अस्मात्कमिः स्यान्नलोपश्च ।। कित्वाद् गुणो न । इकार उच्चारणार्थः । इदमिति सर्वादिगणस्थशब्दोऽयं सन्निहितपरामर्शकः ।। २८४ ।।

**( कायतेर्डिम् )** किम् ॥ २८५ ॥

(सु०) **कायतेर्डिम्** । कै शब्दे अस्मात् डिम् प्रत्ययः स्यात् । डित्वाट्टिलोपः । किम् २८६

**( धातोस्त्रः )** वस्त्रम् । अस्त्रम् । छत्रम् ॥ २८६ ॥

( सु० ) **धातोस्त्रः** ॥ त्रप्रत्ययमाह—वस आच्छादने । वस्त्रम् ।। असु क्षेपणे । अस्त्रम् । 'अस्त्रं प्रहरणे चापे करवाले नपुंसकम्' इति मेदिनी ।। छद अपवारणे चुरादिण्यन्तः । इस्मन्निति ह्रस्वत्वम् । णेरिति णिलोपः । छत्त्रम् ।। २८७ ।।

**( सिविमुच्योष्टेरूः )** षिवु सूत्रम् । मुच्लृ मूत्रम् ॥ ८८७ ॥

( सु० ) **सिविमुच्योष्टेरूः** ॥ आभ्यां त्रप्रत्ययः स्यादनयोष्टेरूकारादेश्च ।। कित्वान्न गुणः । षिवु तन्तुसन्ताने । सूत्रम् । 'सूत्रं तु सूचनाग्रन्थे सूत्र तन्तुव्यवस्थयोः । इति विश्वः ।। मुच्लृ मोक्षणे । मूत्रम् ।। २८७ ।।

**( अमादेः क्त्रः )** आन्त्रम् । चित्रम् । मित्रम् उष उष्ट्रः ॥२८८॥

( सु० ) **अमादेः क्त्रः** ॥ अम गतिशब्दसंभक्तिषु । अमान्तस्येति दीर्घः । आन्त्रम् ॥

---

( क ) गुरुद्भिर्डयते इति डीङ् विहायसागतावस्माड्ड निपातनात्तलोपः, इति कश्चित् ।

चिञ् चयने । चित्रम् । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः ॥ ञिमिदा स्नेहने मित्रम् । 'मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी ॥ उष दाहे । ष्टुत्वम् । उष्ट्रः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः ॥ २८८ ॥

**( पूञो ह्रस्वश्च )** पुत्रः ॥ २८९ ॥

( सु० ) **पूञो ह्रस्वश्च** ॥ पूञ् पवने अस्मात् क्रः स्याद्धातोर्ह्रस्वत्वं च ॥ पुनाति स्ववंश्यानिति पुत्रः । पुन्नामा नरकस्तस्मात् त्रायते इति आतो ड इति डप्रत्यये पुत्र इति व्युत्पत्त्यन्तरम् ॥ २८९ ॥

**( स्त्यायतेर्ड्रट् )** स्त्री ॥ २९० ॥

( सु० ) **स्त्यायतेर्ड्रट्** ॥ स्त्यै ष्ट्यै शब्दसंघातयोः । अस्मात् ड्रट् स्यात् ॥ टित्वादीप् । डित्त्वाट्टिलोपः । 'यवयोर्वसे' इति यलोपः । स्त्री । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ॥ २९० ॥

**( गमेरा )** गात्रम् ॥ २९१ ॥

( सु० ) **गमेरा** ॥ गम्लृ गतौ अस्य मस्यात्वं स्यात् त्रप्रत्ययश्च ॥ गात्रम् । गात्रमङ्गे कलेवरे । 'स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम्' इति विश्वः ॥ २९१ ॥

**( चरादेरित्रञ् )** चारित्रम् । वादित्रम् (क) ॥ २९२

( सु० ) **चरादेरित्रञ्** ॥ इत्रञ्प्रत्ययमाह—ञित्त्वाद्वृद्धिः । चर गतौ । चारित्रम् ॥ वद व्यक्तायां वाचि ण्यन्तः । वादित्रं तूर्यादि ॥ २९२ ॥

**( अशित्रादिभ्य इत्रोत्रौ )** अशित्रम् । वहित्रम् । धरित्री । अमित्रः । त्रैङ् त्रोत्रम् । वरुत्रम् ॥ २९३ ॥

( सु० ) **अशित्रादिभ्य इत्रोत्रौ** ॥ अशिश्च त्रा च अशित्रौ अशित्रावादी येषां ते अशित्रादयस्तेभ्यः । द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबध्यत इत्यादिशब्दः प्रत्येकं योज्यः । अशूङ व्याप्तावित्यादिभ्यः इत्रप्रत्ययः स्यात् त्रैङ् पालने इत्यादिभ्यः उत्रप्रत्ययः स्यात् ॥ अशूङ् अशित्रम् ॥ वह प्रापणे । वहित्रम् ॥ धृञ् धारणे । धरित्रम् । ईपि धरित्री ॥ अम गतौ । अमित्रः शत्रुः । मित्रं नेति विग्रहे त्वमित्रमिति नपुंसकम् ॥ त्रैङ् । आत्वे उत्रे च त्रोत्रं प्रहरणम् ॥ वृञ् वरणे । वरुत्रं प्रावरणम् ॥ २९३ ॥

( त० ) **त्रोत्रमिति** ॥ प्रहरणे ॥ २९३ ॥

**( चितेः कणः कश्च )** चिक्कणम् (ख) ॥ २९४ ॥

( सु० ) **चितेः कणः कश्चः** ॥ चिति संज्ञाने अस्मात्कणप्रत्ययः स्यात् तस्य कश्च ॥ बाहुलकाद्गुणाभावः चिक्कणम् । 'चिक्कणं मसृणं स्निग्धम्' इत्यमरः ॥ २९४ ॥

( त० ) **चिक्कणमिति** ॥ स्निग्धे ॥ २९४ ॥

---

( क ) 'चतुर्विधमिदं वाद्यवादित्रातोद्यनामकमि'त्यमरः । चतुर्विधं यथा—ततं वीणादिकं वाद्यं (१) आनद्धं मुरजादिकम् (२) वंशादिकं तु शुषिरम् (३) कांस्यतालादिकं घनमिति । (४)

( ख ) चीति । चिक्क गतौ । चिक्कं 'सम्पदादि' क्विप् । चिक्कं कणति । कण शब्दे । मूलविभुजादिकः । यद्वा चिक्कनम् । घञ् । चिक्कस्य अणम् । अण शब्द इति धातोरः । हलादित्वाट्टिलोप इति ।

**( सूचेः स्मः )** सूक्ष्मम् ॥ २९५ ॥

(सु०) **सूचेः स्मः** ॥ सूच पैशुन्ये चुरादिरस्मात्स्मप्रत्ययः स्यात् ॥ णेरिति णिलोपः । कुत्वषत्वे । सूक्ष्मम् । 'सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी २९५

**( पातेर्डुम्सुः )** पुमान् ॥ २९६ ॥

( सु० ) **पातेर्डुम्सुः** ॥ पा रक्षणेऽस्मात् ॥ डुम्सुप्रत्ययः स्यात् ॥ डित्त्वाट्टिलोपः उदित्वात् स्त्रियामीप् । सुपुंसी पुंसोऽसुङ् । पुमान् ॥ २९६ ॥

**( भुजादेः किष्यः )** भुजिष्यो दासः ॥ २९७ ॥

( सु० ) **भुजादेः किष्यः** ॥ भुज पालनादावस्मात् किष्यप्रत्ययः स्यात् ॥ कित्वान्न गुणः । भुजिष्यः । 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः' इति मेदिनी । 'भुजिष्यः परिचारकः' इत्यमरः ॥ २९७ ॥

**(वसादेस्तिः)** वस्तिः । शास्तिः । अगमस्यतीति अगस्तिः ॥२९८॥

( सु० ) **वसादेस्तिः** ॥ तिप्रत्ययमाह-वस निवासे । वस आच्छादने च । वस्तिः । 'वस्तिर्द्वयोर्निरूहे नाभ्यधोभूमिदशासु च' इति मेदिनी ॥ 'वस्तिर्नाभेरधो द्वयोः'। इत्यमरः ॥ शासु अनुशिष्टौ । शास्तिः राजदण्डः ॥ असु क्षेपणे । विन्ध्याख्यमगमस्यतीति । हलादेरिति टिलोपः। अगस्तिः। 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' । इति मेदिनी ।

( त० ) **वस्तिरिति** ॥ 'वस्तिर्नाभेरधो द्वयोः । दशासूत्रेऽपि वस्तयः' **शास्ति**रिति । राजदण्डे ॥ अगमिति विन्ध्याख्यमित्यर्थः ॥ २९८ ॥

**( वौ तसेः )** तसु उपक्षये । वितस्तिः । पत्तिः ॥ २२९ ॥

( सु० ) **वौ तसेः** ॥ तसु उपक्षये अस्माद्विपूर्वात्तिः स्यात् ॥ वितस्तिः ॥ 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः ॥ 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला ॥ पद् गतौ । पत्तिः ॥ २२९ ॥

**( दृणातेर्ह्रस्वः )** दृतिः ॥ ३०० ॥

( सु० ) **दृणातेर्ह्रस्वः** ॥ दॄ विदारणे अस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च ॥ दृतिः । 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी ॥ ३०० ॥

**(कॄतॄकृपिभ्यः कीटः )** किरीटम् । तिरीटम् । कृपीटम् ॥३०१॥

( सु० ) **कॄतॄकृपिभ्यः कीटः** ॥ कीटप्रत्ययमाह—कित्वान्न गुणः । कॄ विक्षेपे। ऋत इरितीर् किरीटम् 'किरीटं मुकुटे न स्त्री' इति चन्द्रगोमी ॥ तॄ प्लवनतरणयोः। ऋत इरितीर् । तिरीटं सुवर्णं शिरोवेष्टनं च॥ कृपू सामर्थ्ये । कृपीटम् । 'कृपीटमुदरे नीरे' इति विश्वः ३०१

(त०) **किरीटमिति** शिरोवेष्टने ॥ **तिरीटमिति** सुवर्णे । **कृपीटमिति** वारिकुक्ष्योश्च ३०१

**( धातोरसुः )** चेतः । सरः । पयः ॥ ३०२ ॥

( सु० ) **धातोरसुः** ॥ असुप्रत्ययमाह—उदित्त्वादीप् । चिती संज्ञाने । चित संचेतने चुरादिश्च । चेतः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः ॥ सृ गतौ । सरः । ईपि सरसी । 'सरसी तु महासरः' इति शब्दार्णवः ॥ 'महान्ति सरांसि सरस्यः'

इति भाष्यम् ॥ पय गतौ पीङ् पाने च । पयः । 'पयः स्यात्क्षीरनीरयोः' इति मेदिनी ॥

( अशेर्युट् स्तुतौ ) अश्नुते इति यशः ॥ ३०३ ॥

( सु० ) अशेर्युट् स्तुतौ ॥ अशूङ् व्याप्तावस्मादसुः स्याद्धातोर्युडागमश्च ॥ यशः कीर्तिः ॥ ३०४ ॥

( उब्जेर्बले बलोपः ) ओजः ॥ ३०४ ॥

( सु० ) उब्जेर्बले बलोपः ॥ उब्ज आर्जवे अस्मादसुः स्याद्बले वाच्ये यस्य लोपश्च ॥ ओजः । 'ओजो दीप्ताववष्टम्भे प्रकाशबलयोरपि' इति मेदिनी ॥ ३०४ ॥

( श्रिञः शिरः किच्च ) शिरः (क) ॥ ३०५ ॥

( सु० ) श्रिञः शिरः किच्च ॥ श्रिञ् सेवायामस्मादसुः स्यात्स च कित् धातोः शिरादेशश्च ॥ शिरः । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः ॥ कप्रत्यये तु शिर इत्यदन्तोऽपि । 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् ॥ 'पिण्डं दद्याद्गयाशिरे' इति वायुपुराणे ॥ "कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त्त शिरान्द्रौणिर्नालेभ्य इव पङ्कजान्" इति महाभारते ॥ ३०५ ॥

( अर्तेरुरः ) उरः ॥ ३०६ ॥

( सु० ) अर्तेरुरः ॥ ऋ गतावस्मादसुः स्यात्स च किद्धातोरुरादेशश्च ॥ उरः । 'उरो वत्सं च वक्षश्च' इत्यमरः ॥ ३०६ ॥

( व्याधौ शुट् ) अर्शः ॥ ३०७ ॥

( सु० ) व्याधौ शुट् ॥ ऋ गतावस्मादसुः स्यात्प्रत्ययस्य शुडागमश्च स्याद्व्याधौ वाच्ये ॥ अर्शो गुदव्याधिः ॥ ३०७ ॥

( त० ) अर्श इति गुदव्याधौ ॥ ३०७ ॥

( उदके नुट् ) अर्णः ॥ ३०८ ॥

( सु० ) उदके नुट् ॥ अर्तेरसुः स्यात्तस्य नुट् च ॥ अर्णः जलम् ॥ ३०८ ॥

( इण आगसि ) एनः ॥ ३०९ ॥

( सु० ) इण आगसि ॥ इण् गतावस्मात्पापे वाच्येऽसुः स्यात्प्रत्ययस्य नुडागमश्च ॥ एनः पापम् ॥ ३०९ ॥

( स्रुरीभ्यां तुट् च ) स्रोतः । रेतः ॥ ३१० ॥

( सु० ) स्रुरीभ्यां तुट् च ॥ आभ्यामसुः स्यात्प्रत्ययस्य तुडागमश्च ॥ स्रु गतौ । स्रोतः । 'स्रोतोऽम्बुवेगेन्द्रिययोः' इति विश्वः ॥ रीङ् श्रवणे । रेतः । 'रेतः शुक्रे पारदे च' इदि मेदिनी ॥ ३१० ॥

( पातेरुदके थुट् ) पाथः ॥ ३११ ॥

( सु० ) पातेरुदके थुट् ॥ पा रक्षणे अस्मादसुः प्रत्ययः स्यात्प्रत्ययस्य थुडागमश्च ॥ पाथः । 'कबन्धमुदकं पाथः' इत्यमरः ॥ ३११ ॥

---

( क ) श्रीयते उष्णीषादिनेति शिरः ।

**( अदेर्भक्ते धो नुम् च )** अन्धः ॥ ३१२ ॥

( सु० ) **अदेर्भक्ते धो नुम् च** ॥ अद् भक्षणे अस्मादसुः स्याद्धातोर्दस्य धो नुम् च । अन्धः । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः ॥ ३१२ ॥

**( आप उदके ह्रस्वो नुम्भौ )** अम्भः ॥ ३१३ ॥

( सु० ) **आप उदके ह्रस्व नुम्भौ** ॥ आप्नोतेरसुः स्याद्धातोर्ह्रस्वत्वं नुमागमो भश्चान्तादेश उदके वाच्ये ॥ अम्भः उदकम् ॥ ३१३ ॥

**( नहेर्दिवि भः )** नभः ॥ ३१४ ॥

( सु० ) **नहेर्दिवि भः** ॥ णह बन्धने अस्माद्गगने वाच्ये असुः स्याद्भश्चान्तादेशः ॥ नभः । "नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः" इति विश्वः ॥ 'नभः खं श्रावणो नभाः' इत्यमरः ॥ 'नभं तु नभसा सार्द्धम्' इति द्विरूपकोशः ॥ ३१४ ॥

**( इण आग अपराधे )** आगः ॥ ३१५ ॥

( सु० ) **इण आग अपराधे** ॥ इण् गतावस्मादसुः स्यादपराधे वाच्ये धातोरागादेशश्च ॥ आगः । 'आगः पापापराधयोः' इति विश्वः ॥ 'आगोऽपराधो मन्तुश्च' इत्यमरः ३१५

( त० ) इण० ॥ 'आगः पापापराधयोः' ॥ ३१५ ॥

**( अमेर्हुक् )** अंहः ॥ ३१६ ॥

( सु० ) **अमेर्हुक्** ॥ अम गत्यादावस्मादसुः स्याद्धातोर्हुगागमश्च । अमन्ति गच्छन्त्यधस्तादनेनेत्यंहो दुरितम् ॥ ३१६ ॥

**( रमेश्च )** रंहः ॥ ३१७ ॥

**( देशे ह च )** रमन्तेऽस्मिन् रहः ॥ ३१८ ॥

( सु० ) **रमेश्च** ॥ रमु क्रीडायामस्मादसुः स्याद्धातोर्हुगागमश्च । रंहो वेगः ॥ **देशे ह च** ॥ देशे वाच्ये रमेरसुः स्याद्धातोर्मस्य हश्च । रहः । 'रहस्तत्त्वे रते गुह्ये' इति मेदिनी ॥

**( रञ्जयादेः कित )** रजः । भुवः ॥ ३१९ ॥

( सु० ) **रञ्ज्यादेः कित्** ॥ असुः स्यात्स च कित् ॥ रञ्ज रागे । कित्त्वान्नो लोप इति नलोपः । रजः । 'रजः क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी ॥ कप्रत्यये अकारान्तोऽपि । 'रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः ॥ भू सत्तायाम् । भुधातोरित्युव् । भुवः अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम्॥

**( वसेर्णित )** वासः ॥ ३२० ॥

( सु० ) **वसेर्णित्** ॥ वस निवासे अस्मादसुः स्यात्स च णित् । णित्त्वाद् वृद्धिः । वासः वस्त्रम् ॥ ३२० ॥

**( चन्देरादेश्च च्छः )** छन्दः (क) ॥ ३२१ ॥

---

( क ) चदन्ते छन्द इति । 'अभिप्रायवशौ छन्दौ' इत्यमरात् ।

( सु० ) **चन्देरादेश्च च्छः** ॥ चदि आह्लादने अस्मादसुः स्याद्धातोश्चास्य च्छश्च । छन्दः । 'छन्दः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी ॥ अदन्तोऽप्ययम् । 'छन्दावभिप्रायवशौ' इति द्विरूपकोशः ।। ३२१ ।।

**( वचादेः सुट् )** वक्षः । पक्षः (क) ।। ३२२ ।।

( सु० ) **वचादेः सुट्** ॥ वच परिभाषणे इत्यादिभ्यः असु स्यात्प्रत्ययस्य सुडागमश्च ।। चस्य कत्वे सस्य षत्वम् । वक्षो हृदयम् ।। डुपचष् पाके । पक्षः । 'पक्षसी तु स्मृतौ पक्षौ' इति ।। ३२२ ।।

( त० ) पक्ष इति ।। 'पक्षसी तु स्मृतौ पक्षौ' ३२२ ।।

**( नञि हन एह चासिः )** अनेहाः, अनेहसौ ।। ३२३ ।।

( सु० ) **नञि हन एह चासिः** ॥ असिप्रत्ययमाह—नञ्युपपदे हन्तेरसिप्रत्ययः स्याद्धातोरेहादेशश्च ।। इकार उच्चारणार्थः । हन हिंसागत्योः । उशनसामिति सेर्डा ।। अनेहाः कालः ।। ३२३ ।।

**विधाञो वेध च** ।। वेधाः ।। ३२४ ।।

**विधाञो वेध च** ॥ डुधाञ् धारणादौ । विपूर्वादस्मादसिः स्यात्सोपसर्गस्य धातोर्वेधादेशश्च ।। विदधातीति वेधाः । अत्वसोः साविति दीर्घः । 'वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि' इति मेदिनी ।। ३२४ ।।

**( चन्द्रे माङो डित् )** चन्द्रमाः ।। ३२५ ।।

(सु०) **चन्द्रे माङो डित्** ॥ चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् ॥ डित्त्वाट्टिलोपः । माङ् माने । चन्द्रं रजतममृतं च मिमीतेऽसौ चन्द्रमाः । अत्वसोः साविति दीर्घः ३२५

**( पुरसि धाञः )** पुरोधाः (ख) ।। ३२६ ।।

( सु० ) **पुरसि धाञः** ॥ पुरस्शब्दे उपपदे धाञोऽसिप्रत्ययः स्यात् ॥ डुधाञ् धारणादौ । पुरोधाः । 'पुरोधास्तु पुरोहितः' इत्यमरः ॥ ३२६ ॥

**उषः कित्** ।। उषः ।। ३२७ ।।

( सु० ) **उषः कित्** ॥ उष दाहे अस्मादसिः स्यात्स च कित् ॥ कित्त्वान्न गुणः । उषः प्रभातम् ॥ ३२७ ॥

**( दमेरुनसिः )** दमुनाः ।। ३२८ ।।

( सु० ) **दमेरुनसिः** ॥ दमु उपशमे अस्मादुनसिः स्यात् ॥ दमुनाः । 'सप्तार्चिर्दमुना शुक्रः' इत्यमरः ॥ ३२८ ॥

( त० ) **दमेरु०** ॥ दमुनाः अग्निः ॥ ३२८ ॥

**( वशेः कनसिः )** उशनाः ।। ३२९ ।।

( सु० **वशेः कनसिः** ॥ वश कान्तावस्मात्कनसिः स्यात् ॥ किस्वाद् ग्रहामिति

---

( क ) अदन्तोऽपि । पक्षस्तुमासार्धे गृहसाध्ययोः, चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये । पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे । इति हैमः । ( ख ) पुरोऽग्रे धीयते इति पुरोधाः ।

संप्रसारणम् । उशना । 'उशना भार्गवः कविः' इत्यमरः ।। ३२९ ॥

( **अङ्गिरादयः** ) अगि अङ्गिराः ॥ ३३० ॥

( सु० ) **अङ्गिरादयः** ॥ असिप्रत्ययान्ता निपात्यन्ते ॥ अगि गतौ । असिप्रत्ययस्य इरुडागमो निपातनात् । अङ्गिराः ऋषिभेदः ॥ ३३०

( **अप्पूर्वः सर्तिः** ) अप्सराः ॥ ३३१ ॥

( सु० ) **अप्पूर्वः सर्तिः** ॥ सृ गतावप्पूर्वः । अप्सराः । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सराः' इति शब्दार्णवः । 'अप्सरस्त्वप्सराः प्रोक्ताः सुमनाः सुमनः सु च' इति द्विरूपकोशः ॥ ३३१ ॥

( त० ) **अप्सरा इति** ॥ प्रायेण भूम्नि अप्सरसः ॥ ३३१ ॥

( **पुरुपूर्वो रौतिः** ) पुरूरवाः ॥ ३३२ ॥

इत्युणादौ चतुर्थः पादः ॥

( सु० ) **पुरुपूर्वो रौतिः** ॥ रु शब्दे पुरुपूर्वः । पुरुशब्दान्तस्य दीर्घो निपातनात् । पुरूरवाः । 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः ॥ ३३२ ॥

इति सुबोधिन्यामुणादौ चतुर्थः पादः ॥ ४ ॥

( **अदि भुवो डुतः** ) अद्भुतम् (क) ॥ ३३३ ॥

( सु० ) **अदि भुवो डुतः** ॥ अदित्यव्ययमाकस्मिकार्थे । तस्मिन्नुपपदे भूधातोर्डुतः प्रत्ययः स्यात् ॥ डित्वाट्टिलोपः । अद्भुतम् आश्चर्यम् ॥ ३३३ ॥

( **गुधेरूमः** ) गोधूमः ॥ ३३४ ॥

( सु० ) **गुधेरूमः** ॥ गुध परिवेष्टने अस्मादूमः स्यात् ॥ गुध्यते परिवेष्ट्यते प्राणिभिरिति गोधूमः । 'गोधूमो नागरङ्गे स्यादोषधीव्रीहिभेदयोः" इति मेदिनी ॥ ३३४ ॥

( **मसेरूरः** ) मसूरः (ख) ॥ ३३५ ॥

( सु० ) **मसेरूरः** ॥ मसी परिणामे अस्मादूरः स्यात् ॥ मसूरः ॥ ३३५ ॥

( **तृहेः क्नो हलोपः** ) तृणम् ॥ ३३६ ॥

( सु० ) **तृहेः क्नो हलोपः** ॥ तृह हिंसायामस्मात् क्नः स्याद्धातोर्हस्य लोपश्च ॥ कित्त्वाद् गुणाभावः । तृणम् ॥ ३३६ ॥

( **दंसेष्टो न आ च** ) दासः ॥ ३३७ ॥

( सु० ) **दंसेष्टो न आ च** ॥ दसि दंशनदर्शनयोरस्माट्टप्रत्ययः नस्यात्वं च ॥ दासः । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः ॥ टित्त्वाद्दीप् । दासी ।।३३८।।

( त० ) **दास इति** ॥ सेवकशूद्रयोर्दासः ।। ३३७ ।।

---

( क ) 'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः ।

( ख ) वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियां, मसूरमसुरौ पुंसि द्वावेतावपि चैतयोः इति । रभसः । मङ्गल्यको मसुर इत्यमरः ।

**( दंशेश्च )** दाशः ॥ ३३८ ॥

**(सु०) दंशेश्च** ॥ अस्मादपि टः स्यान्नस्यात्वं च । दाशः । 'कैवर्ते दाशधीवरौ' इत्यमरः

**( त० ) दंशेश्च** ॥ दाशो धीवरः ॥ ३३८ ॥

**( सौ रमेः क्तः सोर्दीर्घः )** सूरतः ॥ ३३९ ॥

**( सु० ) सौ रमेः क्तः सोर्दीर्घः** ॥ रमु क्रीडायाम् । सुपूर्वादस्मात् क्तः स्यात् पूर्वपदस्य दीर्घश्च ॥ कित्वाल्लोपस्त्वनुदात्ततनामिति मलोपः । सूरतः उपशान्तो दयालु ।

**( त० ) सूरत** इति ॥ उपशान्तदयावतोः ॥ ३३९ ॥

**( पूञो यो णुक् ह्रस्वश्च )** पुण्यम् ॥ ३४० ॥

**( सु० ) पूञो यो णुक् ह्रस्वश्च** ॥ पूङ् पवने । अस्माद्यः प्रत्ययः स्याद्धातोर्णुक् ह्रस्वश्च ॥ पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः ॥ ३४० ॥

**( स्रंसतेः शिर्यस्य कित्त्वं कुट् च )** शिक्यम् (क) ॥३४१॥

**( सु० ) स्रंसतेः शियस्य कित्वं कुट् च** ॥ स्रंसु अधःपतने अस्माद् यः स्यात्स च कित् प्रत्ययस्य कुडागमश्च धातोः शिरादेशश्च ॥ शिक्यम् ॥ ३४१ ॥

**( अर्त्तेः क्युरुट् च )** उरणः ॥ ३४२ ॥

**( सु० ) अर्त्तेः क्युरुट् च** ॥ ऋ गतावस्मात् क्युः प्रत्ययः स्याद्धातोरुरादेशश्च ॥ कित्त्वान्न गुणः युवोरित्यनादेशः' । उरणः । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः ३४२

**( त० ) उरण** इति मेषे ॥ ३४२ ॥

**( उदि दृणातेर उदो दलोपश्च )** उदरम् ॥ ३४३ ॥

**( सु० ) उदि दृणातेर उदो दलोपश्च** ॥ दॄ विदारणे अस्मादुत्पूर्वादः स्यादुदो दस्य लोपश्च ॥ उदरम् ॥ ३४३ ॥

**( खनेर्मुट् उप्रत्ययः )** मुखम् ॥ ३४४ ॥

**( सु० ) खनेर्मुट् डप्रत्ययः** ॥ खनु अवदारणे अस्मात् डः प्रत्ययः स्याद्धातोर्मुडागमश्च ॥ डित्त्वाट्टिलोपः । मुखम् । "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । संध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्" इति मेदिनी ॥ मुखं ह्युपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः' इति हैमः ॥ ३४४ ॥

**( अमेः सः )** अंसः ॥ ३४५ ॥

**( सु० ) अमेः सः** ॥ अम गतावस्मात्सप्रत्ययः स्यात् ॥ अंसः । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः ॥ 'अंसः स्कन्धे विभागे च' इति विश्वः ॥ ३४५ ॥

**( मुहेः खो मूर्च )** मूर्खः ॥ ३४६ ॥

**( सु० ) मुहे खो मूर्च** ॥ मुह वैचित्त्ये अस्मात्खप्रत्ययः स्याद्धातोर्मूरादेशश्च ॥ मुह्यतीति मूर्खः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः ॥ ३४६ ॥

**( नहेर्हलोपश्च )** नखः ॥ ३४७ ॥

---

( क ) तदालम्बि शिक्यं काच इत्यमरः। तदालम्बि भारयष्ट्यालम्बीत्यर्थः । शिकेति भाषा ।

( सु० ) नहेर्हलोपश्च ।। णह बन्धने अस्मात्खप्रत्ययः स्याद्धकारस्य लोपश्च ।। नखः कररुहे षण्डे गन्धद्रव्ये नखं नखी' इति विश्वः ।। 'नखी स्त्रीक्लीबयोः शक्तौ नखरे पुंनपुंसकम्' इति मेदिनी ।। ३४७ ।।

**( शीङो ह्रस्वश्च )** शिखा ।। ३४८ ।।

( सु० ) शीङो ह्रस्वश्च ।। शीङ् स्वप्ने अस्मात्खः स्याद्धातोर्ह्रस्वश्च ह्रस्वविधानसामर्थ्याद् गुणाभावश्च । शिखा ।। "शिखा शाखाबर्हिचूडालाङ्गलिष्वग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च" इति मेदिनी ।। ३४८ ।।

**( माङ् ऊखो मय् च )** मयूखः ।। ३४९ ।।

( सु० ) माङ् ऊखो मय् च ।। माङ् माने अस्मादूखप्रत्ययः स्याद्धातोर्मयादेशश्चः । मयूखः । 'मयूखस्त्विट्करज्वालासु' इत्यमरः ।। ३४९ ।।

**( गलेः फो गस्योच्च )** गुल्फः ।। ३५० ।।

( सु० ) गलेः फो गस्योच्च ।। गल अदने अस्मात्फप्रत्ययः स्याद्धातोरकारस्योत्वं च ।। गुल्फः । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः ।। तयोः पादयोर्ग्रन्थी इत्यर्थः ३५०

( त० ) गुल्फ इति शरीरावयवरोगयोः ।। ३५० ।।

**( स्पृशः शुश्वणौ पृ च )** पर्शुः । पार्श्वं ।। ३५१ ।।

( सु० ) स्पृशेः शुश्वणौ पृ च ।। स्पृश स्पर्शने अस्मात् शुश्वणौ प्रत्ययौ स्तः धातोः पृ इत्यादेशश्च ।। पर्शुः । णित्त्वाद्वृद्धिः । पार्श्वः । पार्श्वोऽस्त्री कक्षयोरधः' इति ।। 'पार्श्वमन्तिके । कक्षाधोऽवयवे चक्रोपान्ते पर्शुगणेऽपि च' इति हैमः ।।३५१।।

( त० ) स्पृशेरिति ।। 'पार्श्वोऽस्त्री कक्षयोरधः' ।। ३५१ ।।

**( श्मनि श्रिञो डुन् )** श्मन्शब्दो मुखवाची । श्मानं मुखमाश्रयते श्मश्रु ।। ३५२ ।।

(सु०) श्मनि श्रिञो डुन् ।। श्रिञ् सेवायामस्मात् श्मन्युपपदे डुन् स्यात् ।। डित्त्वाट्टिलोपः । श्मन् शब्दो मुखवाची श्मानं मुखमाश्रयते इति श्मश्रु । नो लोप इति नलोपः ।। 'तद्वृद्धौ श्मश्रु पुम्मुखे' इत्यमरः । पुरुषमुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तते इत्यर्थः ।।

**( जनेरः जङ्घ च )** जङ्घा (क) ।। ३५३ ।।

( सु० ) जनेरो जङ्घ च ।। जनी प्रादुर्भावे अस्मादप्रत्ययः स्याद्धातोर्जङ्घादेशश्च ।। आप् जङ्घा ।। ३५३ ।।

**( हन्तेः शरीरावयवे द्वे च )** जघनम् ।। ३५४ ।।

(सु०) हन्तेः शरीरावयवे द्वे च ।। हन हिंसागत्योरस्माद्ः स्याद्धातोर्द्वित्वं च ।। पूर्वाद्धन्तेरिति हस्य घः जघनम् । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः ३५४

( त० ) जघनमिति ।। 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' ।।३५४।।

**( क्लिशेर्लस्य लोपश्च )** केशः ।। ३५५ ।।

( क ) जङ्घन्यत इति जङ्घा, इति वा ।। हन्तेर्यङ्लुगन्ताड्डः ।

( सु० ) क्लिशेर्लस्य लोपश्च ॥ क्लिशु विबाधने अस्मादः स्याद्धातोर्लकारस्य लोपश्च ।। केशः । 'केशः स्यात्पुंसि वरुणे ह्रीबेरे कुन्तलेऽपि च' इति मेदिनी ।। ३५५ ।।

( फलेरितः फस्य पः ) पलितम् ॥ ३५६ ॥

( सु० ) फलेरितः फस्य पः ।। फलनिष्पत्तावस्मादितप्रत्ययः स्याद्धातोरादेर्वर्णस्य पत्वं च ।। पलितम् । पलितं जरसा शौक्ल्यम्' इत्यमरः ।। 'पलितं शैलजे तापे केशपाशे च कर्दमे' इति मेदिनी ।। ३५६ ।।

(कृञादेर्वुः) करकः । कटकः । कुर गतौ । कोरकः । नरकः ॥३५७॥

( सु० ) कृञादेर्वुः ।। वुप्रत्ययमाह—युवोरित्यकादेशः । डुकृञ् करणे । करकः कमण्डलुः । करको वृष्टिपाषाणः ।। कटे वर्षावरणयोः । कटको वलयः ।। नॄ नये । नरकः । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । 'नरकः पुंसि निरये देवारातिप्रभेदयोः' इति मेदिनी ।। ३५७ ।।

( त० ) कृञा० ।। कोरक इति ।। 'कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी ।। 'कोरकः पुमान्' इत्यमरस्य प्रायेण पुमानिति व्याख्यानान्न दोषः ।। नरक इति ।। नारकोऽपि च ।। ३५७ ।।

(चीकयतेराद्यन्तविपर्ययः) चीक आमर्षणे । कीचकः ॥३५८॥

( सु० ) चीकयतेराद्यन्तविपर्ययः ॥ चीक आमर्षणे चुरादिरस्याद्यन्तविपर्ययः वुश्च । अरिति । णिलोपः । कीचकः । 'कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे' इति हैमः ३५८

( त० ) कीचक इति ।। वायुना शब्दकारी सच्छिद्रो वंशः (क) ।। ३५८ ।।

( पचिमच्योरिरतः ) पेचकः । मच कल्कने । मेचकः ॥३५९॥

( सु० ) पचिमच्योरिरतः ॥ एतयोरुपधाया अत इः स्याद्वुप्रत्ययश्च ॥ गुणः । डुपचष् पाके । पेचकः । 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः ॥ 'पेचको गजलाङ्गूले मूलोपान्ते च कौशिके' इति मेदिनी ॥ मच कल्कने । मेचकः । 'मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान्। तद्युक्ते वाच्यवत्क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति मेदिनी

( जनेररष्ठ च ) जठरम् ॥ ३६० ॥

( सु० ) जनेररष्ठ च ।। जन जनने जनी प्रादुर्भावे च आभ्यामरप्रत्ययः स्याद्धातो र्नस्य ठश्च । जठरः । 'जठरः कठिनेऽपि स्यात्' इत्यमरः ॥ ३६० ॥

( हर्यतेः कन्यो हिर् च ) हिरण्यम् ॥ ३६१ ॥

( सु० ) हर्यतेः कन्यो हिर् च ॥ हर्य गतिकान्त्योरस्मात् कन्यप्रत्ययः स्याद्धातोर्हिरादेशश्च ॥ कित्त्वान्न गुणः । हिरण्यं सुवर्णम् ॥ ३६१ ॥

( कृञः पासः ) कर्पासः ॥ ३६२ ॥

( सु० ) कृञः पासः ॥ डुकृञ् करणे अस्मात्पासप्रत्ययः स्यात् ॥ कर्पासः । अणि प्रत्यये कार्पासं वस्त्रम् ॥ ३६२ ॥

( ऊर्णोतेर्डः ) ऊर्णा ।। ३६३

---

( क ) 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः ।

( सु० ) ऊर्णोतेर्डः ॥ ऊर्णुञ् आच्छादने अस्माड्डप्रत्ययः स्यात् ॥ डित्वाट्टिलोपः । ऊर्णा । 'ऊर्णा मेषादिलोम्नि स्यादावार्ते चान्तरा भ्रुवौ इत्यमरः । भ्रूवोर्मध्ये य आवर्तस्तत्रेत्यर्थः । अन्तरायोगे भ्रुवाविति द्वितीया ॥ ३६३ ॥

**( दधातेर्यो नुट् च )** धान्यम् ॥ ३६४ ॥

( सु० ) **दधातेर्यो नुट् च** ॥ डुधाञ् धारणपोषणयोरस्माद्यप्रत्ययः स्यात्प्रत्ययस्य नुडागमश्च ॥ धान्यम् । 'धान्यं व्रीहिषु धान्याके' इति मेदिनी ॥ ३६४ ॥

**( तनोतेर्डउः सवच्च )** तितउः ॥ ३६५ ॥

( सु० ) **तनोतेर्डउः सवच्च** ॥ तनु विस्तारे अस्मात् डउः प्रत्ययः स्यात्स डउप्रत्ययः सप्रत्ययतुल्यो भवति ॥ तेन द्वित्वादि । डित्वाट्टिलोपः । यः से इति पूर्वस्येत्वम् । पृथगुच्चारणसामर्थ्याद् गुणो न । तितउः । 'तितउः पुंसि क्लीबे च ।' (क)'चालनी तितउः पुमान्' इत्यमरः ॥ ३६५ ॥

( त० ) **तितउरिति** ॥ चालन्याम् । भाष्ये क्लीबनिर्देशात् क्लीवता । 'चालनी तितउः पुमान्' इत्यमरोक्तेः पुंस्त्वमपि ॥ ३६५ ॥

**( अर्भकादयः )** ऋधु अभर्कः ॥ ३६६ ॥

( सु० ) **अर्भकादयः** ॥ अर्भकादयो निपात्यन्ते ॥ ऋधु वृद्धावस्मादकन्प्रत्ययो धातोर्धकारस्य भश्च निपात्यते ॥ अर्भकः । 'अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च' इति मेदिनी ॥ ३६६ ॥

**( प्रथेरुकः सम्प्रसारणं च )** प्रथ पृथुकः ॥ ३६७ ॥

(सु०) **प्रथेरुकः सम्प्रसारणं च** ॥ प्रथ प्रख्याने अस्मादुकप्रत्ययः स्यात्संप्रसारणं च निपात्यते ॥ पृथुकः । 'पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्' इति मेदिनी ॥ ३६७ ॥

**( पिबतेः कः )** पाकः ॥ ३६८ ॥

( सु० ) **पिबतेः कः** ॥ पा पाने अस्मात्कप्रत्ययो निपातनात् ॥ पाकः । "पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च" इति मेदिनी ॥ ३६८ ॥

**( वदेर्नञि यः )** अवद्यम् (ख) ॥ ३६९ ॥

**( अवतेरमो धो वा )** अव । अवमः । अधमः ॥ ३७० ॥

( सु० ) **वदेर्नञि यः** ॥ वद व्यक्तायां वाचि नञुपपदादस्माद्यप्रत्ययो निपात्यते ॥ अवद्यं पापम् । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः ॥ ३६९ ॥

**अवतेरमो धो वा** ॥ अव रक्षणादावस्मादमप्रत्ययो निपात्यते धातोर्वकारस्य वा धकारश्च ॥ अवमः-अधमः । 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः ॥ ३७० ॥

**( क्लिशेर ईचोपधाया लोपश्च लो नाम् च )** कीनाशः (ग)

---

( क ) 'न स्त्री तितउ चालनी' इति त्रिकाण्डशेषः । चालनं ।तितउ प्रोक्तम् इति क्लीबकाण्डे रत्नकोषः । सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमकृत' तितउ परिप्लवनं भवति इति भाष्यम् ।

( ख ) अवत्यस्मादात्मानमित्यवद्यम् ।

( ग ) अथवा—'की' इत्यव्ययं कुत्सायाम् । की कुत्सितं नाशयति 'पचादेः' इति कीनाशः ।

(सु०) क्लिशेरः ॥ क्लिशू विबाधने अस्मादप्रत्ययो निपात्यते । उपधाया ईत्वं लस्य लोपो नामागमश्च ॥ कीनाशः । 'कीनाशकर्षकक्षुद्रपांसुघातिषु वाच्यवत् । यमे ना' इति विश्वः

( चतेरुरः )चत्वारः ॥ ३७२ ॥

(सु०) चतेरुरः ॥ चते याचने अस्माद्रुरप्रत्ययः स्यात् ॥ चतुराम् शौ चेत्याम् । चत्वारः ।

( हन्तेर्घुर् च ) घोरम् (क) ॥ ३७३ ॥

( सु० ) हन्तेर्घुर् च ॥ हन हिंसागत्योरस्मादप्रत्ययः स्याद्धातोर्घुरादेशश्च ॥ गुणः । घोरम् । 'घोरं भीमे हरे' इति विश्वः ॥ ३७३ ॥

( क्षमेरलोपश्च ) क्ष्मा ॥ ३७४ ॥

( सु० ) क्षमेरलोपश्च । क्षमूष् सहने अस्मादप्रत्ययः स्याद्धातोरुपधाया लोपश्च ॥ क्ष्मा । 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः ॥ ३७४ ॥

( तरतेड्रिः ) त्रयः । त्रीन् ॥ ३७५ ॥

( सु० ) तरतेड्रिः ॥ तॄ प्लवनतरणयोः अस्मात् ड्रिप्रत्ययः स्यात् ॥ डित्वाट्टिलोपः । ए ओ जसीत्येत्वम् । त्रयः ॥ ३७५ ॥

( ग्रहेरनिः ) ग्रहणिः ॥ ३७६ ॥

( सु० ) ग्रहेरनिः ॥ ग्रह उपादाने अस्मादनिप्रत्ययः स्यात् ॥ ग्रहणिः । कृदिकारादितीप् । ग्रहणी । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः ॥ ३७६ ॥

( प्रथेरमः ) प्रथमः ॥ ३७७ ॥

( सु० ) प्रथेरमः ॥ प्रथ प्रख्यानेऽस्मादमप्रत्ययः स्यात् ॥ प्रथमः । 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इत्यमरः ॥ प्रथमचरमेति वैकल्पिकं सर्वादिकार्यमस्य ॥ ३७७ ॥

( चरेश्च ) चरमः ॥ ३७८ ॥

( सु० ) चरेश्च ॥ चर गतिभक्षणयोरस्मादमप्रत्ययः स्यात् ॥ चरमः ॥ ३७८ ॥

( मङ्गेरलः ) मङ्गलम् ॥ ३७९ ॥

( सदोणादयः ) सर्वस्मिन्काले उणादयः ॥ उणादयोऽपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्याः (ख) ॥ ३८० ॥ इत्युणादौ पञ्चमः पादः ॥

( सु० ) मङ्गेरलः ॥ मगि गतावस्मादलप्रत्ययः स्यात् ॥ मङ्गलम् । "मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थरक्षणेऽपि च" इति मेदिनी ॥ ३७९ ॥ इति सुबोधिन्यामुणादौ पञ्चमः पादः ॥

( त० ) उणादय इति ॥ तथा चोणादिषु प्रयोगं दृष्ट्वैव प्रकृतिप्रत्ययानुबन्धकल्पनं कार्य मित्यर्थः ॥ ३८ ॥

कृतायामिह टीकायां लोकेशकरशर्मणा । उणादिप्रक्रिया चेयं सम्पूर्तिमगमत्परा ॥

इति पूर्वकृदन्तप्रक्रिया समाप्ता ॥

(क) घोरो हरे दारुणे च इति हैमः ।

(ख) तथा च– उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति भाष्यम् । अव्युत्पन्नानीति उद्देश्यत्वेन विधेयत्वेन वा पाणिनितात्पर्याविषयाणि तानि शाकटायनादिप्रणीतव्याकरणान्तरात्संगृहितानि सन्ति । इत्युणादयः ॥

# अथोत्तरकृदन्तप्रक्रिया ॥ २८ ॥

( **तुम् तदर्थायां भविष्यति** ) धातोर्भविष्यति काले तुम् प्रत्ययस्तदर्थायां क्रियायां गम्यमानायाम् (क) ॥ गुडं भोक्तुं व्रजति । व्याकरणं पठितुमीष्टे ॥ १ ॥

( सु० ) **तुम् तदर्थायां भविष्यति** ॥ क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थधातोर्भावे तुम् प्रत्ययः स्यात् । तच्छब्देन क्रिया, सा अर्थः प्रयोजनं यस्याः सा क्रियार्था तस्याम् । क्त्वाद्यन्तं चेत्यव्ययसंज्ञा । भुज पालनादौ । भोक्तुं व्रजति देवदत्तः । भविष्यद्रूपं यद्भोजनं तत्प्रयोजनकं देवदत्तकर्तृकं व्रजनमित्यर्थः ॥ पठ व्यक्तायां वाचि । कृत इतीट् । पठितुमीष्टे देवदत्तः । भविष्यद्रूपं यत्पठनं तत्प्रयोजनकं देवदत्तकर्तृकं कामनमित्यर्थः

( त० ) **तुम् तदर्थायामिति** ॥ क्रियायामिति विशेष्यपदमत्रानुवृत्तम् । तस्य क्रियाय इयं तदर्था तस्याम् । यद्वा सा क्रिया अर्थः प्रयोजनं यस्याः सा तस्याम् । तुम् भावे इति पण्डिताः ॥ १ ॥

( **तुमर्थे वुण्** ) कृष्णं दर्शको व्रजति(ख) ॥ २ ॥

( सु० ) **तुमर्थे वुण्** ॥ क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोः कर्तरि वुण् प्रत्ययः स्यात् ॥ युवोरित्यकादेशः । दृशिर् प्रेक्षणे । कृष्णं दर्शको याति । कृष्णकर्मकं भविष्यद्दर्शनं देवदत्तकर्तृकं यानमित्यर्थः ॥ २ ॥

(**कालसमयवेलासु**) अध्येतुं कालः । स्तोतुं समयः । भोक्तुं वेला ३

( सु० ) **कालसमयवेलासु** ॥ कालादिपूपपदेषु तुम् स्यात् ॥ पर्यायोपादानमर्थोपलक्षणार्थम् । इङ् अध्ययने । अध्येतुं कालः ॥ ष्टुञ् स्तुतौ । स्तोतुं समयः ॥ भुज पालनादौ । भोक्तुं वेला । एवमनेहसादियोगेऽपि । अनुवादेऽथ तुम् न भवति । सिद्धस्वरूपोच्चारणमनुवादः । 'भूतानि कालः पचतीति वार्ता' इति ॥ ३ ॥

( त० ) **कालेति** ॥ प्रेरणग्रहणमत्रानुवर्तते । तेन 'भूतानि कालः पचतीति वार्ता' इत्यत्र न ॥ ३ ॥

( क ) क्रियायां किम्? भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्था जटाः ताश्च द्रव्यं न तु क्रिया, भिक्षितुं जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः ।

क्रियार्थायां किम्? धावतस्ते पतिष्यति दण्डः । अस्त्यत्र धावत इति क्रिया । न त्वसौ दण्डपतनार्था । धावनन्तु दण्डपतने हेतुर्भवति नतूद्देश्यमिति दिक् ।

( ख ) व्रजतीत्यत्र यातीति पाठः सुबोधिनीटीकाकर्तृसंमतः ॥ अत्रायं च पाठो विशेषः—

**कर्मणि चाण्** ॥ तदर्थायां क्रियायां प्रयुज्यमानायां कर्मणि चोपपदे धातोरण् प्रत्ययो भवति भविष्यदर्थे ॥ काण्डलावो व्रजति । गोदायो व्रजति । गोसंख्यायो व्रजति, इति ।

**काण्डलाव इति** । काण्डं लविष्यतीति वाक्ये लूञ् छेदने अण् 'धातोर्नामिन' इति वृद्धिः काण्डं लवितुं व्रजतीत्यर्थः । गोदाय इति गां दास्यतीति वाक्ये डुदाञ् अण् आतो युक् । गां दातुं व्रजतीत्यर्थः । गोसंख्यायो व्रजति गां संख्यातुं व्रजतीत्यर्थः ।

(इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुम्) (क) भोक्तुमिच्छति वष्टि वाञ्छति वा ॥ ४ ॥

( सु० ) इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुम् ॥ अक्रियार्थोपपदार्थमेतत् । भोक्तुमिच्छति वाञ्छति वा । वश कान्तावयमपीच्छार्थकः, कान्तिरिच्छेत्युक्तत्वात् । भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छा प्रतीयते न तु भोजनार्थेच्छेति । एककर्तृकेष्विति किम् । पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्तरि षष्ठी । पुत्रकर्तृकं पठनमिच्छतीत्यर्थः ॥ ४ ॥

( त० ) इच्छार्थेष्विति ॥ इच्छति भोक्तुमित्यादाविच्छायां भुजि प्रति तादर्थ्याभावात् । प्रवृत्तिसामान्यहेतुत्वस्यावधारितत्वेनाप्रतिपाद्यत्वात् । यद्वाऽस्तु तादर्थ्यम् । एककर्तृकत्वादिलाभार्थमेतत् ॥ ४ ॥

(शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु) शक्नोति भोक्तुम् । धृष्णोति जानातीत्यादि ॥ ५ ॥

( सु० ) शकधृषज्ञाग्लाघटरभलभक्रमसहार्हाऽस्त्यर्थेषु ॥ एषूपपदेषु धातोस्तुम् स्यात् ॥ अक्रियार्थोपपदार्थमेतत् । शक्लृ शक्तौ । ञिधृषा प्रागल्भ्ये । ज्ञा अवबोधने । ग्लै हर्षक्षये । घट चेष्टायाम् । रभ राभस्ये । डुलभष् प्राप्तौ । क्रमु पादविक्षेपे । षह मर्षणे । अर्ह पूजायाम् । अस भुवि । अर्थग्रहणमस्तिनैव सम्बध्यतेऽनन्तरत्वात् । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र भुज्यर्थो विषयतया सम्बध्यते । ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गृह्यते । भोक्तुं घटते इत्यत्र भोक्तुमर्हतीति योग्यता गम्यते । आरभते भोक्तुमित्यत्र प्रक्रमते उत्सहते इति भुजेराद्याऽवस्था गम्यते । लभते भोक्तुमित्यत्र प्राप्तिर्गम्यते । उत्सहते भोक्तुमित्यत्र भुजेराद्याऽवस्था गम्यते । अर्हति भोक्तुमित्यत्रापि योग्यता । अस्ति भवति विद्यते वा भोक्तुमित्यादौ सम्भवमात्रम् ॥ ५ ॥

(पूर्णतावाचिषु सामर्थ्यार्थेषु) पर्याप्तो भोक्तुम् । प्रवीणः कुशलः समर्थः । पूर्णतेति किम् । अलं भुक्त्वा ॥ सामर्थ्यार्थेषु किम्, पर्याप्तं भुङ्क्ते ॥ ६ ॥

( सु० ) पूर्णतावाचिषु सामर्थ्यार्थेषु ॥ पर्याप्तिवाचिषु सामर्थ्यवचनेषूपपदेषु धातोस्तुम् स्यात् ॥ पर्याप्तो भोक्तुं समर्थः कुशलः पटुः प्रवीण इत्यर्थः । पूर्णतावाचिष्विति किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ॥ ६ ॥

( घञ् भावे ) पाकः । त्यागः । भावः । दायः ॥ ७ ॥

( सु० ) घञ् भावे ॥ सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् ॥ क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकाक्रान्तत्वं सिद्धत्वम् । पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थः । भाव इति ॥ भावे इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायामुपपदे भवन्तीत्यर्थः ॥ ञित्वाद्वृद्धिः । घित्वाच्चजोः कगौ घितीति कः । पच्यते पचनं वा पाकः ॥ त्यज हानौ । त्यज्यते त्यजनं वा त्यागः ॥ भू सत्तायाम् । भूयते भवनं वा भावः ॥ डुदाञ् दाने । दीयते दानं वा आतो युगिति युक् । दायः ॥ ७ ॥

---

( क ) इच्छार्थेष्विति ॥ इह सूत्रे एककर्तृकेति पदाभावे पुत्रस्य पठितुमिच्छतीति प्रयोगः स्यात् ।

( त० ) घञ् इति ॥ भाव इति । भवनं भावः । क्रियासामान्ये न तु भवत्यर्थमात्रम् । सिद्धतारूप एव भावे घञ् । उक्तं च—"क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता । सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्" इति ॥ पाक इति ॥ ञित्त्वादुपधावृद्धिः । घित्त्वात्कुत्वम् ॥ ७ ॥

( **संज्ञायामकर्तरि च** ) कर्तृवर्जिते कारके भावे च घञ् सञ्ज्ञायामसंज्ञायां च ॥ कार्यं प्रत्याह्रियते यः स प्रत्याहारः । दायतेऽस्मै दायः(क) । विक्रियतेऽनेनेति विकारः । उपाध्यायः । उपाध्याया । उपाध्यायी ॥ ८ ॥

( **घञर्थे कः** ) घञोपवादः ॥ विशेषेण हन्यते कार्यमनेनेति विघ्नः । सुघ्नः(ख) ॥ ९ ॥

( सु० ) संज्ञायामकर्तरि च ॥ कर्तृभिन्ने कारकेऽर्थे धातोर्घञ् स्यात्संज्ञायामसंज्ञायां चवाच्यमानायाम् ॥ हृञ् हरणे । प्रत्याह्रियते इति प्रत्याहारः ॥ डुदाञ् दाने । दीयते अस्मै इति । आतोयुगिति युक् । दायः । डुकृञ् करणे । विक्रियतेऽनेनेति विकारः । इङ् अध्ययने । उपेत्याधीयतेऽस्मादित्युपाध्यायः । स्वराद् इत्यस्यापवादोऽयं घञ् ॥ ९ ॥

(त०) भाव इति ॥ बाहुलकादनुपसर्गाद्भुवोऽपि घञ् ॥ उपाध्यायेति ॥ ननु घञन्तस्य पुंस्त्वनियमात्कथं स्त्रीत्वमिति चेत्सत्यम् । अपादाने स्त्रियामप्यभिधानात् । उपाध्यायी

( **स्वरादः** ) भावादौ(ग) । घञोऽपवादः ॥ चयनं चयः । नयनं नयः ॥ षिञ् बन्धने । विशेषेण सीयन्ते बध्यन्ते जना अनेनेति विषयः । स्तूयतेऽनेनेति स्तवः । सवनं सवः । लवनं लवः । कृञ् क्रियते कार्यमनेनेति करः । गरत्यनेनेति गरः—गलः । द्व्याद्युपसर्गहीनस्य छादेर्ह्रस्वोऽप्रत्यये । परिच्छदः छत्रम् । दन्तारछाद्यन्तेऽनेनेति दन्तच्छदः ओष्ठः । द्व्यादीति किम् । अन्ववप्रच्छादः । समवपरिच्छादः ॥ १० ॥

( सु० ) स्वरादः ॥ स्वरान्ताद्धातोरप्रत्ययः स्याद्भावादौ ॥ घञोऽपवादः । चिञ् चयने । चयः ॥ णीञ् प्रापणे । नयः । षिञ् बन्धने विपूर्वः । विषयः ॥ ष्टुञ् स्तुतौ । स्तवः । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः ॥ लूञ् छेदने । लवः । 'लवलेशकणाणवः' इत्यमरः ॥ कॄ विक्षेपे । करः । गॄ निगरणे । गरः—गलः ॥ १० ॥

( **मदामः** ) मदादीनामप्रत्ययो भावादौ ॥ मदः । पणः । प्रमदः । संमदः । शमः । श्रमः ॥ ११ ॥

(सु०) मदामः ॥ मदादिभ्योऽप्रत्ययः स्याद्भावादौ ॥ मदी हर्षे । मदः । प्रमदः ।

---

( क ) दाय इत्यादौ सम्प्रदानाद्युक्तत्वात् प्रथमा ॥ ( ख ) 'हनोघ्नं' इति हस्य घः ।

( ग ) स्वराद इति ॥ इवर्णान्त–उवर्णान्त–ऋवर्णान्तेभ्यो धातुभ्यः अप्रत्ययो भवति भावादौ वाच्ये स च पुंल्लिङ्ग स्यात् । घञोऽपवाद इति । अयमपवादो हसन्तधात्वंशे प्रदर्शितो नतु स्वरान्तधात्वंशे स्वरान्तधात्वंशे स्वरान्तधातोरपि घञ् दर्शनात् , इति कश्चित् तच्चिन्त्यम् ।

संमदः ॥ पण व्यवहारे स्तुतौ च । पणः ॥ शमु उपशमे । शमः ॥ श्रमु तपसि खेदे च । श्रमः ११

( त० ) मदामिति ॥ मद इति ॥ मद्यतेऽनेनेति करणादावपि । कथं 'प्रमादोऽनवधानता' इति । बाहुलकाद्धञपि । यद्वा मद एव माद इति स्वार्थिकणान्तस्य प्रशब्देन पश्चात्समासः ॥ श्रम इति ॥ अथ कथं विश्राम इति । अपाणिनीयमिति तु दीक्षितः । 'विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः' इत्यादौ तु विश्रान्तिपदप्रक्षेपेणाप्युपपत्तिः । विश्रामभूरिति त्वन्याय्यमेवेति वामनादयः । वस्तुतस्त्वत्रापि प्रमादशब्दवत्समाधानम् ११

( **मूर्तौ घनः** ) काठिन्ये परिच्छेदे च हन्तेरप्रत्ययो घनादेशश्च ॥ दाधिघनः सैन्धवघनः ॥ १२ ॥

( सु० ) मूर्तौ घनः ॥ मूर्तिः काठिन्यं परिच्छेदश्च तस्मिन्नभिधेये हन्तेरः स्याद्धातोर्घनादेशश्च ॥ कठिनं दधि इति दधिघनः । परिच्छेदे सैन्धवघनः ॥ १२ ॥

( त० ) मूर्तौ घन इति ॥ मूर्तिः काठिन्यम् ॥ १२ ॥

( **हनो वधोऽप्रत्ययश्च** ) हननमिति बधः ॥ १३ ॥

( सु० ) हनो वधोऽप्रत्ययश्च ॥ अनुपसर्गाद्धन्तेर्भावे अप्रत्ययः स्याद्धातोर्वधादेशश्च ॥ वधः । चकाराद्धञपि । हनो घदिति घदादेशः । घातः ॥ १३ ॥

( **ट्वितोऽथुः** ) ट्वितो धातोरथुर्भवति भावादौ ॥ टुवेपृ कम्पने । वेपनं वेपथुः । नन्दथुः । श्वयथुः ॥ १४ ॥

( सु० ) ट्वितोऽथुः ॥ अयमपि स्वभावाद्भावे एव ॥ टुवेपृ कम्पने । वेपथुः ॥ टुनदि समृद्धौ । नन्दथुः ॥ टुओश्वि गतिवृद्ध्योः । श्वयथुः ॥ १४ ॥

( त० ) ट्वितोऽथुरिति ॥ टुरित्यस्य स ट्वित् तस्मात् ॥ १४ ॥

( **ड्वितस्त्रिमक् तत्कृते** ) ड्वितो धातोस्त्रिमक् प्रत्ययो धात्वर्थेन कृतेऽर्थे ॥ करणेन निवृत्तः कृत्रिमः घटः । पक्त्रिमः ॥ १५ ॥

( सु० ) ड्वितस्त्रिमक् तत्कृते ॥ धात्वर्थनिवृत्तेऽर्थे । ( अयं स्वभावाद्भावे ) कित्त्वात्संप्रसारणादि । डुकृञ् करणे । करणेन निर्वृत्तः कृत्रिमः ॥ डुपचष् पाके । पाकेन निर्वृत्तः पक्त्रिमः ॥ डुवप् बीजसंताने । वापेन निर्वृत्तम् । यजामिति संप्रसारणम् । उप्त्रिमम् १५

( त० ) ड्वित इति ॥ डु इत्यस्य स ड्वित् तस्मात् ॥ तत्कृते इति ॥ तेन धात्वर्थेन कृतस्तत्कृतस्तस्मिन्नित्यर्थः (क) ॥ १५ ॥

( **नङ्नौ** ) धातोर्नङ्नौ प्रत्ययो भावादौ ॥ यज, इज्यन्ते देवा अनेनेति यज्ञः । याच्ञा (ख) । यती यत्नः । प्रच्छाविच्छोः शो नेऽसंप्रसारणं च । प्रश्नः । विश्नः । रक्ष पालने । रक्ष्णः । स्वप्नः । अन्तः धीयते यः सः अन्तर्द्धिः । आधिः । विशेषेण जनेषु पीडा आधीयतेऽनेनेति व्याधिः । प्रकर्षेण

( क ) यद्यपि भावादावित्यनुवर्तते तथापि स्वभावाद् भाव एवैतद्द्वयम् । नहि कृतेन निवृत्तमित्येवं क्वापि विग्रहः ।

( ख ) 'याच्ञा' इति ॥ स्तोश्चुभिश्चुः इति ञः ।

दधाति रथमार्गमनेनेति प्रधिः । वारि धीयतेऽस्मिन्निति वारिधिः । पाथः धीयतेऽस्मिन्निति पाथोधिः ॥ १६ ॥

( सु० ) नङ्की ॥ ङकारककारावितौ । एतौ भावेऽकर्तरि कारके च भवतः ॥ नङ्प्रत्ययमाह—क्ङिति चेति गुणो न । यज देवपूजादौ । श्चुत्वम् । यज्ञः । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः ॥ टुयाचृ याच्ञायाम् । याच्ञा । यती प्रयत्ने ॥ यत्नः ॥ क्ङिति झसे जमे चेत्यनेन प्रच्छविच्छोः शो ने । ग्रहामिति संप्रमारणं न भाष्यानुक्तत्वात् । प्रच्छ ज्ञीप्सायाम् । प्रश्नः ॥ विश प्रवेशने । विश्नः ॥ रक्ष पालने । रक्ष्णः ॥ ञिष्वप् शये । स्वप्नः । किप्रत्ययमाह—डुधाञ् धारणादौ । आतोऽनपीत्यालोपः । अन्तर्द्धिः ॥ प्रधिः ॥ पयांसि धीयन्तेऽस्मिन्निति पयोधिः । वारिधिः ॥ १६ ॥

( त० ) नङ्की इति ॥ नङ् च किश्च नङ्की । यज्ञ इति ॥ यजनं यज्ञः । "यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' इत्यत्र तु इज्यत इति यज्ञो विष्णुरिति कर्मणि ॥ याच्ञेति ॥ यद्यपि नङन्ताः पुंस्येव तथाप्ययं स्त्रीलिङ्गः स्वभावात् ॥ प्रश्न इति ॥ संज्ञापूर्वकत्वेनानित्यत्वाच्च संप्रसारणम् ॥ अन्तर्द्धिरिति ॥ कित्त्वादातो लोप इत्यालोपः ॥ आधिरिति ॥ आधानमाधीयत इति वा ॥ वारिधिरिति ॥ 'वारीणि धीयन्तेऽस्मिन्निति वारिधिः ॥ १६ ॥

( युट् भावे च ) ज्ञानम् । करणम् । कारणम् ॥ १७ ॥

( सु ) युट् भावे च ॥ धातोर्भावे युट् स्याच्चकारात् युण च ॥ युवोरित्यनादेशः । डित्त्वादीप् । णित्त्वाद्वृद्धिः । ज्ञा अवबोधने । ज्ञानम् । डुकृञ् करणे । करणम् । युण् प्रत्ययः । कारणम् ॥ १७ ॥

( साधनाधारयोश्च ) पच्यतेऽनेनेति पचनोऽग्निः । पच्यतेऽस्यां पचनी स्थाली ॥ १८ ॥

( सु० ) साधनाधारयोश्च ॥ साधनेऽधिकरणे चार्थे धातोर्युट् प्रत्ययः स्यात् ॥ डुपचष् पाके ॥ 'पच्यतेऽनेनेति पचनः । अत्र करणे युट् । ट्वित इतीप् पच्यतेऽस्यामित्यधिकरणे युट् पचनी ॥ १८ ॥

( ईषद्दुःसुषु खल्यू ) (क) ईषदादिषु प्रयुज्यमानेषु खल्यू एतौ स्तो भावादौ ॥ ईषद्भवः । दुर्भवः । सुकरः । दुःखेन युध्यते इति दुर्योधनः । दुःखेन शिष्यते इति दुःशासनः । कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु चोपपदेषु भूकृञोः खल् । अदुराढ्येन दुराढ्येन भूयते दुराढ्यम्भवं भवता । अस्वाढ्यः स्वाढ्यः क्रियते स्वाढ्यङ्करः ॥ १९ ॥

( सु० ) ईषद्दुःसुषु खल्यू ॥ एषूपपदेषु धातोः खल्यू प्रत्ययौ स्तः भावे कर्मण च ॥ खल्यूप्रत्ययावाह—खित्त्वात् खिति पदस्येति जुम् । भू सत्तायाम् । ईषद्भवः ॥ दुर्भवः ॥ डुकृञ् करणे । सुकरः ॥ युप्रत्ययमाह—युध संप्रहारे । दुःखेन युध्यते इति दुर्यो-

( क ) ईषदिति । ईषश्च दुश्च सुश्च ईषदुःसवस्तेषु ईषद्दुः सुषु ॥ खल् च युश्च खल्यू ॥ खकारप्रत्ययभेदज्ञापनार्थं ।

धनः ।। दुःखेन शिष्यते इति । शासु अनुशिष्टौ । दुःशासनः । दुरिति कृच्छ्रार्थे वर्तते । इतरौ तु अकृच्छ्रार्थे वर्तेते ।। कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु भूकृञोः खल् । कर्तृकर्मवाचकौ शब्दौ धातोरव्यवधानेन प्राक् प्रयुज्येते । ईषदादयस्तु ताभ्यां प्राक् प्रयोज्याः । दुःखेनाढ्येन भूयते इति दुराढ्यम्भवं भवता । अक्तादाविति निषेधात्कर्तरि तृतीया ।। सुखेनाढ्यः क्रियते स्वाढ्यङ्करः सः ।। १९ ।।

( त० ) ईषद्दुःसुषु ॥ खल् च युश्च खल्यू । लकार इखखीत्यत्रोक्तात्खप्रत्ययाद्भेदज्ञापनार्थः । खकारो मुमागमार्थः ।। ईषद्भव इति ईषद्भवनम् ।। १९ ।।

---

# ॥ अथ कृत्यप्रत्ययाः ॥ २९ ॥

(**तव्यानीयौ**) भावकार्ययोः (क)॥ एधितव्यम् । एधनीयम् । आसितव्यम् । आसनीयम् । पातव्यम् । पानीयम् ॥ २० ॥

(सु०) **तव्यानीयौ** ॥ कृत्यसंज्ञकान्प्रत्ययानाह—तव्यानीयौ धातोरेतौ प्रत्ययौ स्तः भावकर्मणोः ।। तव्यप्रत्ययमनीयप्रत्ययं चाह—एध वृद्धौ । कृत इतीट् । एधितव्यम् । एधनीयं त्वया । आस उपवेशने । आसितव्यम् । आसनीयम् ।। भावे औत्सर्गिकमेकवचनं क्लीबत्वं च

( त० ) **तव्यानीयाविति** ॥ **एधनीयमिति** । भावे एकवचनमेव औत्सर्गिकत्वात् । क्लीबत्वं च लिङ्गाविशेषात् । "कृत्याः पञ्च समाख्याताः क्यब्ण्यतौ भावकर्मणोः । तव्यानीयौ स्वराद्यश्च केलिमः कर्मकर्तरि ।। २० ।।

( **वसेस्तव्यः कर्तरि णिच्च** ) वसतीति वास्तव्यः ॥ २१ ॥

( सु० ) **वसेस्तव्यः कर्तरि णिच्च** ॥ वस निवासे इत्यस्यैव ग्रहणं न तु वस आच्छादने इत्यस्य लुग्विकरणत्वात् । वस निवासे अस्मात्कर्तरि तव्यः स्यात्स च णित् ।। णित्त्वाद्वृद्धिः । वास्तव्यः ।। २१ ।।

( त० ) **वसेरिति** ।। वस निवास इत्यस्यैव ग्रहणं न तु वस आच्छादन इत्यस्य ।। **वास्तव्य इति** ॥ णित्त्वाद्वृद्धिः । वस्तुनि भवो वास्तव्य इति ण्यप्रत्ययेनैव रूपसिद्धिमिच्छन्तः केचिदेतन्न मन्यन्ते ।। २१ ।।

(**केलिमः** ) सौकर्ये धातोः केलिमः प्रत्ययो भवति ॥ पचेलिमा माषाः । भिदेलिमाः सरलाः ॥ २२ ॥

( सु० ) **केलिमः** । धातोः कर्मणिः केलिमः प्रत्ययः स्यात् ।। कित्त्वान्न गुणः ।। डुपचष् पाके । पचेलिमा माषाः । पक्तव्या इत्यर्थः ॥ भिदिर् विदारणे । भिदेलिमाः सरलाः २२

( **स्वराद्यः** ) स्वररन्ताद्धातोर्यः ॥ चेयम् । जेयम् । तव्यादयोऽपि चेतव्यः । चमनीयः (ख) । दित्स्यम् ॥ २३ ॥

( सु० ) **स्वराद्यः** ॥ स्वग्रहणं धातोर्विशेषणम् । विशेषणेन तदन्तविधिः । चिञ्

( क ) तव्यानीयौ भविष्यदर्थकौ । ( ख ) चषः । इत्यादौ गुण इति गुणः ।

चयने । चेयम् ॥ जि जये । जेयम् ॥ तव्यादयोऽपि भवन्ति । चेतव्यः ॥ चयनीयः ॥ डुदाञ् दाने अस्मादिच्छायामात्मनः सः इति सः 'ह्रस्से' इति इसादेशः । द्वित्वलोपश्च । सस्तोऽनपीति सस्य तः । दित्सति । सान्ताद्यप्रत्यये यत इत्यलोपः । दित्स्यते इति दित्स्यम् २३

( त० ) स्वराद्य इति ॥ 'यद्भाव्यं तद्भविष्यति' इत्यत्र तु ओरावश्यक इति घ्यण् । अत्र स्वरग्रहणं चिन्त्यं धातोर्द्विविधत्वेनैव हसान्ताद्घ्यणो विधानेनपरिशेषात्स्वरान्तलाभात् । यदि तु यत इत्यत्रानपीति विषयसप्तमी तदा भूतपूर्वस्वरान्तादपि यद्दत्ये तदर्थं स्वरग्रहणम् । तेन दित्स्यमित्यादौ यः । वस्तुतस्तत्र स्वरग्रहणे प्रयोजनाभावाद्ध्यण्यपि न क्षतिरिति ध्येयम्(क) ॥ २३ ॥

( ई चातः ) आदन्ताद्धातोर्ये आकारस्य च ईकारः ॥ देयम् । ग्लेयम् । गेयम् ॥ २४ ॥

(सु०) ई चातः ॥ डुदाञ् दाने । देयम् । ग शब्दे । गेयम् ॥ ग्लै हर्षक्षये । ग्लेयम् २४

(त०) ई चात इति ॥ इ इति ह्रस्व एव सुपठः । यत्तु वासुदेवेनोक्तं दीर्घेकारविधानं चकारात्खनेर्ये नस्येत्वे खेयमिति रूपसिद्धये अन्यथा पक्षे आत्वं स्यादिति तद्भाष्यविरोधादुपेक्ष्यम् ॥ २४ ॥

( पुशकात् ) पवर्गान्ताच्छकादेश्च यप्रत्ययः ॥ शप्यम् । यम्यम् । जप्यम् । शक्यम् । सह्यम् ॥ २५ ॥

( सु० ) पुशकात् ॥ अत्र घ्यण्न भवति तव्यादयस्तु स्युरेव ॥ शप उपालम्भे । शप्यम् ॥ यमु उपरमे । यम्यम् ॥ जप व्यक्तायां वाचि । जप्यम् ॥ शकादेस्तु । शक्लृ शक्तौ । शक्यम् ॥ षह मर्षणे । सह्यम् ॥ २५ ॥

( त० ) पुशकादिति ॥ पुश्च शकश्च पुशकं तस्मात् ॥ २५ ॥

( ऋहसान्ताद् घ्यण् ) ऋवर्णान्ताद्धसान्ताद्धातोर्घ्यण् भावकार्ययोः ॥ कार्यम् । हार्यम् । वाह्यम् । घात्यम् । पाक्यम् । वाक्यम् । रोग्यम् ॥२६॥

( सु० ) ऋहसान्तात् घ्यण् ॥ ऋ इति धातोर्न ग्रहणं किन्तु ऋवर्णस्य हससाहचर्यात् । घित्वाच्चजोः कगाविति कगौ । णित्वाद् वृद्धिः । डुकृञ् करणे । कार्यम् ॥ हृञ् हरणे । हार्यम् ॥ वह प्रापणे । वाह्यम् । हन हिंसागत्योः । हनो घदिति घत् । घात्यम् ॥ डुपचष् पाके । पाक्यम् ॥ रुज रोगे । रोग्यम् ॥ वच परिभाषणे । वाक्यम् ॥२६॥

( त० ) ऋहसान्तादिति ॥ आ च हसश्च ऋहसं तस्मात् ॥ घो घित्कार्यार्थः । णो वृद्ध्यर्थः ॥ २६ ॥

(घ्यणि क्वचित्कुत्वाभावः) याज्यम् । याच्यम् । प्रवाच्यम् । रोच्यम् । अर्च्यम् ॥ २७ ॥

( सु० ) घ्यणि क्वचित्कुत्वाभावः ॥ यज् याच् प्रवच् रुच् ऋच् एषां कुत्वं न घ्यणि ॥ यज देवपूजादौ । याज्यम् ॥ टुयाचृ याच्ञायाम् । याच्यम् । वच परिभाषणे

---

( क ) ध्येयमिति वासुदेवादिमतमपास्यति ।

प्रपूर्वः। प्रवाच्यं ग्रन्थविशेषः॥ रुच दीप्तौ। रोच्यम्॥ ऋच स्तुतौ। अर्च्यम्। अत एव ऋदुपधादिति क्यप्तु न भवति॥ २७॥

**( ओरावश्यके )** उवर्णान्तादावश्यकेऽर्थे ण्यण्॥ २८॥

( सु० ) **ओरावश्यके**॥ अवश्यमेवेत्यावश्यकं तस्मिन्॥ २८॥

( त० ) **ओरावश्यक** इति॥ अवश्यंभाव। आवश्यकम्। अवश्यमष्टिलोपस्तद्धिते अव्ययत्वात्॥ २८॥

**(ओदौतोर्यः स्वरवत्)** ओकारौकारयोर्निमित्तं यः प्रत्ययः स्वरवत॥ "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि। समो वा हिततयोर्मांसस्य पचि युङ्घञोः॥" अवश्यं लाव्योऽवश्यलाव्यः। भोक्तुकामः। श्रोतुमनाः। सहितम्—संहितम्। सततम्—संततम्। मांसस्य पचनम् मांस्पचनम्—मांसपचनम्। मांसस्य पाकः मांस्पाकः—मांसपाकः॥ २९॥

( सु० ) **ओदौतोर्यः स्वरवत्**॥ यं प्रत्ययं निमित्तत्वेनाश्रित्य गुणेन यत्र ओकारो भवति वृद्ध्या च यत्र औकारो भवति स च प्रत्ययः स्वरवद्भवतीत्यर्थः॥ "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि। समो वा हिततयोर्मांसस्य पचि युङ्घञोः" अवश्यमो निपातस्यान्त्यं लुम्पेत् लोपं कुर्यात् कृत्ये कृत्यसंज्ञके प्रत्यये परे। यथा अवश्यलाव्यः॥ तुम्प्रत्ययस्यान्त्यं लुम्पेत् काममनसोः शब्दयोः परयोः। यथा भोक्तुकामः। श्रोतुमनाः॥ समुपसर्गस्यान्त्यं वा लुम्पेत् हिततयोः शब्दयोः परयोः। यथा सहितं-संहितम्। सततं-संततम्॥ मांसशब्दस्यान्त्यं वा लुम्पेत् पचिप्रकृतिकयुङ्घञ्प्रत्यययोः परयोः। यथा मांस्पचनं मांसपचनम्। मांस्पाकः। मांसपाकः॥ २९॥

( त० ) **ओदौतोरिति**॥ द्योतितार्थस्यापि क्वचित्प्रयोगो दृश्यते लाघवं प्रत्यनादरादित्यत आह—अवश्यलाव्यम्॥ २९॥

**( हनो वधादेशो ये )** (क)वध्यः॥ ३०॥

( सु० ) **हनोवधादेशो ये**॥ हन हिंसागत्योरस्मात् यप्रत्ययः स्याद्धातोर्वधादेशश्च। वध्यः। पक्षे ण्यणपि। हनो घदिति घत्। घात्यः॥ ३०॥

**(ऋदुपधात्क्यप्)** ऋकारोपधाद्धातोः क्यप्॥ कृती कृत्यम्। वृत्यम् ३१

( सु० ) **ऋदुपधात्क्यप्**॥ कित्त्वाद् गुणो न। पित्त्वं स्वरार्थम्। कृती छेदने। कृत्यम्॥ वृतु वर्तने। वृत्यम्॥ वृधु वृद्धौ। वृध्यम्॥ तपरकरणं किम्। कॄत संशब्दने। ण्यण् कीर्त्यम्॥ ३१॥

( त० ) **ऋदुपधादिति**॥ तपरत्वाद्दीर्घोपधान्न। तेन कॄत इत्यस्य कीर्त्यम्॥३१॥

**( कृपिचृत्योर्न )** कल्प्यम्। चृत दीप्तौ। चर्त्यम्॥ ३२॥

( सु० ) **कृपिचृत्योर्न**॥ आभ्यां क्यप् न स्यात्॥ ण्यण्। कृपू सामर्थ्ये। कल्प्यम्॥ चृती हिंसायाम्। चर्त्यम्॥ ३२॥

---

(क) अनेकादेशः सर्वस्य भवतीति नियमात्सर्वादेशः॥

( मृजो वा ) मृज्यम्-मार्ग्यम् ॥ ३३ ॥

( सु० ) मृजो वा ॥ ऋदुपधादिति नित्यं प्राप्ते विकल्पार्थमारम्भः ॥ मृजूष् शुद्धौ । मृज्यम् । क्यबभावे घ्यण् । मृजेर्वृद्धिरिति वृद्धिः । चजोरिति गः मार्ग्यम् ॥ ३३ ॥

( भुवो भावे ) नाम्न्युपपदे भुवो भावे क्यप् ॥ ब्रह्मणो भावः ब्रह्मभूयम् । नाम्नि किम् । भव्यम् ॥ ३४ ॥

( सु० ) भुवो भावे ॥ भू सत्तायाम् । ब्रह्मभूयम् ॥ नाम्न्युपपदे इति किम् । भव्यम् । स्वराद्य इति यः ॥ ३४ ॥

(इणस्तुभृदृवृशासुजुषखनः क्यप् च) इत्यः । स्तुत्यः । दृङ् आदरे । दृत्यः । वृत्यः । शासेरिः । शिष्यः । जुषी प्रीतिसेवनयोः । जुष्यः ॥३५॥

(सु०) इणस्तुभृदृवृशासुजुषखनः क्यप् च ॥ एभ्यो धातुभ्यः क्यप् स्यात् ॥ इण् गतौ । इत्यः ॥ ष्टुञ् स्तुतौ । स्तुत्यः ॥ वृ इति वृञ् वरणे इत्यस्य ग्रहणम् । वृत्यः । वृङ् संभक्तावस्मात्तु घ्यणेव । वार्यः । दृङ् आदरे । दृत्यः ॥ भृञ् भरणे । भृत्यः कर्मकरः । भर्तव्य इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा ॥ शासु अनुशिष्टौ । शासेरिरितीत्वम् । घसादेरिति षः । शिष्यः ॥ जुषी प्रीतिसेवनयोः । जुष्यः ॥ ३५ ॥

( त० ) इणस्तु ॥ वृ इति वृञ् न तु वृङ् । तस्य वार्या ऋत्विज इति घ्यणेव ॥ शासु अनुशिष्टौ । शासु इच्छायामपीति कश्चित । स्वरभेदार्थमेव (क) ॥ ३५ ॥

( खन इत्वं क्यपि ) खेयम् ॥ ३६ ॥

( सु० ) खन इत्वं क्यपि ॥ खनु अवदारणे इत्यस्य नस्येत्वं स्यात्क्यपि । खेयम् ३६

(भिद्योद्ध्यौ नदे) भिनत्ति कूलमिति भिद्यः । उज्झति जलमित्युद्ध्यः ३७

( सु० ) भिद्योद्ध्यौ नदे ॥ भिदिर् विदारणे उज्झ त्यागे आभ्यां क्यप् स्यात्कर्तरि उज्झेर्धत्वं च निपात्यते नदे वाच्ये ॥ भिनत्ति कूलमिति भिद्यः ॥ उज्झत्युदकमिति उद्ध्यः ॥ नदे किम् । भेत्ता उज्झिता, तृ प्रत्ययः ॥ ३७ ॥

( त० ) भिद्योद्ध्या ॥ धत्वं निपात्यम् । नदे इति किम् । भेत्ता । उज्झिता ३७

( कृवृषोर्वा क्यप् ) कृत्यम्—कार्यम् । वृष्यम्—वर्ष्यम् ॥ ३८ ॥

( सु० ) कृवृषोर्वा क्यप् ॥ कर्तरि ॥ डुकृञ् करणे वृषु सेचने आभ्यां वा क्यप् स्यात् ॥ करोतेः क्यपोऽप्राप्तौ वृषस्तु ऋदुपधादिति नित्ये प्राप्ते विकल्पः । ह्रस्वस्य पितीति तुक् । कृत्यम् । वृष्यम् । क्यबभावपक्षे घ्यण् । कार्यम् । वर्ष्यम् ॥ ३८ ॥

( पुष्यसिध्यौ नक्षत्रे ) पुष्णन्ति कार्याण्यस्मिन्निति पुष्यः । सिध्यन्ति कार्याण्यस्मिन्निति सिध्यः ॥ ३९ ॥

( सु० ) पुष्यसिध्यौ नक्षत्रे ॥ पुष पुष्टौ षिधु गत्याम् आभ्यामधिकरणेऽर्थे क्यप्

---

( क ) इच्छार्थक यस्माञ्जो विधीयते तस्यैवेत्वमत एवाऽऽशास्त इत्यादौ नेति व्याख्यानादित्वाभावेन शास्यमित्यत्र क्यब्ण्यतोर्विशेषाऽभावात्तित्स्वरितमिति स्वरभेदार्थमेवेत्येवकारस्वारस्यम् ।

निपात्यते ॥ पुष्यः । सिध्यः । नक्षत्रे किम् । पोषणम् । सेधनम् । साधनाधारयोरिति युट्

**( राजसूयादयः )** (क)राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः राजसूयः । सरत्याकाशे सूर्यः ॥ ४० ॥

( सु० ) **राजसूयादयः** ॥ क्यबन्ताः शब्दा निपात्यन्ते ॥ षुञ् अभिषवे । राज्ञा सोतव्य इति राजसूयः । अभिषवद्वारा निष्पादयितव्य इत्यर्थः ॥ यद्वा राजा सूयते कण्डयतेऽत्रेति राजसूयः । राजात्र सोमः । अधिकरणे क्यप् निपातनाद्दीर्घः । अर्द्धर्चादित्वात् पुन्नपुंसकः ॥ सृ गतौ । सरत्याकाशे इति सूर्यः । कर्तरि क्यप् । निपातनादुरादेशः । 'र्व्वोर्वि हसे' इति दीर्घः । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयतीति सूर्यः । क्यपो रुट् निपातनात् ॥ ४० ॥

( त० ) **राजसूयादय इति** ॥ लतात्मकः सोमो राजा स सूयते कण्डयतेऽत्रेति अधिकरणे क्यप् । निपातनाद्दीर्घः । अर्द्धर्चादिरयम् ॥ **सूर्य इति** ॥ सरत्याकाशे सुवति कर्मणि लोकं प्रेरयतीति वा ॥ ४० ॥

**( तव्यादयोऽर्हेऽर्थे विधौ शक्तौ च वक्तव्याः )**(ख) दर्शनार्हो द्रष्टव्यः । दर्शनीयः दृश्यः ॥ स्वाध्यायोऽध्येतव्यः । अध्ययनीयः अध्येयः ॥ श्रोतव्यः ॥ मन्तव्यः । वोढव्यः ॥ तव्यादीनां कृत्यसंज्ञा ॥ ४१ ॥

( सु० ) **तव्यादयोऽर्हेऽर्थे विधौ शक्तौ च वक्तव्याः** ॥ दृशिर् प्रेक्षणे अस्मात्तव्यप्रत्यये गुणे कृते रारो झसे दृशामिति रः । छशषेति षत्वं ष्टुत्वम् । द्रष्टव्यः ॥ अनीयप्रत्यये तु दर्शनीयः । क्यपि तु दृश्यः ॥ इङ् अध्ययने अस्मात्तव्यप्रत्यये गुणे कृते अध्येतव्यः । अनीये तु अध्ययनीयः । यप्रत्यये अध्येयः ॥ श्रु श्रवणे । श्रोतव्यः ॥ श्रवणीयः । क्यपि तु श्रुत्यः ॥ मन ज्ञाने । मन्तव्यः । मननीयः ॥ वह प्रापणे अस्मात्तव्यप्रत्यये हो ढ इति ढत्वे तथोर्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपपूर्वदीर्घौ सहिवहोरित्योत्वम् । वोढव्यः । वहनीयः ॥ कृत्यक्तखलर्थाः प्रत्ययाः भावकर्मणोर्भवन्ति ॥ ४१ ॥

इति कृत्यप्रत्ययाः ॥

---

**( स्त्रियां यजां भावे )** (ग)यजादेर्धातोः स्त्रियां भावे क्यप् ॥ इज्या । व्रज्या । समज्या । निषद्या । निपत्या । मन्या । विद्या । सुत्या । शय्या । भृत्या । इत्या । कृत्या ॥ ४२ ॥

---

( क ) **राजसूयादय इति** । अत्रादिना मृषोपपदाद् वदेः कर्मणि नित्यं क्यप् । मृषोद्यम् । विशेष्यनिघ्नोऽयम् । उच्छ्रायसौन्दर्यगुणा मृषोद्याः । रोचते रुच्यः । गुपेरादेः कत्वं च संज्ञायाम । सुवर्णरजतभिन्नं धनं कुप्यम् । गोप्यमन्यत् । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः कर्मकर्त्तरि । शुद्धे तु कर्मणि कृष्टपाक्याः । न व्यथते । अव्यथः । इति ।

( ख ) **तव्यादयः** । अर्हे योग्यार्थे, विधौ कर्त्तव्यार्थोपदेशे, शक्तौ सामर्थ्ये भवन्तीत्यर्थः ।

( ग ) यजामिति बहुवचनेन यज् व्रज समज् निपत निषद् मन् नम् विद षुञ् शीङ् भृञ् इण् कृ इषु परिसृ परिचर् अटाटय आस् चर् जागृ हन् एषां ग्रहणम् ।

( सु० ) **स्त्रियां यजां भावे** ॥ क्यप्प्रत्ययमाह–कित्त्वात्तुक् । कित्त्वाद् गुणनिषेधः संप्रसारणं च । यज देवपूजादौ । यजामिति संप्रसारणम् । यजनमिज्या ॥ व्रज गतौ । व्रजनं व्रज्या ॥ अज गतौ क्षेपणे च । समजन्त्यस्यामिति समज्या सभा । अजेः क्यपि वीभावो न निपातनात् ॥ षद्लृ विशरणादौ । निषीदन्त्यस्यामिति निषद्या आपणः । प्रादेश्चेति षत्वम् । पत्लृ पतने । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः ॥ मन ज्ञाने । मन्यतेऽनयेति मन्या गलपार्श्वनाडी ॥ विद ज्ञाने । विदन्त्यनयेति विद्या ॥ षुञ् अभिषवे । ह्रस्वस्येति तुक् । सुत्या अभिषवः । शीङ् स्वप्ने । शेरतेऽस्यामिति । शीङोऽयङ् । ये क्ङितीत्ययङ । शय्या ॥ डुभृञ् धारणादौ । भृत्या जीविका ॥ इण् गतौ । ईयतेऽनयेति इत्या शिबिका । डुकृञ् करणे कृत्या ॥ ४२ ॥

( त० ) **स्त्रियां यजामिति** । बहुवचनमाद्यर्थम् । तेन यज शीङ् व्रज विद षुञ् मन विद भृञ् अटाद्य इण् समज निषद निपत कृञ् हन् एषां ग्रहणम् ॥ इज्येति ॥ कित्त्वात्संप्रसारणम् । समज्या सभा ॥ निषद्या आपणः ॥ निपात्या पिच्छिला भूमिः ॥ मन्यतेऽनया क्रुद्धादिरिति मन्या गलपार्श्वशिरर ॥ विद्यते ज्ञायतेऽर्थतत्त्वमनया विद्या ॥ सूयते सोमोऽत्रेति सुत्याऽभिषवदिवसः ॥ शय्यतेऽस्यां शय्या खट्वादिः ॥ भरणं भृत्या-वेतनम् । ईयते गम्यतेऽनयेति इत्या शिविकादिः ॥ भृतिमतिरासूतिरिति तु सूत्रेषु निपातनात् ॥ ४२ ॥

**( कृञो यग्वा )** अयकि । क्रिया ॥ इषेरिच्छेति निपातः । इषेः शः । छत्वादेशः । इच्छा । सर्तेर्गुणः परिसर्या । अटाट्या । आस्या । जागर्तेर्गुणः जागर्या ॥ ४३ ॥

( सु० ) **कृञो यग्वा** ॥ करोतेर्यक् प्रत्ययो वा स्यात् यक्प्रत्ययाभावे शप्रत्ययो निपातनाद्भवति भावकर्मणोरर्थयोः ॥ यक्प्रत्यये अयकीति रिङ् आप् च । क्रिया ॥ इषु इच्छायामस्मात् शप्रत्ययो निपात्यते । शित्वाच्चतुर्वत्कार्यम् । तेन गमामिति छः । आबत इत्याप् । इच्छा ॥ सृ गतौ अस्मात् शप्रत्ययक्प्रत्ययौ निपात्येते धातोर्गुणश्च । शप्रत्यये-यक्चतुर्ष्विति यक् । यत इत्यलोपः आप् । परिसरणं परिसर्या । यकि तु निपातनाद्गुणः । परिसर्या ॥ अटगतौ । अस्मादपि शयकौ निपात्येते । शप्रत्यये तु यक् चतुर्ष्विति यक् । यत इत्यलोपः । निपातनात् ट्यशब्दस्य द्वित्वम् । पूर्वभागे यकारनिवृत्तिर्दीर्घावपि निपातनात् । आबत इत्याप् । अटाट्या । यकि तु ट्यशब्दस्य द्वित्वम् । यकारनिवृत्तिर्दीर्घौ पूर्ववदेव । अटाट्या । अन्ये तु अट गतावस्मात् सूचिसूत्रिमूत्र्यटीति यङ् । स्वरादेरिति ट्यशब्दस्य द्वित्वम् । आत इति पूर्वस्यात्वम् । अटाट्येत्यस्मात् प्रत्ययान्ताद्यक् प्रत्ययः । अनपि चेति यलोपः । यत इत्यलोपः । आप् च । अटाट्या ॥ आस उपवेशने । निपातनाद्यक् । आस्या ॥ जागृ निद्राक्षये । अस्मात् शयगकारप्रत्यया निपातनाद्भवन्ति । शप्रत्यये शित्वाच्चतुर्वत्कार्यम् । तेन यक् चतुर्ष्विति यक् । जागर्तेर्वौण्णबङ्ङ्घिञ्चेति गुणः आप् च । जागर्या । यकि तु जागर्तेरिति गुणः । जागर्या । अकारप्रत्यये गुणः । जागरा ॥ ४३ ॥

( त० ) **इच्छेति** ॥ इच्छादयो निपात्याः ॥ **परिसर्येति** ॥ परिसरणम् ॥ ४३ ॥

**( हनस्तः )** हत्या ॥ ४४ ॥

**( सु० ) हनस्तः ॥** अनुपसर्गे नाम्न्युपपदे हन्तेर्भावे क्यप् स्याद्धातोर्नस्य तश्च ॥ ब्रह्मणो हननं ब्रह्महत्या ॥ ४४ ॥

**( क्तिः )** धातोः क्तिः स्त्रियां भावे (क) ॥ कृतिः । बुद्धिः । स्मृतिः॥ अमान्तस्येति दीर्घः । शान्तिः । दान्तिः । कान्तिः । क्षान्तिः ॥ ह्वेञ् हूतिः । ऊढिः । स्फातिः ॥ ४५ ॥

**( सु० ) क्तिः ॥** धातोः स्त्रीलिङ्गे भावादौ क्तिप्रत्ययः स्यात् ॥ घञोऽपवादः । डुकृञ् करणे । कृतिः । बुध अवगमने । तथोर्ध इति तस्य धः । झबे जबा इति पूर्वधस्य दः ॥ बुद्धिः ॥ स्मृ चिन्तायाम् । स्मृतिः ॥ शमु दमु उपशमे । कमु कान्तौ । क्षमूष् सहने । अमान्तस्य क्ङितीति दीर्घः । शान्तिः । दान्तिः । कान्तिः । क्षान्तिः ॥४५॥

**( त० ) क्तिः ॥** स्त्रियां यजामित्यतः स्त्रियामित्यनुवर्तते ॥ ४५ ॥

**( हबक्त्योर्नेट् )** संशीतिः ॥ ४६ ॥

**(सु०) हबक्त्योर्नेट् ॥** हबप्रत्याहारक्तिप्रत्यययोरिण्न स्यात् ॥ शीङ् स्वप्ने । संशीतिः॥

**( त० ) हबक्त्योरिति ॥** हबप्रत्याहारः हबश्च क्तिश्च हबक्ती तयोरित्यर्थः ॥४६॥

**( ग्रहादीनामिट् )** निगृहीतिः ॥ ४७ ॥

**( सु० ) ग्रहादीनामिट् ॥** ग्रहादीनां क्तिप्रत्ययस्येट् स्यात् ॥ ग्रह उपादाने । ग्रहामिति संप्रसारणम् । ईटो ग्रहामिति दीर्घः । निगृहीतिः ॥ पठ व्यक्तायां वाचि । निपठितिः॥

**( त० ) ग्रहादीनामिति ॥** पूर्वेण निषेधे प्राप्ते वचनम् । स्फातिः । यवयोरिति यलोपः । न च स्फायः स्फी ति कितीत्युक्तेरत्रापि स्फीर्भविष्यतीति वाच्यम् । क्तक्तवत्वोरेव तत्राधिकृतत्वेन लाभात् नान्यस्य । स्फोतिकाम इत्यत्र क्तान्तात् औ ततइप्रत्यये समाधेयम् ॥ ४७ ॥

**( ग्लादेर्निः )** ग्लानिः । म्लानिः । त्वरतेर्वस्योत्वम् तूर्णिः ॥ ४८ ॥

**( सु० ) ग्लादेर्निः ॥** ग्लादेर्धातोर्निः प्रत्ययः स्यात् ॥ ग्लै म्लै हर्षक्षये । ग्लानिः ॥ म्लानिः । ञित्वरा सम्भ्रमे । ज्वरत्वरेत्यूः तूर्णिः ॥ ४८ ॥

**(ऋल्वादिभ्यः क्तेर्निः)** कीर्णिः । गीर्णिः । लूनिः । धूनिः ॥४९॥

**( सु० ) ऋल्वादिभ्यः क्तेर्निः ॥** ऋवर्णान्तात ल्वादिभ्यश्च परस्य क्तेर्निः स्यात् ॥ कॄ विक्षेपे । ऋत इरितीर् । 'य्वोर्वि हसे' इति दीर्घः । कीर्णिः ॥ गॄ निगरणे । गीर्णिः ॥ लूञ् छेदने । लूनिः ॥ धूञ् कम्पने । धूनिः ॥ ४९ ॥

**(सम्पदादेः क्विब्वा)** सम्पदनं सम्पत् । सम्पत्तिः । कर्तरि क्तिः ॥५०॥

**( सु० ) सम्पदादेः क्विब्वा ॥** पक्षे क्तिः । पद गतौ । सम्पत् । विपत् । सम्पत्तिः । विपत्तिः । कर्तरि क्तिः ॥ ५० ॥

**( संज्ञायाम् )** प्रकुरुते इति प्रकृतिः ॥ ५१ ॥

---

( क ) क्तिरिति कित्त्वाद् गुणाभावः ।

( सु० ) **संज्ञायाम्** ॥ धातोः कर्तरि क्तिः स्यात्संज्ञायां वाच्यायाम् ।। प्रकुरुते इति प्रकृतिः ।। ५१ ।।

**(षिद्भिदामङ्)** षितो धातोर्भिदादेश्च स्त्रियामङ् ॥ पचा मृजा॥५२॥

(सु०) **षिद्भिदामङ्** ॥ षितो धातोर्भिदादिभ्यश्च स्त्रियामङ् स्यात् ।। डुपचष् पाके । आबत इत्याप् । पचा । मृजूष शुद्धौ । मृजा । कथं तर्हि 'मधुसुरभिमुखाब्जगन्धलब्धे" इति माघः ॥ 'प्रेक्षोपलब्धिश्चित्सम्वित्' इत्यमरश्च(क) ।। षित्वादिहाङ्प्रत्यय उचितः, सत्यम् । 'अनर्थकास्तु प्रतिवर्णमनुपलब्धेः' इति भाष्यप्रयोगाद्बाहुलकात् क्तिप्रत्ययोऽपि बोध्यः॥

( त० ) **षिद्भिदा**मिति ।। ष इदेषां ते षितः ते च भिदश्च तेषाम् ।। ५२ ।।

**( ऋतोऽङि गुणः )** जरा । भिदा । छिदा । कृपा । क्षिपा । गुहा ५३

( सु० ) **ऋतोऽङि गुणः** ॥ ऋतो धातोर्गुणः स्यादङि परे ।। जॄषिर् वयोहानौ । जरा ।। भिदिर् विदारणेऽर्थे भिदा । अन्या भिद्यते इति भित्तिः कुड्यम् ।। छिदिर् द्वैधीकरणे । छिदा । द्वधोकरणे एवायम् । अन्यत्र तु छिद्यते इति छित्तिः छिद्रम् । क्रपेः सम्प्रसारणं च । क्रप कृपायामस्य सम्प्रसारणं स्यादङि परे । कृपा ।। क्षिप प्रेरणे । क्षिपा ।। गुहू संवरणे गुहा ।। ५३ ।।

( त० ) **भिदे**ति विदारणे एव । अन्यत्र भित्तिः । छित्तिः ।। **गुहे**ति कन्दरौषध्योः । अन्यत्र गूढिः ।। ५३ ।।

**( गुरोर्हसात् )**(ख) गुरुमतो हसान्तास्त्रियामङ् । न क्तिः ॥ ईहा । ऊहा । कुण्डा ॥ ५४ ॥

( सु० ) **गुरोर्हसात्** ॥ ईह चेष्टायाम् । ईहा ।। ऊह वितर्के । ऊहा ।। कुडि दाहे । कुण्डा ।। गुरुमत इति किम् । भक्तिः ।। हसान्तादिति किम् । नीतिः ।। ५४ ।।

( त० ) **गुरो**रिति ।। हसेन धातोर्विशेषणात्तदन्तलाभ इत्याह—**हसान्ता**दिति ।। तथा च तादृशसमुदायो न गुरुर्भवितुमर्हतीति गुरुपदं तद्वल्लक्षकमित्याशयेनाह—**गुरुमत** इति ।। प्रशंसायां रूप इत्यादिनिर्देशाद्विपर्ययोऽपि नाशङ्क्यः ।। ५४ ।।

**(प्रत्ययान्तात्)** (ग) स्त्रियामङ् ॥ चिकीर्षा । लोलूया । कण्डूया । पुत्रकाम्या ।। ५५ ॥

( सु० ) **प्रत्यान्तात्** ॥ प्रत्ययान्ताद्धातोरङ् प्रत्ययः स्यात्स्त्रियाम् । डुकृञ् करणे।

---

( क ) अभिमुपयाति मा स्म किञ्चित् त्वमभिदधाः पटले मधुव्रतानाम् ।
मधुसुरभिमुखाब्जगन्धलब्धेरधिकमधित्वदनेन मा निपाति ॥ इति शिशुपालवधनामकाव्यस्य ७ सर्गे ४१ श्लोकः ॥ **लब्धेरिति** । अत्र मनोरमा—अनेकार्थस्तु प्रतिवर्णमनुपलब्धेरिति भाष्यप्रयोगात् क्तिबोध्यः । तेनान्येषामपि तथा बोध्यमिति ।

( ख ) **गुरोरिति** । धातोरित्यनुवृत्त्या हस इति धातोर्विशेषणात्तदन्तविधौ हसन्तोधातुर्लभ्यते॥ न-चायं गुरुरिति सम्भवति । स्वरविषयो हि गुरुः, अतो मत्वर्थो लक्ष्यते तदाह—**गुरुमत** इति ॥ ननु विपरीतमस्तु गुर्वन्ताद्धसादिति तादृशस्यापि धातोर्डुक्रीञ् इत्यादेः सत्त्वादिति चेन्मैवम् ॥ 'चेष्टायामध्वानि' प्रशंसायां रूपप् इति निर्देशाद् विपरीतशङ्कयाः अप्रवृत्तेः ॥

( ग ) प्रत्यायान्तेभ्यो धातुभ्यः स्त्रियामङ्स्यादिति योजना ॥

अस्मात् इच्छायामात्मन इति सप्रत्यये कृते 'वुः से' इतीण्न । 'नानिटिसे' इति न गुणः । 'से दीर्घः, इति दीर्घे कृते ऋत इरितीर् । 'य्योर्वि इसे' इति दीर्घः । द्वित्वादि पूर्ववत् । स धातुरिति धातुत्वादङ् । कर्तुमिच्छति चिकीर्षतीति चिकीर्षा ।। लूञ् छेदने । अस्मादतिशये हसादेरिति यङ् द्वित्वं च । यङीति पूर्वस्य गुणः । लोलूयते इत्यस्मादङ् प्रत्यये यत इत्यलोपः । अतिशयेन लुनाति लोलूयते इति लोलूया ।। कण्डूञ् गात्रविघर्षणे अस्मात् कण्ड्वादिभ्य इति यक् । यगन्तादङि परे यत इत्यलोपः । कण्डूयते इति कण्डूया ॥ पुत्रशब्दात्काम्यश्चेति काम्यप्रत्ययस्ततोऽङ् । यत इत्यलोपः पुत्रमिच्छति पुत्रकाम्यतीति पुत्रकाम्या ॥ ५५ ॥

(त०) प्रत्ययान्तात्॥ कण्डूयेति कण्ड्वादियगान्तात्केवलात् क्तिरपि ॥ कण्डूतिः ५५

**(धात्वर्थनिर्देशे वुण् वक्तव्यः)** (क) आशिका । शायिका ॥५६॥

(सु०) **धात्वर्थनिर्देशे वुण् वक्तव्यः** ॥ आशिका । शायिका काप्यत इतीत्वम् ॥

**( इक्श्तपौ धातुनिर्देशे )** (ख) पचिः । पचतिः ॥ ५७ ॥

( सु० ) **इक्श्तपौ धातुनिर्देशे** ॥ इक्श्तपौ प्रत्ययावाह—कित्त्वाद् गुणोन । शित्वाच्चतुर्वत् । डुपचष् पाके । पचिः ॥ अप् कर्तरीत्यप् । पचतिः ॥ बहुलमित्यनुवृत्तेः क्वचिन्नैतौ भुवो वुगित्यादौ ॥ ५७ ॥

(त०) इक्श्तपाविति ॥ निर्देशोऽनुकरणम् । बाहुलकत्वात्क्वचिन्न गुब्भ्य इत्यादौ ॥

**(ण्यन्तार्थासश्रन्थघट्टवन्दिविदिइषिभ्यः स्त्रियां युः )**

कारणा । हारणा । अर्थना । आसना । श्रन्थना । घट्टना । वन्दना । वेदना । एषणा ५८

( सु० ) **ण्यन्तार्थासश्रन्थघट्टिवन्दिविदिइषिभ्यः स्त्रियां युः** ॥ एभ्यो युः स्यात् ॥ अङोऽपवादः । युप्रत्ययमाह-युवोरित्यनादेशः । डुकृञ् करणे । णेरिति णिलोपः कारणा ॥ हृञ् हरणे । हारयतीति हारणा ॥ अर्थ याच्ञायाम् । अर्थयतीति अर्थना ॥ त्रीण्यपि ण्यन्तोदाहरणानि ॥ आस उपवेशने । आसतेऽस्यामिति आसना । ण्यप्रत्यये तु आस्या ॥ श्रन्थ सन्दर्भे । श्रन्थना । घट्ट चलने ॥ घट्टना । वदि अभिवादनस्तुत्योः । वन्दना ॥ अत्र विदॢ लाभे अयमेव गृह्यते । वेदना । ज्ञानार्थस्य विदेस्तु संवित्तिः ॥ अनिच्छार्थस्येषेरत्र ग्रहणम् । इष गतौ । अन्वेषणा ॥ ५८ ॥

( त० ) ण्यन्ता० ॥ घट्ट चलने भ्वादिः । चुरादेस्तु ण्यन्तत्वादेव सिद्धः ॥ विदॢ लाभार्थः । दाने तु विद चेतनादिष्विति चुरादिण्यन्तस्यैव ॥ इषेस्तु गत्यर्थस्याभीक्ष्ण्यार्थस्य च न त्विच्छार्थस्य ॥ ५८ ॥

**( इञजादिभ्यः )** आजिः । आटिः । आतिः ॥ ५९ ॥

---

( क ) **धात्वर्थनिर्देश इति** । क्रियानिर्देश इत्यर्थः ॥ **आशिका इति** । क्वचित् आसिकेति पाठः ॥ आसिका आसनमित्यर्थः ॥ **शायिकेति** । शयनमित्यर्थः ॥

( ख ) **पचतिरिति** । ध्यायते क्विपि संप्रसारणमित्यादिनिर्देशात्कर्तृवाचिन्यपि चतुर्षु श्रवादयः । एवं भावकर्मण्यपि चतुर्षु क्वचिद् यक् । यत्तु शित्करणसामर्थ्यादबादय इत्युक्तम्, तन्न, पिबतिग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्त्वनिवृत्त्या च शित्वस्य चरितार्थत्वात् ॥

( सु० ) इञजादिभ्यः ॥ अजप्रभृतिभ्यो धातुभ्य इञ् स्यात् ॥ इञ् प्रत्ययमाह—ञित्वाद्वृद्धिः ॥ अज गत्यादौ । बाहुलकादजेर्वीभावो न । आजिः संग्रामः । अट गतौ । आटिः ॥ अत सातत्यगमने । आतिः ॥ ५९ ॥

( त० ) इञजा० ॥ ञित्वाद्वृद्धिः ॥ आजिरिति ॥ वीभावस्तु न बाहुलकात्५९

**( विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च )**

**( आक्रोशे नञ्यनिः )** अकरणिः । अजननिः ॥ ६१ ॥

( सु० ) विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च ॥ परिप्रश्ने आख्याने च गम्ये धातोरिञ् वा स्याद्वुण् च ॥ यथाप्राप्तमन्येऽपि प्रत्यया भवन्ति । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः ॥ एवं गणिं गणिकां गणनाम् ॥ पाचिं पाचिकां पचां पक्तिम् ॥ आख्यानेऽप्येवम् ॥ ६० ॥

**( इक् कृष्यादिभ्यः )** कृषिः । गिरिः ॥ ६२ ॥

( सु० ) इक् कृष्यादिभ्यः ॥ इकप्रत्ययमाह—कित्वान्न गुणः ॥ कृष विलेखने । कृषिः ॥ गॄ निगरणे । ऋत इरितीर् । गिरिः ॥ कॄ विक्षेपे । किरिः ॥ आवश्यकाधमर्ण्ययोर्णिनिः । अवश्यं कारी ॥ शतं दायी ॥ भविष्यदर्थे णिनिश्च । ग्रामं गामी ॥ ६२ ॥

( त० ) इक् ॥ कित्वान्न गुणः ॥ कृषिरिति ॥ ऋत इर् । गिरिः ॥ ६२ ॥

**( पूर्वकाले क्त्वा )** धातोः समानकर्तृके धातौ प्रयुज्यमाने पूर्वकालेऽर्थे क्त्वाप्रत्ययः ॥ ६३ ॥

( सु० ) पूर्वकाले क्त्वा ॥ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् ॥ (क) पूर्वकाले इति बहुव्रीहिः । क्त्वा तु अव्ययकृतो भाव इति भावे । भावोऽपि घञादाविव नेह सिद्धावस्थापन्नः किन्तु साध्यावस्थापन्नः स च धातुनैव लब्धः । क्त्वाप्रत्ययार्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं भवति (ख) । क्त्वाप्रत्ययमाह । कित्वान्न गुणः । क्त्वाद्यन्तमित्यव्ययत्वाद्विभक्तेर्लुक् ॥ ६३ ॥

(त०) पूर्वकाले ॥ धातोरिति ॥ पूर्वकालक्रियावचनादित्यर्थः । समानकर्तृके धातौ प्रयुज्यमाने यस्माद्धातोः क्त्वा विधीयते तत्क्रियाकर्ता यस्य धातोः कर्ता तस्मिन्प्रयुज्यमाने क्त्वाप्रत्ययो भवतीत्यर्थः ॥ स्नात्वा भुङ्क्ते इत्यत्र स्नानभोजनक्रिययोरेक एव कर्ता । स्नानक्रियायाः पूर्वभावित्वेन स्नाधातोः क्त्वा । यद्यपि शक्तिः कारकं सा च प्रतिक्रियं भिद्यते तथापि शक्तिशक्तिमतोरभेदादेककर्तृकत्वमुक्तम् । एवमेककर्तृकाणामपि नत्वा स्तुत्वा व्रजति । ननु चात्र सर्वपूर्वाया एव भविष्यति । यथामीषां विप्राणां पूर्वं आनीयतामित्युक्ते सर्वपूर्वं एवानीयते । अत्र वदन्ति । आख्यातवाच्याः क्रियायाः प्राधान्यम् । तेन तामेव प्रति सर्वासां विशेषणत्वात्परस्परेण सम्बन्धः । नहि भिक्षुको भिक्षुकान्तरं याचते किन्तु

---

( क ) समानकर्तृक इति । इह धात्वधिकारेऽपि समानकर्तृकत्वं क्रिययोरेव सम्भवतीत्याशयेनाह—धात्वर्थयोरिति । निर्धारणे षष्ठी सप्तमी वा । धात्वर्थयोर्मध्ये पूर्वः कालो यस्य धात्वर्थस्य तस्मिन् विद्यमानादित्यर्थः । एवञ्च निर्धारणे विभक्तिरेव पूर्वकाले इत्यस्य बहुव्रीहित्वद्योतिकेति फलितम् ।

( ख ) विशेषणं भवतीति । धातुसम्बन्धाधिकारात् । संसर्गश्चेह सामानाधिकरण्यं पूर्वोत्तरकालत्वञ्च ॥

सर्व एव प्रभुमिति यथा तथा स्तुतेरिह प्रज्यपेक्षं पौर्वकाल्यमिति । पूर्वं भुङ्क्ते ततो व्रजतीत्यत्र तु पूर्वशब्देनैव कालस्योक्तत्वान्न क्त्वाप्रत्ययः । आस्यते भोक्तुमित्यपि भवति । आसित्वा भोक्तुमिति न भवति अनभिधानात् । किं त्वासित्वा भुङ्क्त इत्येव ॥ ६३ ॥

(क्त्वा सेट् किन्न) (क)धातोः सेट् क्त्वा किन्न ॥ वर्तित्वा । शयित्वा ॥

( सु० ) क्त्वा सेट् किन्न ॥ धातोः परः सेट् क्त्वा किन्न स्यात् ॥ वृतु वर्तने । कृत इतीट् । वर्तित्वा ॥ शीङ् स्वप्ने । शयित्वा ॥ सेट् किम् । कृत्वा । कित इतीण्न।६४।

( मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्राहिभ्यः कित् ) मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा । विदित्वा । मुषित्वा । गृहीत्वा ॥ ६५ ॥

( सु० ) मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्रहिभ्यः कित् ॥ एभ्यो धातुभ्यः सेट् क्त्वा कित् ॥ मृड सुखे । मृद क्षोदे । गुध परिवेष्टने गुध रोषे च । कुष निष्कर्षे । क्लिश उपतापे दिवादिः । क्लिशू विबाधने क्र्यादिः । वद व्यक्तायां वाचि । वस निवासे । रुदिर् अश्रुविमोचने । विद ज्ञाने । मुष स्तेये । ग्रह उपादाने । मृड मृडित्वा ॥ मृद मृदित्वा ॥ गुध गुधित्वा ॥ कुष कुषित्वा ॥ क्लिश क्लिशित्वा । क्लिशू ऊदित्त्वाद्वेट् । क्लिशित्वा क्लिष्ट्वा ॥ वद । यजामिति संप्रसारणं । उदित्वा। वस । वसतिक्षुधोरितीट् । यजा मिति सम्प्रसारणम् । घसादेरिति षः । उषित्वा ।। रुदिर् रुदित्वा ॥ विद् विदित्वा मुष मुषित्वा ॥ ग्रह । ग्रहामिति संप्रसारणम् । ईटो ग्रहामिति दीर्घः । गृहीत्वा ॥६५॥

(नोपधात्थफान्ताद्वा)(ख) ग्रन्थित्वा -ग्रथित्वा । गुम्फित्वा गुफित्वा ॥

( सु० ) नोपधात्थफान्ताद्वा ॥ नोपधाद्धातोः थफान्ताच्च परः सेट् क्त्वा वा कित्स्यात् ॥ ग्रन्थ संदर्भे । कित्त्वान्नो लोप इति न लोपः । ग्रथित्वा-ग्रन्थित्वा ॥ गुम्फ गुम्फने । कित्त्वपक्षे नलोपः गुफित्वा-गुम्फित्वा । नोपधात्किम् । कोथित्वा । रेफित्वा । कुथ पूतीभावे । रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । इह इवर्णोपधादिति विकल्पोऽपि न भवति नोपधग्रहणसामर्थ्यात् ॥ ६६ ॥

( अलंखल्वोः प्रतिषेधे ) अलंभुक्त्वा खलुकृत्वा ॥ ६७ ॥

( सु० ) अलंखल्वोः प्रतिषेधे ॥ प्रतिषेधे धात्वर्थे अलंखल्वोरुपपदयोर्धातोः क्त्वा स्यात् । भुज पालनादौ । अलंभुक्त्वा ॥ डुकृञ् करणे । कित इतीण्न । खलु कृत्वा ॥ अलंखल्वोः किम् । मा कार्षीत् । प्रतिषेधे किम् । अलङ्कारः ॥ ६७ ॥

( उदितः क्त्वो वेट् ) एषित्वा—इष्ट्वा । श्रमित्वा—श्रान्त्वा ॥६८॥

( सु० ) उदितः क्त्वो वेट् ॥ उदितो धातोः परस्य क्त्वाप्रत्ययस्येड्वा स्यात् ॥

---

( क ) क्त्वा' इति । यदागमस्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति न्यायेन क्त्वासम्बन्धिन इटः कित्त्वप्राप्ते निषेधः ॥ इट्सहितस्य कित्त्वनिषेधात् तत्सम्बन्धिन इटोऽपि कित्त्वाभावो विज्ञापित इति भावः॥

( ख ) नोपधात्थ । इत्यत्रान्तग्रहणं स्पष्टार्थम् । थफादित्युक्तेऽपि धातोरेव क्त्वाप्रत्ययविधानाद्विशिष्यस्विधानेन तदन्तविधिना थफान्तादिति लाभात् ॥

इषु इच्छायाम् । उदित्त्वाद्वेट् इट्पक्षे क्त्वा सेडित्यकित्वाद् गुणः । एषित्वा । इडभावे ष्टुत्वम् । इष्ट्वा ॥ भ्रमु चलने । उदित्त्वाद्वेट् । भ्रमित्वा । इडभावे नमान्तस्येति दीर्घः । भ्रान्त्वा ॥ ६८ ॥

( त० ) उदित इति ॥ उदिद्यस्य स तथा तस्मात् ॥ ६८ ॥

( अदो जघ्धः ) जग्ध्वा ॥ ६९ ॥

( सु० ) अदो जघ्धः ॥ अद्भक्षणे अस्य जघादेशः क्त्वाप्रत्यये । तथोर्ध इति धः । खसे चपा इति घस्य कः । झबे जबा इति कस्य गः जग्ध्वा ॥ ६९ ॥

( समासे क्यप् ) समासे सति पूर्वकाले क्यप् ॥ समानकर्तृके धातौ प्रयुज्यमाने । संभृत्य करोति । प्रणम्य यच्छति । अनञ्पूर्व इत्येके(क) । अकृत्वा

( सु० ) समासे क्यप् ॥ अव्ययपूर्वपदेऽनञ्समासे समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्यप् स्यात् । क्यप्प्रत्ययमाह–कित्वाद् गुणो न । पित्वात् ह्रस्वस्य पितीति तुक् । डुभृञ् धारणादौ । णम प्रह्वत्वे शब्दे च । सम् प्रशब्दौ नाम्नश्च कृतेति क्त्वान्तेन नित्यं समस्येते । संभृत्य । प्रणम्य । अनञ् किम् । अकृत्वा ॥ अव्ययपूर्वपदे इति किम् । परमकृत्वा । मान्तानिटां धातूनां तु मस्य लोपो वा भवति क्यपि । वनति तनोत्यादीनां तु लोपस्त्वनुदात्ततनामिति नित्यं नमस्य लोपः । आगत्य आगम्य। प्रणत्य प्रणम्य । अन्यत्र तु नित्यम् । प्रहत्य । प्रमत्य । वितत्य ॥ ७० ॥

( त० ) समासे क्यप् ॥ समानकर्तृकत्व एव । यत्तु 'मत्प्रसूतिमनाराध्य' इत्यादिमहाकविप्रयोगाद्भिन्नकर्तृकेऽपि क्यबिति वाछदेवेनोक्तं तन्महान्तो न क्षमन्ते । स्थितस्येत्यध्याहारेणैव तत्र निर्वाहः । ओदनः पक्त्वा भुज्यत इत्यत्र प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत्प्रकाशते इति न्यायात्प्रधानक्रियया कर्मोक्तमतो गुणक्रियायाः कर्मविभक्तिप्राप्तिर्न भवति ॥ ७० ॥

( क्यपि लघुपूर्वात्परस्य णेरय् ) परिणमय्य । लघुपूर्वात्किम् । संप्रधार्य ॥ ७१ ॥

( सु० ) क्यपि लघुपूर्वात्परस्य णेरय् ॥ लघुः पूर्वो यस्माद्वर्णात्तस्माल्लघुपूर्ववर्णात्परस्य णेरयादेशः स्यादित्यर्थः ॥ णम प्रह्वत्वे शब्दे च । अस्मात्प्रयोजकञिप्रत्यये जनीजृषित्यमन्तत्वान्मित्वम् । मितां ह्रस्व इति ह्रस्वस्ततो णेरयादेशः । प्रणमय्य ॥ गणसंख्याने चुरादिरदन्तः । अस्मात्स्वार्थे ञिप्रत्यये यत इत्यलोपः । नन्विह कृतस्याल्लोपस्य स्थानिवद्भावेन लघुपूर्वकवर्णात्परत्वं नास्ति कथमयादेशः स्यात् । उच्यते । अत्रायादेशे कर्तव्ये अल्लोपस्य स्थानिवत्त्वं भाष्यादौ न स्वीकृतमस्ति । विगणय्य ॥ लघुपूर्वादिति किम् । संप्रधार्य । संपूर्वात् धृ धारणे अस्मात्प्रयोजकञिप्रत्ययान्तात् क्यपि कृते णेरिति णिलोपः

( आप्नोतेर्वा ) प्रापय्य–प्राप्य ॥ ७२ ॥

( सु० ) आप्नोतेर्वा ॥ आप्लृ व्याप्तावस्मात्परस्य णेरयादेशो वा स्यात् ॥ अप्रा-

(क)'अनञ्' इति । नञ्भिन्नं नञ्सदृशमव्ययभिन्नमिति यावत् । अकृत्वा । पर्युदासाश्रयणान्नेह । परमकृत्वा ।

सविभाषेयम् । तथा च श्रीहर्षः–'अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलुपात्यते' (क) इत्यत्रावाप्येत्यस्यावापत्यर्थो बोध्यः ॥ ७२ ॥

(**क्यपीत्वाभावः**) प्रदाय । प्रधाय । प्रस्थाय । प्रसाय । मीनातिमिनोतित्यात्वम् । प्रमाय । निमाय । एवं लिलीङोरात्वं वेत्यादि । विलीय–विलाय

( सु० ) **क्यपीत्वाभावः** ॥ दादेरितीत्वं स्थामीतीत्वं च प्राप्तमनेन निषिध्यते ॥ डुदाञ् दाने । प्रदाय ॥ डुधाञ् धारणादौ । प्रधाय ॥ ष्ठा गतिनिवृत्तौ । प्रस्थाय ॥ षोऽन्तकर्मणि । प्रसाय ॥ कथं तर्हि 'निपीय यस्य' इति श्रीहर्षप्रयोग इति चेदत्राहुः । दिवादिगणस्थस्य पीङ् पाने इत्यस्य रूपमिति ॥ ७३ ॥

( **अपूर्वकालेऽपि क्वचित्** ) मुखं व्यादाय स्वपिति । नेत्रे निमील्य हसति ॥ ७४ ॥

( सु० ) **अपूर्वकालेऽपि क्वचित्** ॥ क्यप् स्यात् ॥ डुदाञ् दाने । व्यादाय । यदैव स्वपिति तदैव मुखं व्यादत्ते ॥ मील निमीलने । निमील्य यदैव हसति तदैव नेत्रे सम्मीलयतीत्यर्थः ॥ ७४ ॥

( **पौनः पुन्ये णम्पदं द्विश्च** ) (ख)समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले धातोर्णम् । क्त्वा च णमन्तस्य ॥ द्विर्वचनम् ॥ पायंपायं गच्छति । भोजं भोजम् । स्मारंस्मारम् ॥ मितां ण्यन्तानामिणि णमि च वा दीर्घः । गामंगामम्–गमंगमम् । लाभंलाभम्–लम्भंलम्भम् ॥ ७५ ॥

( सु० ) **पौनः पुन्ये णम्पदं द्विश्च** ॥ पौनःपुन्ये द्योत्ये समानकर्तृकयोः पूर्वकाले धातोर्णम् स्याच्चकारात् क्त्वा णमन्तस्य द्वित्वं च ॥ णम्प्रत्ययमाह—णित्वाद्वृद्धिः । क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् । पा पाने । अस्मात् णमि कृते आतो युगिति युक् । पायं पायम् । पक्षे पीत्वा पीत्वा । स्थामीतीत्वम् ॥ भुजपालनादौ । भोजंभोजम् । भुक्त्वा भुक्त्वा ॥ स्मृ चिन्तायाम् । स्मारं स्मारम् । पक्षे स्मृत्वा स्मृत्वा ॥ गम्लृ गतौ । ण्यमान्तस्य णमि कृते जनीजषित्यमन्तत्वान्मित्संज्ञायां मितां ह्रस्व इति ह्रस्वे कृते मितांण्यन्तानामिणि णमि चेति वा दीर्घः । गामं गामम् । गमं गमम् । पक्षे गत्वागत्वा ॥ डुलभष् प्राप्तौ अस्मात् णमि कृते लभेरिण्णमोरिति वा नुम् । लम्भंलम्भम् । नुमभावे वृद्धिः । लाभंलाभम् । पक्षे लब्ध्वा लब्ध्वा ॥ ७५ ॥

( त० ) **पौनः पुन्ये णम्पदं द्विश्च** ॥ णमन्तस्य नामत्वात्स्यादौ पदत्वम् । **पायं पाय**मिति ॥ आतो युगिति युक् ॥ **गामंगाम**मिति ॥ मितां ण्यन्तानामिति दीर्घः ॥ **लम्भं लम्भ**मिति ॥ णमि वा नुम् । व्यवस्थितत्वादुपसृष्टे प्रलम्भमित्यादौ नित्यमेव ७५

---

( क ) **श्रीहर्ष इति** । सम्पूर्णश्लोकोऽयम्, तद्यथा—

अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते ।
शितिनिशादृषदि चणमुत्पतत् कणगणाधिकतारकिताम्बरः ॥ इति ॥ स० ४ ॥

( ख ) **द्विर्वचेति** । ननु वासरूपन्यायेन क्त्वाप्रत्ययो भविष्यतीति चग्रहणमिह व्यर्थमिति चेन्मैवम्, उक्तन्यायस्वीकारे तु लडादिरपीहप्रवर्तते ।

**( कथमादिषु स्वार्थे कृञो णम् )** (क)कथंकारम् । अन्यथाकारम् । एवंकारम् । इत्थंकारं पठति । इत्थं पठतीत्यर्थः ॥ ७६ ॥

(सु०) **कथमादिषु स्वार्थे कृञो णम्** ॥ कथमित्थमन्यथैवमित्यादिषूपपदेषु कृञो णम् स्याद्यदि कृञ् प्रयोगाऽनर्हः स्यात् ॥ कथंकारं पठति । कथं पठतीत्यर्थः । अन्यथाकारं भुङ्क्ते। अन्यथा भुङ्क्ते इत्यर्थः ॥ एवंकारं करोति । एवं करोतीत्यर्थः ॥ इत्थंकारं वदति । इत्थं वदतीत्यर्थः ॥ प्रयोगाऽनर्ह इति किम्। शिरोऽन्यथा कृत्वा भुङ्क्ते ॥ ७६ ॥

**(अग्रेप्रथमपूर्वेषूपपदेषु क्त्वाणमौ वा)** अग्रेभोजं व्रजतीति-अग्रे भुक्त्वा । प्रथमं भोजम्—प्रथमं भुक्त्वा । पूर्वंभोजम्—पूर्वंभुक्त्वा । पक्षे प्रत्ययाभावः । अग्रे भुङ्क्ते ततो व्रजति । आभीक्ष्ण्ये तु पूर्वेण नित्यमेव णम् । अग्रेभोजं भोजं व्रजति ॥ ७७ ॥

( सु० ) **अग्रेप्रथमपूर्वेषूपपदेषु क्त्वाणमौ वा** ॥ पौनः पुन्ये इति नानुवर्तते एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमौ वा स्तः ॥ अग्रे इति सप्तम्यन्तस्यानुकरणम् । प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वाद्विभक्तेर्लुक् न कृतः ॥ अग्रेभोजम् अभुग्रेक्त्वा वा व्रजति । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीत्यर्थः । पक्षे लडादयः । अग्रेभुङ्क्ते । पौनः पुन्ये तु नित्यमेव णम् क्त्वा च । अग्रेभोजं भोजम् अग्रेभुक्त्वा भुक्त्वा वा व्रजति ॥

**( कर्मण्याक्रोशे कृञः खमुञ् )** चौरङ्कारमाक्रोशति । चौरशब्दमुच्चार्येत्यर्थः ॥ ७८ ॥

( सु० ) **कर्मण्याक्रोशे कृञः खमुञ्** ॥ कर्मण्युपपदे आक्रोशे गम्ये करोतेः खमुञ् ॥ खमुञ्प्रत्ययमाह—खित्त्वात्खिति पदस्येति मुम् । ञित्त्वाद्वृद्धिः । उकार उच्चारणार्थः । अत्र करोतिरुच्चारणेऽर्थे वर्तते । चौरङ्कारमाक्रोशति । चौरशब्दमुच्चार्येत्यर्थः ॥ ७८ ॥

( त० ) **चौरङ्कारमिति** ॥ खित्वान्मुम् । करोतिरत्रोच्चारणार्थः । चौरादयश्च शब्दप्रधानाः । चौर इति शब्दमुच्चार्य क्रोशतीत्यर्थः । नात्र चौरत्वं कारणं कित्वाक्रोशसम्पादनार्थमचौरोऽपि चोर इत्युच्यते ॥ ७८ ॥

**(स्वाद्वर्थेषु स्वाद्वर्थे कृञो णम् )** एककर्तृकयोः पूर्वकाले । पूर्वपदस्य मान्तत्वं निपात्यते ॥ अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते । सम्पन्नं कारम् । लवणंकारम् । सम्पन्नलवणशब्दौ स्वादुपर्यायौ । क्त्वाऽपि स्वादुंकृत्वा भुङ्क्ते ॥ ७९ ॥

( सु० ) **स्वाद्वर्थेषु स्वाद्वर्थे कृञो णम्** ॥ स्वादुपर्यायेषूपपदेष्वेककर्तृकयोः पूर्वकाले करोतेर्णम् स्यात्पूर्वपदस्य मान्तत्वं निपात्यते ॥ ७९ ॥

( त० ) **स्वाद्वर्थेषु स्वाद्वर्थे इति** । प्रकृतेन खमुञा सिद्धेऽप्यव्ययत्वान्नुम्न स्यादापश्च निवृत्तिः स्यादित्याद्यर्थं निपातनम् । अस्वाद्वीं स्वाद्वीं कृत्वा यवागूं भुङ्क्ते स्वादुङ्कारं यवागूं भुङ्क्ते(ख) ॥ ७९ ॥

---

( क ) स्वार्थइति । स्वस्य अर्थे स्वार्थे, स्वस्य कथमादेः ॥ ( ख ) यवागूं यवद्रव्यम् ।

**( यथातथयोरसूयाप्रतिवचने कृञः सिद्धाप्रयोगे णम् )** यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये किं तवानेन । सिद्धाप्रयोगे किम् । सिद्धं कृत्वा भुङ्क्ते ॥ ८० ॥

( सु० ) **यथातथयोरसूयाप्रतिवचने कृञः सिद्धाप्रयोगे णम्** ॥ यथातथयोरुपपदयोः करोतेः सिद्धाप्रयोगे णम् स्यात् । सिद्धः अप्रयोगोऽस्य एवं भूतश्चेत् कृञ् व्यर्थत्वात् प्रयोगानर्हं इत्यर्थः । गुणेषु दोषारोपणमसूया असूयया प्रतिवचनं असूयाप्रतिवचनं तस्मिन् वाच्ये सति । यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये । यथा भोक्ष्येऽहं तथा भोक्ष्ये इत्यर्थः ॥

( त० ) **सिद्धाप्रयोगे** इति ।। सिद्धः अप्रयोगोऽस्य कृञो निष्प्रयोजनत्वात्प्रयोगानर्हं इत्यर्थः ॥ ८० ॥

**(कर्मणि दृशिविदोः साकल्ये)** कन्यादर्शं वरयति (क) । सर्वाः कन्या इत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तं तं सर्वं भोजयतीत्यर्थः ॥ ८१ ॥

( सु० ) **कर्मणि दृशिविदोः साकल्ये** ॥ कर्मण्युपपदे दृशिविदोर्णम् स्यात् साकल्ये ॥ सकलस्य भावः साकल्यं तस्मिन् ॥ दृशिर् प्रेक्षणे विद् ज्ञाने विद्लृ लाभे विद्विचारणे इति त्रयाणां ग्रहणम् (ख) ॥ ८१ ॥

**(यावति विन्दजीवोः)** यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः ॥ यावज्जीवमधीते विप्रः ॥ ८२ ॥

( सु० ) **यावति विन्दजीवोः** ॥ यावच्छब्दे उपपदे विद्लृ लाभे जीव प्राणधारणे आभ्यां णम् स्यात् ॥ ८२ ॥

( त० ) **यावदिति** ॥ पूर्वकाल इतीह नास्ति । असाकल्यार्थमिदम् । साकल्ये दृशिविदोरित्येव सिद्धेः ॥ ८२ ॥

**(कर्मणोश्चर्मोदरयोः पूरेः)** चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ॥ ८३ ॥

( सु० ) **कर्मणोश्चर्मोदरयोः पूरेः** ॥ चर्मोदरयोः कर्मणोरुपपदयोः पुरी आप्यायनेऽस्मात् णम् स्यात् ॥ चर्मपूरं स्तृणाति । आच्छादयतीत्यर्थः ॥ ८३ ॥

**( कर्मण्युपपदे पूरेरूलोपश्च वा वर्षप्रमाणे गम्ये )** गोष्पदप्रं वृष्टो देवः । गोष्पदपूरं वा । मूषिकाबिलप्रं वृष्टो देवः । मूषिकाबिलपूरं वा ।

( सु० ) **कर्मण्युपपदे पूरेरूलोपश्च वा वर्षप्रमाणे गम्ये** ॥ णम् स्यात् समुदायेन वर्षप्रमाणे वर्षस्य वृष्टेः प्रमाणं तस्मिन् गम्ये ॥ 'वृष्टिर्वर्षम्' इत्यमरः ॥ ८४ ॥

**( चैलार्थेषु कर्मसूपपदेषु क्नोपेर्वर्षप्रमाणे )** चैलक्नोपं वृष्टो

---

( क ) **कन्यादर्शमिति** । अत्र दर्शनीयविषयीभूतानां सर्वासां कन्यानां वाक्यार्थेऽन्वयात्साकल्यं बोध्यम् । **सर्वा इति** । दर्शनविषयीभूताः सर्वा इत्यर्थः ॥

( ख ) सत्तार्थकस्य विधेरनैकार्थत्वान्नेह ग्रहणमिति भावः ॥

देवः । वस्त्रक्नोपम् । वसनक्नोपम् ॥ ८५ ॥

( सु० ) **चैलार्थेषु कर्मसूपपदेषु क्नोपेर्वर्षप्रमाणे** ॥ चैलमर्थो येषां तानि चैलार्थानि तेषु कर्मसूपपदेषु क्नूयी शब्दे उन्दे च ण्यन्तादस्मात् णम् स्यात् ॥ क्नूयी धातोः प्रयोजके ञिप्रत्यये कृते ह्रीव्लीरीक्नूयीक्ष्माय्यीनामिति पुक् । यवयोर्वसे हकारे चेति यलोपः । पुकीति गुणः ॥ क्नोपीति ण्यन्ताण्णम् । ञेरिति ञिलोपः । चैलं क्नोपयत्यार्द्रीकरोतीति चैलक्नोपम् ॥ ८६ ॥

( **निमूलसमूलयोः कषः** ) (क) अत्र प्रकरणे पूर्वकाल इति न सम्बध्यते असम्भवादप्रतीतेश्च ॥ निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं वा कषतीत्यर्थः ॥ ८६ ॥

( सु० ) **निमूलसमूलयोः कषः** ॥ निमूलसमूलयोः कर्मणोरुपपदयोः कष हिंसायामस्माद्धातोर्णम् स्यात् ॥ ८६ ॥

( त० ) **निमूल०** ॥ निमूलादिप्रकृतिकधातोरेव कषादेर्नत्वन्यधातुयोगेऽपीति बोध्यम् ॥ **निमूलकाषमिति** ॥ निर्गतं मूलमस्येति ॥ निमूलम् । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसम्बन्धाद्भेदे सति सामान्यविशेषभावेन विशेषणविशेष्यभावः । (ख)एवमग्रेऽपि।

( **शुष्कचूर्णरूक्षेषु कर्मसूपपदेषु पिषः** ) शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यथः । चूर्णपेषम् । रूक्षपेषम् ॥ ८७ ॥

**शुष्कचूर्णरूक्षेषु कर्मसूपपदेषु पिषः** ॥ एषु कर्मसूपपदेषु पिष्लृ संचूर्णनेऽस्माद्धातोर्णम् स्यात् ॥ ८७ ॥

( **समूलाकृतजीवेषु कर्मसु हन्कृञ्ग्रहां णम्** ) समूलघातं हन्ति ॥ समूलं हन्तीत्यर्थः । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवन्तं गृह्णातीत्यर्थः ॥ ८८ ॥

( सु० ) **समूलाकृतजीवेषु कर्मसु हन्कृञ्ग्रहां णम्** । समूलादिषु कर्मसूपदेषु हनादिभ्यो णम् स्यात् । हनादीनामेव यथाविध्यनुप्रयोगश्च कर्तव्यः ॥ समूलोपपदाद्धन्तेर्णमि कृते हनो घदिति घत् । ततोऽत उपधाया इति वृद्धिः । समूलघातम् ॥ जीवोपपदाद् गृह्णातेर्णमि कृते वृद्धिः । जीवग्राहम् । जीवतीति जीवः । नाम्युपधादिति कः । जीवन्तं गृह्णतीत्यर्थः ॥ ८८ ॥

( **करणे हनः** ) पादघातं हन्ति । पादेन हन्तीत्यर्थः ॥ ८९ ॥

( सु० ) **करणे हनः** ॥ करणकारकोपपदाद्धन्तेर्णम् स्याद्धन्तेरनुप्रयोगश्च ॥ नित्या-

---

( क ) **निमूलमिति** । नियतं मूलं निमूलम् । सहमूलेन समूलम् । निमूलसमूलकषणाभिन्नं कषणमिति शाब्दबोधः ।

( ख ) अत्रेदं बोध्यम् । सामान्यं, विशेष्यं, विशेषस्तु विशेषणम् । आम्रो वृक्ष इत्यादौ आम्रो विशेषणम्, वृक्षस्तु विशेष्यमिति सर्वजनानुभवात् । यतश्चात्र निमूलकषणादिकं विशेषणम्, केवलकषणं तु विशेष्यमिति ।

नुप्रयोगार्थमिदं सूत्रम् । भिन्नधातुसम्बन्धे तु हिंसार्थानामिति वक्ष्यते ।। ८९ ।।

( **स्नेहने पिषः** ) (क) उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ॥९०॥

( सु० ) **स्नेहने पिषः** ॥ स्नेहनकरणोपपदात् पिष्लृ संचूर्णनेऽस्माण्णम् स्यात् ।। स्निह्यते येन तत् स्नेहनं तस्मिन् । पेषवासवाहनादिषु परेषु उदकस्योदादेशो वक्तव्य इत्युदादेशः । उदपेषम् ।। ९० ।।

( **हस्तार्थे करणे वर्तिग्रहोः** ) हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुटिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम्॥९१॥

( सु० ) **हस्तार्थे करणे वर्तिग्रहोः** ॥ हस्तार्थकरणकारकोपपदाभ्यां वर्तिग्रहिभ्यां णम् स्यादनयोर्यथाविध्यनुप्रयोगश्च ।। वृतु वर्तने । ण्यन्तादस्माणमि कृते णेरिति णिलोपः । हस्तवर्तं वर्तयति । हस्तग्राहं गृह्णाति । हस्तेन गृह्णातीत्यर्थः ।। ९१ ।।

( **धनार्थे करणे पुषः** ) धनपोषं पुष्णाति । स्वपोषम् । गोपोषम् ९२

( सु० ) **धनार्थे करणे पुषः** ॥ धनस्य पर्यायेषु विशेषेषु चोपपदेषु पुष पुष्टावस्माण्णम् स्यादस्यानुप्रयोगश्च पूर्ववत् ।। ९२ ।।

( **आधारे बन्धः** ) चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः ॥९३॥

( सु० ) **आधारेबन्धः** ॥ अधिकरणोपपदाद्बन्ध बन्धनेऽस्माण्णम् स्यादनुप्रयोगश्च।

( **संज्ञायां बध्नातेः** ) क्रौञ्चबन्धं बद्धः । मयूरिकाबन्धं बद्धः ॥ अट्टालिकाबन्धं बद्धः । बन्धविशेषाणां संज्ञा एताः ॥ ९४ ॥

( सु० ) **संज्ञायां बध्नातेः** ॥ संज्ञायां वाच्यायामस्माण्णम् स्यात् ।। ९४ ।।

( **कर्त्रोर्जीवपुरुषयोर्नशिवहोः** ) (ख) जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ॥ ९५ ॥

( सु० ) **कर्त्रोर्जीवपुरुषयोर्नशिवहोः** ॥ कर्त्रर्थकजीवपुरुषोपपदाभ्यां णश अदर्शने वह प्रापणे आभ्यां णम् स्याद्यथाविध्यनुप्रयोगश्च ॥ ९५ ॥

( त० ) **कर्त्रोरिति** ॥ **जीवनाशमिति** ॥ जीवतीति जीवः । नाम्युपधादिति कः ॥

( **ऊर्ध्वे कर्तरि शुषिपूरोः** ) ऊर्ध्वशोषं शुष्यति । ऊर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुख एव पूर्यत इत्यर्थः ॥९६॥

( सु० ) **ऊर्ध्वे कर्तरि शुषिपूरोः** ॥ ऊर्ध्वकर्त्रुपपदाभ्यां शुष शोषणे पूरी आप्यायने आभ्यां णम् स्याद्यथाविध्यनयोरनुप्रयोगश्च ॥ ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठञ्छुष्यतीत्यर्थः ॥ ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः ॥ ९६ ॥

---

( क ) **स्नेहने** । 'शुष्क चूर्ण—' इति सूत्रे स्नेहनग्रहणं न कृतम् । इह तु पूर्वसूत्रात् करणमित्यनुवर्त्तनीयमिति ।

( ख ) **कर्त्रोरिति** । जीवपुरुषयोः कर्त्रोरुपपदयोर्नशिवहोर्णम् स्यात् तयोरनुप्रयोगश्च । जीवनाशमिति जीव इति उपपदे णश अदर्शने णम्, वृद्धिः । पुरुष इत्युपपदे वह प्रापणे णम्, वृद्धिः ।

(**उपमाने कर्मणि कर्तरि च**) घृतनिधायं निहितं जलम् । घृतमिव सुरक्षितमित्यर्थः । अजकनाशं नष्टः । अजक इव नष्ट इत्यर्थः ॥९७॥

(**कषादिषु यथाविध्यनुप्रयोगः प्रयोक्तव्यः**) कषादिषु यस्माण्णम् विहितः स एवानुप्रयोक्तव्यः । तथैवोदाहृतम् ॥ ९८ ॥

( सु० ) **उपमाने कर्मणि कर्तरि च** ॥ उपमानवाचके कर्तरि कर्मणि चोपपदे धातोर्णम् स्यात्तस्यैव धातोरनुप्रयोगश्च ॥ ९७ ॥ ॥ ९८ ॥

(**उपदंशस्तृतीयायाम्**) इतः प्रभृति पूर्वकाल इति सम्बध्यते । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशम् । (क) दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया । यद्यप्युपदंशिना सह न शाब्दः संबन्धस्तथा प्यार्थोऽस्त्येव (ख) ॥ ९९ ॥

( सु० ) **उपदंशस्तृतीयायाम्** ॥ तृतीयान्तोपपदादुपदंशतेर्णम् स्यात् ॥ मूलकोपदंशम् । वाक्यमपि । मूलकेनोपदंशम् ॥ ९९ ॥

( त० ) **उपदंशस्तृतीयायामिति** ॥ मूलकोपदंशं भुङ्क्ते । मूलकेनोपदश्य भुङ्क्ते इत्यर्थः । अत्र न मूलकस्य भुज्यपेक्षया करणत्वं शाब्दम् । मूलकेन भुङ्क्ते । किं कृत्वा । उपदश्य । किम् । अर्थान्मूलकमित्येतदेव कर्म गम्यते ॥ ९९ ॥

(**हिंसार्थानां चानुप्रयोगधातुना समानकर्मकाणां तृतीयान्ते उपपदे**) दण्डोपघातं गाः कालयति दण्डेनोपघातम् । दण्डताडं दण्डेन ताडं वा । समानकर्मकाणां किम् । दण्डेन चौरमाहत्य गाः कालयति १००

( सु० ) **हिंसार्थानां चानुप्रयोगधातुना समानकर्मकाणां तृतीयान्ते उपपदे** ॥ तृतीयान्तोपपदादनुप्रयोगधातुना सह समानकर्मकाद्धिंसार्थाण्णम् स्यात् ॥ हन्तेर्णमि कृते हनो घदिति घत् । वृद्धिः । दण्डोपघातं गाः कालयति । कल विक्षेपे चुरादिः । प्रेरयतीत्यर्थः ॥ दण्डताडम् । तड आघाते चुरादिः ॥ १०० ॥

(**सप्तम्यां तृतीयायां चोपपदे उपपीडरुधकर्षः**) पार्श्वोपपीडं शेते । पार्श्वाभ्यामुपपीडं पार्श्वयोरुपपीडं वा । व्रजोपरोधं गाः स्थापयति व्रजे व्रजेनोपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति पाणावुपकर्षम् पाणिनोपकर्षम् ॥

( सु० ) **सप्तम्यां तृतीयायां चोपपदे उपपीडरुधकर्षः** ॥ सप्तमीतृतीयान्तोप-

---

( क ) **मूलकोपदंश इति** । अयमर्थः । मूलकेन भुङ्क्ते । किं कृत्वा । उपदिश्य । किमुपदिश्य अर्थान्मूलकमिति सम्बध्यते ॥

( ख ) **अस्त्येवेति** । कर्मत्वादिति शेषः । शाब्दान्वयाभावेऽपि आर्थिकान्वयेन प्रत्ययः समासश्च तृतीयायामिति वचनसामर्थ्यात् ॥ यदि—इह हि तृतीयान्तेन शब्दान्वये सत्येव प्रत्ययो भवेत्तर्हि करणे हन इतिवत् 'उपदंशः करणे' इत्येव ब्रूयात् । ततश्च क्रियान्तरं प्रति करणत्वं मूलकेनेत्येस्येष्टमिति भावः । एतच्च मनोरमादिपाणिनीयग्रन्थानुसारेणोक्तम् ॥

पदेभ्य उपपूर्वेभ्यः पीडादिभ्यो णमुल् स्यात् ॥ इह सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडरुधकर्ष इत्युत्तरपदलोपी समासः कर्तव्यः । सूत्रे पुंस्त्वं सौत्रं ज्ञेयम् । पञ्चम्यर्थे प्रथमा च ज्ञेया । पीड पीडायाम् । रुधिर् आवरणे । कृष विलेखने । अयं भौवादिक एव गृह्यते । गुणसहितस्य कृषेरपा निर्देशात् । तत्फलं तुदादेर्व्युदासः । यद्यपि विलेखन एव तौदादिकोऽपि पठ्यते तथापि क्षेत्रविषयकविलेखन एव तौदादिकः प्रयुज्यते (क) । एवं च तौदादिकात्कर्षेः क्यप् प्रत्यय एव भवति । क्षेत्रे उपकृष्य हलेनोपकृष्यति (ख) ॥१०१॥

( **तृतीयासप्तम्योरुपपदयोः संनिकर्षे धातोः** ) केशग्राहं युध्यन्ते केशेषु गृहीत्वा युध्यन्त इत्यर्थः (ग) । हस्तग्राहम् । हस्तेन गृहीत्वा ॥

( सु० ) **तृतीयासप्तम्योरुपपदयोः संनिकर्षे धातोः** ॥ तृतीयासप्तम्युपपदाद्धातोर्णमुल् स्यात् ॥ सन्निकर्षः सम्बन्धः ॥ १०२ ॥

( **तृतीयासप्तम्योः प्रमाणे गम्ये धातोः** ) द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम् ॥ १०३ ॥

( सु० ) **तृतीयासप्तम्योः प्रमाणे गम्ये धातोः** ॥ तृतीयासप्तम्युपपदाद्धातोर्णमुल् स्यात्प्रमाणे गम्ये । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्, द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः । ह्रस्वः खण्डः खण्डिका ताम् (घ) ॥ १०३ ॥

( **अपादाने द्वितीयायां च त्वरायां गम्यमानायां धातोः** ) शय्योत्थायं धावति । यष्टिग्राहं युध्यन्ते । लोष्ठग्राहम् ॥ १०४ ॥

( सु० ) **अपादाने द्वितीयायां च त्वरायां गम्यमानायां धातोः** ॥ पञ्चमीद्वितीयान्तोपपदाद्धातोर्णमुल् त्वरायां गम्यमानायाम् ॥ शय्योत्थायं धावति । शय्याया उत्थाय धावतीत्यर्थः । आतो युगिति युक् । उदः स्थास्तम्भोरिति सलोपः । यष्टिग्राहं युध्यन्ते । एवं खलु युद्धाय त्वरन्ते यष्ट्यादिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्त इत्यर्थः १०४

(**अपगुरोर्वा णम्योतः**) गुरी उद्यमे । अस्यपगारं युध्यन्ते अस्यपगोरं वा ।

( सु० ) **अपगुरोर्वा णम्योतः** ॥ गुरी उद्यमे इत्यस्योकारस्यात्वं वा स्याण्णमि प्रत्यये ॥ अस्यपगारं युध्यन्ते अस्यपगोरं वा । असिमुद्यम्येत्यर्थः ॥ १०५ ॥

( **अध्रुवे स्वाङ्गे द्वितीयान्ते धातोः** ) भ्रूविक्षेपं कथयति भ्रुवं विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य कथयति । येन विना न जीवनं तद्ध्रुवम् ।

(सु०) **अध्रुवे स्वाङ्गे इति** ॥ द्वितीयान्ताध्रुवस्वाङ्गोपपदाद्धातोर्णमुल् ॥ १०६ ॥

( **परिक्लिश्यमाने द्वितीयान्ते स्वाङ्गे धातोः** ) उरः प्रति-

---

( क ) प्रयुज्यत इति । पञ्चभिर्हलैः कर्षतीति प्रयोगदर्शनात् ॥

( ख ) नन्विह णमुलिति ( णमिति ) स्थितमाकरे ॥

( ग ) केशग्राहमिति ॥ केशेषु ग्रहणं भवतु वा मा भूत् संनिकर्षप्रतिपादनपरमेतत् ।

( घ ) यद्यपि ह्रस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते । तथापि ह्रस्वदीर्घ इत्यादिनिर्देशादचेतनेष्वपि क्वचिद् भवतीत्याहुः ॥

पेषं युध्यन्ते । कृत्स्नमुरः पीडयित्वेत्यर्थः । 'उरोविदारं प्रतिचस्करे नखैः' ध्रुवार्थमिदम् ॥ १०७ ॥

( सु० ) **परिक्लिश्यमाने द्वितीयान्ते स्वाङ्गे धातोः** ॥ सर्वतो बाध्यमाने स्वाङ्गे द्वितीयान्ते उपपदे सति धातोर्णम् स्यात् ॥ पिष्लृ संचूर्णने । उरःप्रतिपेषम्१०७

**( द्वितीयान्ते विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः )** गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन संबन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा । गृहानुप्रवेशमास्ते । गेहंगेहमनुप्रवेशम् । एवं गेहानुप्रपातम् । गेहानुप्रपादम् । गेहानुस्कन्दम् । असमासे गेहस्य णमन्तस्य च पर्यायेण द्वित्वम् । गेहगेहमनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशम् ॥ १०८ ॥

( सु० ) **द्वितीयान्ते विशिपतिपदिस्कदां व्याप्यमानासेव्यमानयोः** ॥ द्वितीयान्तोपपदेभ्यो विश्यादिभ्यो णम् स्याद्व्याप्तौ पौनःपुन्ये चार्थे गम्ये । वीप्सायां पदं द्विरिति द्विः । क्रियासमभिहारे इति द्वित्वं तु न भवति समासेनैव वीप्सासमभिहारयोरुक्तत्वात् । यद्यपि पौनःपुन्ये णमुक्त एव तथापि द्वितीयान्तस्योपपदसंज्ञार्थमासेवायामिह पुनर्विधिः । समासे गेहानुप्रवेशम् । असमासे गेहं गेहमनुप्रवेशमिति च ॥ १०८ ॥

**( क्रियान्तरेषु कालेषु द्वितीयान्तेषूपपदेषु क्रियाव्यवधाने वर्तमानयोरस्यतितृषोः** ॥ द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासम् । द्व्यहतर्षम् । अत्यसनेन तर्षणेन च गवां पानाक्रिया व्यवधीयते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ॥ १०९ ॥

( सु० ) **कियान्तरेषु कालेषु द्वितीयान्तेषूपपदेषु क्रियाव्यवधाने वतमानयोरस्यतितृषोः** ॥ क्रियामन्तरयन्ति व्यवधानेनेति क्रियान्तरास्तेषु क्रियान्तरकालवाचिषु शब्देषु द्वितीयान्तेषूपपदेषु सत्सु क्रियाव्यवधाने वर्तमानाभ्यामसु क्षेपणे ञितृष् पिपासायामाभ्यां णम् स्यात् ॥ १०९ ॥

( **नाम्नि द्वितीयान्ते आदिशिग्रहोः** ) नामादेशमाचष्टे । नामग्राहं कथयति ॥ ११० ॥

( सु० ) **नाम्नि द्वितीयान्ते आदिशिग्रहोः** ॥ द्वितीयान्तनामशब्दोपपदाभ्यामाङ्पूर्वकः दिश अतिसर्जने ग्रह उपादाने आभ्यां णम् स्यात् ॥ ११० ॥

**( अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमौ वा )** अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनम् । उच्चैः कृत्य उच्चैःकृत्वा उच्चैःकारं वाऽप्रियमाचष्टे । नीचैःकृत्य । नीचैःकृत्वा नीचैः कारं वा प्रियं ब्रूते ॥ १११ ॥

( सु० ) **अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमौ वा** ॥ अव्ययपूर्वपदात्क-

रोतेः क्त्वाणमौ वा स्तोऽयथाभिप्रेताख्यानेऽर्थे ॥ यथाभिप्रेतं तथानाख्यानमित्यर्थः । अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानं तद्विपरीतमयथाभिप्रेताख्यानमिति ॥ १११ ॥

**( तिर्यगुपपदे समाप्तौ कृञः क्त्वाणमौ वा )** तिर्यक्कृत्य गत इति । तिर्यक्कृत्वा तिर्यक्कारम् । समाप्य गत इत्यर्थः । समाप्तौ किम् तिर्यक् कृत्वा काष्ठं गतः ॥ ११२ ॥

( सु० ) **तिर्यगुपपदे समाप्तौ कृञः क्त्वाणमौ वा** ॥ तिर्यक्छब्दोपपदात्करोतेः क्त्वाणमौ वा स्तः समाप्तौ गम्यमानायाम् ॥ समाप्तौ किम् । तिर्यक् कृत्वा काष्ठं गतः । अग्रतः स्थितं काष्ठं पार्श्वतः कृत्वा गत इत्यर्थः ॥ ११२ ॥

**( स्वाङ्गे तस्प्रत्यये कृभ्वोः )** मुखतः कृत्य गतः । मुखतः कृत्वा मुखतः कारम् । मुखतोभूय गतः । मुखतोभूत्वा मुखतोभावम् ॥ ११३ ॥

( सु० ) **स्वाङ्गे तस्प्रत्यये कृभ्वोः** ॥ तस्प्रत्ययान्ते स्वाङ्गे उपपदे डुकृञ् करणे भू सत्तायामाभ्यां णम् स्यात् ॥ तस् प्रत्यया यस्मात्तत् तस्प्रत्ययं तस्मिन् । तस्प्रत्यये किम् । मुखे कृत्वा गतः ॥ ११३ ॥

**( नाधार्थप्रत्ययान्ते च्व्यर्थे कृभ्वोः क्त्वाणमौ वा )** अनाना नानाकृत्य–नानाकृत्वा–नानाकारम् । विनाकृत्य–विनाकृत्वा–विनाकारम् । नानाभूय–नानाभूत्वा–नानाभावम् । अनेकद्रव्यमेकं कृत्वा एकधाकृत्य-एकधाकृत्वा–एकधाकारम् । एकधाभूय–एकधाभूत्वा–एकधाभावम् । प्रत्ययग्रहणं किम् । हिरुक्कृत्वा । पृथग्भूत्वा ॥ ११४ ॥

(सु०) **नाधार्थप्रत्ययान्ते च्व्यर्थे कृभ्वोः क्त्वाणमौ वा** ॥ नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभूभ्यां क्त्वाणमौ वा स्तः ॥ वि नञ्भ्यां नानाञाविति नानाञौ प्रत्ययौ ॥ संख्यायाः प्रकारे धा इति धाप्रत्ययः । द्वित्रिभ्यामेधाधमुञौ चेति एधाधमुञाविति नाधार्थप्रत्ययाः । एवं द्वैधंकृत्येत्यादि ॥ प्रत्ययग्रहणं किम् । हिरुक् कृत्वा । पृथक् कृत्वा । 'हिरुङ् मध्ये विनार्थे च' इति रुद्रः ॥ 'हिरुगुक्तं च सामीप्ये' इत्यमरमाला 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने' इत्यमरः ॥ ११४ ॥

**( तूष्णींशब्दे भुवः क्त्वाणमौ )** तूष्णीं भूय गतः तूष्णींभूत्वा तूष्णींभावम् ॥ ११५ ॥

( सु० ) **तूष्णींशब्दे भुवः क्त्वाणमौ** ॥ तूष्णींशब्दे उपपदे भूधातोः क्त्वाणमौ स्तः ॥ ११५ ॥

**( अन्वक्छब्दे भुवः क्त्वाणमौ वा आनुकूल्ये गम्ये )** अन्वग्भूयास्ते–अन्वग्भूत्वा–अन्वग्भावम् । अग्रतः पृष्ठतो वाऽनुकूलो भूत्वा

आस्त इत्यर्थः । आनुकूल्ये किम् । अन्वग्भूत्वा तिष्ठति ।

पृष्ठतो भूत्वेत्यर्थः ॥ ११६ ॥

( सु० ) **अन्वक्छब्दे भुवः क्त्वाणमौ वा** ॥ अन्वक्छब्दे उपपदे भुवः क्त्वाणमौ वा स्तः ॥ ११६ ॥

**( वर्णात्कारः )** अकारः । इकारः । वकारः ॥ ११७ ॥

( सु० ) **वर्णात्कारः** ॥ वर्णनिर्देशे वाच्येऽक्षरात् कारप्रत्ययः स्यात् ॥ निर्देशोऽनुकरणम् । कारप्रत्ययमाह—बहुलग्रहणमत्र कर्तव्यम् । तेन क्वचिन्न ॥ ११७ ॥

( त० ) **वर्णात्कार इति** ॥ प्रयोगस्थवर्णवाचिनः कारप्रत्ययः । अतः 'अः केशवे विरिञ्चौ वा इत्यादौ प्रयोगस्थवर्णप्रतिपादकत्वाभावात्कारप्रत्ययो नेति वासुदेवेनोक्तं तन्न 'अकारो वासुदेवः स्यात्' इत्यादौ हसस्वरसमुदायस्योच्चार्यमाणत्वात्कारप्रत्ययो न स्यात् । अतो वर्णनिर्देश इत्यनुवर्त्य वर्णमात्रानुकरण इत्यर्थे अकारस्योच्चारणार्थत्वाद्वर्णमात्रस्यैवानुकार्यत्वात् । लघुभाष्ये तु न एव नकार इत्यादौ समुदायात्कारप्रत्ययाभावेन करोतेरुच्चारणार्थत्वात् करणं कार इति व्युत्पत्त्यैव सिद्धेरेवमकारादिसिद्धौ वर्णात्कार इति वार्तिकं व्यर्थमित्युक्तम् । यत्तु कृष्णपण्डितेन अकारकरणं न सिध्येत । करोतेः पौनरुक्त्यादित्येतदर्थं वार्तिकमित्युक्तम् । तत्रेदं वाच्यम् । अकारकरणमित्यत्र घञन्तकरोतेरुच्चारणार्थत्वेन पौनरुक्त्याभावात् ॥ ११७ ॥

**( रादिफो वा )** रेफः । रकारः (क) ॥ ११८ ॥

( सु० ) **रादिफो वा** ॥ रकाराक्षराद्वा इफप्रत्ययः स्यात् ॥ ११८ ॥

**( लोकाच्छेषस्य सिद्धिः )** यथा मातरपितरादयः (ख) ॥११९॥

## इति श्रीरामाश्रमविरचितायां सिद्धान्तचन्द्रिकायामुत्तरार्धं समाप्तम् ॥

---

(सु०) **लोकाच्छेषस्य सिद्धिः** ॥ उक्तादन्यः शेषः । अत्रानुक्तस्य सिद्धिः साधनं

( क ) **रकार इति** । तथाच—

रकारादीनि नामानि श्रुत्वा राक्षसरावणः ।
रत्नानि च रमण्यश्च संत्रासं जनयन्ति मे ॥
राकारादीनि नामानि शृण्वतो मम पार्वति ।
मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥ इत्युक्तम् ।

( ख ) **लोकादिति** । अत्र सिद्धिशब्दप्रदानेन ग्रन्थकर्त्ता मङ्गलं बोधयति । ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारात् ॥ शब्दशास्त्रस्यानन्त्यात् कार्त्स्न्येनानुक्तादिकं माहेशादिव्याकरणान्तराद्

लोकादन्यव्याकरणाज्ज्ञातव्यम् । यथा माता च पिता चेति मातरपितरौ मातरेति । निपातनादिति ॥ ११९ ॥

श्रीमत्पाठकधुर्यभक्तिविनया नन्दन्ति सद्विद्यया
नानाशास्त्रविचारजातपरमानन्दाः स्वभावोज्ज्वलाः ।
संवेगादिगुणैर्वशीकृतजना विख्यातकीर्तिप्रभा-
स्तेषामस्ति विचक्षणो विनयवान् शिष्यः सदानन्दकः ॥ १ ॥
निधिनन्दार्वभूवर्षे १७९९ सदानन्दः सुधीमुदे ॥
सिद्धान्तचन्द्रिकावृत्तिं कृदन्ते कृतवानृजुम् ॥ २ ॥

इति श्रीसिद्धान्तचन्द्रिकाया व्याख्या सुबोधिनीसमाख्या सदानन्दी समाप्ता ॥

( त० ) धातूनामानन्त्यात्तेभ्यश्चोत्पद्यमानानां कृतामप्यानन्त्यमतो न सर्वशः शब्दा व्युत्पादयितुं शक्या इत्याह—लोकादिति ॥ शेषस्य उक्तादन्यस्य शब्दस्य सिद्धिर्निष्पत्तिर्लोकादनादिवृद्धशब्दप्रयोगाद्व्याकरणान्तराच्च ज्ञेयेत्यर्थः । सिद्धिशब्दो मङ्गलवाचक इत्यन्ते प्रयुक्तः । आदिमध्यावसानेषु मङ्गलमाचरणीयमित्युक्तः । समङ्गलानि शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि भवन्त्यध्येतारश्चास्य वर्द्धन्ते एवं चैतदध्येतॄणां कार्यसिद्धिः स्यादिति ध्वनितम् ॥ ११९ ॥

लोकेशकरसंज्ञेन श्रीक्षेमकरसूनुना ।
मुदे भूयादुमाशम्भोर्विहिता तत्त्वदीपिका ॥ १ ॥
चन्द्रवेदहयभूमिसंयुते १७४१ वत्सरे नभसि मासि शोभने ।
शुक्लपक्षदशमीतिथावियं दीपिका बुधप्रदीपिका कृता ॥ २ ॥
श्रीचण्डिकायाश्चरणारविन्दप्रसादतो यल्लघुदीपिकाऽभूत् ।
मनीषयाऽपीह भवत्वमुष्या अध्येतुरध्यापनहेतुराशु ॥ ३ ॥

इति श्रीमद्रामकरपौत्र श्रीक्षेमकरसूनुलोकेशकरविरचिता सिद्धान्तचन्द्रिकाव्याख्या तत्त्वदीपिका समाप्ता ।

---

विभावनीयमित्याह—मातरपितरादय इति ॥

मातुराशीर्वचो नीत्वा कृदन्ते लोकमोदके,
पूर्वव्याख्यानपद्धत्या निर्मिता भातु टिप्पणी ॥ ४ ॥

इति श्रीनवकिशोरकरशास्त्रिविरचितायां चक्रधराख्यटिप्पण्यां कृदन्तप्रक्रिया समाप्ता ।

॥ शुभम् ॥

# अथ लिङ्गानुशासनप्रक्रिया ॥ ३२ ॥

लिङ्गराजं नमस्कृत्य मत्वा पूर्वमुनेर्वचः ।
सिद्धान्तचन्द्रिकायाञ्च कुर्वे लिङ्गानुशासनम् ॥१॥

## ( अथ लिङ्गानुशासनम् ) ॥ १ ॥

( चक्र० ) ग्रन्थे विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निवध्नाति–**लिङ्गराजमिति** । लिङ्ग्यतेऽनेनेति लिङ्गं शिवमूर्त्तिविशेषः । लिगि गतावस्माद् घञ् । "लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि । शिवमूर्त्तिविशेषे च मोहनेऽपि नपुंसकमि"ति मेदिनी। तस्मिन् राजेति लिङ्गराजः, उत्तमशिवमूर्त्तिविशेषः, तन्नामकशिवो वा । राजाहः सखिभ्यष्ट इति टप्रत्ययः । तं नमो नतिं कृत्वेति नमस्कृत्य, कृञः 'समासे क्यप्' इति समासे क्यप् । ह्रस्वस्येति तुक् । वाचस्पत्यादित्वाद्विसर्गस्य सः । पूर्वमुनेः पाणिनेर्वचः सूत्रात्मकं वचनं मत्वा बुद्ध्वा । मन ज्ञाने, पूर्वकाले क्त्वा । सिद्धान्तचन्द्रिकायामस्मिन् ग्रन्थे लिङ्गानां स्त्रीपुंसादीनामनुशासनं कुर्वे ॥ कुरुच्छुरोरिति न दीर्घः अहमिति कर्तृपदमध्याहार्यम् ॥१॥

लिङ्गानुशासनं प्रकुर्वाणो ग्रन्थकर्ता सूत्रमारचयति—**अथेति** । अथशब्दोऽधिकारद्योतकः । अनुशिष्यते व्याख्यायते लक्षणभेदोपायफलैर्येन तदनुशासनम् । लिङ्गानामनुशासनं लिङ्गानुशासनम् ॥ १ ॥

## ( स्त्री ) अधिकारसूत्रे एते ॥ २ ॥

( चक्र० ) **अधिकारसूत्र इति** ॥ उभयोरधिकारसूत्रत्वेऽपि 'लिङ्गानुशासनमित्याशास्त्रसमाप्तेः, स्त्रीति 'ताराधारा—' इति यावदिति विवेकः । अत्रापि लिङ्गं शास्त्रीयं विवक्षितम् । तच्चार्थनिष्ठम्, तत्रायं विशेषः । शब्दशक्तिस्वभावेन कस्यचित् सर्वलिङ्गप्रतिपादकता, कस्यचिद् एकलिङ्गप्रतिपादकता, कस्यचिद् द्विलिङ्गप्रतिपादकता चेति ॥२॥

## ( ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ) ऋकारान्ता पञ्चैते शब्दाः स्त्रीलिङ्गाः ॥ ३ ॥

( चक्र० ) **ऋकारान्ता इति** ॥ स्त्रीति पदमेषु सूत्रेषु संबध्यते । तच्च भावप्रधाननिर्देशेन स्त्रीत्वपरम्, तस्य लिङ्गपदेन बहुव्रीहिसमासे स्त्रीलिङ्गा इति समानाधिकरण्येन व्यवहारः । मात्रादिशब्दानां विशेषत उपादानात्पञ्चेति लब्धम् ॥ यद्यपि शब्दानामर्थानां चानन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवहारयोग्यानामेव सम्भवति, नत्वस्मदादीनामज्ञानाम्, तथाप्यस्मदाद्युद्देशेन शास्त्रप्रवृत्तेर्यथा लघूपायेनास्मदादीनां ज्ञानं संभवेत्ततोऽयमारम्भः ॥ ३ ॥

## ( अन्यूप्रत्ययान्तः ) अनिप्रत्ययान्त ऊप्रत्ययान्तश्च स्त्रियां स्यात् ॥ अवनिः । वधूः ॥ ४ ॥

( चक्र० ) **अन्यूप्रत्ययान्तः** ॥ अनिप्रत्ययान्त ऊप्रत्ययान्तश्च स्त्रियां स्यात् ॥ अवनिः । 'अर्त्यादेरनिः' इत्यनिः । वधूः । 'वहो धश्च' । इत्यूः ॥ ४ ॥

( **अशनिभरण्यरणयः स्त्रीपुंसयोः** ) अशन्यादयः स्त्रियां पुंसि च भवन्ति । पूर्वस्यापवादः । इयमयं वा अशनिः ॥ ५ ॥

( चक्र० ) **अशनिभर०** ॥ पूर्वसूत्रापवादोऽयम् ॥ ५ ॥

( **मिन्यन्तः** ) मिनिप्रत्ययान्तः स्त्रियां स्यात् ॥ भूमिः ॥ ६ ॥

( चक्र० ) **मिन्यन्तः** । भूमिः । 'नियो मिः' इत्यतो मिरित्यनुवर्त्यविहितो 'भुवः किच्चेति' मिक् । ग्लानिः । वहादेर्निः' इति निः ॥ ६ ॥

( **वह्निवृष्ण्यग्नयः पुंसि** ) वह्न्यादयः पुंसि स्यात् पूर्वसूत्रापवादः। निप्रत्ययान्ता अप्येते पुंसि स्युः ॥ ७ ॥

( चक्र० ) वह्न्यादिशब्दानां निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते आह—**वह्निवृष्णि** । वृष्णिः । 'स्नादेर्निः कित्' इति निः । अग्निः । 'अङ्गेर्नलोपश्च' इति निः । वह्निः । वह्नादेर्निः' इति निः ॥ ७ ॥

( **श्रोणियोन्यूर्मयः स्त्रीपुंसयोः** ) इयमयं वा श्रोणिः, योनिः, ऊर्मिः

( चक्र० ) **श्रोणियोन्यूर्मयः** । श्रोणिः । योनिः। 'वहादेर्निः' इति निः । ऊर्मिः । 'अर्त्तेरुर्च' इति मिः ॥ ८ ॥

( **क्त्यन्तः** ) क्तिप्रत्ययान्तः स्त्रियां स्यात् ॥ कृतिरित्यादि ॥ ९ ॥

( चक्र० ) **क्त्यन्तः** । क्तिप्रत्ययान्तः स्त्रियां स्यात् । कृतिः । क्तिरिति क्तिः ॥९॥

( **ईश्च** ) ईप्रत्ययान्तः स्त्री स्यात् ॥ लक्ष्मीः ॥ १० ॥

( चक्र० ) **ईश्च** । अत्र ईकारःप्रत्यय एव । पूर्वोत्तरसाहचर्य्यात् । लक्ष्मीः । 'लक्षेर्मुट्च' इति सूत्रे 'अवितृस्तृतन्त्रिभ्यः ईः' इत्यत ईरित्यस्यानुवृत्त्या ईप्रत्ययः । एवमन्यादिधातुभ्य ईकारप्रत्ययेऽपि स्त्रीत्वम् । तद्यथा अवीर्नारी रजस्वला, तरीर्नास्तरी भूमः, तन्त्री वीणादेर्गुणः ॥ १० ॥

( **ऊङाबन्तौ** ) ऊङन्त आवन्तश्च स्त्रियां भवतः ॥ कुरूः । विद्या ।

( चक्र० ) **ऊङाबन्तौ** । 'उत ऊः' इत्यूः । आब्ग्रहणेन डाबादीनामपि ग्रहणम् । कुरूः । विद्या ॥ ११ ॥

( **यवन्तमेकाक्षरम्** ) इप्रत्ययान्तमेकाक्षरमूप्रत्ययान्तमेकाक्षरञ्च स्त्रियां स्यात् ॥ श्रीः । भूः । एकाक्षरं किम् । पृथुश्रीः ॥ १२ ॥

( चक्र० ) **यवन्तमेकाक्षरम्** । ईकारोऽत्र प्रत्ययः ऊकारसाहचर्यात् । श्रीः । भूः । एकाक्षरं किम् । पृथुश्रीः ॥ १२ ॥

( **विंशत्यादयो नवत्यन्ताः** ) आनवतेर्विंशत्यादयः स्त्रियां स्युः ॥ इयं विंशतिः, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टिः, सप्ततिः, अशीतिः, नवतिः ॥ १३ ॥

( चक्र० ) **विंशत्यादिरानवतेरिति** । विंशत्यादयः सूत्रनिर्दिष्टाः ॥ १३ ॥

( **दुन्दुभिरक्षेषु** ) अक्षेषु बोधनीयेषु दुन्दुभिः स्त्रियां स्यात् । इयं दुन्दुभिः । अन्यत्रायं दुन्दुभिर्वाद्यविशेषोऽसुरो वा ॥ १४ ॥

( चक्र० ) दुन्दुभिरक्षेषु । अक्षेषु बोधनीयेषु यो दुन्दुभिशब्दः प्रयुज्यते सः स्त्रियां स्यादित्यर्थः ॥ १४ ॥

( **नाभिरक्षत्रिये** ) क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते सः स्त्रियां स्यात् । इयं नाभिः ॥ १५ ॥

( चक्र० ) नाभिरक्षत्रिये ॥ क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते स स्त्रियां स्यादित्यर्थः ॥ दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि भवति । अयं नाभिः क्षत्रियः । कथं तर्हि—समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिरिति भारविः । उच्यते । दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपोह साधु । अत एव नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् , द्वयोः प्राणिप्रतीके स्यात् , स्त्रियां कस्तूरिकामदे । इति मेदिनी ॥ रभसोऽप्याह । मुख्यराट् क्षत्रिये नाभिः पुंसि प्राण्यङ्के द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामद इति । एवमेवंविधेऽन्यत्रापि बोध्यम् ॥ १५ ॥

( **तान्तः** ) तप्रत्ययान्तः स्त्रियां स्यात् । ब्राह्मणस्य भावो ब्राह्मणता, देव एव देवता, जनानां समूहो जनता ॥ १६ ॥

( चक्र० ) तान्तः । 'भावे तत्वयणः' इति सूत्रविहित ( ल् ) प्रत्ययान्तः स्त्रियां स्यात् । ब्राह्मणस्य भावो ब्राह्मणता ॥ १६ ॥

( **भूमिविद्युत्सरिल्लतावनिताभिधानानि** ) स्पष्टम् । भूमिर्भूः । विद्युत् सौदामनी । सरिन्नदी । लता वल्ली । वनिता योषित् ॥ १७ ॥

( चक्र० ) भूमिविद्युदिति । अत्राभिधानशब्दो भूम्यादिशब्दे शक्यतावच्छेदकधर्मावच्छिन्नशक्तपरत्वेन प्रमेयशब्दव्यावृत्तिः ॥ १७ ॥

( **यादो नपुंसकम्** ) पूर्वस्यापवादः । यादः शब्दः सरिद्वाचकोऽपि नपुंसकं स्यात् ॥ १८ ॥

( चक्र० ) यादो नपुंसकम् । पूर्वस्यापवादः ॥ १८ ॥

( **भाः स्रुक् स्रग् दिगुष्णिगुपानहः** ) एते स्त्रियां स्युः । इयं भा इत्यादि ॥ १९ ॥

( **स्थूणोर्णे नपुंसके च** ) एते नपुंसके स्तः, चात् स्त्रियाम् ॥ स्थूणम्, ऊर्णम् , स्थूणा, ऊर्णा ॥ २० ॥

( चक्र० ) स्थूणोर्णे नपुंसके च । चकारेण स्त्रियामित्यस्यानुकर्षणार्थमत्र लेखः । स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम ॥ २० ॥

( **गृहशशाभ्यां स्थूणोर्णे क्लीबे** ) गृहशशपूर्वे स्थूणोर्णे यथाक्रमं नपुंसके स्तः । गृहस्थूणम् , शशोर्णम् ॥ २१ ॥

( **प्रावृड्विप्रुड्रुड्विट्त्विषः** ) एते स्त्रियां स्युः ॥ २२ ॥

( चक्र० ) प्रावृडिति । स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि 'स्वरितेनाधिकारः' इत्यस्याधिकः कार इति व्याख्यानस्यापि प्रसिद्धत्वादत्र सम्बन्धः ॥ २२ ॥

( **दर्विविदिवेदिस्वनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः** ) एते स्त्रियां स्युः । पक्षे ईप् , दर्वी । दर्विरित्यादि ॥ २३ ॥

( चक्र० ) दर्विवि.द० । दर्विशब्दो औणादिकविन् प्रत्ययान्तः । ईपि दर्वी इति २३

( **नाडिरुचिवीचिनालिधूलिकिकिकोलिच्छविराज्यादयः** ) एते स्त्रियां स्युः ॥ २४ ॥

( **तिथिश्च** ) तिथिः स्त्रियां पुंसि च स्यात् । इयमयं वा तिथिः ॥२५॥

( चक्र० ) तिथिश्चेति । अमरस्त्वाह तिथयो द्वयोरिति । तथा च भारविः । तस्य भुवि बहुतिथास्तिथय इति । स्त्रीत्वे हि बहुतिथ्यः, इति स्यात् । श्रीहर्षश्च । निखिलान्निशि पौर्णिमातिथीनिति ॥ २५ ॥

( **शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः** ) एते स्त्रियां स्युः । इयं शष्कुलिरित्यादि ॥ २६ ॥

( **प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः** ) इयं प्रतिपदित्यादि ॥ २७ ॥

( **आशीर्धूः पूर्गीर्द्वारः** ) इयमाशीरित्यादि ॥ २८ ॥

( **अप्सुमनस्समासिकताकर्षाणां स्त्रीत्वबहुत्वे** ) अबादीनां पञ्चानां स्त्रीत्वं बहुत्वञ्च स्यात् । एता आपः । स्त्रियः सुमनसः पुष्पम् । सुमना मालती जातिः । देववाची तु पुंस्येव । सुपर्वाणः सुमनसः । बहुत्वं प्रायिकम् । 'एका च सिकता तैलदानेऽसमर्था' इति भाष्यप्रयोगात् ॥ २९ ॥

( चक्र० ) पुंस्येवेति । देवासुरात्मेत्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति भावः । भाष्यप्रयोगादिति । तेन भाष्ये 'णा' इति सूत्रनिर्दिष्टानां बहुत्वं प्रायिकमिति विकल्पेनान्यत्र बहुत्वाभावेऽपि न क्षतिः ॥ २९ ॥

( **स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः** ) इयं स्रक्त्वक् ज्योक् वाक् यवागूः नौः स्फिक् ॥ ३० ॥

( **त्रुटिसीमासम्बध्या** ) इयं त्रुटिः । सीमा । सम्बध्या ॥३१॥

( **चुल्लिवेणिखार्यश्च** ) इयं चुल्लिः । वेणिः । खारी ॥ ३२ ॥

( **ताराधाराज्योत्स्नाशलाकादयश्च** ) स्त्रियां स्युः । इयं तारा, अरुन्धती, शलाका । इत्यादि ॥३३॥ इति सिद्धान्तचन्द्रिकायां स्त्र्यधिकारः ।

( चक्र० ) **शलकेति** । इयं स्त्रियां स्यात् । अत्र नित्यग्रहणं केचित्कुर्वन्ति । अतो नित्यग्रहणादन्येषां क्वचिद् व्यभिचारः । तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितं तथान्येषामन्यलिङ्गत्वेऽपि साधुत्वमिति ॥ ३३ ॥

इति लिङ्गानुशासने स्त्र्यधिकारः ॥

## पुंलिङ्गाधिकारः ॥ ३३ ॥

( **पुमान्** ) अधिकारोऽयम् ॥ १ ॥

( **घञदन्तौ** ) घञ्प्रत्ययान्तोऽप्रत्ययान्तश्च पुमान् स्यात् । पाकः त्यागः भावः दायः ॥ भावार्थ एवेदम् ॥ २ ॥

( चक्र० ) **भावार्थ एवेति** । भावे यो घञ् तदन्तस्य 'स्वराद्' इत्यनेन योऽप्रत्ययस्तदन्तस्य च पुंस्त्वं स्यादित्यर्थः । अदिति तपरकरणमसन्देहाय ॥ २ ॥

( **भयलिङ्गभगपदानि नपुंसके** ) एतानि नपुंसके स्युः । पूर्वस्यापवादः ॥ भयम् । लिङ्गम् । भगम् । पदम् ॥ ३ ॥

(चक्र०) **भयलिङ्गभगपदानि नपुंसक इति** । पूर्वापवादः । नपुंसकविधानश्च ॥३॥

( **याञ्चामृते नङन्तः** ) याञ्चां विना नङ्प्रत्ययान्तः पुंसि स्यात् ॥ यज्ञः । यत्नः । प्रश्नः । याञ्चामृत इति किम् , इयं मे याच्ञा ॥ ४ ॥

( चक्र० ) **याच्ञामृते नङन्तः** । नङन्तः पुंसि स्यात् । याच्ञा स्त्रियाम् ॥४॥

( **अपिद्दाधारूपः क्यन्तः** ) अपिद्दारूपो धारूपश्च क्यन्तः पुंसि स्यात् ॥ आदिः ॥ आधिः । निधिः । वारिधिः । क्यन्तः किम् , दानम् । दाधारूपः किम् , जाग्निर्वीजम् ॥ ५ ॥

( चक्र० ) **अपिद्दाधारूपःक्यन्तः** । किप्रत्ययोऽन्तः परो यस्मात्तादृशः पिद्भिन्नो दारूपः धारूपश्च पुमानित्यर्थः । आदिः । आधिः ॥ ५ ॥

( **स्त्रीपुंसयोरिषुधिः** ) इषुधिशब्दः स्त्रियां पुंसि च स्यात् । पूर्वस्यापवादः ॥ इयमयं वा इषुधिः ॥ ६ ॥

( **देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि** ) एतानि पुंसि स्युः । देवाः सुराः । असुराः दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दमः । इत्यादि ॥७॥

( चक्र० ) देवासुरा । अत्र पङ्कशब्दान्तद्वन्द्वं कृत्वा तस्य षष्ठीसमासोऽभिधानशब्देन कर्त्तव्यः । अभिधानशब्दः करणल्युडन्तो वाचकशब्दपरः, तेन देवादिशब्दवाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम् । शब्दस्वरूपापेक्षया च नपुंसकत्वम् इति ॥ ७ ॥

**त्रिविष्टपत्रिभुवने क्लीबे** ) त्रिविष्टपत्रिभुवनशब्दौ नपुंसके भवतः ॥ तृतीयं विष्टपं त्रिविष्टपम् । त्रिभुवनम् ॥ ८ ॥

( चक्र० ) त्रिविष्टपमिति ॥ स्वर्गाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भः । अतएवामरसिंहः—'क्लीबे त्रिपिष्टपम्' इति ॥ ८ ॥

( **द्यौः स्त्रियाम्** ) स्पष्टम् , इयं द्यौः ॥ ९ ॥

( चक्र० ) द्यौः स्त्रियाम् । अस्य स्वर्गाभिधानत्वात्पुंस्त्वे प्राप्तेऽयमारम्भः ॥९॥

( **इषुबाहू स्त्रियां पुंसि** ) इषुबाहू स्त्रियां पुंसि च स्याताम् ॥१०॥

( चक्र० ) इषुबाहू । शरभुजपर्यायाविमौ ॥ १० ॥

( **वाणकाण्डौ नपुंसके च** ) चात्पुंसि ॥ ११ ॥

( चक्र० ) वाणकाण्डौ । शरभिधानोऽयम् ॥ ११ ॥

( **नान्तः** ) नान्तप्रत्ययान्तः पुंसि स्यात् । राजा । तक्षा । नहि चर्मवर्मादिष्वतिव्याप्तिः, नपुंसकप्रकरणे वक्ष्यमाणत्वात् ॥ १२ ॥

( चक्र० ) नान्तः । नान्तप्रत्ययान्त इत्यर्थः ॥ १२ ॥

(**क्रतुपुरुषकपोलगुल्फमेघाभिधानानि**) एते पुंसि भवन्ति ॥ क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो वारिदः॥१३॥

( **अभ्रन्नपुंसकम्** ) पूर्वस्यापवादः ॥ १४ ॥

( चक्र० ) अभ्रन्नपुंसकमिति । मेघाभिधानविषये पूर्वस्यापवाद इत्यर्थः ॥१४॥

(**उकारान्तः**) उकारान्तः पुंसि स्यात् । प्रभुः । इक्षुः (क) ॥१५॥

( **धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् ।** ) धेन्वादयः स्त्रियां स्यात ॥ १६ ॥

( **समासे रज्जुः पुंसि च** ) कर्कटरज्ज्वा, कर्कटरज्जुना ॥१७॥

(**श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुताल्लूनि नपुंसके** ) एतानि नपुंसके स्युः । वसु चार्थवाचि । अर्थवाचि इति किम् , वसुर्मयूखाग्निधनाधिपेषु

( चक्र० ) वसु चार्थवाचि । अर्थवाचि वसुशब्दो नपुंसके द्रष्टव्यः ॥ १८ ॥

( **मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च** )

---

( क ) हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयव इति मेदिनी । करेणुरिभ्यां स्त्री नेभे इत्यमरः । एवं जातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित इति, एवमन्यत्रापि ।

एतानि नपुंसके चात् पुंसि च । अयं मद्गुः । इदं मद्गु ॥ १९ ॥

**( रुत्वन्तः )** रुत्वन्तः पुंसि स्यात् । मेरुः । सेतुः ॥ २० ॥

( चक्र० ) रुत्वन्तः । उकारो नकारेत्संज्ञकः । मेरुः । सेतुरित्यत्र स्यादेरिति तुः । सूर्यवाचकः प्रथमः ॥ २० ॥

**(दारुकशेरुजतुवसुमस्तूनि नपुंसके)** इदं दारु । इत्यादि ॥२१॥

( चक्र० ) दारुकशेरु० । रुप्रत्ययान्ता एते ॥ २१ ॥

**( सक्तुर्नपुंसके च )** चात्पुंसि ॥ सक्तुः । सक्तु ॥ २२ ॥

**( अदन्ताः कटणथनपभमयरषसोपधाः )** अदन्ता एते पुंसि स्युः ॥ **क** । स्तवकः । कल्कः । **ट** । घटः । पटः । **ण** । गुणः । गणः । पाषाणः । **थ** । रथः । **न** । इनः । फेनः । **प** । यूपः । दीपः । **भ** । स्तम्भः । कुम्भः । **म** । सोमः । भीमः । **य** । समयः । हयः । **र** । क्षुरः । अङ्कुरः । **ष** । वृषः । वृक्षः । **स** । वत्सः । वायसः । महानसः ॥ २३ ॥

( चक्र० ) अदन्ता इति । कोपधोऽकारान्तः, टोपधोऽकारान्तः, णोपधोऽकारान्तः, थोपधोऽदन्तः, नोपधोऽदन्तः, पोपधोदन्तः, भोपधोदन्तः, मोपधोदन्तः योपधोऽदन्तः, रोपधोऽदन्तः षोपधोऽदन्तः सोपधोऽदन्तश्च पुंसि स्यात् ॥ उदाहरणं मूले उक्तम् ॥ २३ ॥

**( चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि क्लीबे )** पूर्वसूत्रापवादः ॥ २४ ॥

**( कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि क्लीबे च )** चात्पुंसि । अयं कण्टकः—इदं कण्टकम् । इत्यादि ॥ २५ ॥

( चक्र० ) कोपधस्यापवादमाह—चिबुकेत्यादि ॥ २५ ॥

**( किरीटमुकुटललाटवटवीटशृङ्गाटकराटकलोष्टानि क्लीबे )** किरीटम् इत्यादि ॥ २६ ॥

**(कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि क्लीबे च)** चात्पुंसि । कुटः—कुटम् । इत्यादि ॥ २७ ॥

( चक्र० ) टोपधस्यापवादमाह–किरीटेत्यादि ॥ २७ ॥

**(ऋणलवणपर्णतोरणरणोष्णानि क्लीबे)** पूर्वसूत्रापवादः ॥२८॥

**( कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च )** चात्पुंसि ॥ २९ ॥

( चक्र० ) णोपधस्यापवादमाह-ऋणेत्यादि ॥ २९ ॥

**( काष्ठपृष्ठसिक्थौक्थानि नपुंसके )** इदं काष्ठम् । इत्यादि । काष्ठा दिगर्था स्त्रियाम् । इमाः काष्ठाः ॥ ३० ॥

**( तीर्थप्रोथयूथगाथानि नपुंसके च )** चात्पुंसि । अयं तीर्थः—इदं तीर्थम् ॥ ३१ ॥

( चक्र० ) थोपधस्यापवादमाह--काष्ठेत्यादि ॥ ३० )

**(जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके )** पूर्वस्यापवादः॥

**( मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसंभावनविभावनविमानानि नपुंसके च )** चात्पुंसि । अयं मानः—इदं मानम् ॥ ३३ ॥

( चक्र० ) नोपधस्यापवादमाह-जघनेत्यादि ॥ ३३ ॥

**( पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके )** इदं पापम् । इत्यादि ॥ ३४ ॥

**( शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च )** अयं शूर्पः—इदं शूर्पम् । इत्यादि ॥ ३५ ॥

( चक्र० ) पोपधस्यापवादमाह-पापेत्यादि ॥ ३९ ॥

**( तलभं नपुंसकम् )** पूर्वस्यापवादः ॥ ३६ ॥

**( जृम्भं नपुंसके च )** जृम्भम्— जृम्भः ॥ ३७ ॥

( चक्र० ) भोपधस्यापवादमाह-तलभेत्यादि ।

**( रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके )** इदं रुक्मम् । इत्यादि ॥ ३८ ॥

**( सङ्ग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च )** चात्पुंसि । अयं सङ्ग्रामः—इदं सङ्ग्रामम् ॥ ३९ ॥

( चक्र० ) मोपधस्यापवादमाह-रुक्मेत्यादि ।

**( किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके )** स्पष्टम् ॥ ४० ॥

**( गोमयकषायमलयान्वयाव्ययानि नपुंसके च )** गोमयः—गोमयम् ॥ ४१ ॥

( चक्र० ) योपधापवादमाह—किसलयेत्यादि ।

**( द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्रा-**

अश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रनक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके ) इदं द्वारम् । इत्यादि ॥४२॥

( चक्र० ) रोपधापवादमाह-द्वारमित्यादि ।

( शुक्रमदेवतायाम् ) इदं शुक्रं रेतः ॥ ४३ ॥

( चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ) चात्पुंसि । चक्रः, चक्रम् । इत्यादि ॥ ४४ ॥

( चक्र० ) रोपधस्यापवादमाह—चक्रमिति ॥ ४४ ॥

( शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके )

( यूषकरीषमिषविषवर्षाणि नपुंसके च ) चात्पुंसि । अयं यूषः—इदं यूषम् । इत्यादि ॥ ४५ ॥

( चक्र० ) षोपधस्यापवादमाह—शिरीषेत्यादिना ॥

( पनसबिसबुससाहसानि नपुंसके )॥ ४६ ॥

( चमसांसरसनियासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च ) इदं चमसम्—अयं चमस इत्यादि ॥४७॥

( कंसं चाप्राणिनि ) 'कंसोऽस्त्री पानभाजनम्' । प्राणिनि तु—कंसो नाम कश्चिद्राजा ॥ ४८ ॥

( चक्र० ) सूत्राण्येतानि सोपधापवादकानि ॥ ४८ ॥

( रश्मिर्दिवसाभिधानानि ) एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ॥ ४९ ॥

( दीधितिः स्त्रियाम् ) पूर्वस्यापवादः ॥ ५० ॥

( दिनाहनी नपुंसके ) इदमप्यपवादकम् ॥ ५१ ॥

( चक्र० ) दिनाहनी । दिवसाभिधानाविमौ ॥ ५१ ॥

( मानाभिधानानि ) एतानि पुंसि स्युः । कुडवः । प्रस्थः ॥५२॥

( द्रोणाढकौ नपुंसके च ) इदं द्रोणम्—अयं द्रोणः ॥५३॥

( **खारीमानिके स्त्रियाम्** ) इयं खारी । इयं मानिका ॥ ५४ ॥

(चक्र०) खारीमानिके । मानाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भः ॥ ५४ ॥

( **दाराक्षतलाजासूनां बहुत्वं च** ) इमे दाराः ॥ ५५ ॥

(चक्र०) बहुत्वं च । चकारः पुंस्त्वस्य समुच्चायकः ॥ ५५ ॥

( **नाड्यपजनोपपदानि व्रणाङ्गपदानि** ) यथासङ्ख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् ॥ ५६ ॥

( **मरुद्गरुत्तरदृत्विजः** ) अयं मरुत् ॥ ५७ ॥

( **ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिवलिकौलिमौलिरविकविकपिमुनयः** ) एते पुंसि स्युः । अयमृषिः ॥ ५८ ॥

( **ध्वजगजमुञ्जपुञ्जाः** ) एते पुंसि ॥ ५९ ॥

(**हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः**) एते पुंसि । अमरस्तु 'मुहूर्तोऽस्त्रियाम्' इत्याह ॥ ६० ॥

( चक्र० ) अमरस्त्विति । एवं च तन्मतेऽर्धर्चादिष्वयं द्रष्टव्यः ॥ ६० ॥

( **षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः** ) अयं षण्डः ॥ ६१ ॥

( **वंशांशपुरोडाशाः** ) अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् ॥ ६२ ॥

( **ह्रदकन्दकुन्दबुद्बुदशब्दाः** ) अयं ह्रदः ॥ ६३ ॥

( **अर्घपथिमथ्युभृक्षिस्तम्बनितम्बपूगाः** ) अयमर्घः ॥६४॥

( **पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः** ) अयं पल्वलः । अयं पल्लवः इत्यादि ॥ ६५ ॥

( **सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः** ) एते पुंसि । अयं सारथिः ॥ ६६ ॥ इति पुंलिङ्गाधिकारः ॥

( चक्र० ) अयं सारथिरिति ।

इति पुंलिङ्गाधिकारः ॥

—+•+—

# अथ नपुंसकाधिकारः ॥ ३४ ॥

**( नपुंसकम् )** अधिकारोयम् ॥ १ ॥

**( भावे युडन्तः )** हसनम् । भावे किम् । पचनोऽग्निः । इध्मप्रव्रश्चन कुठारः ॥ २ ॥

**( चक्र० )** भावे युडन्तः । इदं च सूत्रं यद्यपि 'नपुंसके भावे क्तः' यट् च' इत्यनेन गतार्थंस्तथापि स्पष्टार्थमुपात्तम् । एवमन्तग्रहणं बोध्यम् । इध्म व्रश्चन इति । अत्र करणे युट् ॥ २ ॥

**( क्तश्च )** भावे यः क्तप्रत्ययस्तदन्तं क्लीबं स्यात् । हसितं गीतम् ॥ ३ ॥

**( चक्र० )** क्तश्चेति । इदमपि सूत्रं 'नपुंसके भावे क्तः' इत्यनेन गतार्थम् । प्रत्ययग्रहणे तदन्तस्य ग्रहणात् ॥ ३ ॥

**( त्वयणौ तद्धितौ च )** शुक्लत्वं । शौक्ल्यम् ॥ ४ ॥

**( चक्र० )** त्वयणौ तद्धितौ । भाव इत्यनुवर्त्तते । यद्यपि 'भावे तत्वयणः' इति सूत्रे भावशब्दः प्रकृतिजन्यबोधीयप्रकारताधर्मपरः । 'भावे युटन्तः' इत्यत्र तु भावशब्दो भावनाबोधक इति भेदस्तथापि इह भावशब्दः शब्दाधिकारेणान्यार्थको द्रष्टव्यः ॥ चकारात् कर्मण्यपि ब्राह्मणादिगुणवचनेभ्यो बोध्यम् । तेन ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥ एवञ्च चकारादेवानुक्ततद्धितादिगतप्रत्ययान्तानि क्लीबानि बोध्यानि । तेन स्तेयम् । सख्यम् । कापेयम् । आधिपत्यम् । औष्ट्रम् । द्वैहायनम् । पितापुत्रकम् । अच्छावाकीयम् । अधिक्षि । इत्यादिविवेच्यम् ॥ ४ ॥

**( द्वन्द्वैकत्वम् )** पाणिपादम् ॥ ५ ॥

**( चक्र० )** द्वन्द्वैकत्वमिति । 'प्राणितूर्य' इत्यादिना येषां द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा नपुंसकाभिधायकाः बोध्या इत्यर्थः ॥

**( हेमन्तशिशिरावहोरात्रे चाभाषायाम् )** स्पष्टम् ॥ ६ ॥

**( अनल्पेछाया )** शरच्छायम् ॥ ७ ॥

**( राजामनुष्यपूर्वा सभा )** इनसभमित्यादि ॥ ८ ॥

**( सुरासेनाच्छायाशालानिशास्त्रियां च )** स्पष्टम् ॥ ९ ॥

**( चक्र० )** स्त्रियां चेति । चेन नपुंसकमित्यनुकर्षः ॥ ९ ॥

**( परवत् )** अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात ॥ रात्राह्नाहाः पुंसि ॥ १० ॥

**( चक्र० )** परवदिति । 'द्वन्द्वतत्पुरुषयोः परपदस्यैव लिङ्गमि'ति सूत्रोपात्त इत्यर्थः ॥ परपदस्य लिङ्गमिति सूत्रस्य स्मारकमिदम्, न तु अपूर्वम् ॥ १० ॥

**( अपथपुण्याहे नपुंसके )** ॥ ११ ॥

**( संख्यापूर्वा रात्रिः )** त्रिरात्रम् ॥ संख्यापूर्वेति किम् । सवरात्रः ।

( चक्र० ) संख्यापूर्वा रात्रिः । संख्यापूर्वं रात्रं क्लीबमित्यस्यानुवादः ॥ १२ ॥

**( द्विगुः स्त्रियां च )** व्यवस्थया । पञ्चमूली । त्रिभूवनम् ॥ १३ ॥

( चक्र० ) द्विगुः स्त्रियां च । चान्नपुंसकमिति संबध्यते ॥ १३ ॥

**( इसुसन्तः )** हविः । धनुः ॥ १४ ॥

( चक्र० ) इसु सन्तः । 'अच्यादेरिस्' 'जनादेरुस्' एतयोरुपात्तौ एतौ ॥ १४ ॥

**अर्चिः स्त्रियां च )** इसन्तत्वेऽपि अर्चिः स्त्रियां क्लीबे च स्यात् ॥ इयमिदं वा अर्चिः ॥ १५ ॥

**( छदिः स्त्रियामेव )** इयं छदिः ॥ १६ ॥

(चक्र०) छदिः स्त्रियामेवेति । यद्यपि छदिरित्यस्येसन्तत्वेन नपुंसकत्वे प्राप्ते विशेषोपादानेन स्त्रियामित्यनेनैव नित्यस्त्रीत्व लाभे सिद्धे एवकारो व्यर्थः । तथापि 'पटलं छदिः' इत्यमरग्रन्थदर्शनेन साहचर्यान्नपुंसकत्वमपीति भ्रान्तिः स्यात्तन्निवारणायैवकारः ॥ १६ ॥

**( मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि )** एतेषामभिधायकानि क्लीबे स्युः । मुखमाननम् । नयनं लोचनम् । लोहं कालं । वनं गहनं । मांसमामिषम् । रुधिरं रक्तम् , कार्मुकं शरासनम् । विवरं बिलम् ॥ जलं वारि ॥ हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् ॥ १७ ॥

**( सीरार्थौदनाः पुंसि** ॥ १८ ॥

( चक्र० ) सीरार्थौदनाः । सीरशब्दो हलाभिधानः । अर्थशब्दस्तु धनशब्दस्य पर्यायः ओदनशब्दोऽन्नवाची । भिस्साभिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरिति ॥ १८ ॥

**( वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च )** वक्त्रः । वक्त्रम् । नेत्रः । नेत्रम् । अरण्यः । अरण्यम् । गाण्डीवः । गाण्डीवम् ॥ १९ ॥

**( अटवी स्त्रियाम् )** ॥ २० ॥

( चक्र० ) अटवी स्त्रियाम् । अयं वनाभिधानः ॥ २० ॥

**( लोपधः )** कुलम् । कूलम् । स्थलम् ॥ २१ ॥

**( तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि )** अयं तूलः ॥ २२ ॥

**(शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालबालनिगलपलालबिडालखिलशूलाः पुंसि च )** चात्क्लीबे । इदं शीलम्—शीलः । इत्यादि ॥ २३ ॥

**( शतादिः सङ्ख्या )** शतम् । सहस्रम् । शतादिः इति किम् ? एकः, द्वौ, बहवः । सङ्ख्या इति किम् ? शतशृङ्गो नाम पर्वतः ॥ २४ ॥

( चक्र० ) संख्येति । संख्यावाचीत्यर्थः ॥ २४ ॥

**( शतायुतप्रयुताः पुंसि च )** अयं शतः—इदं शतम् । इत्यादि ॥

( चक्र० ) शतायुत० । अयं शतशब्दोऽनन्तवाची 'शतादि'रिति पूर्वसूत्रापवादकोऽयम् ॥ २५ ॥

**( लक्षा कोटिः स्त्रियाम् )** इयं लक्षा । इयं कोटिः । 'वा लक्षा नियुतं च तत्' इत्यमरात्क्लीबेऽपि लक्षम् ॥ २६ ॥

( चक्र० ) लक्षां कोटिः । एतयोरपि संख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम् ॥ क्लीबेऽपीति । एवं चायमर्द्धर्चादिषु द्रष्टव्यः ॥ २६ ॥

**( शङ्कुः पुंसि )** ॥ २७ ॥

( चक्र० ) शङ्कुः पुंसि । अस्य शङ्कुशब्दस्य संख्याविशेषवाचकत्वात् 'शतादिः संख्या' इति नपुंसकत्वे प्राप्तेऽ यारम्भः ॥ २७ ॥

**( सहस्रः क्वचित् )** अयं सहस्रः—इदं सहस्रम् ॥ २८ ॥

( चक्र० ) सहस्रः क्वचित् । क्वचिदित्यर्थविशेष इति अर्थः ॥ 'सहस्र शीर्षापुरुषः सहस्राक्षः सहस्रपाद्' इत्यत्रानन्तवाचो न चात्र सहस्रशब्दस्यानन्तपरत्वे संख्यापरत्वाभावेन सहस्रपादित्यत्र 'संख्यासुव्याघ्रादिपूर्वस्य' इति पादशब्दस्यान्त्यलोपो न स्यात् इति वाच्यम् ॥ नियतविषयपरिच्छेदकत्वरूपसंख्यात्वाभावेऽपि यथाकथञ्चित् संख्यायाः प्रतीतिरिति लोपः । वस्तुतश्छान्दसो लोप इति सूचितम् ॥ २८ ॥

**( मन्द्विस्वरकोऽकर्तरि )** मन्प्रत्ययान्तो द्विस्वरकः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म । द्विस्वरकः किम् ? अणिमा । महिमा । 'अकर्तरि' किम् ? ददाति इति दामा ॥ २९ ॥

( चक्र० ) मन्द्विस्वरकः । अत्र मन्प्रत्ययः श्रूयमाणनकारान्तः 'मन्धातोः' इति विहितः । चर्म । वर्मेति । चरादिधातोर्मन्प्रत्ययः । बाहुलकादिडभावः ॥ अणिमादौ त्विट् । दामेत्यत्रापि 'मन्धातोः' इत्यनेनैव मन् । परन्त्वयं विशेषः । उणादिप्रत्ययान्तानां संज्ञाशब्दपरत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता, स, कल्पनीयेति कर्त्तर्यपि प्रत्ययः सम्भवतीति ॥ २९ ॥

**( ब्रह्मन्पुंसि च । )** अयं ब्रह्मा—इदं ब्रह्म ॥ ३० ॥

( चक्र० ) ब्रह्मेति । 'बृहेर्नस्य अः' इति मन्प्रत्ययः, नुमो नस्य अकारे कृते रत्वञ्च ॥

**( असन्तो द्विस्वरकः )** यशः । मनः । तपः । द्विस्वरकः किम् । चन्द्रमा ॥ ३१ ॥

( चक्र० ) असन्तो द्विस्वरकः । 'धातोरसुः' इति विहितोऽसुः । तस्य असोर्य-त्रानुवृत्तिस्तदन्ता अपि बोध्याः ॥ 'चन्द्रे माङो डित्' इति विहितासिन्प्रत्ययान्तश्चन्द्र-मस्शब्दोपि असन्तः ॥ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । एवमप्सरः शब्दोऽपि ३१

**( अप्सराः स्त्रियाम् )** एता अप्सरसः । प्रायेणायं बहुवचनान्तः ३२

**( त्रान्तः )** पत्रम् । छत्रम् ॥ ३३ ॥

( चक्र० ) त्रान्तः । त्रप्रत्यान्तो नपुंसकः स्यात् ॥ 'धातोस्त्रः' इति त्रप्रत्यय ॥३३॥

**( यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव )** ॥ ३४ ॥

( चक्र० ) यात्रामात्रेति । एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः ॥३४॥

**( भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि )** अयं भृत्रः । न मित्रममित्रेः । 'तस्य मित्राण्यमित्रास्ते' इति माघः' । 'स्यातामममित्रे मित्रे च' इति च ॥ ३५ ॥

( चक्र० ) भृत्रामित्र । पूर्वस्यापवादः ॥ ३६ ॥

**( पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च )**

**(बलकुसुमशुल्वयुद्धपत्तनरणाभिधानानि)** बलं वीर्यम् ।३७।

**( पद्मकमलोत्पलानि पुंसि च )** पद्मादयः शब्दाः कुसुमाभिधा-यित्वेऽपि द्विलिङ्गाः स्युः । अमरोऽप्याह-'वा पुंसि पद्मं नलिम्' इति ॥३८॥

( चक्र० ) कुसुमाभिधायित्वेऽपीति । वस्तुतः कुसुमाभिधायित्वे पीत्यर्थः ॥ यदि तु कुसुमविशेषाभिधायकोऽयं न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक्त इति वि-भाव्यते तदात्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति । मतान्तरेण जलजशब्दस्य जलजातकुसु-मान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः ॥ ३८ ॥

**( आहवसङ्ग्रामौ पुंसि )** ॥ ३९ ॥

( चक्र० ) आहवसंग्रामौ पुंसि । एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते । एवमाजिशब्दोऽपि ॥ ३९ ॥

**( आजिः स्त्रियामेव )** ॥ ४० ॥

**(फलजातिः)** फलजातिवाचिशब्दो नपुंसकं स्यात् । आमलकम् । आम्रम् ॥

(चक्र०) फलजातिरिति । फलापादानाद्वृक्षपरस्यामलकीशब्दस्य स्त्रीत्वेऽपि न क्षतिः४१

**( वृक्षजातिः स्त्रियामेव )** क्वचिदेवेदम् । हरीतकी ॥ ४२ ॥

( चक्र० ) हरीतकीति । हरीतक्याः फलानि हरीतक्यः ॥ ४२ ॥

**( वियज्जगत्सकृत्शकन्पृषच्छकृद्यकृदुदश्वितः )** एते क्लीबाः भवन्ति ॥ ४३ ॥

( नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि )

( श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यस्यास्पदाकाशकण्ववीजानि ) एतानि क्लीबे स्युः ॥ ४५ ॥

( दैवं पुंसि च ) दैवम्—दैवः ॥ ४६ ॥

( चक्र० ) दैवमिति । चात्क्लीबे ॥ ४६ ॥

(धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि) इदं धान्यम् । इत्यादि॥

(द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि ) ॥ ४८ ॥

(अक्षमिन्द्रिये)इन्द्रिये किम् । रथाङ्गादौ माभूत् । इति नपुंसकाधिकारः ४९

( चक्र० ) रथाङ्गादाविति । आदिना देवनाक्षपरिग्रहः ।

इति नपुंसकाधिकारः ॥ ४९ ॥

---

# अथ स्त्रीपुंसाधिकारः ॥ ३५ ॥

( स्त्रीपुंसयोः ) अधिकारोऽयम् ॥ १ ॥

( चक्र० ) स्त्रीपुंसयोः । अधिकारोऽयम् ॥ १ ॥

( गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ) इयमयं वा गौः ॥ २ ॥

( मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः ) इयमयं वा मृत्युः ॥३॥

( उकारान्तगुणवचनं नपुंसकं च ) त्रिलिङ्गम्, इत्यर्थः । पटुः—पटु—पट्वी ॥ ४ ॥

(अपत्यार्थकस्तद्धिते) औपगवः-औपगवी ।

इति स्त्रीपुंसाधिकारः ॥ ५ ॥

( चक्र० ) नपुंसकं चेति । चात्स्त्रीपुंसयोः ।

इति स्त्रीपुंसाधिकारः ॥ ५ ॥

# अथ पुंनपुंसकाधिकारः ॥ ३६ ॥

( **पुंनपुंसकयोः** ) अधिकारोऽयम् ।

( **घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः** ) अयं घृतः—इदं घृतम् ॥ १ ॥

(**शृङ्गार्घेनिदाघोद्यमशल्यदृढाः**) अयं शृङ्गः—इदं शृङ्गम् ॥२॥

( **व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः** ) अयं व्रजः—इदं व्रजम् ॥ ३ ॥

( **कबन्धौषधायुधान्ताः** ) स्पष्टम् ॥ ४ ॥

( **दण्डमण्डखण्डशमसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः** ) एते पुंनपुंसकयोः स्युः ।

'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः ।

शलाकावाची तु स्त्रियाम् । तथा च 'जानपदादिभ्यः—' इत्यादिसूत्रेणायोविकारे ईप् कुशी । दारुणि तु आप्- कुशा ॥ ५ ॥

( **गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च** )

इति पुंनपुंसकाधिकारः ॥६॥

( चक्र० ) कुश इति । तथाच श्रुतिः—'कुशा वानस्पत्याः स्थ ता मा पात' इति॥ **शलाकावाचीति** । सा च शलाका काष्ठादिनिर्मिता । तत्र मानमाह—**तथाचेति**॥

इति पुंनपुंसकाधिकारः ।

---

# अथाविशिष्टलिङ्गम् ॥ ३७ ॥

( **अविशिष्टलिङ्गम्** ) त्रिषु लिङ्गेषु साधारणमित्यर्थः ॥ १ ॥

( चक्र० ) **अविशिष्टलिङ्गम्** । तत्तल्लिङ्गवाचकताप्रयुक्तकार्यविशेषशून्यम् ॥१॥

( **अव्ययं कतियुष्मदस्मदः** ) एतेषां लिङ्गं समानमेव ॥ २ ॥

( **ष्णान्ता सङ्ख्या शिष्टा परवत्** ) एकः पुरुषः । एका स्त्री । एकं कुलम् ॥ ३ ॥

( चक्र० ) **शिष्टेति** । पूर्वोक्तशब्दान्यतमत्वावच्छिन्नप्रतियोगिताकभेदवन्तः । **परवदिति** । विशेष्यवदित्यर्थः ॥ ३ ॥

(**गुणवचनं च**) परवत् । शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् ॥४॥

( चक्र० ) गुणवचनञ्च । परवदित्यनुवर्त्तते ॥ ४ ॥

( कृत्याश्च ) परवदित्यनुवर्त्तनीयम् ॥ ५ ॥

( चक्र० ) कृत्याश्च । कृत्यप्रत्ययान्ताः परवद्बोध्याः ॥ ६ ॥

( कारणाधिकरणयोर्युट् ) ॥ ६ ॥

( सर्वादीनि नामानि ) स्पष्टार्थेयं त्रिसूत्री ॥ ७ ॥

इति श्रीयास्कवंशसम्भूतश्रीनवकिशोरकरवेदान्तशास्त्रिप्रपूरिता सूत्र-वृत्त्यात्मिका लिङ्गानुशासनप्रक्रिया समाप्तिमगात् ॥



( चक्र० ) सर्वादीनि नामानि । सर्वनामसंज्ञकानि सर्वादीनि परवद्बोध्यानि ॥ स्पष्टार्थेति । लोकव्युत्पत्त्यैव तत्तल्लिङ्गाभिधानसिद्धत्वात् । अत एव 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यकारेणोक्तम् । तेन यौगिकशब्देषु लोकव्युत्पत्तिमात्रं लिङ्गाभिधानप्रमाणमिति सिद्धम् ॥

इति लिङ्गानुशासनप्रक्रिया ॥ ७ ॥

इति श्रीयास्कवंशसम्भूतपण्डितप्रवरश्रीविम्बाधरकरवेदान्ततीर्थचरणरेणुसेवक-श्रीनवकिशोर-करवेदान्तशास्त्रिप्रपूरितलिङ्गानुशासनप्रक्रियायां स्वकृतचक्रधराख्यव्याख्या समाप्ता ।



प्राप्तिस्थानम्—

चौखम्बा संस्कृत-पुस्तकालय,

बनारस सिटी ।

श्रीगणेशाय नमः ।

# सिद्धान्तचन्द्रिकाया उणादिकोषः ॥

तातं चक्रधरं नत्वा बिम्बाधरसमन्वितम् ।
उणादिकोषविज्ञानं व्युत्पत्त्यर्थेन भण्यते ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
अक्षि, अशूङ्+क्सिः=नयनम् ।
अग्रम्, अगि+रन्=पुरस्तात् ।
अगस्तिः, अगम्+असु+तिः=कुम्भयोनिर्मुनिः ॥
अग्निः, अगि+निः=वह्निः॥ औषधिर्वा ॥
अघ्न्यः, हन+यक्=प्रजापालकः ।
अघ्न्या, नञ्+हन+यक्=गौः ।
अङ्कुरः अकि+उरः=रुधिरे, लोम्नि, पानीये, अभिनवोद्भिदि च ।
अङ्कुशः, अकि=उशः=सृणिः ।
अंकूरः अकि+ऊरः=अङ्कुरः ।
अङ्गारः अगि+आरः=निर्धूमोऽग्निः, भूमिविकारो वा ।
अङ्गिराः, अगि+असि=ऋषिभेदः,
अङ्गुलिः अगि+उलिः=करशाखा ।
अजिनम्, अज+किनः=चर्म ।
अजिरम्, अज+किरः=प्राङ्गणे, काये, वषये, दर्दुरेऽनिले ।
अञ्जलिः, अञ्जू+कलिः=संपुटे । संयुक्तकरयोर्वा ॥
अणुः—अणशब्दे+उः=व्रीहिभेदः, अतिसूक्ष्मं वा ।
अण्डः, अडि+डः=प्राण्यङ्गावयवः ॥
अतिथिः, अत+इथिः=आगन्तुकः ।
अत्रिः, अद्+त्रिः=मुनिभेदः ॥
अद्रिः, अद+क्रिः=द्रुमः, शैलः, अर्को वा ॥
अद्भुतम्, अद+भू+डुतः=आश्चर्य्यम् ।
अधमः, अव+अमः=निकृष्टः ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
अध्वा, अद्+वन्=मार्गः ।
अनीकम्, अन+कीकः=रणे, सैन्ये च ।
अनिलः, +अन+इलः=वायुः ।
अनेहाः, नञ्+हन्+असिः=कालः ॥
अन्त्रम्, अम्+क्त्रः=उदरनाडी ।
अन्दुकः, +हस्तिनिगडे ।
अन्दूः, अदि+कूः+निगडे, भूषणस्य प्रभेदे । अन्दूः, अम+कूः=वृत्तिः ।
अन्धः, अद+असुः=अन्नमोदनं चक्षुर्हीनो वा ॥
अन्धुः, अम—कुः=कूपः ।
अप्सराः, अप्—सृ+असिः=देवयोनिविशेषः ॥ किरणो वा ॥
अब्दः, अव+दः=संवत्सरोऽवसरो मेघो वा ॥
अमत्रम्, अम—अत्रः=भाजनम् ।
अमित्रः, अम+इत्रः=शत्रुः ।
अमित्रम्, न मित्रमिति विग्रहेऽपि=शत्रुः ।
अम्भः, आप्लृ+असुः=उदकम् ॥
अम्बरीषः, अवि+रीषः=आकाशः स्वेदनी वा ॥ भाड़ इति प्रसिद्धम् ॥
अम्लः, अम+कुः=रसविशेषः ।
अम्बलः, अवि+कुः=रसविशेषः ।
अंसः, अम+सः=स्कन्धः, विभागो वा ॥
अरणिः, ऋ+अनिः=तन्नामककाष्ठम् ।
अरण्यम्, ऋ+अन्यः+विपिनम् ।
अरत्निः, नञ्+ऋ+कत्निः=प्रसृताङ्गुलिर्हस्तः ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
अररम्, ऋ+अरः=कपाटः । ( क्ली० ) ।
अरुः ऋ+उस्=व्रणः, आदित्यो वा ।
अर्कः, अर्च+कः=अर्कपर्णं, स्फटिकं, सूर्यो वा ।
अर्चिः, अर्क+इस्=ज्वाला ।
अर्णः, ऋ+असुः=जलम् ॥
अर्थः, ऋ+थः अभिधेये । धने, प्रयोजने, क्लीबलिङ्गोऽप्ययम् ।
अर्भः, ऋ+भः=शिशुः,
अर्भकः=अर्भ—कः=शिशुः ॥
अर्भकः, ऋधु+अकन्=बालकः । मूर्खः । कृशश्च ॥
अर्वा, ऋ+वन्=तुरङ्गो निन्द्यो वा ।
अर्यमा, अर्यम-माङ्-कन्=आदित्यः ।
अर्शः, ऋ+असुः=गुदव्याधिः ॥
अर्हन्तः, अर्ह+अन्तः=जिनः ।
अलाबूः, नञ—लबि+ऊण्=तुम्बी ।
अलीकम्, +अल+कीकः=मिथ्या
अवद्यम्, नञ्+वद+यः=पापम्, अपराधश्च ॥
अवनिः, अव+अनिः=पृथिवी ।
अवभृथः, भृञ्+कथः=यज्ञस्नानम् ।
अवमः, अव+अमः=गार्ह्यः ।
अविनः, अव+इनः=अध्वर्युः ।
अविषः, अवि+टिषच्=राजा समुद्रश्च ।
अवीः, अव+ईः=रजःस्वला नारी ।
अशनिः, अश+अनिः=वज्रम् ।
अशित्रम्, अशूङ्+इत्र=चरुः ।
अश्रिः, आङ्+श्रिञ्+डिः=कोणः ।
अश्रु, अशूङ्+रुः=नयनजलम् ।
अश्वः, अशूङ्+कः=तुरङ्गः ।
अष्ट, अशूङ्+कन्=संख्याभेदः ।
अष्टका, अशूङ्+तकः=श्राद्धविशेषनाम ।
असुः, असु—उः=प्राणः ।
असुरः, असु+उरः=मेघः, दुर्जनः, दैत्यो वा ।
अस्थि, असु+क्थिः=कीकसम्, शरीरान्तरवयवः ।
अस्त्रम्, असु+त्रः=प्रहरणे चापे करवाले च ॥
अस्मद्, असु+मदिक्=अहंपदार्थवाचकशब्दः ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
अस्रः, —कोणे, कचे । च (क्ली०) अश्रुणि, शोणिते च ॥
अहः, नञ्+ओहाक्+कन्=दिवसः ।
अहिः, आङ्+हन्+डिः=वृत्रासुरः, सर्पश्च ॥
अंहः, अम+असुः=दुरितम् ॥
अंहतिः, हन+अतिः=दानं वा ॥
आखुः, आङ्—खनु+कुः=मूषिकः, वराहो वा
आगः, इण्+असुः=पापापराधयोः ॥
आगामी, आङ्+गम्...इनिः=आगमिष्यतीत्यर्थे ।
आजिः, अज...इञ् संग्रामः ।
आतिः, अत...इञ्=पक्षी ॥
आत्मा, अत...मन्=देहे, धृतौ जीवे, स्वभावे, परमात्मनि ॥
आपः, आप्लृ...क्विप्=जलानि ।
आम्रः, अम...रक्=रसालः ।
आमिषम्, अम...इषट्=मांसे, भोग्यवस्तुनि ।
आयुः, इण्...णुस्=जीवनम् ।
आर्द्रम्, अर्द...रक्=क्लिन्नम् ।
आर्द्रा, अर्द...रक्...आप्=नक्षत्रभेदे ।
आलु, ऋ—उण्=शाकविशेषो घटी च ।
आवसथः, आ...वस...अथः=गृहम् ।
आशुः, अशूङ्—उण्=अश्वः, धान्यम्, व्रीहिः, शीघ्रं वा ।
आसुरः,—असु...उरण्=असुरः ।
इक्षुः, इषु...क्सुः=मधु तृणं वा
इदम्, इदि...कमिः=सन्निहितपरामर्शकः॥
इनः, इण्...नक्=ईश्वरः, राजा, प्रभुः, सूर्यश्चः ।
इन्दुः, उन्दी...उः=चन्द्रमाः ।
इन्द्रः, इदि...रन्=देवराजे, अन्तरात्मनि, आदित्ययोगयोश्च ।
इभः, इण्...भक्=हस्ती ।
इरा, इण...क्रः आप=मद्ये ।
इरिणम्, ऋ...इनक्=ऊषरम् ।
इषीका, ईष...कीकः=शलाका ।
इष्टका, इषु...तकः...आप्=वैदिकम् ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
उक्षा, उक्ष...कन्—वृषभः ।
उग्रः, उच+क्रः=शूद्रासूते क्षत्रियात्, शिवे उत्कटे च ॥
उदरम्, उत्+दृ+अः=कुक्षिस्थानम् ॥
उन्द्रः, उन्दी+रक्=जलमार्जारः ।
उरः, ऋ+असुः—वक्षः ॥
उरणः, ऋ+क्युः+मेषः ।
उरु—महत् ॥
उलपम्, वल+कप=कोमलतृणं वा ।
उलूकः, वल+ऊकः=पक्षिभेदः, इन्द्रः, भारतयोधी वा ।
उल्बः, उच+बः=जरायुः ॥ क्ली० अपि ।
उशना, वश+कनसिः=भार्गवः,
उशीरम्, वश+कीरः+वीरणमूलं ( वेणा चेर इति उत्कलभाषा ) ॥
उषः, उष+असिः+प्रभातम् ॥
उष्ट्रः, उष+ष्ट्रः=पशुजातिभेदः ।
उष्म, उष+मन्=ग्रीष्मर्तुर्वाष्पो वा ॥
उस्रः, वस+रक्=वृषे, किरणे, गवि च ।
ऊरुः, ऊर्णुञ्+कुः=जङ्घा ।
ऊर्णा, ऊर्णुञ्+डः=मेषादिलोम ॥
ऊर्मिः, ऋ+मिः—जलतरङ्गनाम ।
वस्त्रसंकोचरेखानाम च ॥
ऋजीषम्, अर्ज+कीषः=पिष्टपचनम् ।
ऋजुः, अर्ज+कुः=कोमलः ।
ऋतुः, ऋ+तुक्=वसन्तादिः, स्त्रीणां रजःपतनकालः ।
ऋभुक्षा, ऋभु+क्षि+डः+इन्—इन्द्रः ॥
ऋषभः, ऋषी+कभः=आदिजिनः, वृषभः, स्वरभेदः, कर्णरन्ध्रं वा ॥
ऋषिः ऋषी—किः—वेदे वसिष्टादौ दीधितौ च ॥
एकः, इण्+कः=संख्यान्तरे, श्रेष्ठे, केवलेतरयोश्च ।
एतद्+इण्+आदिः=पार्श्वस्थपरामर्शकः ।
एनः, इण्+असुः=पापम् ॥
ओजः, उब्ज...असुः—पराक्रमः ।
ओतुः, अव...तुः—विडालः ।
ओदनः, उन्दी...युः—भक्ते ।
ओष्ठः, उष...थः—दन्तच्छदः ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
कङ्कटः ककि...अटः—सन्नाहः ॥
कच्छूः, कषः...ऊः—पामा ।
खाज इति प्रसिद्धा । काछु इति भाषा ।
कटकः कटे...वुः=वलयः, मण्डलविशेषो वा ॥
कटुः—कटे—उः—रसः ।
कठिनम्, कठ...किनः—निष्ठुरे, स्तब्धे ।
कठिनी—खटिका ।
कठोरः, कठ...ओरः—कठिनः, पूर्णश्च ।
कडारः, गडि...आरः—कपिलवर्णः, दासो वा ।
कड्मलम्, कुड—कलः—कोरकः ॥
कणेष्ठः, कण—ठः—कण्ठः ।
कण्ठः, कण—ठः—गले, सन्निधाने, ध्वनौ, मदनपादपे ।
कन्तुः, कमु—कुः=मकराकरः । कामः ।
कन्दुः, स्कन्दिर्—उः—कुमारक्रीडार्थं गेंद इति प्रसिद्धम् ।
कन्या कनी—यक्—कुमारी ।
कपालम्, कपि—कालः—शिरोस्थि, घटखण्डम् ।
कपिला, कमु-इलः—आप्—गोविशेषः ।
कपिलः, कमु-इलः—वर्णभेदः, मुनिभेदः ।
कपोतः, कबृ—ओतः—चित्रकण्टे, पारावतविहङ्गयोः । पक्षिमात्रेऽपि ।
कपोलः, कपि—ओलः—वदनैकदेशः ।
कवचः कु—अवः=गर्दभाण्डे, सन्नाहे, पर्पटे च ।
कमठः, कमु—अठः—कच्छपः, क्लीबे तु भाण्डम् ।
कम्बलम्, कमु—कल—नागराजे, सास्नाप्रावरयोः, कृमौ, उत्तरासङ्गे, सलिले च । अयं नपुंसकोऽपि ।
करकः कृञ्—वुः=कमण्डलुः ॥
करटः, कृ—अटः=काकः ॥ एकादशाहादिश्राद्धे च ।
करभः, कृ—अभः—मणिवन्धादिकनिष्ठान्तः । बलो वा । उष्ट्रः, तत्सुतश्च ॥ वानरभेदो वा ।
करीरः, कृ—ईरः—वंशाङ्कुरः, वृक्षभेदः ॥
करीरा, कृ—ईराप्=चीरिका, दन्तिदन्तमूलं वा ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।

करीषम्, कृ—ईषः = शुष्कगोमयम् ॥

करेणुः, कृञ्—एणुः—हस्तिनी ।

कर्कः, कृञ—कः = अग्निः, शुक्लाश्वः, दर्पणः, घटो वा ।

कर्कन्धूः, । कर्क—डुधाञ्—ऊः = बदरीकोलिः ।

कर्दमः, कर्द—अमः = पङ्कः ।

कर्पासः, कृञ्—पासः = सस्यभेदः ॥

कर्पूरः कृपू—ऊरः = घनसारः ।

कर्म, कृञ्—मन्—क्रिया । पुंसि कर्मेतिरूपम् ।

कवरः, कु,—अरः—पाठकः ॥ कवरी—केशविन्यासे ॥

कर्बुरः, कबृ—उरः = श्वेतः, राक्षसः, पापः । क्लीबे,सलिलम्, हेम, चित्रम् वा।

कर्पूः, कृष—ऊः = शुष्कगोमयः, अग्निः, नदी वा ।

कलत्रम, गड्—अत्रः—कटिभागः, भार्यावा ।

कलभः, कल—अभः = करिपोतकः ।

कलमः, कल—अमः = शालिचौरयोः ।

कलुषम्, कल—उषः = पापम् ॥

कल्कः, कल—कः,=दम्भः, किल्विषं वा ।

कशेरुः, क—शृ—ऊण् = तृणकन्दम् । कशेरुरपि

कश्मलम्, कश—कलः = मोहः ।

काकः, कै कः = वायसः वृक्षभेदो वा । (क्ली०) सुरतबन्धः ।

कारुः डुकृञ्—उण् = शिल्पी कारकश्च ।

कर्पासं = वस्त्रम् ॥

कासारः, कासृ—आरः = सरसी ।

कामुः, कस—उञ् — विकलधातुर्जनः, शक्तिः, आयुधम् । स्त्रवा ।

काष्ठम्, काश कथः=दारु, इन्द्रियं च ।

काष्ठा, = दिक् । अष्टादश निमेषाश्च ॥

किम्, कै = डिम् = प्रश्नाद्यर्थे ॥

किशारुः, किम्-शृ—उण्=धान्यविशेषः, कङ्कपक्षी, विशिखश्चः ॥

किरणः, कृ = क्युः = दीप्तिः ॥

किरिः, कृ—किः = वराहः ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।

किल्बिषम्, किल—इषट्=पापे, रोगे च ।

किशोरः, किम्-शृ—ओरः=अश्वशावकः, तरुणावस्थसूयो वा ।

किरीटम्, कृ—कीटः=मुकुटम् । शिरोवेष्टनं वा ॥

कीनाशाः, क्लिशू—अः = यमः ।

कीचकः,चीक—वुः=छर्वानिमद्वंशे,दैत्यभेदे द्रुमान्तरे च ।

कुक्कुरः, कुक—उरः=श्वा, ग्रन्थिपर्णम् कुक्कुरोऽपि ।

कुक्षिः, कुष-क्सिः=जठरं गर्भाशयो वा ।

कुचौ, कु चट्=स्तनौ ॥

कुड्मलम्, कुट—कलः = कुड्मलम् ।

कुटिलः, कुट—इलः = वक्रः ।

कुणपम्, कण—कपः = शवः,सृद्भेदो वा ।

कुण्डिनम्,कुडि—किनः—नगरम् ।

कुण्डिनः = मुनिः ।

कुन्दः कु—दः = पुष्पजातिविशेषः ।

कुपिन्दः, कुप—किन्दः = तन्तुवायः ।

कुबेरः कुबि—एरः = त्र्यम्बकसखः ।

कुमारः, कमु—आरः = शिशुयुवराजः स्कन्दो वा ।

कुररः, कु—करः=पक्षिभेदः ॥

कुरुः, कृ—कुः = राजा,भक्तः, नोवृत् ।

कुलालः, कुल—कालः=कुम्भकारः, कघुप् ।

कुविन्दः कुप—किन्दः = तन्तुवायः ।

कुसितः, कुस—इतः = जनपदः ।

कुसीदम्, कुस—ईदः=वृद्धिजीविका ।

कुसुमम्, कुस—उमः = पुष्पम्, स्त्रीरजः, नेत्ररोगो वा ॥

कुसुम्भम्, कुस—उम्भः=महारजनम् ॥

कुसूलम्, कुस—ऊलः = धान्यपात्रम् ।

कुष्ठम्, कुष-क्थः = रोगविशेषे,सुगन्धे च।

कुहकः, कुह—क्वुः=दाम्भिकः ।

कूर्चो, कु चट्—ईप् = चित्रलेखनिका ।

कूचौ, कु—चट् = स्तनौ

कूपः, कुङ्—पक् = जलवापी ।

कृकवाकुः कृक—वच—उण्=मयूरः, सरटः, चरणायुधश्चः ।

कृच्छ्रम्, कृती—रक् = अर्हसि कष्टे, सान्तपने च ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
कृतकः, कृती—कुः=छेदकः ।
कृत्तिका, कृती—तिकक्=नक्षत्रं वा ।
कृत्स्नम्, कृती कृस्नः=समग्रम्, सर्वं वा
कृपीटम्, कृपू—कीट=कुक्षिरुदकं वा ॥
कृमिः, क्रमु—किः=कीटे ।
कृषिः, कृष—किः=खताति प्रसिद्धा ।
कृष्णः, कृष—नक्=सत्यवतीपुत्रः, वायसः, अर्जुनः, नीलवर्णो वा ।
कृशानुः, कृश—आनुक्=पावकः ।
केतुः, चाय्—तुः=ग्रहः, पताका वा ।
केशः, क्लिशु—अः=शिरलोमानि ॥
कोकिलः, कुक—इलः=पिकः ।
कोमलम्, कु—कलः=मृदु ।
कोरकः,=कलिका ।
कोष्ठः, कुष—थः=कुक्षिकुसूलयोः ।
क्रतुः, कृञ्—क्तुः=प्रज्ञा, यज्ञः, मुनिर्वा ।
क्रिमिः, क्रमु—किः=क्षुद्रजन्तुः ॥
क्रयिकः, क्रीञ्—इकः=क्रेता ।
क्रूरः, कृती-रक्=कठिने, घोर, नृशंसे, पापे, च
क्रोष्टा, क्रुश—तुः=शृगालः ।
क्षत्ता, क्षद—तृ=सारथिः, द्वास्थः, शूद्रजा, वेश्यायां (स्त्री) ॥
क्षिप्रम्, क्षिप—रक्=त्वरितम् ।
क्षुद्रः, क्षुदिर्—रक्=अधमः क्रूरः, अल्पः ।
क्षीरम्, घस्लृ-कीरः—दुग्धं नीरं वा ।
क्षेमम्, क्षि-मः=कल्याणम् ।
क्ष्मा, क्षमूष्—अः=मेदिनी ।
खजाकः, खज—आकः=पक्षी ।
खट्वा, खट—कः=आप्=पर्य्यङ्कम् ॥
खड्गः, खड—गः खड्गः ।
खण्डः, खनु—डः=शकले' इक्षुविकारे, मणिभेदे च ।
खादिरः, खद—किरः=वृक्षभेदः ।
खर्जूः, खर्ज—ऊः=खर्जूरकीटकण्डुषु ।
खर्जूरः, खर्ज—ऊरः=वृक्षभेदः, रजतं वा ॥
गगनम्, गम्लृ—युः=नभः ।
गङ्गा, गम्—गः=आप्=नदीनाम ।
गण्डूषः गडि—ऊषः=जलादिना पूर्णमुखं नाम ॥
कुलकुञ्चा इति प्रसिद्धम् ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
गदयित्नुः, गद—यित्नुः=वावदूकः, कामः । बाणश्च ।
गभीरः, गम्लृ-ईरः=शान्तः, महाशयः, (क्ली०) गम्भीरम् ।
गम्भीरम्=गभीरम् ।
गमी, गम्लृ-इनिः=पथिकः,
गर्दभः, गर्द+अभः=खरः श्वेतकुमुदम् ।
गर्भः, गॄ—भः=जठरम् । तत्रस्थो वा ।
गर्मुत्, गॄ=उत=सुवर्णम् । तृणजातिभेदः । लाभोऽपि ।
गर्वः, गॄ—वःअहंकारः ।
गरुडः, गॄ—उडः=सुपर्णः ॥
गरुत्, गॄ—उत्=पक्षः ।
गात्रम्, गम्लृ-त्र=अङ्गम् ॥ शरीरं वा ॥
गाथा, गै—थः—आप्=श्लोके, संस्कृतान्यभाषायाम् ॥
गिरिः, गॄ—किः=गोत्रमक्षिरोगो, मेघः पर्वतो वा ॥
गुडः, गुड्—डक्=इक्षुपाके, गोलके च ।
गुरुः, गॄ—कुः=आचार्य्यः, पिता, बृहस्पतिर्वा ।
गुल्फः, गल-फः=पादग्रन्थिः ॥
गूथम्, गु-थक्=विष्ठा ।
गृध्रः गृधु-क्रः=पक्षिविशेषः । लुब्धो वा ।
गोधूमः, गुध-ऊमः=अन्नविशेषः ॥
गोमायुः, गा-मिः—उञ्=शृगालः ।
गौः, गम्लृ+डोः=(पुंसि)=आदित्ये, बलीवर्दे, किरणे, (स्त्रियाम्) दिशि, भारत्यां भूमौ, सुरभौ गवि च ॥
गौरः, डुङ्—कः=श्वेते, अरुणे, पीते विशुद्धे । श्वेतसर्षपे । चन्द्रे । पद्मकेशरे वा ।
ग्रहणिः, ग्रह-अनिः व्याधिविशेषः ।
ग्रामः, ग्रस—मः=स्वरे, संवसथे, वृन्दे, च ।
ग्रीवा, गॄ—वः=आप्=कन्धरा ॥
ग्रीष्मः, ग्रसु—मः=उष्णर्तुविशेषः ।
ग्लानिः, ग्लै—निः=दौर्बल्यम् ॥
ग्लौः, ग्लै—डौ=चन्द्रः ।
घर्म, घृ—मः=आतपे, ग्रीष्मे, उष्णे स्वेदजल ।
घृणिः, घृ-निक्=अंशु-ज्वाला-तरङ्गेषु ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
घोरम्, हन—अः=भयानकम् ॥
चकोरः, चक—ओरः=पक्षिभेदः ।
चक्रम् ,=प्रसिद्धार्थकोऽयं शब्दः ।
चक्रुः, कृ—कुः=कर्ता ।
चक्षुः=नेत्रम् ।
चटुलम्, चट—उलः=शोभनम् ।
चण्डः, चडि,—डः= उद्धतस्वभावव्यक्तिः, प्रखरो वा ।
चण्डालः, चडि—आलञ्, चाण्डालः ।
चतुरः, चते+उरः=दक्षः, कुशलो वा ।
चत्वारः, चते+उरः=संख्यावाची ॥
चन्दः, चदि+अः=चन्दः ।
चन्द्रः, चदि+रक्=चन्द्रमा ।
चन्द्रमा, चन्द्रम्+माङ्+असिः+सोमः॥
चपलः, चुप—कलः—पुं=पारदे मीने चोरके शीलान्तरे चले च ॥
चपला, चुप-कल स्त्री-कमला-विद्युत्-पुंश्चली-पिप्पलीषु ॥
चमरः,चमु+अरः=मृगभेदः। चामरो वा।
चमरी=मृगी, मञ्जरीविशेषश्च ।
चरमः, चर+अमः=अन्तिमः ॥
चर्म, चर+मन्=अजिनम् ॥
चरुः-चर+उः+भाण्डम्, हव्यान्नम् ।
चषकम्, चषः+क्वुः=पानपात्रम् ।
चषालः, चष+आलः=यूपकण्टकः ।
चाटु, चट+उण्=प्रियंवचः ।
चारित्रम्, चर+इत्रञ्=वृत्तान्तम्। समाचारो वा ॥
चारु, चर-उण्=रम्यम्, तिन्तिडीमिश्रितजलविशेषो वा ।
चिक्कणम्, चिती+कणः=स्निग्धम् ॥
चित्रम्, चित्र्+क्तः=आलेख्यम्, आश्चर्यं वा ॥
चीरम्, चिञ्+क्रः=गोस्तने, वस्त्रे सीसके, रेखायाम्, झील्ल्याञ्च ।
चेतः, चिती+असुः=चित्तम् ॥
छगलः, छो+कलः=छागः, (क्ली०) नीलवस्त्रम् ।
छत्रम्, छद+त्रः=आतपत्रम्
छद्म, छद+मन्=माया ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
छन्दः, छदि+असु=गायत्र्यादि। कपटमिच्छाऽभिप्रायो वशो वा ।
छागः, छो+गः=छागलः ।
छाया, छो+यः+आप्=प्रकाशावरणमुत्कोचकः प्रतिबिम्बी वा ।
छिद्रम्, छिदिर्+रक्=रन्ध्रम् ।
छिदिरः,छिदिर्+किरः=असिः,कुठारो वा।
जगत्, गम्+अतृ=संसारः ॥
जघनम्, हन+अः=जानोरुपरि भागः ।
जघ्नुः, हन+कुः=हन्ता ।
जङ्घा, जनी+अः=जानोरधो भागः ॥
जठरम्, जन+जनी+अरः=उदरं कठिनं वा
जतु, जनी+उ=लाक्षा ।
जत्रु, जन+रुः=स्कन्धसंधिः ।
जनिः, जन्+इः=जन्म ।
जनिः, जनी, जन्+इञ्=उत्पत्तिः ।
जनुः, जनी×उस्=जन्म ।
जन्तुः, जनी+तुक्=प्राणी ।
जन्म, जन+मन्=उत्पत्तिः ॥
जन्यम्, जा+यक्=निर्वादो युद्धं वा ।
जन्या, जन+यः+आप्=मातृवयस्या ।
जन्युः, जन+युः=शरीरः,अग्निः, धाता वा।
जम्बू, जनी+कूः=वृक्षभेदे तस्य फले च।
जम्बुः जमु+कुः=वृक्षविशेषः तस्य फलनाम च ।
जयन्तः, जि+अन्तः=शक्रपुत्रः ।
जरठः, जॄ+अठः=कठिने, पाण्डौ कर्कशे च।
जरायुः, जरा-इण्+उण्=गर्भाशयो गर्भावरणं वा ।
जानु, जन+ञुण्=जङ्घाया उपरि भागः।
जामाता, जाया+मा+तृ=दुहितुः पतिः।
जाया, जन+यक्=पत्नी ।
जायुः, जि+उण्=औषधम् ।
जिनः, जि+नक्=अतिवृद्धः, जयशीलः, नास्तिकभेदो वा ।
जिह्मः, ओहाक्+मः=कुटिलः, मन्दः ।
( क्ली० ) तगरवृक्षः ॥
जिह्वा, लिह+वः+आप्=रसनेन्द्रियम् ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
जीरः, जु+रक् । अथवा, जीरः, ज्या+रक्=खड्गे वणिग्द्रव्यविशेषे च ।
जैवातृकः, जीव+आतृकः=आयुष्मान्, निशाकरो वा ।
ज्योतिः, द्युत+इस्=अग्नौ, दिवाकरे । प्रकाशे च ।
तक्रम् तञ्चु+रक्=घोलदहीति भाषायाम् ।
तक्षा, तक्षु+कन्=वर्द्धकिः ।
तडाकः, तड+आकः=तडागः ।
तडाका=प्रभा ।
तडित्, तड+ित=विद्युत् ।
तण्डुलः, तड+उल=धान्यादिनिकरः, विहङ्गो वा ।
तद्, तनु+अदिः=बुद्धिविषयार्थकोऽयं शब्दः
तनयः, तनु+कयः=आत्मजः ॥
तनुः—तन+उः=शरीरम्, स्वल्पम् ।
तन्त्रीः, तन्त्र्-ई=वीणा ।
तन्तुः तनु+तुः=सूत्रम् ।
तमालः, तमु+आलः=तिलके, खड्गे, पिच्छे, वरुणद्रुमे च ।
तरङ्गः, तृ+अङ्गः=लहरिका ।
तरणिः, तृ+अनिः+सूर्यः ।
तरलम्, तृ+कलः=
तरी, तृ+ईः=नौः ।
तरीषः, तृ+ईषः=नौका ।
तरुः, तृ+उः=वृक्षः ।
तलिनम्, तल+इनः=विरले, स्तोके, स्वच्छे, च ।
ताम्रम्, तमु+रक=धातुविशेषः ।
तालु, तृ-ञुण्=मुखकदेशः ।
तिग्मम्, तिज-म=तीक्ष्णम्,
तितउ, तनु-डउः=चालनी ॥
तिमिः, तमु—किः=मत्स्यभेदः ।
तिमिरम्, तिम्—किरः=ध्वान्ते, नेत्ररोगे, अन्तके च ।
तिरीटम्, तृ-कीटः=सुवर्णं शिरोवेष्टनं वा ॥
तीक्ष्णम्, तीज—क्स्नः=तीव्रम् ।
तीर्थम्, तृ—थक्=शास्त्रे, अध्वरे, क्षेत्रे, उपाये, उपाध्याये, अवतारे, उपाधिविशेषे.
[illegible]

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
तुषारः, तुष...आरः=हिमम् ।
तुहिनम्, तुहिरः,...इनः...हिमम् ।
तूलिः, ल...किः=कूचिका ।
तृणम्, तृह...क्नः=प्रसिद्धमेव ॥
तोमरम्, त्रैङ्...उमरः...प्रहरणम् ॥
त्रयः, तृ...ड्रिः=संख्याविशेषः ।
त्यत्, त्यज...अदिः=तच्छाब्दार्थकोयम् ॥
त्रपुः—त्रपू-उः=सीसकं, रङ्गं वा ।
त्वष्टा; त्विष्...तृ=तक्षकः ।
त्सरुः-त्सर...उः=खड्गादिमुष्टिः ।
दक्षिणः, दक्ष...इनः=परच्छन्दानुवर्तिनि, दक्षे, अपसव्ये, सरले, प्राचीने च ।
दक्षिणा, दक्ष...इनः...आप्=यज्ञादिदानम् यमपालिता दिग्वा ।
दण्डः
दण्डम् } दमु...डः=लगुडे
दद्रुः, दरिद्रा...ऊण्...कुष्ठभेदः । दद्रूरपि ।
दमथः, दमु.. अथः=दमः ।
दमुना, दमु...उनसि=अग्निः ॥
दरत्,...दृ...अदिः=प्रपाते, भये, पर्वते च ।
दस्युः, दसु...युः=चौरः, रिपुर्वा ॥
दानुः, दाञ-नुः=दानशीलः ।
दारुः, दृ—ञुण्=काष्ठम् ।
दाशः, दंश—टः=धीवरः ॥ कैवर्तः ॥
दासः, दसि—टः=सेवकः, शूद्रश्च ॥
दिनम्, दो—क्निः=दिवसम् ॥
दिधिषूः, दिधिम्—षो—द्विरूढा । द्विवारं विवाहितानाम ।
दिवसः, दिवु—कसः=दिनम् ।
दीनः, दीङ्—नक्=दुःखी ।
दीना, दीङ्—नक्—आप्=मूषिकयोषा, कातरा वा ।
दुहिता, दुह+तृ=कन्या ॥
दूरम्, दुः—रुण=आरात् ॥
दूषिका, दुष—ईकः-आप्=नेत्रयोर्मलम् ।
दृतिः, दृ—तिः=चर्ममयं पात्रम् ।
दृषत्, दृ—अदिः=शिला
देवरः, दिवु+णि—अरः=पत्युः कनिष्ठभ्राता ।
देवा, दिवु—ऋः=स्वामिनो देवृदेवा ·

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
द्रविणम्, द्रु-इनः,=वित्ते, काञ्चने, पराक्रमे च ।
द्रुः, द्रु-कुः=वृक्षः, शाखा वा ।
दोः, दमु-डोस्=बाहुः ।
द्रोणिः, द्रु—निः=सेचनी ॥
धनुः—धन—उः=शास्त्रम्, शस्त्रं वा ।
धन्वा, धवि-किन्=मरुद्देशे, चापे,शरे च ।
धमनिः, धमि—अनिः=शिरा ।
धरणिः, धृञ्—कनिः=भूमिः ।
धरित्रम्, धृञ्-इत्रः=धारणकर्त्त ।
धरित्रा, धृञ्-इत्रः=पृथिवी ।
धर्मः, धृञ—मः=पुण्ये,आचारे, स्वभावे, क्रतौ, यमे, न्याये च ।
धातुः डुधाञ—तुः=अश्मनोविकारः, सुवर्णादिः, शरीरस्थवातादिर्वा ।
धानाः, धाञ्—नः=अग्निपक्वा यवाः,
धान्यम्, धाञ—यः=व्रीहिभेदः ॥
धिषणः, धृषा—युः=त्रिदशाचार्ये ।
धिषणा=बुद्धिः ॥
धिष्ण्यम्, ञिधृषा—ण्यः=स्थानमृक्षोऽग्निरालयो वा ।
धीरः, धाञ्—क्रः=स्वैरः, बुधः, कुङ्कुमम् ।
धीवा ध्यै—वन्=कर्मकरः ।
धीवरः धाञ्—ष्वरः=नौवाहकः ।
धूमः धूञ—मः=धूआं इति ॥
धेनुः, धेट्—नुः=नवप्रसूता गौः ।
नक्षत्रम्, नक्ष—अत्रः=ताराः ।
नखः, णह—खः=कररुहे षण्ढे, गन्धद्रव्ये,च
ननन्दा, नञ—नदि-ऋः=पत्युः स्वसा । ननान्दा च ।
नप्ता, नञ्—पत्लृ—पौत्रः दौहित्रश्च ।
नभः, णह—असुः=व्योम ।
नभा,—मेघः । श्रावणः ॥
नलिनम्, नल—किनः=पद्मम् ।
नरकः, नॄ—वुः=पापभागः ॥
नहुषः, णह—उषः=राजविशेषः ।
ना, णीञ्—ऋः=पुरुषः ।
नाकुः, णम्—उः=वल्मीकः ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
नाभिः, णह—इञ्=क्षत्रियः, प्राण्यङ्गं वा ।
नाम, म्ना—मन्=आख्या ।
निद्रा णिदि—रक्=आप्=स्वापः ।
निधनम्, नि—धा—युः=मरणे । कुलनाशे च ।
निशीथः, नि—शी—थक्=अर्द्धरात्रम् ॥
निषद्वरः, नि—षद्—ष्वरः=स्मरे, पङ्के च ।
निषद्वरी=रात्रिः ।
निषङ्गथिः, नि-षञ्ज-थिः=आलिङ्गकः ।
निष्कः, षद्लृ—कन् परिमाणभेदः ।
निहाका, हा—कः-गोधिका ।
नीपः, णीञ—पक्=कदम्ब-बन्धूक-नीलाशोकद्रुमेषु
नीरम्, णीञ्-रक्=जलम् ।
नीलङ्गुः, नील=गम्-कुः=कृमिजातिः ।
नीलङ्गुः, नि-लगि—कुः=नीलगुः ।
नीविः, नि—व्यञ—ङिः । अथवा ङप्—
नीवी=मूलधनं दुकूलबन्धनं वा ॥
नेमः, णीञ—मः=कीलः, अवधौ, गर्त्त, प्राकारे कैतवे च ॥
नेमिः, णीञ—मिः=चक्रधारा ।
नेष्टा, णीञ—तृ—
नौः, णुद—डौ=नौका ।
न्यङ्कुः, नि अञ्च—कुः=जातिविशेषः, हरिणो वा ।
पक्षः, अच—अमुः=मासार्धं, पिच्छे, चुल्लीरन्ध्रे, देहाङ्ग, राजकुञ्जरे, विरोधे, सहाये च । शब्दोऽयमदन्तोऽपि ॥
पटुः, पट—उः=समर्थः ।
पटोलः, पट—ओलः=फलविशेषः, वस्त्रविशेषश्च ।
पण्डः, पडि—डः=नपुंसकः ।
पतङ्गः, पत्लृ—अङ्गः=सूर्यः, पक्षी, क्रमः,
पारदम् ।
पतत्रम्, पत्लृ—अत्रः=तनूरुहम् ।
पताका, पत्लृ—आकः—आप्=ध्वजा । नाटकाङ्को वा ।
पतत्रिः पत्लृ—अत्रिः=पक्षी
पतिः पा—डतिः=धवः ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
पत्तनम् , पत्लृ—तनः=नगरं वा ।
पत्तिः, पद्—तिः,-पदातिः पुरुषो वा ।
पद्मम् ,—पद्—मः=नलिनम् ।
पन्थाः, पत्लृ—इनिः=वाटः ।
पपीः, पा—कीः=सूर्य्यः, चन्द्रो वा ।
पपुः, पा—कुः=पालकः ।
पयः, पय—असुः=क्षीरनीरयोः ॥
परमेष्ठा, परमे—ष्ठा—इनिः=सर्वेषां पितामहः । ईश्वरो वा ।
परशुः-पर-शृ-कुः=शस्त्रभेदः, कुठारो वा
परुः, पृ—उस्=वंशादिग्रन्थिर्नाम ।
परुषम् , पृ—उषः=रूक्षं निष्ठुरं वा ॥
पर्जन्यः, पृषु—अन्यः=मेघः, समर्थो वा । शक्रः । मेघशब्दो वा ।
पर्णम् , पृ—नः=पत्रम् ।
पर्व, पृ-वन्=ग्रन्थिः ।
पर्वतः, पर्व-अतः=शैलः, शाकभेदः, मत्स्यभेदः, मुनिभेदः, पादपः, वा ।
पर्शुः, स्पृश—शुः,=आयुधविशेषः ।
पर्शुः, पर-शृ-कु=कुठारः ।
पललम् , पल-कलः=तिलचूर्णम् , मांसम् , ०नरि० पिकः, राक्षसश्च ।
पलालः, पल—कालः=धान्यादिराहत-काण्डेऽर्थे ॥
पलितम् , फल-इतः=केशादीनां जरसा शौक्ल्यम् ।
पल्वलम् , पा-वलः=अल्पजलाशयः ।
पशुः, दृश-कुः=गवादिः, अग्निर्वा ।
पाकः, पा-कः=शिशुः, वृद्धो वा ।
पाकः, पा-कः=परिणतौ शिशौ ।
पातालम् , पत्लृ-आलञ=नागलोकः, विवरम , वाडवानलश्च ।
पाथः, पा-असुः=उदकम् ॥
पादूः, पद,-ऊण्=चरणधारिणी, उपानत् ।
पापम् , पा-पः=अधर्मः ।
पाप्मा, पा-मन्=पापम् ॥
पायुः, पा-उण्=गुदम् ।
पार्श्वः, स्पृश-श्वणः=कक्षयोरधः ॥ अन्तिकं वा ।
पार्ष्णिः, पृषु-निः=पानग्रन्थ्यधरे ॥ 'गोड़ि' इति भाषा ॥



शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
पांशुः (सुः) पास—कुः=रजः
पिण्याकः, पिष्लृ—आकः=तिलकल्के, हिङ्गुबाह्लीकसिह्लके ॥
पिता, पा—तृ=जनकः, पालको वा ।
पिनाकः, पा—आकः त्रिशूलं, धातुर्वा ।
पीयूषम् , पीय-ऊषः=सुधा ॥
पीवरः, पा—ष्वरः=कच्छपः, स्थूलश्च ।
पीवा, प्यैङ्-वन्=स्थूलः ।
पुण्डरीकम् , पुण-कीकः=सिताम्भोजम् । (पुं०) व्याघ्रः, दिङ्नागः, कोशकारविशेषश्च
पुण्यम्, पूञ्—यः=सुकृतो धर्मश्च ॥
पुत्रः पूञ्—क्त्रः= पुं— त्रैङ=ङः= } आत्मजः ।
पुमान् , पा—डुम्सुः=पुरुषः ।
पुरिः, पृ—किः=नगरं, राजा, नदी च ॥
पुरीषम् पृ—कीषः=विष्ठा
पुरुषः, पुर—कुषः=पुमान् ॥ पुन्नागो वा ॥
पुरुरवाः, पुरु—रु—असिः=बुधसुतः ।
पुरोधाः, पुरस्+धाञ् असिः=पुरोहितः ॥
पुलिनम् , पुल+इनः=जलादचिरनिर्गततटस्य नाम
पुलिन्दः, पुल+किन्दः=जातिविशेषः ।
पुष्करः, पुष+करक्=मेघभेदः नृपभेदः, (क्लो०) अन्तरिक्षं, कमलं उदकं वा ।
पूगः, पूङ्+गक्+क्रमुके, वृन्दे च ।
पूरुषः+पुरुषः ॥
पूषा, पुष+कन्=सूर्यः
पृथिवी, प्रथ+षिवः=ङीष्=धरा ।
पृथुः, प्रथ+कुः+राजविशेषः, महान् वा ।
पृथुकः, प्रथ+उकः+शिशुः ॥
पृषत्, पृष+अतृ=बिन्दौ । मृगे च ।
पृषतः, पृषु+कतः=बिन्दुः, मृगा वा ।
पृष्ठम् , पृष+थक्=तनोश्चरमम् ।
पृष्णिः, पृषु+निः=अल्पतनुः ॥
पेचकः, पच+वुः=उलूकः ॥
पेयूषः=अभिनवं पयः ॥
पोता, पूञ्+तृ=विष्णुरीश्वरो वा ।
प्रतिदिवा, प्रति+दिवु=दिवसः ॥
प्रोथकः, प्रुङ्+थक्=घोटकघोणा ।
प्रथमः, प्रथ+अमः=अग्रयः ।

शब्दाः—धतावः—प्रत्ययाः—अर्थाः ।
प्रहिः, प्र+हृ+डिः=कूपः ॥
प्लीहा, प्लिह+कनू=कुक्षिव्याधिः ।
फल्गुः, फल+उः=नदी, क्लीवे निरर्थकम् ।
बटुः—वट+उः=द्विजसूतः ।
बधिरः बन्ध+किरः=श्रोत्रेन्द्रियरहितः ।
बन्धुः—बन्धः+उः=बन्धूकपुष्पम्, भ्राता, बान्धवश्च ।
बन्धुरः, बन्ध+उरः=नम्रसुन्दरयोः ।
बन्धूरः, बन्ध+ऊरः=बन्धुरः ।
बन्ध्या, बन्ध+यक्=अप्रसूता ।
बभ्रुः, भृञ्+कुः=वैश्वानरः, शूलपाणिः, गरुडध्वजः, नकुलः, पिङ्गलो वा ।
बर्हिः, बंह+इस्=हुताशनः ।
बलाका, बल+आकः+आप्=कामुकी । बलाकः=वकः ॥
बलिः, वर्ण+किः=राजकरः सत्कारः, सत्कारसामग्री, शारीराङ्गं वा ।
बहुः,बह+कुः=त्र्यादिसंख्यासु,विपुले,च ।
बाष्पम्,बाधु+पक्=नेत्रजलम्, उष्मा वा।
बाहुः, बाध+कुः=भुजः ।
बिडङ्गः, विड=बङ्गक्=ओषधिविशेषः ।
बिन्दुः—बिदि—उः=परिमाणं जलादिकणो वा ।
बुध्नः, बन्ध+नक्=मघः, मूलमन्तरिक्षम्, वा ।
बृहत्, बृह+अत्=विपुलम् ।
बृहती=क्षुद्रवार्त्ताक्यां, कण्टकार्य्यां, विपुलायां विश्वावसोर्वीणायां च ।
बोधि, बुध+इः=समाधिभेदः, पिप्पल पादपो वा ।
ब्रध्नः, बन्ध+नक्=महान्, सूर्यो वा ।
ब्रह्म, बृहि+मन्=तत्त्वम्, वेदः तपः, ईश्वरो वा ॥
भवान्, भा+डवतुः=सर्वनामवाचकः ।
भरतः, भृञ्+अतः=राजभेदः नटः, रामानुजश्च ।
भरुः,-भृञ्+उः=स्वामी, हरः, स्वर्णम्
भस्म, भस+सन्=पाउँस इति प्रसिद्धम्॥
भानुः, भा+नुः=सूर्यः, प्रकाशः, किरणम्, वा ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
भामः, भा+मः=क्रोधे, रुचौ दीप्तौ, आदित्ये च ।
भावी, भू+इनिः=भविष्यतीत्यर्थः ।
भित्तिका, भिदू+तिकक्=भित्तिः ।
भिषक्, भी+अजिः=चिकित्सकः ।
भीमः, भी+म=घोरः । शम्भूः, मध्यम पाण्डवश्च ।
भीष्मः, भी+मः=गाङ्गेयः, घोरो वा ।
भुजिष्यः, भुज+किष्यः=दासः ।
भुवः, भू+कः=अन्तरिक्षम् ॥
भूमिः, भू+मिक्=वसुन्धरा ॥
भूरिः, भू+क्रिः=हरिः, हरः, परमेष्ठी, (क्ली०) बहुसुवर्णम् ॥
भृगुः, भ्रस्ज+कुः=शुक्रः, प्रधानः, जमदग्निः, पिनाकी वा ।
भृङ्ग, भृङ्+गाक्=भ्रमरः, भृङ्गराजः गुडत्वक च ।
भृङ्गारः, भृ+आरः=कीटजातिभेदः ।
भेकः, भी+कः=मण्डूकः, मेषश्च ।
भेरी, भी+क्रः+ङप्=दुन्दुभिः ।
भेलः, भी+क्रः=प्लवे, मणौ च ।
भ्रूः, भ्रमु+डुः=नेत्रोपरिभागरोमराजिः ।
भ्राता, भ्राज+तृ=सोदरः ।
भ्रमरः, भ्रमु+अरः=षटपदः, कार्मुको वा।
मक्षिका, मश...शिक...आत=भ्रमराली ॥
मघवा, मह...कनू=इन्द्रः ॥
मङ्गलम्, माग...अलः=वारभेदः, कल्याणम्, वा ।
मङ्गला=सितदूर्वा कालिकादेवी ॥
मज्जा, मस्ज-कनू=अस्थि सारो वा ।
मञ्जूषा, मस्ज...ऊषः=पेटकः ॥
मण्डः, मन...डः=पक्वौदनोदकम् ॥
मण्डा=धात्रा ॥
मण्डूकः, मडि...ऊकः=भेकः ॥
मत्स्यः, मदी...त्स्यः=मीनः । देशश्च ।
मथुरा, मथि-ऊरः=नगरीविशेषः ।
मदीरा, मदी...किरः=सुरा ।
मद्गुरः, मदी...डरः=मत्स्यभेदः । (मागुरमाछ)॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
मद्गुः–टुमस्जोः...उः=जलप्लवी पक्षी वा
मनुः—मन...उः=आदिराजो मन्त्रश्च ॥
मन्तुः, मन...तुक्=अपराधः प्रजापतिर्वा ।
मधुः,—मनः...उः=चैत्रो मासः, दत्यः, क्लीवे मद्यं पुष्परसश्च ।
मन्थाः, मन्थ...इनिः=दध्यादिमन्थनदण्डः, व्रजम्, चापः, वायुर्वा ।
मन्दारः, मदि+आरः=निम्बतरुरर्कवृक्षो वा ( पारिजातनाम ) ।
मन्दारुः, मदि+आरुः=निम्बार्कौ वृक्षौ । ( पारिजातवृक्षः ) ॥
मन्दिरम्, मदि+किरः=तगरे, मकरालये च ।
मन्दुरा, मदि+उरः=वाजिशाला ।
मन्युः, मन+युः=शोकः, क्रोधो वा ।
मयुः डुमिञ्+उः–तुरङ्गवदनकिन्नरविशेषः वानरो वा
मयूखः, माङ्+ऊखः=किरणः, कान्तिः, करो, ज्वाला वा ॥
मरीचिः, मृ+ईचिः+कृपणः, दीप्तिः मुनिनाम ।
मरुः,—मृङ्+उः=निर्जलदेशः ।
मरुत्, मृङ्+उत्=पवनः देवजातिश्च ।
मयूरः, मीञ+ऊर=पक्षिविशेषः ।
मलम् } मृञ्+कलः=पापवि
मलः } ट्कटे, कृपणे च ।
मलयः, मल—कयः=पर्वतविशेषः ।
मलिनम्, मल+किनः=दूषिते, कृष्णे, रजस्वलायां स्त्रियाम् ।
मसुरः, मसी+उरः=व्रीहिभेदः । उपाधानम् ।
मसूरः, मसी+ऊरः=व्रीहिभेदः, वेश्या वा ॥
मसूरा(सुरा) मसी+ऊरः+आप्=वेश्या ।
मसूरी, मसी+ऊरः+ईप्=पादरोगः, पुंसि उपाधानम् ।
मस्तुः, मसी...तुः=क्लीबे–दधिभवमुदकम् ।
महती=नारदस्य वीणा ।
महान्, मह+अतृ=श्रेष्ठे ।
मपृहिला, मह+इलः+आ=स्त्री ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
महिषः, मह+इषट्=महान्, राजा वा ॥
महिषी, मह+इषट्+ईप्=राजपत्नी ।
महेला, मह...इलः आप्=महिला ।
मातरिश्वा, मातरि...श्वि=कन्=वायुः ।
माता, मान–तृ=जननी ॥
माया, मा...यः...आप्=छलं, मिथ्या, जालो वा ।
मायुः, मिञ्...उण् पित्तम् ।
मार्जारः, मृञ्...आरः=बिडालः-खट्वाङ्गम्
मालः } मा—कः=क्षेत्रे ।
मालम् }
माला, मा—कः आप्=स्रक् ।
मित्रम्, ञिमिदा—कः=सुहृत् क्लीबे । पुंसि सूर्यः ॥
मिथिला, मन्थ—इलः-आप्=नगरी ।
मिहिर, मिह—किरः=सूर्ये, बुद्धे च ।
मुखम्, खनु—डः=आस्यम्, प्रारम्भः, उपायः, नाटकसन्धिर्वा ॥
मुदिरः, मुद—किरः=कामुके, अभ्रे ।
मुद्गः, मुद—गक्=सस्यभेदः ।
मुनिः, मन—किः=वसिष्ठादिः ।
मुशलः, मुश—कलः=मुसलः ।
मुसलम्, मुस—कलः=अयोनिर्मितास्त्रविशेषः ।
मूत्रम्, मुक्—त्रः=प्रस्रावः ।
मूर्खः मुह—खः=अज्ञः ॥
मूर्धा, मुह—कन्=मस्तकः । (मूर्द्धा) वा ।
मूलम्, मृङ्—क्लः=मूलमिति प्रसिद्धम् ।
मूषिकः, मुष—किकः=आखुः ।
मृगयुः,–मृग या—कुः=व्याधः, गोमायुः, परमेष्ठी वा ।
मृणालम्, मृण—कालः=नलदे, बिसे ।
मृत्युः, मृङ्,—त्युक्=मरणे च ।
मृदङ्गः, मृद—अङ्गक्=पटहे, घोषे च ॥
मृदुः, म्रद—कुः=कोमलः ।
मेचकः, मच—वुः=मयूरपक्षचिह्नम् ॥
मेरुः, मिञ्—रुः=हेमाद्रिः ॥
यजिः, यज—इः=सङ्गन्ता, होता वा ॥
यजुः, यज+उस्=वेदः ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
यद्, यज—अदिः=बुद्धिविषयीभूतार्थ-कोऽ शब्दः ॥
ययीः, या—कीः=अश्वः ।
ययुः, या—कुः=अश्वमेधायोऽश्वः ।
यावसः, यु—आसः=दुःस्पर्शः ॥
यशः, अशूङ्—असुः=कीर्त्तिः ॥
याता, यती—ऋः=भ्रातृवर्गस्य भार्य्याः परस्प यातरः स्युः ।
यामः, या—मः=रात्रिः ।
युग्मम्, युज्—मः=युगलम् ।
युवा, यु—कन्=तरुणे, श्रेष्ठे, निसर्गबलशालिनि ।
युष्मद्, युष-मदिक्=त्वमित्यादिवाचकः।
यूथम्, यु—थक्=तिर्यक्=समूहे, वृन्दमात्रे ॥
यूपः, यु—पक्=यज्ञशालास्तम्भो वा ।
योनिः, यु—निः=कारणम्, उपस्थेन्द्रियं वा ॥
योषित्, युष—इत=अबला ।
रजः, रञ्ज—कः=धूलिः ॥
रजः, रञ्ज-असुः=आर्तवे, परागे रेणुमात्रे च
रजकः, रञ्ज—क्वुः=धावकः, शुकश्च ।
रजतम्, रञ्ज—कतः=शुक्लम्, रूप्यम्, सुवर्णम् च ।
रजनम्, रञ्ज—क्युः=रक्तचन्दने। (पुंसि) रागजनने ॥
रजनिः, रञ्ज—अनिः=रात्रिः, हस्तिनी रजनीति दीर्घोऽपि ।
रज्जुः, सृज—उः=वेण्यां गुणे च ।
रण्डा, रमु—डः आप्=विधवा, मूषिकपर्णी ।
रत्निः, ऋ—कत्निः=बद्धमुष्टिकरः ।
रथः, रमु—कथः=स्यन्दने-काये—चरणे—वेतसे च ।
रभसः, रभ—असः=वेगः, हर्षो वा ।
रशना, अशूङ्—युः आप्=जिह्वा ।
रश्मिः, अशूङ्—मिः=दीधितिः पक्ष्मः, प्रग्रहो वा ॥
रसना, रस-युः-आप=रास्ना, जिह्वा वा ।
रहः, रमु—असुः=तत्त्वे रेते गुह्ये च ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
रंहः, रमु—असुः=वेगः ।
राः, रा—डैः—पावके, तीक्ष्णे, स्वर्णे, वित्ते, जलदे च ।
राका, रा—कः=पौर्णमासी नदीभेदो वा। नवरजःकन्या, पूर्णेन्दुश्च ।
राजा, राज—कन्=प्रभौ, नृपे, चन्द्रे, पक्षे, क्षत्रिये, शक्रे च ।
राजिः, राज्—इञ्=पंक्तिः, रेखा ।
रात्रिः, रा—त्रिः=रजनी ॥
रामठम्, रमु—अठः=हिङ्गु ।
राशिः, अशूङ्—इञ्=मेषादिः । समूहो वा ।
रासभः, रासृ—अभः=खरः ।
रास्ना, रस—नक्=आप्=गन्धद्रव्ये, भुजङ्गाक्ष्यामेलापर्ण्यामपि ।
रिक्थम् रिचिर-थक=धनम् ।
रिपुः, रप-कुः=वैरी ।
रुक्मम्, रुच—मः=काञ्चने, लोहे ।
रुचिरम्, रुच—किरः=सुन्दरम्,
रुद्रः, रुदिर्—णि—रक्=शिवः ।
रुधिरम्, रुध्—किरः=कुङ्कुमम्, असृक्, पुंसि अङ्गारके च ।
रूपम्, रु—पक्=आकृतिः, स्वभावः, सौन्दर्य्यं वा ।
रुरुः, रु-रुः=मृगः, दैत्यनाम वा ।
रेणुः, री—णुः=धूलिः ।
रेतः, रीङ्—असुः=शुक्रे पारदे च ॥
रोहिषः, रुह—इषट्=मृगभेदः, क्लीः, तृणं वा ।
रोचना, रुच—युः—आप्=रक्तकह्लारे, गोपित्ते, वाराङ्गनायाञ्च ।
रोचिः, रुच—इस्=दीप्तिः ।
रोम, रु—मन्=गात्रकेशः ॥
रोहित्, रुह—इत्=मृगी, लताभेदः । पुंसि सूर्यश्चः ।
रोहिणः, रुह—इनः=चन्दनतरुः ।
रोहितः, रुह—इतः=मृगभेदः, मत्स्यभेदः, रोहितवृक्षः । ( क्ली० ) रक्तम् ॥
लक्षणम्, लक्ष—नः=नाम, चिह्नं वा ।
लक्ष्मणः, लक्ष—नः=रामभ्राता

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
लक्ष्मणा=हंसयोषित् । सारसी वा ।
लक्ष्मीः, लक्ष ई=संपत्तिः शोभा, पद्मा वा ।
लघुः, लघि—कुः=स्वल्पः, मनोज्ञः, निःसारः । शीघ्रो वा ।
लत्तिका, लतु—तिकक्=गोधा ।
लवङ्गम्, लू—अङ्गः—देवकुसुमम् ।
लाङ्गलम्, लगि-कलः=भूमिकर्षणाख्यम्, हलं वा ।
लाङ्गूलम्, लगि—ऊलः=पुच्छम् ।
लिपिः, लिप—किः=लेखः ।
लिविः, लिप—किः=लिपः ।
लोहितम्, रुह—इतः=रक्तगोशीर्षकुङ्कुमाजिकुचन्दनेषु ।
वक्रः, वञ्चु+रक्=कुटिले, क्रूरे, पुटभेदे, शनैश्चरे च ।
वक्षः, वच+असुः=हृदयम् ॥
वज्रम्, व्रज+क्रः=हीरके, पवौ च ।
वटिः वट+इः=विभाजकः ।
वणिक्, पण+इज्=वणिजः ।
वदान्यः, वद+आन्यः+त्यागी, वाग्मी च।
वधूः, वह+ऊः=नवोढा स्त्री ।
वपुः, वप्+उस्=तनौ ।
वप्रः, वप्+क्रः=प्राकारः ।
वरुत्रम्, वृञ्+उत्रः=प्रावरणं वा ॥
वरत्रा, वृञ्+अत्रः+चर्मरज्जुः ।
वरेण्यः, वृञ्+एण्यः=श्रेष्ठः ।
वर्णुः, वृञ्+नुः=नदः, देशभेदो वा ।
वर्त्तिः, वृतु+इः=दीपोपकरणम् ।
वर्त्तिका, वृतु+तिकः=पक्षिभेदः ।
वर्ध्मम्, वृधु+क्मन्=चर्म ।
वलयम्, वल+कयः=कण्ठरोगः । कङ्कणं वा ॥
वलीकम्, वल+कीकः=नीध्रम् ।
विल्गुः, वल+उः=छागले, सुन्दरे च ।
वल्मीकम्, वल+कीकः=(पुं०) वामलूरः (क्ली०) दिग्वलयम्, मेघखण्डं वा ॥
वल्लभः, वल्ल+अभ=प्रियः । अध्यक्षः, सलक्षणघोटको वा ।
वल्लूरः, वल्ल+ऊरः=शुष्कमांसम् ॥
वसुः—वस+उः=अग्न्याद्यष्टौ वसवः । तोये धने मणौ वसु ॥

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
वसन्तः, वस+अन्तः—ऋतुः ।
वस्तिः, वस+तिः=वसनस्य दशाः, श्रोणी, नाभेरधोभागो वा ॥
वस्तु, वस+तुः=पदार्थः ।
वस्त्रम्, वस+त्रः=वसनम्,
वस्नः वस+नः=मूल्यं वेतनं वा ।
वहित्रम्, वह+इत्रः=वाहनं वा
वह्निः, वह+निः=अग्निः ॥ औषधिविशेषश्च ॥
वातप्रमी, वातम्...मा‍ङ्कीः=वातमृगः ।
वादित्रम्, वद...इत्रच्=तूर्यादि ।
वापिः, वप...इञ्=जलाशयः ॥
वापीतिदीर्घकारोऽपि ॥
वामः, वा...मः—हरे, कामदेवे, मेघे (क्ली०) धने, वामा=नारी । वामी-शृगाली वडवा रासभी कलभी,,
वायुः, वा...उण्=वातः ।
वारिः वृञ्...इञ्=गजबन्धनी शृङ्खला, क्लीबे जलम् ।
वासः, वस...असुः=वस्त्रम् ॥
वासरः, वस...ण्यन्तः...अरः=दिवसः ।
वास्तुः, वस...तुण्=वेश्म, भूः, पुं० क्ली०।
वाशुराः, वाश्र...उरः=रात्रिः । गर्दभः ।
विः, वा...डिः=पक्षी ।
विटपः, विट्...कप=शाखाविस्तारः, विटाधिपश्च ।
विष्टपम् विश...कपः=जगत् ।
विडालः, विड...कालः=नेत्रपिण्डे, मार्जारे वा ।
वितस्तिः, वि...तसु...तिः=द्वादशाङ्गुलं परिमाणं वा ॥
विधुः, व्यध...कुः=शशाङ्के, कर्पूरे, हृषीकेशे, राक्षसे च ।
विपिनम्, वेपृ...इनः=वनम् ।
विप्रः, वप्...क्रन्=ब्राह्मणः ।
विष्णुः, विष्लृ+णुक्=नारायणः ।
विश्वम्, विश+क्वः=जगत्
विश्वयः— | देवविशेषः
विश्वा— | शुण्ठी
वीचिः, वेञ्+ईचिः=तरङ्गः ॥
वीणा, वी+नक्=याप्=विद्युत्, वल्लकी ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
वीध्रम्, वि+इन्धी+कन्=विमलार्थकम् ।
वीरः, अज+रक्=शूरः ।
वृजिनम्, वृजी+किनः=कल्मषे, केशे, कुटिले च ।
वृत्रः, वृतु+रक्=रिपौ, ध्वनौ, ध्वान्ते, शैले, चक्रे, दानवे च ।
वृषभः, वृषु—कभः=वृषः ।
वृषलः, वृष+कलः=तुरगः, शूद्रश्च ।
वृषा, वृष+कन्=कर्णे, महेन्द्रे च ।
वृष्णिः, वृषु+निक्=यादवः, मेषः, पाषण्डः, चण्डो वा ॥
वेणुः, अज+णुः=वंशः, राजविशेषो वा ।
वेतनम्, वी+तनः=भृतिः ।
वेतसः, वेञ्+असः=वृक्षभेदः ।
वेधाः, वि+धाञ्+असिः=विधाता+ईश्वरो वा
वेमा, वेञ्+मन्=तन्तुवायदण्डः ॥
वेशन्तः, विश+अन्तः=पल्वलम्
वेहत्, वि+हनः—अत्=गर्भोपघातिनी ।
व्योम, व्येञ्+मन्=अन्तरिक्षम् ॥
शकटम्, शकि+अटः=यानविशेषः, ऋषिर्वा । शकटोऽपि ॥
शकलम्, शक्लृ+कलः=त्वचि, खण्डे, मत्स्यभेदे वा ।
रागवस्तुनि, वल्कले च ॥ शाकली-मत्स्यः ।
शकुनः, शक्...उनः=पक्षिमात्रे, पक्षिविशेषे वा
शकुन्तः, शक्...उन्त=पक्षिमात्रे, पक्षिविशेषे वा ।
शकुन्तिः, शक्...उन्तिः=पक्षी ।
शकुनिः, शक्...उनिः=
शकृत्, शक्लृ...ऋत्=उच्चारः ॥
शक्रः, शक्लृ...रक्=देवराजः कुटजवृक्षश्च ।
शक्लः, शक...कलः=प्रियंवदः ।
शङ्कुः, शकि—कुः=कीले, गरे, शस्त्रे, संख्यायाम्, पादपभेदे, पापे, पादभेदे, स्थाणौ शल्ये च
शङ्खः, शमु—खः=निधिभेदः, ललाटास्थि, कम्बुश्च ।
शण्ढः, शमु—ढः=गोपतौ, आकृष्टाण्डे, वर्षधरे, तृतीयप्रकृतौ च ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
शतद्रुः, शत-द्रु-कुः=नदीभेदो गङ्गा वा ।
शत्रिः, शद्लृ-त्रिः=अम्भोधरः, विष्णुश्च ॥
शपथः, शप—अथः=शान्तिः, निश्चयकरणं वा ।
शबलः, शप—कलः ॥
शत्रुः, शद्लृ—त्रि—रुः=वैरी ।
शब्दः, शो—दः=निनादः ।
शमथः, शमु—अथः=शान्तिः, मन्त्री ।
शमलम्, शमु—कलः=अशुद्धम् ॥
शम्बः, शमु—वः=मुसलस्य लोहमुखम् ॥
शम्बुकः, शमु—उकः=शम्बूकः ॥
शम्बूकः, शमु—ऊकः=गजकुम्भान्ते, घोषे, शूद्रतापसे च ॥
शयुः, शीङ्—उः=शयनशीलः ।
शरभः, शृ-अभ=आरण्यकहिंस्रपशुभेदः ।
शरत्, शृ—अदिः=वत्सरे, ऋतौ, च ।
शरीरम्, शॄ—ईरः=विग्रहः ।
शरु-शृ—उः=आयुधं कोपो वा ।
शर्करा, शृ—करः—आप्=खण्डविकारः, मृद्विकारो वा ।
शर्वः, शृ—वः=रुद्रः ।
शर्वरी, शृ—ष्वरः=ङ्प्=यामिनी ।
शलभः, शल—अभः=पतङ्गः ।
शल्यम्, शल-यः=शस्त्रविशेषः, वाणाग्रभागो वा ।
शष्पम्, शसु—पक्=बालतृणम् ।
शादः, शो—दः=कर्दमो बालतृणं वा ।
शार्ङ्गः, शृ—गक्=पक्षी ।
शालूकम्, शल—ऊकः=मूलद्रव्यम् ॥ कुवेरवादीनां कन्दः ।
शास्तिः, शास—तिः=राजदण्डः ॥
शिक्यम्, स्रंसु—यः=प्रसिद्धार्थः ॥
शिखा, शीङ्—खः—आप्=चूडाकेशभेदः, ज्वाला वा ॥
शितिः, शतिसौत्री धातुः-किः=कृष्णः, शुक्लो वा ॥
शिथिलम्, श्रथः-किरः=श्लथम् ।
शिबिरम्, शीङ्-किरः=सेनानिवेशः, स्थानं वा ।
शिरः, श्रिञ्-असुः=शीर्षम् ॥
शिल्पम्, शील-पक्=कौशलम् ।

शब्दाः—धातवः-प्रत्ययाः-अर्थाः ।
शिशिरम् , शश-किरः = ऋतुभेदे, षतुारे, शीतले च ।
शिशुः, शो-कुः=बालकः ।
शीधुः, शीङ्-धुक्=आसवः ।
शिरीषः, शृ-कीषः = वृक्षविशेषः ।
शीलम् , शीङ्-लक्=स्वभावः ।
शुक्षिः, शुष-क्सिः = वातः ।
शुचिः, शुच-किः=शुद्धिः । ग्रीष्मावसानं वा ।
शुल्बम् , शुच-वः = ताम्रम् ॥
शुक्रः, शुच-क्रः = भार्गवे, ज्येष्ठमासे, वैश्वानरे, (क्ली) रेतसि च ।
शुक्लः, शुच-क्रः=सिते, योगान्तरे (क्ली०) रजते च ।
शुभ्रम् ,शुभ-रक्=अभ्रके, उद्दीप्तश्वेते ।
शुषिरम् , शुष-किरः = वंशादिवाद्ये, विवरे च ।
शुष्मम् , शुष्-मः=तेजः [पुं०] वायुः ।
शूद्रः, शुच-रक् = अन्त्यजातिः
शूर्पम् , शृ-पक् = अन्नशोधकं पात्रम् , मानभेदो वा ।
शूरः, शु-क्रः=पादपे, भटे, सूर्ये च ।
शृङ्गम् , शृ-गक् = प्रभुत्वे, शिखरे चिह्ने, क्रीडाम्बुयन्त्रके विषाणे उत्कर्षे, स्वर्णे, मानभेदे च ।
शृङ्गारः, शृ-आरः = सुरते, नाट्य, रसे, गजमण्डने ॥
शेपालम् , शीङ्-पालः=जलनीलिका ।
शेवालम् , शीङ्-वालः=शैवलः ॥
शैवलम् , शीङ्-वलश्=पद्मकाष्ठम् ॥
शैवालम् , शीङ्-वालश्=जलनेली ॥
शोचिः, शुच-इः=दीप्तिः ।
शोथः, शु-थः = श्वयथुः ।
शेवलः, शीङ्-वलः=जलनेली ।
श्मश्रु, श्मन्-श्रिञ्=डुन्=पुरुषमुखरोमाणि,
श्यामः, श्यैङ्-मः=हरित् , कृष्णः, पिकः। मरिचम् , सिन्धुलवणं, वा
श्यामा,-शारिका, निशा, अप्रसूताङ्गना।
श्येनः श्यै-इनः = पक्षिणि, पाण्डुरे च ।
श्राव्यः, श्रु-आय्यः=यज्ञपशुः ।

शब्दाः-धातवः-प्रत्ययाः-अर्थाः ।
श्रेणिः, श्रिञ्-णिः = पङ्क्तिः ॥
श्रोणः, श्रु-नः = पङ्गुः ।
श्रोणिः, श्रु-निः = कटिः ॥
श्लक्ष्णम् , श्लिष-क्स्नः = सुकुमारम् ।
श्वशुरः आशु—अशूङ्-उरः=पतिपत्न्योः पिता ।
श्वा, श्वि-कन् = कुक्कुरः ।
श्वित्रम् , श्विता-रक् = कुष्ठम् ।
श्वेतः, श्वेङ्-इतः = शुक्लः ।
सक्तुः, षच-तुः = यवादिचूर्णम् ।
सक्थि, षञ्ज-क्थिः = ऊरुः ।
सखा, ख्या-डिः=मित्रं सहायो वा ॥
सन्ध्या, सम्-धाञ्—यक्=सायंकालः ।
सप्त, षप-कन् = संख्याविशेषः ।
संवसथः, सम्—वस—अथः=ग्रामः ।
सरः, सृ-असुः=तडागः ।
सरणिः, सृ—अनिः = श्रेणिः, वर्त्म, शरणिः = वर्त्म ।
सरयुः, सृ—अयु=नदी ।
सरयूः, सृ = अयूः=नदी।
सरलम् , सृ-कलः = पूतिकाष्ठम् , अवक्रम्।
सरलः / सरला } अवक्रार्थकद्वयम् ॥
सरित् , सृ-इत्=नदी
सर्पिः सृप्लृ—इस् = आज्यम् ।
सर्वः, सृ=वः = समस्तः ।
सर्षपः, सृ = अपः=कटुस्नेहवान् ।
सलिलम् , सल = इलः = जलम् ।
सव्यम् , षुञ्—यः=दक्षिणवामयोः ।
सस्यम् , षस-यः + वृक्षादीनां फलम् ।
साधुः, साध-उण्—सज्जनः ।
सानुः षण—उण्=पर्वतैकदेशशृङ्गबुधमार्गवात्यापर्णवनानि च । सानूनि वा ।
साम, षो—मन् = वेदान्तरे, उपायस्य भेदे च ॥
सारथिः, सृ-अथिः = नियन्ता ॥
सार्थः, सृ-थण्=वणिक्समूहे ।
सास्ना, षस-नक्=गलकम्बलः ।
सिक्थम् , षिक्-थक्=मधूच्छिष्ट सोम इति प्रसिद्धम् , ओदननिर्गतमण्डं वा

शब्दाः—धातवः— प्रत्ययाः —अर्थाः ।
सिन्दूरः, स्यन्दू=उरः—तरुभेदः । क्लीवे रक्तचूर्णम् ।
सिन्धुः-स्यन्दू-उः=देशविशेषः, नदविशेषः, अब्धिः, सरिद्वाच्ये स्त्रीलिंगः ॥
सिमः, षिञ्-मः=सर्वनामसंज्ञः पर्यायः ॥
सीरः, षिञ्—क्रः=अर्कहलयोः ।
सीमा, षिञ्-मन्=अवधिः ॥
सुत्रामा, सु-त्रैङ्—मन्—इन्द्रः ॥
सुरः, षुञ्—क्रः=देवः
सुरा, षुञ्—क्रः-आप्=चषके, मद्ये च ।
सूक्ष्मम्, सूच-स्मः=अत्यल्पम्, कण्टकम्।
सूचः, षिवु—चट्=दर्भाङ्कुरः ॥
सूची, षिवु-चट्—ईप्=सूचीति प्रसिद्धा॥
सूत्रम्, षिवु त्रः=तन्तुः, शास्त्रैकदेशो वा
सूनुः, षूङ्—नुः=पुत्रः, अनुजो वा ।
सूपः, षुङ्—पक्=पक्वं द्विदलान्नं वा ।
सूरः, षृञ्—क्र=सूर्यः ।
सूरतः, सु रम् क्तः—उपशान्तो दयालुश्च ।
सूरिः, षूङ्—क्रिः—पण्डितः ॥
सृणिः, सृ—निक्—अङ्कुशः ॥
सेतुः षिञ्-तुः=समुद्रः आलुः, कुमारश्च।
सोमः, षुञ्—मः—चन्द्रे, वानरे, कुवेरे पितृदेवे, समीरणे । वसुभेदे, कर्पूरे, नीरे, सोमलतायाञ्च ।
स्तनयित्नुः, स्तन-यित्नुः—मेघः, विद्युद्वा।
स्तबकः, ष्ठा—अबकः=पुष्पगुच्छः ।
स्तम्बः, ष्ठा—अम्बः—शाखाशून्यब्रीह्यादेर्गुच्छः ।
स्तरीः स्तृञ्—ईः—धूमः
स्तिम्भिः, स्तम्भः सौत्रः—किः=समुद्रः ।
स्त्री, स्त्य=ड्र्=नारी ।
स्त्येनः, स्त्यै-इनः—चौरः ।
स्तोमः, ष्टुञ्-मः—संघातः ।
स्थविरः, ष्ठा-किरः=वृद्धः, भिक्षुकश्च ।
स्थाणुः, ष्ठा-णुः=शुष्कवृक्षः, निश्चलो वा
स्थालम्, ष्ठा —आलः—पात्रविशेषे ॥

शब्दाः—धातवः—प्रत्ययाः —अर्थाः ।
स्थाली, स्था-आलः-ईप्—पाटलौषधौ ।
स्थिरम्, ष्ठा—किरः—निश्चलम् ।
स्थूणा, ष्ठा-नक्=लोहप्रतिमा गृहस्तंभोवा।
स्पृहयाय्यः, स्पृह—आय्यः=अभीप्सुः, नक्षत्रं वा ।
स्फारम्, स्फायी-रक्—विकटे, करकादेर्बुद्बुदे च ।
स्फिरम्, स्फायी-किरः=तेजः ।
स्यन्दनम्, स्यन्दू—युः=जलादिश्रुतौ, (पुंसि) रथे ।
स्रोतः, स्रु—अम्बुवेगेन्द्रिययोः ॥
स्वरुः—स्वृ-उः-वज्रम्,
स्वसा, सु-असुः-ऋः=भगिनी ।
स्वादुः, स्वद-उण्—भोज्यमन्नं वा ।
हनुः-हन—उः=कपोलावयवः, प्रहरणं, मृत्युर्वा ।
हरिः, हृ—इः—नारायणः-सर्पः-इन्द्रः-भेकः-सिंहः-अश्वः-सूर्य्यः-चन्द्रः-वानरो-यमः-वायुर्वा ॥
हरिणः, हृञ्-इनः=सारंगे ।
हारिणी, हृञ्-इनः-ईप्=गणिकायाम् । वृत्तभेदे, हरितायां च ।
हरेणुः, हृञ्-एणुः=कुलयोषित ।
हरित्, हृञ्—इत्=दिक्, वर्णः तृणम्, अश्वविशेषश्च ।
हरितः हृञ्-इतः=वर्णभेदो वा ।
हरिता—हरिणी ।
हविः, हु—इस्=घृतम् ।
हंसिका, हन-सिकः—आप-हंसस्त्री ।
हिमम्, हन-मः=तुषारे मलयोद्भवे ।
हिरण्यम्, हर्य—कन्यः=सुवर्णम् ॥
हृदयम्, हृञ्-कयः=मनः ।
हृषीकम्, हृष—कीकः=ज्ञानेन्द्रियम् ।
हेमन्तः, हन-अन्तः=ऋतुभेदः ।
होता, हु—तृ-हवनकर्ता ।
होमः, हु-मः=देवतोद्देशेन हविः प्रक्षेपनाम ॥

इति शासनपुरुषोत्तमपुरवास्तव्यः श्रीनवकिशोरकरशास्त्रिविरचितः सिद्धान्तचन्द्रिकाया उणादिकोषः समाप्तः ।

* श्रीः *

# सिद्धान्तचन्द्रिकादशगणीय-

# धातुसूची ।

इति सिद्धान्तचन्द्रिकादशगणीयधातुसूची समाप्ता ।

* श्रीः *

# सिद्धान्तचन्द्रिकोत्तरार्द्धस्य

# सूत्रसूची ।

इति सिद्धान्तचन्द्रिकोत्तरार्द्धस्य सूत्रसूची समाप्ता ।

---

# अथ लिङ्गानुशासनसूत्राणां सूची ।

इति सिद्धान्तचन्द्रिकाया लिङ्गानुशासनसूत्राणां सूची समाप्ता ॥